छात्रैर्देयं वार्षिकं मूल्यमेकरूप्यकम् (१)। तदन्यैर्ग्राहकैः सार्द्धैकरूप्यकम् (१॥०)।

द्वितीयखण्डस्य ] १८१६ शाक वैशाखमासस्य [ प्रथमसंख्या।

# संस्कृतपत्रिका।

## मासिकपत्रिका।

---

दोषचतन्नाव हि शोषणीयं, दयारसं साधु सदाभिषिच्य।
सतां पदे तत् प्रचते न धूर्त्तं, किं मक्षिका तत्रजति सुताङ्गी॥

---

श्रीजयचन्द्रशर्म्म-सिद्धान्तभूषण-भट्टाचार्य्येण

सम्पादिता।

---



---

कलिकाताराजधान्यां

आहीरीटोला १२३ संख्यकभवनात्

श्रीहरिदासमित्रेण प्रकाशिता।

६९ नं गन्फाउण्डारि रोड, काशीपुर-हर्टिकलचारप्रेसे

श्रीभवतारण चट्टोपाध्यायेन च मुद्रिता।

संवत् १९५१।

# १८१५ शकस्य मूल्यदातारः।

कुतोऽपि प्रतिवन्धकात् १८१५ शाकस्य मूल्यप्राप्तिः चैत्रपत्रिकायां न स्वीकृता। १८१६ शाकस्य मूल्यप्राप्तिरपि स्थानाभावादत्र न स्वीक्रियते। आगामिन्यामस्यां स्वीकरिष्यते क्रमशः।

| | रूपकाः। |
|---|---|
| सीनपुर— | |
| श्रीयुक्त वावु दामोदर मिश्र | १) |
| गोपालगञ्ज— | |
| ,, ,, हरनारायण लाल | १) |
| कदमवेटीर— | |
| ,, ,, जि,नारायण स्वामी आयार | १॥० |
| महिशूर— | |
| ,, ,, भाड़ली, रामचन्द्रसिनय | १) |
| ,, ,, भि, वङ्क चारलु | १) |
| मान्द्राज— | |
| ,, ,, श्रीश्रीवीरकेशरी | १॥० |
| ,, ,, भेड़ेपानी पानीया विडामजि | १) |
| कृष्णा डि:— | |
| ,, जगनन्दन उकिल | १॥० |
| सीतापुर— | |
| ,, ,, काशीनाथ मिश्र | १) |
| वीम्बे— | |
| सेक्रेटरी— | |
| ,, ,, वि,वि, आर, ए, सोसाइटि | १॥० |
| टेनजोर— | |
| ,, ,, एम, रगन सेउर | १) |
| ननजनगाड़— | |
| ,, ,, वि, भेङ्काटाचार्य्य | १॥० |
| धुवड़ी— | |
| ,, ,, विश्वेश्वर दैवशर्म्मा | १) |

| | रूपकाः। |
|---|---|
| अमृतसार— | |
| श्रीयुक्त वावु एल, सन्तराम | २) |
| डिब्रुगड़— | |
| ,, ,, एम, एन, मित्र | १॥० |
| रामपुरवोयालिया— | |
| ,, ,, ज्योतिषचन्द्र शील | १) |
| मानभूम— | |
| ,, ,, अतुलकृष्ण घोष | १) |
| विजयापत्तन— | |
| ,, ,, जि, नरसिंह शर्म्मा | १॥० |
| गोयालीयर— | |
| ,, ,, गोपाल शास्त्री | २॥० |
| चट्टग्राम— | |
| ,, ,, प्रसन्नकुमार दास | २) |
| नओयाखाली— | |
| ,, ,, कालीकुमार सेन | १) |
| कलिकाता— | |
| ,, ,, सतीशचन्द्र मुखो: | १) |
| ,, ,, चन्द्रकान्त दास वि, ए, | १) |
| ,, ,, यतीन्द्रनाथ घोष | १) |
| ,, ,, नलिनीकान्त मैत्र | १) |
| पलामट— | |
| ,, ,, पण्डित परमेश्वर दत्त पाठक (एजेण्ट) | ५) |



श्रीगणेशः ।

श्रीश्रीदुर्गा

शरणम्।

# संस्कृतचन्द्रिका।

(१८१६ शाक-वैशाखमासस्य।)

---

श्रीश्रीगणेशाय नमः।

## अथ मङ्गलाचरणम्।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्ब्यते सेयमव्यात् श्रीशिवसुन्दरी॥

---

## पत्रीप्रकाशिका।

श्रीमीनाक्षी संस्कृतचन्द्रिकेयम्, वर्षे द्वितीये पदमर्पयन्ती।
[illegible] गजद्विजानां परवत्सलानाम्॥

---

## गणेशस्तोत्रम्।

---

### श्रीनारद उवाच।

ॐ गणेश सुरेश लम्बोदर परात्पर। हेरम्ब मङ्गलारम्भ गजवक्त्र त्रिलोचन॥
[illegible] श्रीधर स्मरणोदित। परमानन्द परम पार्व्वतीनन्दन स्वयम्॥
सर्व्वत्र पूज्यः सर्व्वेश जगत्पूज्य जगद्गुरो। जगदीश जगद्बीज जगन्नाथ नमोऽस्तु ते॥
यत्पूजा सर्व्वपुरतो यः स्तुतः सर्व्वयोगिभिः। यः पूजितः सुरेन्द्रैश्च मुनीन्द्रैस्तं नमाम्यहम्॥
परमाराधनेनैव कृष्णस्य परमात्मनः। पुण्यकेन व्रतेनैव यं प्राप्य पार्व्वती सती॥
तं नमामि सुरश्रेष्ठं सर्व्वश्रेष्ठं गरिष्ठकम्। ज्ञानश्रेष्ठं वरिष्ठञ्च तं नमामि गणेश्वरम्॥

इदं लम्बोदरस्तोत्रं नारदेन पुरा कृतम्। पूजाकाले पठेन्नित्यं जयस्तस्य पदे पदे
सङ्कल्पतः पठेद्यो हि वर्षमेकं सुसंयतः। विशिष्टपुत्रं लभते परं कृष्णपरायणम्
यशस्विनञ्च विद्वांसं धनिनं चिरजीविनम्। विघ्ननाशो भवेत्तस्य महैश्वर्य्यं यशोऽ
इहैव च सुखं भुक्त्वा अन्ते याति हरेः पदम्॥

इति ब्रह्मानामृतसारे गणेशस्तोत्रं समाप्तम्।

---

## गणेशः।

कालवशाद् भारतवासिनां दुर्भाग्यतया वा अधुना विलुप्त
धर्म्मभावः, मनुजहृदयात् तिरोहिता च देवभक्तिः, पाश्चात
दीक्षिता नव्यभव्यास्तु देवानामस्तितायामेव संशेरते। र
मनुष्यदृष्ट्या देवसमालोचनायां प्रवर्त्तमानाः पदे पदे एवमेव
भाजो भवन्ति। स्वभावत एव मनुष्येभ्यो भिन्नप्रकृतयो
अष्टावणिमादि-सिद्धयस्तेषां स्वभावसिद्धाः। सिद्धिबलेन दे
माचार-व्यवहारादयोऽपि लोकविपरीताः, कदाचिदप्यनव
यतां शिथिलभक्तीनां मनुजानां अविश्वासनीयाश्च भवन्ति। र
वारिधेः पारपारे मध्ये वा रम्यमिंलण्डपत्तनं, तत्र च भूलोक
लोक-सदृशं लण्डननगरं, वर्त्तन्ते च तत्र अमोघाध्यवसाया भ
वासिभ्यः सम्पूर्ण-विपरीतप्रकृतयः श्वेतकाया वीरपुरुषाः;
बुद्धिबलेन अचिरस्थिरा विद्युतोऽपि प्रतिबद्धा भयेन निश्चल
प्रतिराजपथं नैशान्धकारमपनयन्ति, समीरणः प्रबलोऽपि कद
सेतुधारणादिकार्य्यं निर्व्वाहयति। एतदन्यदपि इंरेजादि
असारप्रायाणामस्मादृशामसाध्यं यदि केवलं ग्रन्थलिखितमेव व
परं कदाचिदपि नावलोकयामः, कथयन्तु, तदा किमस्माकं म
मेतत् विश्वसिति? एवमेव देवचरितं बहुदिनप्रभृतेरवास
मप्रत्यक्षं।

भारतवासिनो योगबलेन समुन्नता आसन् । तेषां
र्शना देवा अपि दृश्यमानाः सर्व्वानेवाभिलाषान्
यथायथं देवचरितानि प्रत्यक्षीकृतानि ; संसारिणा-
तानि सर्व्वाणि लिखितानि च । गतास्ते दिवसाः ;
भारतवासिनां समुन्नतिरपि चिराय तिरोभूता ।
र्व्वमिदानीं केवलं कथासु अवशिष्यते । अत एवानु-
विश्वासभाजनम् । नव्यभव्या यथेच्छं निन्दन्तु
मानुरागिणां पाठकानामवश्यमेवानुरागो वर्द्धिष्यत-
लोचनायां वयं प्रवर्त्तामहे ।

ः ! प्रथमं या देवमूर्त्तिः सन्निवेशिता, अस्ति-
परिचितैव । प्रतिदिनमेव गौरीनन्दनोऽयं गण-
द्भिः । देवेऽस्मिन् न केषाञ्चिदप्यनादरो दृश्यते ।
वप्रभृतयः सर्व्वं एव भक्तिपूर्व्वकं देवमिमं पूज-
वायं हृदयविश्वासः यत् सर्व्वप्रथमं गणपति-
चिदपि देवता ग्रहीष्यति पूजनम्, न वा सम्पत्-
धेन सर्व्वत्रैव गणपतिपूजनं प्रचलति । अस्योत्-
द्राननप्राप्तिकारणं, सर्व्वासामेव देवतानामग्रे
मिति ज्ञातुं सर्व्वस्यैव औत्सुक्यं जायते, सम्प्रति
। दृश्यते प्रायः सर्व्वेषु प्राचीनेतिहासपुराणादिषु
वा गणेशोपाख्यानम् । तत्रापि शिवपुराणे
धिकं भिन्नप्रकारञ्च । शिवपुराणे एवमेव गणेशो-
क्त—

वपरिणये पर्व्वतराजपुत्री शिवस्य प्राणेभ्योऽपि
, नाभिलषति भूतेशः कदाचिदपि नवोढ़ाया-
वितुम् । अवलाजन-सहजलज्जया पार्व्वती पुनः
मेकान्तमेवावस्थातुमीहते । एकदा कस्मैचिदपि

प्रवेशं मा देहीति नन्दिनं द्वारपालं समादिश्य गिरीन्द्रतनया निमज्जमाना आसीत्। इतो महेशोऽपि चिरमेनां प्रणयिनीवदनदर्शनेन सुतरामुत्कण्ठितः पार्व्वतीसदन-प्रतीहार-भूमौ समायातः, नन्दिना प्रतीहारिणा निवारितोऽपि प्राविशत्। स्वामिनं समायान्तमवलोक्य पार्व्वती लज्जिता नितरां दुःखिता च। पार्व्वतीसख्यौ जया विजया च कदाचित् तामकथयतां, "देवि! नन्दि-भृङ्गि-प्रभृतयः सर्व्व एव शिवानुचरा द्वारि तिष्ठन्ति, ते च न पारयन्ति लङ्घितुं शिवानुमोदनं, यदि अस्मदीयः कोऽपि स्यात्, तदा न पुनरेवं सम्भवति।" भगवती तदीयमिदमनुरुध्य मृत्तिकया पुत्तकमेकं निर्म्मितवती, तदिच्छया संपूर्णावयवस्य तस्य जीवनसञ्चारोऽपि जातः। सर्व्वावयवसुन्दरं तमेवमकथयत्। "वत्स! मम पुत्रोऽसि, द्वारि स्थीयतां, न देयः कस्मैचिदपि प्रवेशः।" इत्येवं तदादेशेन प्रसिद्धः। यथासमयं प्रतीहार-भूमौ समागतं महेशं निवारयता गणेशेन शिवस्य वादानुवादं क्रमशो जातः सुदूरतरः संग्रामः। शिवानुज्ञया तदीयाः पारिषदा अपि योद्धुमागताः परन्तु पार्व्वतीतनयस्यामोघप्रहारेण परिघेण ताड़िताः पराजयमभजन्त। निदारुणसंग्रामकलकलेन भीताः ब्रह्मविष्णुप्रभृतयोऽपि तत्र समागताः, तेषामपि गणेशस्य युद्धमभवत्, पार्व्वतीप्रभावेण ते सर्व्व एव पराजीयन्ते गणेशेन। त्रिशूलपाणिना सञ्जातकोपेन विष्णुप्रभृतिभिर्युध्यमानस्य गणेशस्य मस्तकं छिन्नमासीत्। शिवादीनां अनुचितव्यवहारं गणेशनिधनञ्च समाकर्ण्य पार्व्वती स्वयमेव योद्धुमागता, रुद्राणी योद्धुमायातीति मन्यमानस्य शिवस्य भयमजायत, अभवन् देवा अपि भयेन कम्पितहृदयाः, पार्व्वती-प्रसादमन्तरेण नास्माकं गतिरिति विचार्य्य शिव-प्रभृतयः सर्व्व एव तामनुनेतुमारब्धवन्तः; तदानीमुपस्थितस्य एकदन्तगजराजस्य मस्तकमानीय गणेश-कन्धरायां नियोजितवन्तश्च। पार्व्वतीवचनेन सर्व्वैरेव देवैः प्रतिज्ञातं यत्, गजाननस्य

आभिः कदाचिदपि ग्रहीतव्यं पूजनं इदमेव सर्व्वाग्रे
म् । कार्त्तिकेयो गणेशश्च पित्रोरादरेण प्रतिदिनमेव
ण च बाल्यभावपरिहारेणारूढ़वन्तौ यौवनपदवीम् ।
रेणेष्यामीति ब्रुवतोस्तयोर्मिथः वाक्कलहः सञ्जातः ।
तादृशं विवादमाकर्णितवन्तौ, यः परिक्रम्य सप्त-
ां प्रथममेव शक्नोति समायातुं, तस्यैव परिणयः
त इति नियमं चक्रतुः ।

मयूरवाहनेन तदानीमेव वहिरगमत् धरणीपरि-
णेशस्तु दुर्व्बलमूषिकवाहनः कथमपि न पारयामि
मतुमिति मन्यमानः पितरौ रत्नसिंहासनमासीनौ
णीकृतवान् । भक्तिप्रवणचेतसा जनन्या जनकस्य च
न जायते पृथिवीभ्रमणफलमिति । गणेशेणैव प्रथमं
ोति विचारयतोः पित्रोरनुज्ञया सिद्धिवुद्धी विश्वरूप-
प्रथममेव गणेशेण । बुद्धिमतो गणेशस्य बुद्धिबलेनैव
यः चिरकुमारत्वमास्थितवान् । इत्येवं गणेशचरि-
कृष्णपक्षीय-चतुर्थी पार्व्वती कृत्तिकया गणेशमूर्त्तिं
सैव गणेशजन्मतिथितया आख्यायते । शिव-
हितायां २२-२६ अध्यायेषु ।

ुराणमते तु गणपतिः पार्व्वतीगर्भजात एव, नवजातं
मवलोकयितुं समागतस्य रविनन्दनस्य दर्शनमात्रेण
सञ्जातः । पार्व्वतीक्रोधभीतेन देवेन विष्णुना
द्रस्य मस्तकं गणेशकन्धरायां नियोजितम् । गजेन्द्राननं
प्रक् मन्यन्ते लोका इति विचार्य्य सर्व्वैरेव देवैः प्रति-
तीनन्दनस्य पूजामन्तरेण नास्माभिः पूजा ग्रहीतव्या ।
र्व्वप्रथमं गणेशपूजनविधानमभवत् ।

भृगुकुल-धुरन्धरेण परशुरामेण शिवमवलोकयितुं

समायातम् । अनुमतिमन्तरेणैव पुरान्तः प्रविशन्तं तं निवारयता गणेशेन तस्य वाग्युद्धं हस्ताहस्ति दण्डादण्डि चाभवत् । पार्व्वती-कुमारेण प्रबलपराक्रमेण सिद्धिबलेन बाहुयुगलं कोटियोजनायतं कुर्व्वता परिगृहीतः परशुरामः सप्तलोकीं भ्रामितश्च । दारुणापमानेन समुज्ज्वलितः परशुरामः गणेशनिधनाय अमोघवीर्य्यं परशुं प्राक्षिपत् । तेन च भग्नं गजाननस्य विषाणमेकम् । ततः प्रभृत्येकदन्तोऽयम् ।

दारग्रहणं योगविघ्नकरमिति मन्यमानेन गजाननेन योगासन-मवलम्बितमासीत् । कदाचित् काचिदङ्गना अतीव सुन्दरं युवानं गणेशमवलोकयन्ती कामपीड़िता मां परिणयेति तं प्रार्थितवती गणेशस्य विवेकवचनेन कुपिता वराङ्गना संसारी भवेति शापवचनं प्रादात् । कुपितेन गणपतिना सा चाभिशप्ता तुलसीरूपेणावतीर्णा आसीत् तस्य परित्याज्या च इत्येवं गणेशपूजने तुलसीदानं निवा-रितमिति । ( ब्रह्मवैवर्त्तपुराणीयगणेशखण्डम् । )

गणेशोऽयं लेखकानां प्रधानतमो द्रुतलेखकश्च । भारते लिखित-मस्ति, कृष्णद्वैपायनेन विपुलतरं भारतं प्रणीय केनेदं लिखितव्य-मिति चिन्तयता प्रजापतिः समाराधितः । स च प्रजापतिवचनेन भारतलेखनाय गणेशं प्रार्थितवान् । गणेशेनापि योगविघ्नकरं लेखन-व्यापारं परिहातुकामेन कथितं "द्वैपायन ! स्वीकृतं मया, परन्तु रचनाविलम्बेन, कथन-विलम्बेन वा यदि मे लेखनी क्षणमपि विरतिमवलम्बते, ततो न लिखितव्यम्" । कृष्णद्वैपायनेनाप्यभिहितं "गणेश ! भवतापि मद्वचन-प्रतिपाद्यमवगत्यैव लेखनीयं नान्यथा ।" सर्व्वकविप्रधानोऽपि व्यासदेवः यदा न पारयति वक्तुं तदा कामपि कूटरचनां कृतवान् । तज्ज्ञानाय गणेशस्य समयातिपातः, तेनैव च भारतलिखनं जातम् । अधुनापि आस्तिका भारतवासिनः गणेशस्य लेखकप्राधान्यसूचनाय विघ्ननिवृत्तये च "नमो गणेशाय" लिखित्वैव ग्रन्थादिलिखनमारभन्ते ।

ये च धर्म्मानुरागिणः भक्तिप्रवणचेतसा इष्टदेवत्वेन गणेशमारा-
धयन्ति, ते गाणपत्या इत्याख्यायन्ते । शाक्तवैष्णवादि-सम्प्रदायवत्-
प्रबलेन गाणपत्यसम्प्रदायेनापि कदाचित् भारतभूमिः परि-
व्याप्ता । कालवशात् लुप्तप्रायो गाणपत्यसम्प्रदायः । गणेशाथर्व्व-
शीर्षोपनिषदि गणेशविमर्षिण्याञ्च वेदान्तप्रतिपादितब्रह्मतयैव गणेशो
वर्णितः । तन्मते गणेशादेव जगतः सृष्टिस्थितिप्रलया भवन्ति,
अयं गुणत्रयातीतः योगिनां योगविषयश्च । श्रुतिस्मृतीतिहासपुरा-
णादिषु अयमेव परमात्मरूपेण परमेश्वररूपेण वा वर्णितः । तन्त्रा-
दिषु एकोनपञ्चाशद्गणेशानामुल्लेखो दृश्यते, परन्तु न तदुत्पत्त्यादौ
विशेषः कोऽपि इति । चौरगणेशहरिद्रागणेश-प्रभृतीनां-विवरणां
तन्त्रसारादौ द्रष्टव्यम् । गणेशस्य पूजाविधानादिकं गणेशविमर्षिण्यां
सविस्तरं वर्णितमस्ति तत् तत्रैव द्रष्टव्यम् ।

गणेशध्यानं ।

एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् ।
अभयं वरदं हस्तैर्बिभ्राणं मूषिकध्वजम् ॥
रक्तं लम्बोदरं शूर्पकर्णकं रक्तवाससम् ।
रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥
भक्तानुकम्पिनं देवं जगत्कारणमच्युतम् ।
आविर्भूतञ्च सृष्ट्यादौ प्रकृतेः पुरुषात् परम् ॥

पूजनमन्त्रः—"ओं अं गणपतये स्वाहा ।" (१)
महागणपत्युपनिषन्मते तु—"गं गणपतये नमः ।"

गणेशगायत्री—

"एकदन्ताय विद्महे वक्रतुण्डाय धीमहि तन्नो दन्ती प्रचोदयात् ।" इति ।

श्रीलक्ष्मीचन्द्र सांख्यतीर्थः ।

---

(१) "ओं अं गणपतये स्वाहा । अनेनैव हि मन्त्रेण पूजयेद्गणनायकम् ।"
(गायत्रीतन्त्र १म पटल । )

पाठकाः! वत्सरप्रारम्भे नानाविधेनोपहारेण श्रीमन्तः समुत्साहिता अपरैः सम्पादकैः। चिरशयनेन शिथिलशरीरा चन्द्रिकेयमधुनापि विकला किमपि ताम्बूलमेव युष्मभ्यं प्रदातुमुपतिष्ठते। सादरं वदने कृतमेतत् श्रीमतां चिरसुखाय सम्पद्यते।

## ताम्बूलम् ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्बताते सेयमम्बा श्रीशिवसुन्दरी ॥ १ ॥
खरसेनातिदक्षाणां प्राचामुद्गीर्णवर्णनम्।
काव्यवर्त्म प्रचलतः स्खलतो मेऽवलम्बनम् ॥ २ ॥
एषोऽमनोरमो वा चेत् प्रबन्धः कल्पितो मया।
नीतिज्ञैस्तदपि श्रव्यो बालवागिव कौतुकात् ॥ ३ ॥
विकलाङ्गेति दृक्‌पातात् दयया धौत(पूत)चक्षुषाम्।
तदैव प्रियदृश्येयमुक्तिः कुब्जेव चक्रिणः ॥ ४ ॥
आपात-दृष्ट्या तुच्छोऽयं नोपेक्ष्यो नय-लोचनैः।
को विजानाति वास्ते चेत् भस्माच्छन्नो महामणिः ॥ ५ ॥
बभूव शक्रजिन्नाम राजा सफल-नामभृत्।
चतुर्णां पुरुषार्थानामुन्नेतोदन्वतां शशी ॥ ६ ॥
कृतार्थोऽवश्यकृत्येषु धृतराजेतरपाधिकः।
कमलाप्लुतलोकोऽसौ प्रशान्त इव सागरः ॥ ७ ॥
यत् क्रतौ कृतसान्निध्याः पीत-सोमरसा भृशम्।
अलं धियो दिविसदः सुधासु शिथिलस्पृहाः ॥ ८ ॥
रत्नैर्गुणोत्तरैस्तस्या हृतैः साधुपरीक्षितैः।
सौधाश्चतुर्भिर्द्वारैश्च चित्रिता इव रेजिरे ॥ ९ ॥
तं प्रेमैकगुणा भूपं भोगिन्योऽनीर्षया मिथः।
अगण्यगुणं भेजुः खगा इव फलिद्रुमम् ॥ १० ॥

अपुष्णन् केवलं पापं सोऽभीच्छां जगदीशितुः।
धर्म्मेण [illegible] प्रजापतिरिव प्रजाः॥ ११॥
कुलशीलादिसम्पन्ना तासां श्रेष्ठा महीशितुः।
महिषी विमला नाम तस्य बुद्धिरिवामला॥ १२॥
सपत्नीष्वपि सद्वृत्ता प्रियासु प्रेयसः सती।
प्रीतिमेकोदरावत् सा प्रापत् सर्व्वात्मदर्शिनी॥ १३॥
सोन्मुच्य भूषणाण्यङ्गात् नीत्वाङ्गं साधु काञ्चन।
पर्य्यधापयदेतद्धि सौजन्यं लोकवश्यकृत्॥ १४॥
केशप्रसाधनैः स्रग्भिरनुलेपैश्च भूषणैः।
सपत्नीर्भूषयत्यग्रे सखीव दयिताय सा॥ १५॥
विभिन्नरुचयः कान्ताः सुवृत्ताः समभर्त्तृकाः।
हृदि भान्ति प्रियस्यैकाः विमला-गुणगुम्फिताः॥ १६॥
क्रमशो[illegible]सु सपत्नीषु च प्रेयसः।
[illegible] प्रीता पतिच्छन्दानुवर्त्तिनी॥ १७॥
सौन्दर्य्यं सहजं तासां भूषणैश्च ततोऽधिकम्।
प्रसाधनं सपत्न्या च अवाङ्मनसगोचरम्॥ १८॥
ताम्बूलं प्रसरद्गन्धि चर्व्वितं सास्यवासितम्।
सुखेषु मुखतः प्रादात् कीरीवारुणचञ्चुतः॥ १९॥
वीतचिन्ता विमलया स्वहस्तेन निरन्तरम्।
सपत्न्यस्ता विलासिन्यः कलासु परिनिष्ठिताः॥ २०॥
तावन्ति स्वहस्तत्यानि भर्त्तुस्तोषाय केवलम्।
विदधौ विमला साध्वी सा मुमुक्षुरिवेशितुः॥ २१॥
सपत्न्यो गर्भजं दुःखं सा तु तत्पालनात् सुखम्।
सपत्नीतनयास्तस्या जनन्या एव जानते॥ २२॥
हा मातरम्बजननीत्यहं पूर्व्विकया सुताः।
पृष्ठांशक्रोड़मारूढ़ा अपुत्त्रां तामनन्दयन्॥ २३॥

न विद्यायां सुखे स्वस्मिन् असारे वा विभूषणे।
प्रियत्वं तादृशं तस्याः पातिव्रत्ये च यादृशम् ॥ २४ ॥
अनुमायाशयं तस्य यो यथा परितुष्यति।
तथावरोधेऽनुचरत् पराराधन-तत्परा ॥ २५ ॥
गुरून्नत्या लघून्मैत्या लुब्धा अर्थैः प्रियाः प्रियैः।
क्षुधार्त्ता भोजनैः श्रान्ता विश्रामेण वशीकृताः ॥ २६ ॥
पवित्रमपवित्रं वा चरित्रमवरोधिनाम्।
वेदितुं कषपाषाणां विमलेति मतिर्मम ॥ २७ ॥
तस्या हासो गिरां दासः लज्जा माहतिराश्रिनि।
उपदेष्टा गुरुर्धर्मः सदा सहचरी नतिः ॥ २८ ॥
एवं व्यवहरन्ती सा विमला हृदये नृणाम्।
चित्रितेव सदा प्रेम्णां अधिष्ठात्रीव देवता ॥ २९ ॥
पश्चाचरितं तस्या स्मृश्यन् मनसि पार्थिवः।
गौरवञ्च भयञ्चापि विभर्त्ति कश्चिदादरात् ॥ ३० ॥
विमला त्रिंशता (३०) कौमुदिस्त्वा शान्तीकुपः (२५)।
चञ्चलाष्टादशाब्देन (१८) दुर्मतिर्दशपञ्चभिः (१५) ॥३१॥
ताभिः समेताभिरपञ्चपालया
धिया सुखाब्धौ निममज्ज शक्रजित्।
चतुर्विधाभिश्चतुरब्धिलक्ष्मिः
श्रीभिः सदेहाभिरिवाथ सूक्तिभिः ॥ ३२ ॥

इति ताम्बूले प्रथमवीटिका ॥१॥*॥

---

# महाप्रभुश्रीगौराङ्गदेवस्य जीवनचरितम्।

( पूर्व्वप्रकाशितात् परम्। )

परिणामदर्शिनः कायवस्तुसम्बन्धच्छेदनमेवाभिलषन्ति चैतन्यचन्द्रस्य, अनायासेन अमोघ शास्त्रवचनेन तस्य लाभसम्भावनायां जीवन्मुक्तप्रायस्य तस्य दर्श एव युज्यत इत्यमन्यन्त। प्राचीनदर्शनेषु यानि स्थितप्रज्ञस्य जीवन्मुक्तस्य वा लक्षणानि, पर्य्यालोचनया आबाल्यादेव चैतन्य चरिते तानि लक्ष्यन्ते, परन्तु वयोवृद्धिसहितान्येवाभवन् विकशितानीति, चरितामृते लिखितमस्ति नवे वयसि वर्त्तमानश्चैतन्यः किमपि हृदये कृत्वा कदाचित् मृत्तिकां भक्षयितुमारभत, शचीमाता तथाविधं मृत्तिका-भक्षणोद्यतं गौराङ्गचन्द्रं निर्भर्त्सयामास। स तु नितरां निर्भर्त्सितोऽपि सहासमभिहितवान् "जननि! वृथेयं भर्त्सना, मृत्तिका निन्दनीया, तद्भक्षणमनुचितं, दुग्धादिकं प्रशंसनीयं तद्भक्षणेनास्माकं श्रेयो विधास्यतीति अकिञ्चित्करमेतत्, पर्य्यालोचनाया विज्ञातं भवति, दधि-दुग्ध-सन्देशादीनि मृत्तिकामयान्येव।" वर्त्तमानसमयेऽपि कतिचित् ज्येष्ठतातबालका (१) बाल्यत एव कथयन्ति ब्रह्मज्ञानं; चैतन्यस्यापि तत्सदृशेन बालचरितेन तत्त्वज्ञानकथनेन च अनेकेषामेव हृदयेनावधारितं "ज्येष्ठतातबालकोऽयमिति, परमचिरेणैव कालेनालुप्यत तेषां हृदयविश्वासः। यौवनप्रारम्भे एवाभवत् चैतन्यस्य पाठसमाप्तिः, अस्मिन्नेव च अध्यापनायामपि प्रवृत्तं। बाल्यकाल एव चैतन्यमुखात् निरगलत् सर्व्वेषां हृदयग्राही धर्म्मोपदेशः। तेन तु यादृशाः धर्म्मोपदेशा लोकानां प्रचारिताः स्वयमपि प्रकाशितानि तादृशान्येव चरितानि। अवसन्नप्राये च काले धर्म्मोपदेशमभिलाषुकानां साधूनां श्लोकेन अनेन सनातनधर्म्मोपदेशं कृतवान्।

(१) ज्येठाछेले इति वङ्गे प्रसिद्धम्।

"तृणादपि सुनीचेन, तरोरिव सहिष्णुता।
अमानिना मानदेन, कीर्त्तनीयः सदा हरिः॥" ( पद्यावली २० अङ्क )

क्षुद्रतरेऽस्मिन् श्लोके अवलोक्यन्ते पञ्चोपदेशाः।

१। सर्व्वेषां संसारिणां आत्मनः सुखाभिलाषिणां मानवानां तृणादपि लघुवृत्तिता अवलम्बनीया, नितरां लघुभावेन जीवनयापनं कर्त्तव्यम्।

२। प्राकृतिक-नियमानुसारेण अदृष्टवशेन ईश्वरघटनया वा सुखानि दुःखानि वा समुपस्थितानि, तत्र च अवलम्बनीया सहिष्णुता, सुखेषु आग्रहातिशयो दुःखेषु च न कर्त्तव्यं चित्तचाञ्चल्यं, शाखिनो यथा शीतोष्णं वर्षातपञ्चापरिहार्य्यमवश्यम्भावेन सहन्ते, तथा मनुष्या अपि अपरिहार्य्याणि कालवशादुपागतानि सुखदुःखानि लब्ध्वापि नोद्वेजिता भवेयुः।

३। अभिमानो हि धर्म्मैषिणां संसारिणां मुमुक्षूणां वा नितरामहितकारी, अभिमानकीटस्य गरलमुखस्य स्पर्शमात्रेण अतिसुन्दरमपि जीवनकुसुमं दर्शनीयं प्रस्फुटितं मलिनञ्च सदा याति सौरभहीनतां। जीवानां सर्व्वेषामेव निरवशेषं परिहरणीयोऽभिमानः। इत्येव तात्पर्य्यं "अमानिना" इत्यस्य।

४। येन दुष्टाशयेन स्वभाववैरिणा वा स्वभावेन केनापि कारणान्तरेण वा भवन्तोऽपमानिताः भवद्भिः सोऽपि दुष्टाशयो माननीय एव।

५। लोकानां निरतिशय कठोरेण संपादनीयो वैदिकधार्म्मिककलापः (अपरेऽपि तान्त्रिका धर्म्मशास्त्रप्रतिपादिता विषया वानुष्ठातुमशक्याः) कलौ नितरां क्षीणा च शक्तिर्मनुजानां, रुचिरपि विपरीता वर्त्तते। अतएव सर्व्वेषामेव मानवानां सर्व्वदैव सुकरं अनायाससाध्यं हरिनामकीर्त्तनमेव कर्त्तव्यम्। किन्तु येन नरोत्तमेन तृणादपि लघुवृत्तिता, वृक्षाणामिव सहिष्णुता च अवलम्बिता, यस्य च हृदयाद्-पुनरागमनं अभिमानो विसर्जित आसीत्. यश्च पारयति अपमान-

कारिणमपि मानवं नितरां सम्मानयितुं तस्य एव हरिनामकीर्त्तने अधिकारः।

सहृदयपाठकाः! अधुनातनानां प्राचीनानाञ्च अनेकेषामेव धर्म्म-प्रचारकाणां वर्त्तमानसमालोचकैरादर्शपुरुषतया स्वीकृतानामन्येषां वा मनुजानां परः शतानि जीवनानि भवद्भिरवलोकितानि, यथायथं समालोचितानि च तानि, कथनीयमेतत्, एतादृशमुपदेशवाक्यं कस्य जीवनवृत्तान्ते समालोचितं, यदपि समालोचितमेवादृशं किमपि वाक्यं तथापि तादृशाचरणं दृष्टं किं? चैतन्यचरितस्य प्रतिदलमेव विकसितं तादृशाचरणं, समुत्साहयति च सर्व्वेषां हृदयम्। प्रसङ्गेनास्माभिः चैतन्यचन्द्रस्य धर्म्मोपदेशकं वाक्यमुत्थापितम्। परं चैतन्यधर्म्मस्यापि तदेव सूत्रमिति। चरितसमालोचनया विदितं भविष्यति यत्, भारतवासिनां एकताविहीनानां नितरामवनतिं दुर्द्दशाञ्च दूरीकर्त्तुं चैतन्येन महात्मना धर्म्मः प्रचारितः, एकता-स्थापनं सर्व्वेषामेकधर्म्मानुरागवर्द्धनं, अहङ्कारस्य तथा गौरवस्य परि-हारेण जीवनयापनञ्च चैतन्यधर्म्मस्य प्रधान प्रयोजनमिति।

हिन्दुधर्म्मविरोधिनामपि यवनादीनां यथोचितसम्माननायां चैतन्यस्य कुण्ठिता नावलोकिता कदापि, हिंसुकाः पाषण्डा अपि तस्य नितरां समादरणीयाः, नावलोकितश्च भीषणदुःखसमयेऽपि तस्य चित्तविकारः। चैतन्यस्य बालजीवन एव संवृत्तं काञ्चिद्वृत्तान्तं प्रकाशयति तस्य महत्त्वं लोकातिशयसाहसं मानवदुर्ल्लभं जीवन्मुक्ता-प्रायत्वञ्च। चरितान्तरे काञ्चिद्वृत्तान्तमेवं लिखितमस्ति।

(क्रमशः।)

श्रीलक्ष्मीचन्द्रशर्म्म सांख्यतीर्थः।

---

# पूर्व्वकालीनाः कथं दीर्घायुषः?

( पूर्व्वप्रकाशितात् परम् । )

---

यथा मनौ तृतीयाध्याये १५२—१६७ ।

"चिकित्सकान् देवलकान् मांसविक्रयिणस्तथा ।
विपणेन च जीवन्तो वर्ज्याः स्युर्हव्यकव्ययोः ॥
प्रेष्यो ग्रामस्य राज्ञश्च कुनखी श्यावदन्तकः ।
प्रतिरोद्धा गुरोश्चैव त्यक्ताग्निर्वार्द्धुषिस्तथा ॥
यक्ष्मी च पशुपालश्च परिवेत्ता निराकृतिः ।
ब्रह्मद्विट् परिवित्तिश्च गणाभ्यन्तर एव च ॥
कुशीलवोऽवकीर्णी च वृषलीपतिरेव च ।
पौनर्भवश्च काणश्च यस्य चोपपतिर्गृहे ॥
भृतकाध्यापको यश्च भृतकाध्यापितस्तथा ।
शूद्रशिष्यो गुरुश्चैव वाग्दुष्टः कुण्डगोलकौ ॥
अकारणपरित्यक्ता मातापित्रोर्गुरोस्तथा ।
ब्राह्मैर्यौनैश्च सम्बन्धैः संयोगं पतितैर्गतः ॥
आगारदाही गरदः कुण्डाशी सोमविक्रयी ।
समुद्रयायी वन्दी च तैलिकः कूटकारकः ॥
पित्रा विवदमानश्च कितवो मद्यपस्तथा ।
पापरोग्यभिशस्तश्च दाम्भिको रसविक्रयी ॥
धनुः शराणां कर्त्ता च यश्चाग्रे दिदिषूपतिः ।
मित्रध्रुग्द्यूतवृत्तिश्च पुत्राचार्य्यस्तथैव च ॥
भ्रामरी गण्डमाली च श्वित्र्यथो पिशुनस्तथा ।
उन्मत्तोऽन्धश्च वर्ज्याः स्युर्व्वेदनिन्दक एव च ॥
हस्तिगोऽश्वोष्ट्रदमको नक्षत्रैर्यश्च जीवति ।
पक्षिणां पोषको यश्च युद्धाचार्य्यस्तथैव च ॥
स्रोतसां भेदको यश्च तेषाञ्चावरणे रतः ।
गृहसंवेशको दूतो वृक्षारोपक एव च ॥

श्वक्रीड़ी श्येनजीवी च कन्यादूषक एव च।
हिंस्रो वृषलवृत्तिश्च गणानाञ्चैव याजक:॥
आचारहीन: क्लीवश्च नित्यं याचनकस्तथा।
कृषिजीवी श्लीपदी च सद्भिर्निन्दित एव च॥
औरभ्रिको माहिषिक: परपूर्व्वापतिस्तथा।
प्रेतनिर्हारकश्चैव वर्ज्जनीया: प्रयत्नत:॥
एतान् विगर्हिताचारान् अपाङ्क्तेयान् द्विजाधमान्।
द्विजातिप्रवरो विद्वानुभयत्र विवर्ज्जयेत्॥"

अतएव भोजनकाले भस्मजलादिभि: पङ्क्तिं भिन्द्यात्।

यथा आह्निकाचारतत्त्वे व्यास:।

"अप्येकपङ्क्त्या नाश्नीयात् संवृत: सुजनैरपि।
को हि जानाति किं तस्य प्रच्छन्नं पातकं महत्॥
भस्मस्तम्भ जलद्वारमार्गै: पङ्क्तिञ्च भेदयेत्॥"

यथा आलापसंश्रवेन गात्रस्पर्शेन निश्वाससंलग्नेन एकत्र भोजनेन एकशय्याशयनेन एतदनेरनाप्युक्तेन संस्रवस्रोतसा रोगिण: शरीराद्रोग इव संक्रामकं पापमपि अपरशरीरे प्रविशति। तथा तेन तेन हेतुना सत्त्वगुण: सत्प्रवृत्ति: पुण्यमपि साधुशरीरात् असाधुशरीरे निश्चितं संक्रमति।

एतेनैव साधुसंसर्गस्य तावती प्रशंसा महर्षिभिर्गीता।

यथा श्रीमद्भागवते १।१।१५।

"यत्पादसंश्रया: सूत मुनय: प्रशमायना:।
सद्य: पुनन्त्युपस्पृष्टा: स्वर्धुन्यापोऽनुसेवया॥"

यथाह हारीत:।

"हन्यादशुद्ध: शुद्धन्तु शुद्धोऽशुद्धन्तु शोधयेत्।
अशुद्धश्च तत्तोभूत: शुद्धवासेन शुध्यति॥"

किमधिकं एकोऽपि तथाविध: साधु: एकपङ्क्त्युपविष्ट: अन्यान् वरयन् पङ्क्तिपावन: कथ्यते।

**यथा पाद्मे स्वर्गखण्डे ३५ अध्याये।**

"इमे हि मनुजश्रेष्ठ। विज्ञेयाः पङ्क्तिपावनाः।
विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व्व एव हि॥
सदाचारपराश्चैव विज्ञेयाः पङ्क्तिपावनाः।
मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः॥
ऋतुकालाभिगामी च धर्म्मपत्नीषु यः सदा।
वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत॥
अथर्व्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः।
सत्यवादी धर्म्मशीलः स्वकर्म्म-निरतश्च यः॥
ये च पुण्येषु तीर्थेषु अभिषेक-कृतश्रमाः।
मखेषु च समस्तेषु भवन्त्यवभृतप्लुताः॥
अक्रोधना ह्यचपलाः चान्ता दान्ता जितेन्द्रियाः।
सर्व्वभूतहिता ये च श्राद्धेऽप्येतान्निमन्त्रयेत्॥
एतेषु दत्तमचय्यमेभि वै पङ्क्तिपावनाः।
यतयो मोक्षधर्म्मज्ञा योगाः सुचरितव्रताः॥
ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान्।
ये च भाष्यविदः केचिद्ये च व्याकरणे रताः॥
अधीयते पुराणं ये धर्म्मशास्त्राणि चाप्युत।
अधीत्य च यथान्यायं विधिवत्तस्य कारिणः॥
उपपन्नो गुरुकुले सत्यवादी सहस्रदः।
अग्र्याः सर्व्वेषु वेदेषु सर्व्वप्रवचनेषु च॥
यावदेते प्रपश्यन्ति पङ्क्त्यां तावत् पुनन्ति च।
ततो हि पावनात् पङ्क्त्या उच्यन्ते पङ्क्तिपावनाः॥
ऋत्विगनुपाध्यायः स वेदग्रासनं व्रजेत्।
ऋत्विग्भिरननुज्ञातः पङ्क्त्या हरति दुष्कृतम्॥
अथ चेद्वेदवित् सर्व्वैः पङ्क्तिदोषैर्व्विवर्ज्जितः।
न च स्यात् पतितो राजन् पङ्क्तिपावन उच्यते॥"

अतएव यदि कश्चित् म्लेच्छः साधुयोगिनां संसर्गं व्रजति तदा साधुशरीरात् सत्त्वगुणः तत्प्रकृत्यादिकञ्च तस्मिन् म्लेच्छशरीरं

संसर्गस्य तस्य रजस्तमोगुणं तत्प्रकृतिञ्च हिंसाद्वेषादिकं विलोपयति, तदा सात्त्विकप्रकृतिलाभात् जात्या म्लेच्छोऽपि हविष्यान्नादिभक्षणं सोढुं शक्नुत एव, नान्यथा ।

एवं सच्छास्त्राध्ययनात्, पापनिर्वेदात्, स्वधर्मप्रवृत्तेः, दानात्, इन्द्रियनिग्रहाच्च सत्त्वगुणा वर्द्धन्ते (१) तेन हि तस्य सात्त्विकाहारो युज्यते एव ।

अतो मन्यते साधुसंसर्गादिभिः कारणैरपेतदुष्कृतानां सत्त्ववताञ्च म्लेच्छानां हविष्यान्नादिभोजनं नाहितकरमिति ।

अस्मद्देशे अनेके बालका अपि धर्मप्रवृत्ता अपि वहिर्धर्मभावं घोषयितुं आहारे मत्स्यं विजहति, भुञ्जते चैकाहारम्, न ते परिणामदर्शिनः, यतः यस्य खलु मनः सत्त्वबहुलं स एव सात्त्विकः । यस्य मनसि रजस्तमोभावः निरुद्दाम क्रीड़ति नासौ सात्त्विको भवितुं युज्यते, तस्य आहारोऽपि सात्त्विको निरन्तरं न हितकरः स्यात्, चिरमत्स्यभुजां मातापितॄणां शुक्रशोणितपरिणामस्य तथाविधशरीरस्य झटिति विघटनं स्यात् यदि नासौ अन्तःसत्त्वप्रकृतिर्मत्स्यभोजनं जह्यात् ।

अस्मद्देशीया अनेका हिन्दुविधवाः सन्ततं दयितशोकाग्निना दह्यमानाः देवमिव पतिं ध्यायन्त्यः, सत्त्वगुणवर्द्धकं देवाराधनादिकमाचरन्त्यश्च हविष्यान्नं भुक्त्वा नीरोगशरीरा दीर्घं जीवन्ति । प्रत्यक्षत एव तद्दृश्यताम् ।

अधुना आयुर्नाशकारणानि संक्षिप्य लिख्यन्ते । आहारात् परं मुहूर्त्तमपि विश्राममकृत्वा धावतां, यानाद्यारूढानाञ्चायुः क्षीयते ।(२)

---

(१) मनौ । "ख्यापनेनानुतापेन तपसाध्ययनेन च ।
पापकृन्मुच्यते पापात् दानेन च दमेन च ॥"

(२) अन्यत् आहारविधौ विशेषतो वक्ष्यते ।

यथा हारीतसंहितायां द्वादशाध्याये।

"भुक्तोपविशतः स्थौल्यं वलमुत्तानशायिनः।
आयुर्व्वामकटिस्थस्य मृत्युर्धावति धावतः॥"
"व्यायामञ्च व्यवायञ्च धावनं पानमेव च।
युद्धं गीतञ्च पाठञ्च घर्ण्यं भुक्ता विवर्ज्जयेत्॥"
"न सद्यः पीते पठनं गमनं न च कारयेत्।
न यानवाहनारोहं विवादं न च कारयेत्॥"

द्रव्यगुणे च आहारविधौ।

"भुक्तोपविशतस्तुन्दं शयानस्य वपुर्भवेत्।
आयुश्चंक्रममाणस्य मृत्युर्धावति धावतः॥"

आधुनिका प्रायश एव मानवाः श्ववृत्तिमेव जीवनव्रतं मन्यमानाः समाश्रयन्ति, प्रातर्ज्जाग्रति, आपणं धावन्ति, खाद्यं क्रीणन्ति, पत्न्यै क्षिपन्ति, पत्नी रध्नाति, कर्म्मकराः विलासिनः भुञ्जते, अर्द्धमाचामन्ति, घटिकां मुहुः पश्यन्ति, ताम्बूलं मुखे क्षिपन्ति, सत्रासं द्रुतञ्च परिच्छदं परिदधति, कञ्चुकबन्धनं योजयन्तश्च धावन्तश्च श्वासरुग्णा इव निश्वसन्तश्च "शकटं बधान बधान" इत्युच्चैर्दीर्घतरं घोटकशकटवाहं समाह्वयन्तश्च कर्म्मस्थानं गच्छन्ति च लेखनीं पिंषन्ति च, अनेके च पद्भ्यामेव शकटमतिक्रम्य धावन्ति। भुक्तान्नादिकञ्च पाकाशयं यथायथं नोपतिष्ठति, न वा जीर्ज्यति। अतएव तेषां रोगा मृत्युश्च नानुचिताः। पूर्व्वकालीनास्तु नैवमासन् दीर्घायुषश्च तेनैव तेऽभवन्।

पराङ्गना सेवनमपि अल्पायुष्कारणम्।

यथाह मनुः ।४।१३४।

"न हीदृशमनायुष्यं लोके किञ्चन विद्यते।
यादृशं पुरुषस्येह परदारोपसेवनम्॥"

(क्रमशः।)

# उत्तररामचरितालङ्कारादय: ।

( पूर्व्वप्रकाशितात् परम् । )

"म्लानस्य जीवकुसुमस्य विकाससनानि, सन्तर्पणानि सकलेन्द्रिय नन्दनानि ।
एतानि ते सुवचनानि सरोरुहाक्षि, कर्णामृतानि मनसश्च रसायनानि ॥"

अत्र जीवकुसुमेति रूपकम् । सरोरुहाक्षीत्युपमा । एवं एकस्य सीतासुवचनस्यम्लानजीवकुसुमविकासनादिनानेकधोल्लेखात् तत्तद्रूपतया परिणमनाच्च परिणाममूलकोल्लेखालङ्कार: ।

"आ विवाहसमयाद्गृहे वने शैशवे तदनु यौवने पुन: ।
स्वापहेतुरनुपाश्रितोऽन्यया रामवाहुरुपधानमेष ते ॥"

अत्र उपधानस्य रामवाह्वात्मतया प्रकृते आ विवाहसमयात् गृहे वने शैशवे यौवने च शयनहेतूपयोग: अन्यस्त्रीस्पर्शराहित्येनाधिकारूढ़वैशिष्ट्यपरिणाम: ।

"इयं गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयो:
असावस्या: स्पर्शो वपुषि वहुलश्चन्दनरस: ।
अयं कण्ठे वाहु: शिशिरमसृणो मौक्तिकसर:
किमस्या न प्रेयो यदि परमसह्यस्तु विरह: ॥"

अत्र सौन्दर्य्यादिधर्म्मस्य प्रकृते रामप्रीत्याद्युपयोगात् । इयमित्यनेन प्रत्यक्षपरिदृश्यमानत्वात् लक्ष्म्या अधिकं वैशिष्ट्यमित्यधिकारूढ़ वैशिष्ट्यपरिणाम: । अमृतवर्त्तीत्यत्र च परिणाम: । वहुलेत्यत्र च अधिकारूढ़वैशिष्ट्यपरिणाम: । तृतीयचरणे तु एकस्य वाहो: शिशिरशीतलतया मुक्तामालातया च परिणतत्वात् उल्लेखमूलपरिणामालङ्कारे एकाश्रयसङ्कर: ।

"हाहा धिक् परगृहवासदूषणं यद् वैदेह्या: प्रशमितमद्भुतैरुपायै: ।
एतत्तत् पुनरपि दैवदुर्व्विपाकात् आलर्कं विषमिव सर्व्वत: प्रसृतम् ॥"

अलालर्कं विषमिवेत्युपमा।

"सतां केनापि कार्य्येण लोकस्याराधनं व्रतम्।
यत् पूरितं हि तातेन माञ्च प्राणांश्च मुञ्चता॥"

अत्र प्रस्तुतस्य मामित्यस्य प्राणानित्यस्य चैकमोचनक्रियाभिसम्बन्धात् तुल्ययोगितालङ्कारः।

"यत् सावित्रैर्द्दीपितं भूमिपालैर्लोकश्रेष्ठैः साधुशुद्धं चरित्रम्।
मत् सम्बन्धात् कश्मला किं वदन्ती स्याच्चेदेवं हन्त धिंमामधन्यम्॥"

अत्र मम धिक्कारं प्रति पादत्रयवाक्यं स्यादित्यर्थहेतुकं काव्यलिङ्गं। दीपितत्व कश्मलत्वयोर्विरूपयोः संघटनाद्विषमोऽलङ्कारश्च।

"त्वया जगन्ति पुण्यानि त्वय्यपुण्या जनोक्तयः।
नाथवन्तस्त्वया लोकास्त्वमनाथा विपत्स्यसे॥"

अत्र पुण्योक्तिकारणे सत्यप्यपुण्योक्तौ एवं पुण्यापुण्योक्त्योः सनाथानाथयोश्च विरूपयोः संघटनत्वेन च विषमविशेषोक्त्योः संसृष्टिः।

"इक्ष्वाकुवंश्योऽभिमतः प्रजानां जातञ्च दैवाद्वचनीयमत्र।
यच्चाद्भुतं कर्म्म विशुद्धिकाले प्रत्येतु कस्तद्यदि दूरवृत्तम्॥"

अत्र द्वितीयार्द्धे विशुद्धिकाले अद्भुताग्निप्रवेशकर्म्मणोऽप्रत्यये दूरवृत्तमित्येकपदं हेतुरिति काव्यलिङ्गम्।

"शैशवात् प्रभृति पोषितां प्रियां सौहृदादपृथगाशयामिमाम्।
छद्मना परिददामि मृत्यवे, सौनिको गृहशकुन्तिकामिव॥"

अत्र मृत्यवे सीतादानकार्य्ये अपराधादिकारणविरुद्धानां शैशवात् प्रभृति पोषणादीनां सद्भावात् विभावना। एवं सीताया अत्यागकारणेषु शैशवात् प्रभृति पोषणादिषु कारणेषु सत्स्वपि अत्यागविरुद्धस्य त्यागस्य सद्भावे विशेषोक्तिः इत्यनयोः सन्देहसङ्करः। गृहशकुन्तिकामिवेत्युपमा।

"अपूर्व्वकर्म्मचण्डालमयि मुग्धे विमुञ्च माम्।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्॥"

अत्र सुखसाधनभ्रान्त्या दुःखसाधनमाश्रितासीति सामान्ये प्रस्तुते चन्दनतरुभ्रान्त्या विषद्रुमाश्रयणमित्यप्रस्तुतप्रशंसा। एवं पूर्व्वार्द्धे मर्म्मोचनकार्य्यं प्रति विषद्रुमाश्रयणं समर्थकं कारणमित्यप्रस्तुतप्रसंशामूलोऽर्थान्तरन्यासः। अपूर्व्वेत्यत्र च उपमा।

"दुःखसंवेदनायैव रामे चैतन्यमर्पितम्।
मर्म्मोपघातिभिः प्राणैर्व्वज्रकीलायितं स्थिरैः॥"

अत्र वज्रकीलायितं स्थिरैरिति लुप्तोपमा।

"ते हि मन्ये महात्मानः कृतघ्नेन दुरात्मना।
मया गृहीत नामानः स्पृश्यन्त इव पाप्मना॥"

अत्र क्रियोत्प्रेक्षा।

"विस्रब्धा दूरसि निपत्य लब्धनिद्रामुन्मुच्य प्रियगृहिणीं गृहस्य शोभाम्।
आतङ्कस्फुरितकठोर गर्भगुर्व्वीं क्रव्याद्भ्यो बलिमिव निर्घृणः क्षिपामि॥"

अत्र गृहस्य शोभाकार्य्येण कारणस्य सीताया अभेदेन हेत्वलङ्कारः।

(क्रमशः।)

---

# विश्वविद्यालयप्रश्नोत्तरादर्शः।

(मद्रराजविभागस्य।)

---

आजन्मनो ह्यविरतं भुवनं भ्रमामि दीना कृशा विदधती स्ववयोऽनुरूपां।
प्रीतिं मनः परमसान्द्रनदाश्च शिक्षाम् तेषां कृपावितरणान्मयि येऽनुरक्ताः॥
कुत्रापि सा मम च नाद्रियते सुचेष्टा रत्नोज्ज्वले खलु यथा परमार्थदर्शि।
अद्यापि यान् श्रितवती भजते स्वसत्तां भाषा लता सुमनसः पतनीन्मुखी नः॥
तस्मान्मुदा च दययाद्रियतेऽनुरागात् प्रश्नो मया वपुषि तत् सुविभागजातः।
भूषां प्रसूनरचितां परिधाय बाला शोभां तनोति परमां हि यथात्ममूर्त्तेः॥
क्षुद्रा कथं ननु सहे बहुभूषणानां भारं कुतो मम तनौ वसनं बहूनाम्।
तत् तेषु सर्व्वसुखदान् हि गृहीतवत्याः दोषः स वो निजगुणैः समुपेक्षणीयः॥

## Matriculation Examinatian Madras.

*December 1893.*

*Question.*

Give the विग्रह or analyses of the following compounds and state the class to which each belongs.

*1.* त्रिदशेशसमः *2.* हृच्छयाविष्टचेतना *3.* कुमार्गगामी
*4.* यथाश्रद्धं *5.* दूरतप्रभृति *6.* बहुजीवसंघसुखदः

*Answer.*

*1.* तिस्रो दशाः येषां ते त्रिदशाः बहुव्रीहि समासः। तेषामीशस्त्रिदशेशः षष्ठीतत्पुरुषः। तेन तस्य वा समस्तथोक्तः तृतीयया षष्ठ्या वा तत्पुरुषसमासः।

*2.* हृदि शयो यस्य स हृच्छय इति बहुव्रीहि समासः। तेनाविष्टं हृच्छयाविष्टं तृतीयासमासः। तादृशं चेतनं यस्याः सा तथोक्ता बहुव्रीहिः।

*3.* कुत्सितो मार्गः कुमार्गः कुगतिप्रादय इति समासः। कुमार्गं गच्छतीति कुमार्गगामी द्वितीया प्रकरणे गमिगम्यादीनामुपसंख्यानात् द्वितीया तत्पुरुषः।

*4.* श्रद्धामनतिक्रम्य यथाश्रद्धं यथासादृश्य इत्यव्ययीभावः।

*5.* दूरतं प्रभूतिर्यत्र तत् तथोक्तम्। बहुव्रीहिः।

*6.* बहवो जीवाः बहुजीवाः कर्म्मधारयः। तेषां संवस्तस्य सुखदः तथोक्तः। उभयत्रापि षष्ठीसमासः। सुखं ददातीति सुखदः। इत्यत्र धातुभिरुपपदानीति तत्पुरुषः।

*IV. Question.*

*(a)* Parse the underlined words in the following :—

*1.* तस्य दृष्ट्वाभवद्बुद्धिः पार्थमिन्द्रासने स्थितम्।

*2.* सर्व्वदेवनिकाया हि नालं योधयितुं हि तान्।

*3.* यदि वेदाः प्रमाणास्ते दिवसादूर्द्धमच्युत।
त्रयोदशसमाः कालो ज्ञायतां परिनिष्ठितः॥

*4.* प्रविशन्तं च मां तत्र न कश्चिद्दृष्टवान्नरः।
ऋते तां पार्थिवसुतां भवतामिव तेजसा॥

*(b)* Point out any grammatical or other pocubaities that you may notice in the following :

*1.* स क्षत्रधर्म्मविद्राजा मा धर्म्मादागीनशः पथः।

*2.* एकासनोपविष्टौ तौ शोभयाञ्चक्रतुः सभाम्।
सूर्य्याचन्द्रमसौ व्योम चतुर्द्दश्यामिवोदितौ॥

Is it शुक्लचतुर्द्दशी or कृष्णचतुर्द्दशी that is referred to here and why?

*Answer :—*

*(a)* दृष्ट्वा इति क्त्वाच् प्रत्ययान्तत्वादसमापकक्रियापदं, पार्थमिति अस्य कर्म्मपदं। अभवदिति समापिकया क्रियया समान कर्त्तृत्वविरोधात् स्थितस्येत्यध्याहारेण दृष्ट्वेत्यस्यान्वयः।

न इत्यव्ययं, भवन्तीत्यूहनीयक्रियायाः विशेषणम्।

अलं इत्यव्ययं सर्व्वदेवनिकाया इत्यस्य विशेषणपदं।

त्रयोदश समाः—इति विशेष्यपदं पुंलिङ्गप्रथमाबहुवचनान्तं, काल इत्यनेन उद्देश्यविधेय सम्बन्धात् समकारकं।

ऋते इत्यव्ययं। योगेऽस्य द्वितीया पञ्चम्यौ भवतः।

(b) 1. नीनशः इत्यत्र न माङ्योग इत्यमागम निषेधः।

2. सूर्य्याचन्द्रमसावित्यत्र देवताद्वन्द्वे आनङित्याकारः।

अत्र शुक्लचतुर्द्दश्येव कवेरभिप्रेता, कलाद्वयमात्रावशिष्टत्वात् सूर्य्यसान्निध्याच्च, कृष्णचतुर्द्दश्यां सम्यक् चन्द्रदर्शनस्याप्रसक्तेः।

*V (b) Question.*

Derive the following.

1. विहगः 2. पादपः 3. कपर्दी 4. जनार्द्दन
5. सव्यसाची 6. साप्तपदीनम्।

*Answer.*

1. विहायसा गच्छतीति विहगः विहायस्+गम्+कर्त्तरि डः।
निपातनात् साधु।

2. पादेन मूलेन पिवति रसमाकर्षतीति पादपः
पाद+पा+कर्त्तरि डः।

3. कपर्द्दः शिवजटाभारः। सो स्यास्तीति अस्त्यर्थे मतुप्।

4. जनैः लोकैः अर्द्द्यते याच्यते असौ इति जनार्द्दनः
जन+अर्द्द+कर्म्मन्यनट् प्रत्ययः। *

यद्वा जनं तन्नामासुरं अर्द्दयति पीड़यतीति जनार्द्दन। यद्वा जनानर्द्दयति अन्ते संहरति इति सः। तस्य सर्व्वदेवमयत्वात्।

5. सव्येन दक्षिणेतरेण करेण सचते इति
सव्य+सच्+कर्त्तरि णिन् प्रत्ययः।

6. सप्तभिः पदैः आपद्यते इति साप्तपदीनं
सप्तन्+पद+नीन, साप्तपदीनं सख्यं इति निपातनात् साधु।

---

* यद्यपि पाणिनीयैः करणाधिकरणयोरेवानट् प्रत्ययः सम्यक् स्वीकार्य्यस्तथापि वोप-देवेन घसलनटोऽघे, कभावेसीति सूत्रद्वयेन सर्व्वेष्वर्थेषु प्रत्ययस्यास्य विधानं कृतं।

(क्रमशः।)

श्रीज्ञानशरणशर्म्मा चक्रवर्त्ती।

[illegible]

[illegible] ।

[illegible] ॥

श्रीश्रीगणेशाय नमः ।

[illegible] कर्मोत्तिं आपन्नजी [illegible] ।

मान्यानन्वयती मैथलम्बा श्रीमिनसुन्दरी ॥

आत्मावलोकिका ।

आदौ [illegible]

ज्यैष्ठे [illegible] वराज ।

ईदृङ्नतौ भवतु पाठयतीव लोकान्

[illegible] [illegible] ॥

## उद्भट-श्लोकाः ।

"उपनयतु मङ्गलं वः सकलजगन्मङ्गलालयः श्रीमान् ।
दिनकरकिरणविरोधी ( १ ) नवनलिननिभेक्षणो विष्णुः ॥"७८ ॥

"कम्पं चम्पक ! मुञ्च याचकभरैरायासितस्त्वं सखे !
मामुल्लासीः परितो विलोकय तरून् कस्तेऽधिरूढस्तुलाम् ।
स्याच्चेत्तसि कोप एव नितरां धात्रे तदा कुप्यताम्
येन त्वं सुसुवर्णवर्णकुसुमामोदाद्द्वितीयः कृतः ॥"७९ ॥ ( २ )

"त्वयि प्रसन्ने मम किं गुणेन त्वय्यप्रसन्ने मम किं गुणेन ।
रक्ते विरक्ते च वरे वधूनां निरर्थकः कुङ्कुमराग एव ॥"८० ॥ ( ३ )

---

(१) हिरन्मयवपुः कान्तिः । (२) अत्र चम्पकच्छलेन कश्चिद्दाता धनी प्रत्याख्यते । (३) ईश्वरं प्रति कस्यचिद्भक्तस्योक्तिरियम् ।

## उद्भट प्रसङ्गः ।

कस्मिंश्चिद्ग्रामे कश्चित् प्रकृत्या दीनः सुपण्डितो भट्टाचार्य्यो निवसति। स एवं विश्वसिति प्रायो धनिनो निष्ठुराः, धनिनोऽसमीक्ष्यकारिणः, धनिनोऽहङ्कारिणश्च इति। धनिन स्तुल्यमपि वपुर्व्वोढ़ुं न शक्नुवन्ति,माननीयानपि तिरस्कुर्व्वन्ति, सुस्थदेहा अपि विविधबाधामभिनयन्ति, भ्रुवोस्तनोश्च कति भङ्गीस्तन्वन्ति, कति वा विभूतिशौर्य्यादीनि प्रकटयन्तीति च। तेन हि स भट्टाचार्य्यः पीड्यमानोऽपि भूयसा दारिद्र्येण धनिद्वारं नोपसर्पति, वरं भिक्षामटति, कृच्छ्रेणापि दिनानि यापयति।

अहो दैवविड़म्बना। एकदा ब्राह्मण्यास्ताड़नामसहमानः अनिच्छयापि धनान्यर्जितुं स्कन्धनिहितकम्बलः गृहीतकिञ्चित् पाथेयश्च विदेशं निरगात्।

अथासौ कस्यचित् नवधनिकगृहमासाद्य कल्पयित्वा च विपणौ वासस्थानमवात्सीत्। तेन भट्टाचार्य्येण दिनत्रयात् परं धनिनः साक्षात् कृतम्, विविधाश्च श्लोकाः रचिताः व्याख्याताश्च, तेन हि धनी अतीव प्रीतो वभूव, कथयामास च, अहो भट्टाचार्य्यमहाशय! भवांस्तु श्रेष्ठपण्डितः विशेषतो रसिकश्च, अतो विशेषं पूजयामि स्थीयतान्तावद्दिनानि कतिचिदिति।

एवं प्रत्याशितो भट्टाचार्य्यः मनसा नृत्यन्नास्ते। प्रत्यहं प्रातः सायञ्च धनिसभायामागच्छति प्रतिगच्छति, वाग्मितां दर्शयति, श्लोकान् रचयति, समस्याः पूरयति। महाराज! प्रतापेन त्वमर्कः, कान्त्या त्वं सोमः, पवित्रतायां त्वं पवनः, शत्रुदहने त्वं दहनः, स्वच्छतायां त्वमापः, निष्पापे त्वं व्योम, धैर्य्ये त्वं धरणिः, दातृत्वे कर्णः गुरुत्वे गिरिः, गाम्भीर्य्ये सागरः इत्यादि विविधरूपकेण राजानमुपश्लोकयति च।

एवं व्यतीते मासि भट्टाचार्य्यः धनाशया समुद्विग्नः धनिनं न्यवेदयत्, महाराज! देशं प्रति जिगमिषा त्वरयति बलीयसी, अतः सत्वरमनुजानीहि। तच्छ्रुत्वा तदापि धनी कथयपि कथमुद्विजसे, तिष्ठ तावत् कियन्ति दिनानि, भवन्तं दिविधस्तोषयामि, भवान् हि विद्यया विशिष्टोऽसि। ब्राह्मणोऽपि यथाज्ञापयति भवान् इति विरराम। पश्यति च कुलटा नर्त्तक्य ऐन्द्रजालिकाः, आभिचारिकाः, गायकाः, मल्लाः षण्डाः भण्डाश्च अनेके तस्माद्धनिनो धनरत्नहयहिरण्यादीनि लभन्ते इति, समाश्वसिति च चेतसि।

एवं मासौ द्वये त्रये वा गच्छति अतीव समुद्विग्नः जीर्णच्छिन्न मलिनवासा स्फुटच्छिन्नकम्बलः अनाहारक्लिष्टश्च धनिगृहं नैवगन्तव्यमिति प्राग्विश्वासं दृढ़ीकुर्व्वंश्च ब्राह्मणीं मनसा निर्भर्त् सयंश्च धनिसाक्षात् समुपस्थितो रोषारुणाक्ष उवाच। अहो वदान्यप्रवर!

"गतागतेन पन्थानं विजीर्णं चरणद्वयम्।
तवाश्वासे त्रयं नष्टं सम्बलं कम्बलं बलम्॥"

इत्युक्त्वा उन्मनायमानः द्रुतं गच्छति च, अव्यक्तं जल्पति च।

"भण्डपण्डितयोर्म्मध्ये वरं भण्डो न पण्डितः।
भण्डश्चण्डहयं लेभे ना * * पश्च पण्डितः॥"

इति तस्मान्निर्गत्य स्वगृहमागत्य च ब्राह्मणीं समस्तं गर्ज्जन्निव बभाषे।

अथैकदा स एव भट्टाचार्य्यः काष्ठभारं शिरसा वहन्नरण्यात् स्वगृहाभिमुखं प्रत्यागतो मृगयार्थं तदेवारण्यं विविक्षुणा तेन धनिना पथि दृष्टः पृच्छति, भट्टाचार्य्यमहाशय! प्रणमामि, हंहो किमितीत्थं श्रेष्ठपण्डितेन भवता शिरसि काष्ठभारः समुह्यते पृथग्जनवत्?। तदाकर्ण्य भट्टाचार्य्यः काष्ठभारं पुरतो निःक्षिप्य कथयति शृणु वदान्यवर!

काचित्तदङ्गमारुह्य काचिदावेष्ट्य तद्गलम्।
काचित्तद्भुजमालिङ्ग्य पप्रच्छुर्म्लानानना: ॥ १० ॥
अनल्पवेधमर्म्मच्छित् अनग्निस्पर्शदाहकृत्।
प्रहारो दौर्म्मनस्यन्ते भीता नः क्षिणुतेऽनुजा: ॥११॥
नारुन्तुदस्तिरस्कारो हृदि हारो नु मन्यते।
शिरो निर्म्माल्यतामेति पादपद्मं दयां कुरु ॥ १२ ॥
म्लानभावेन ते प्रीति प्राप्नोति प्राणरञ्जन:।
स्मितलेशेन सत्येवं कोऽयं निर्यातनक्रम: ॥ १३ ॥
गुर्व्वी विनिनुयषी कृत्यं प्रीणयन्ती च सत्सखी।
धर्म्मतो मन्यसे पूज्ये ! सपत्नी नैव कर्हिचित् ॥ १४ ॥
नोदयन्ती प्रमोदे नः स्वयमास्व तु दुर्म्मना:।
कारणं नेव पश्यामि ध्वान्तस्थितमिवोरगम् ॥ १५ ॥
इत्युपलब्धः भामत्या: नेत्रान्तात् कज्जलाविला।
त्यक्ता बाष्पमिषा वक्त्रं द्विधारा निरगान्निरा ॥ १६ ॥
ईषत्कोपः तु चपला स्वं दिष्टं निन्दयन्त्यहो।
परावृत्तमुखी तस्थौ स्वामिनीवापमानिनी ॥ १७ ॥
घ्नन्तीव तां कटाक्षेण चपला चपलेक्षणा।
सानुरागा च भीता च दुष्टा चातीव्रमब्रवीत् ॥ १८ ॥
शरणं त्वां स्मरन्त्यगोऽद्य किं निन्दाम: स्वकं विधिम्।
चरणोत्क्षिप्तभाग्या तु यदसि त्यक्तकिङ्करी ॥ १९ ॥
यशसा प्लुतमेदिन्या ज्ञातं सर्व्वमदूषणम्।
चिन्तयन्ती यथेच्छं तत् शक्नुया: कर्त्तुमीश्वरि ! ॥ २० ॥
एकस्वामितया नो य: शब्द: सम्बन्धवाचक:।
त्वत्प्रीतीनां स्फुरेद्धास्यात् तं श्रोतुमलमीहया ॥ २१ ॥
प्रभया स्फाटिकस्येव दतो यन्मुखमम्बुजम्।
चुम्बितं तत् सदा तेऽद्य मन्निन्द्यालेपि दु:सहम् ॥ २२ ॥

भगिन्यो! द्रष्टुकामे चेत् हासमस्या विलोकये ।
इत्युक्त्वा क्रोड़मारूढ़ा द्युमती चटुभाषिणी ॥ २३ ॥
व्यादेहि वदनं वन्द्ये! हस हासय नो मनः ।
तर्ज्जन्या द्युमतीत्युक्त्वा विमलोष्ठसम्पुटस्फुटत् ॥ २४ ॥
सा सुप्तोत्थितेवाह युष्माभिः किं विचेष्टितम् ।
रुदती भामती, क्रुद्धा चपला, त्वं धृताधरा ॥ २५ ॥
मम्लौ वो वदनं चारु मुखं दुःखस्य मेऽस्फुटत् ।
प्लवन्तेऽश्रुषु नेत्राणि हृदयं मेऽतिशुष्यति ॥ २६ ॥
म्लानासु किल युष्मासु शोको जागर्त्ति मे हृदि ।
तमोग्रस्ता मनु प्राचीमुलूको व्योम्नि खेलति ॥ २७ ॥
आसन्नास्वपि युष्मासु मन्येऽहं दूरवर्त्तिनी ।
भगिन्यो! जहितामर्षं ब्रूत तन्मधुरं वचः ॥ १८ ॥
भामतीं विमलेत्युक्त्वा करे सादरमग्रहीत् ।
चिबुके चपलां धीरा क्रोड़े च द्युमतीं सतीं ॥ २९ ॥
मौनिनीषु च युष्मासु निविषन्नास्ववाङ्मुखम् ।
लुठितान् भुव्यलङ्कारान् मत्वा त्रसति मे मनः ॥ ३० ॥
अथाश्लिष्टप्रमुक्तास्ताः प्रस्निग्धविमलोरसः ।
समुद्धृता विराजन्ते सद्यतः शालभञ्जिकाः ॥ ३१ ॥
वाचा मधुरयाब्रूत स्मितपूर्व्वाभिभाषिणी ।
विमला विमलप्रज्ञा स्नेहमासिञ्चतीव ताः ॥ ३२ ॥
अन्यथाकारमाद्यं किं यूयं सौधतले शुचा ।
क्रीड़न्त्यः संलपन्त्यश्च प्राणा इव वहिश्चराः ॥ ३३ ॥
ऊचु स्ता नश्वरन्तीनां द्रागामीलितलोचनाम् ।
दुश्चिन्तयन्तीं त्वां स्वच्छ मत्वागोऽभूम तद्विधाः ॥ ३४ ॥
ततः प्रत्यवदत् साध्वी नापराधोऽप्यणुश्च वः ।
गङ्गा हिमानी ज्योत्स्ना च कोष्णतामपि किं व्रजेत् ॥३५॥

पत्युः प्रसादं युष्माकमनुरागञ्च तादृशम् ।
चिन्तयन्त्या वदन्त्यग्रे सत् शृणुध्वं यदचिन्त्यम् ॥ ३६ ॥
किञ्चिदुद्गिरतः किञ्चित् ग्रसतः कालरूपिणः ।
अहो भगवतो लीलां कोऽपि नालं विवेचितुम् ॥ ३७ ॥
दैवेन निखतो राज्ञो जातापि कमलाश्रयः ।
जगदेकप्रिया चास्मि कर्द्दमादिव पद्मिनी ॥ ३८ ॥
पुष्टया येन केनापि अ-पिहत्वान्मयाधुना ।
ये च केपि च संगुप्ताः कृष्येव कृषकेण तु ॥ ३९ ॥
ग्रीष्मे पर्णकुटीरे हा पालितापि खलूत्वकैः ।
सौधेऽद्य न्यवसं राजसारिकेव कुलायके ॥ ४० ॥
कणान्नं नक्तकञ्चापि तुच्छं स्म बहु मन्यते ।
रत्नादावप्यलक्षणाद्य योगिनीव दिवं श्रिता ॥ ४१ ॥
आरकूटमलङ्कारं दीनेच्छन्त्यपि नाप्नवम् ।
अमूल्यमगणेयञ्च नाद्रियेऽद्य धवौकसि ॥ ४२ ॥
मदनन्यसुतं तातं रुग्नं कापुरुषा द्विषः ।
द्राक् पुरं रुरुधू रात्रौ हर्य्यक्षमिव फेरवाः ॥ ४३ ॥
सम्प्राप्ते व्यसने शत्रोः उपमाता कथञ्च माम् ।
निष्क्रान्ता गोपयामास निक्षिप्योच्छिष्टभाजने ॥ ४४ ॥
राजकन्येति बुद्ध्या ते दासीकन्यां धनैः सह ।
हर्षान्धा अपजह्रुर्वै तेनाहं दैवरक्षिता ॥ ४५ ॥
कथञ्चिदपि निर्याय ततो मां विकृताकृतिम् ।
नीत्वोपमाता घोरायां हा निशि प्रतिभानुगा ॥ ४६ ॥
दिनानां पञ्च सातीत्य जाह्नवीतीरमाश्रिता ।
दीक्षितोञ्छनवृत्त्या च कुट्यां वासमकल्पयत् ॥ ४७ ॥
अविदूरे लोकमातुः षष्ठीदेव्या महोत्सवः ।
ज्यैष्ठीयशुक्लषष्ठ्यां वै तत्रासीद्बहुयोषिताम् ॥ ४८ ॥

प्रेरिता तत्र बालग्राहं रसालं क्षिपद्दुम्भितम् ।
विक्रेतुं प्रतिबिम्बिन्या तादृशी दैवसी लिपिः ॥ ४९ ॥
स्खलत्पदापि धरणौ सा तत्र जनसङ्कटे ।
चूतं प्राणानिवागूढं पाणिभ्यां तद्वियोरलि ॥ ५० ॥
अथोपतस्थे तत्रैकः प्रणन्तुं नील ईश्वरीम् ।
सागरौघवदीशस्य भूधरोऽप्यटतीच्छया ॥ ५१ ॥
प्रभयापहरन्नृणां निमिषं चक्षुषोऽगमत् ।
प्रापयन् देवभावं तान् किं लभेत न वा सतः ॥ ५२ ॥
अनन्यचित्तवृत्तिः सा जनता पुरुषोत्तमम् ।
पश्यन्त्यपि दृशालम्बत्र [illegible] ॥ ५३ ॥
स्तम्भिता किं सम्भिता किं कीलिता किं नु मूर्च्छिता ।
विस्मिता किं मोहिताहं नो जाने तस्य दर्शनात् ॥ ५४ ॥
जीविता किं प्रमीता किं असना: किन्नूपसमृता ।
सुखिता किं दुःखिता किं प्रसुप्तावेति वेद न ॥ ५५ ॥
भूमिस्था किं नभःस्था किं स्वर्गता किं नु क्वं गता ।
अनुरक्ता किमात्मानं न सस्मारापि वा कियत् ॥ ५६ ॥
मुहूर्त्तादिव जानन्त्या लावण्यं मधु पीतवत् ।
दृग्द्वन्द्वं तत्पदेऽशेत कोमलेऽशोकपल्लवे ॥ ५७ ॥
पद्मरागे इवाशङ्क्य रक्ते मे दीनलोचने
हा वभ्रमतुरानेतुं तदीये सुन्दरे करे ॥ ५८ ॥
समुन्नते च विस्तीर्णे हृदि कोमलमांसले ।
पर्य्यङ्क इव निष्पन्दं गाढं दृग्भ्यामसुप्यत ॥ ५९ ॥
आमीलिते च नयने शिथिला देहसन्धयः ।
जज्वालेवोरसो नीचैः सिष्वेद सकलं वपुः ॥ ६० ॥
विद्युद्वेगेन केनापि प्रहृतेव हृदि द्रुतम् ।
चकम्पे मर्म मे धक्धक् [illegible]चापि मस्तकम् ॥ ६१ ॥

हृदि सुप्तां हतप्रज्ञां नृभिः परिवृताञ्च माम्।
व्यजनादिप्रयोगेणाचेतयत् प्रतिवेशिनी ॥ ६२ ॥
लोका आलोचया मासुः क्षुधार्त्तिं मे तृषापि च।
मृषा तत्तदनीचात्वात: सा दृशोः सत्यमेव तत् ॥ ६३ ॥
तमिच्छन्त्यपि नापश्यं पश्यन्त्यपि दृगञ्चलैः।
नाप्नुवन्त्यस्मयं वीजं केनान्तःस्थेन नोदिता ॥ ६४ ॥
शोणिम्नाच्चोष्ठ नीलिम्ना सुरा-गरवदस्य तत्।
पीयमानेन नेत्राभ्यां निमिमील मुमूर्च्छ च ॥ ६५ ॥
पचेलिमानां चूतानां क्रय्याणां तादृशत्वचाम्।
आसीन्मे विक्रयोऽशक्यः किमित्याकुलचेतसः ॥ ६६ ॥
अथ तदन्तिकतो जन एककः द्रुतमुपेत्य शिखोर्द्धकपुण्ड्रभृत्।
समलपत् किपपि प्रतिवेशिनीं अवयवानवलोकितवांश्च मे ॥६७॥
सायं नृभिः किमपि मामभि संलपद्भिः
सार्द्धं तया मृदुगतिर्मुहुरीक्ष्यमाणा।
अन्यादृशीव विकृतेव विचिन्वतीव
किञ्चित् कुटीर उपतस्थ उपोपमाद्य ॥ ६८ ॥
उदीरयन्त्याः प्रतिवेशिनीतः
श्रुतेतिवृत्ता हृदि मां निगुह्य।
मरीमृजन्ती ब्रुवती च तत्तत्
सुप्तोत्थिता प्रातरधीतदुर्गा ॥ ६९ ॥

इति ताम्बूले विमलापूर्व्वरागे द्वितीया वीटिका।

(क्रमशः।)

---

# समयपरिणतिः।

"समय एव करोति बलाबलम्।"

अहो! विधेर्विलसितम्! यत् कालवशात् चिरास्तमितदिनमणि-रिव दुर्दैवतमसावृतं नितरां कुत्र तिरोहितमस्माकं निरञ्जनसुखम्। एतत्तु यदैव समुपस्थितं तिलार्द्धकालं मनसि तदैव तत् केषां वा हृदयवतां हृत्पिण्डेषु तप्तायःपिण्डवद् बलान्न प्रतिघातयति?। किन्तु इदानीन्तननवीनसुखशायिनां नवनवोपाधिलोलुपानां केवलं राजप्रसादमपेक्षमाणानां महैश्वर्य्यशालिनां सविधे नैतत् समीचीन-तया प्रतिभाति, प्रत्युत प्रमत्तप्रलापवद् विलसति, इतिप्रतत् समधिक सम्भावनीयता मर्हतीति सर्व्वैरेव सहृदयैर्विभाव्यते, यतो यद्यप्ये-तेषां महोदयानां विभविनां विभवसुलभौदासीन्य-विनिमयेन यदि कथञ्चित् समचेष्टाकणिकया भवितव्यम्, तदा पादुकादलितमुकुट-मणेरिव निखिलधर्म्मचूड़ामणेरपि कथमेतादृशी गतिः? साम्प्रतमित-स्ततो बहूनामार्य्यधर्म्माभिमानिनां महात्मनामार्य्यधर्म्मज्ञानमुत्तरो-त्तरमुज्जीवति, तथा तत्र महाननुरागोऽपि भूयोभूयः प्रसरणसुखे-नाभिवर्द्धते, इति सौभाग्यमुकुलोदयदर्शनात् आशातीतभाविफला-नुमानं तदैव संगच्छते, यदि दुर्व्विपाकतुषारसम्पातो न समूलघातं हनिष्यति, इत्थमभ्युदयदर्शनं निःसन्देहमानन्दजनकत्वेऽपि तुषार-घातोन्मूलिततरुसेचनादिकमौपम्यपदमालिङ्गतीति परं हर्षो विषादश्च युगपदुत्पद्येते, तथाहि आर्य्यभाषानुप्राणितः किल आर्य्यधर्म्मः श्रूयते, प्रतिपाद्यते च साक्षात् सुराचार्य्यैरिव महानुभवैः, तस्मान्न तदलीकं वक्तुं केनापि शक्यते, इतश्च, कियद्दिवसादूर्द्ध्वं स्वदेशहितै-षिणामाढ्यानां साहाय्यमात्रेणैव भारतेषु कुत्र वा चतुष्पाठीषु

संस्कृतानुशीलनं न परिदृश्यते स्म ?। तदनुशीलनमाहात्म्येनैव दुर्वृत्त-यवनराजाधिकारेऽपि महाविप्लवमतिक्रम्य अक्षुसतया संरक्षितोऽस्माकमार्य्यधर्म्म इत्यवनतशिरसा न केन वा स्वीक्रियते?, अधुना पाश्चात्यशिक्षाजलधौ सर्व्वतः समुच्छलितेऽपि, यदमिश्रितप्राच्यशिक्षा निर्भरमधुररसपायिनामपि केषाञ्चित् कतिचित् संख्याः कदाचित् कुत्रचित् परिलक्ष्यन्ते, तदेव तन्माधुर्य्यवैचित्र्यमेव। तदपि तैरेव महात्मभिर्वारिदरसरसिकैश्चातकैरिव किमप्यनुभूयते, तथा सचेष्टैः सदा संरक्ष्यते, नान्यैः केवलमस्मादृशैरेव, तत्कुलपांशुलैस्तन्न प्रतिपालितं दैवदोषेण संमिश्रणजनितकटुकषायरसास्वादिनान्तु नातिदौर्म्मुल्यम्, अतो धन्यमार्य्यकुलधुरीणानां महानुभावानां जीवनम्, धन्यम् तेषां सदनुष्ठाननिष्ठत्वञ्च। इतोऽपि पुनर्येषां भारतललामभूतानामावासभूमित्वेनालङ्कृतं नवद्वीपपूर्व्वस्थलीभट्टपल्लीप्रभृतिकं शीर्षस्थानं किमपि गौरवान्वितमासीत्। तेषां सुरलोकजुषां परमविदुषां मध्ये केचित् पुरा केचित्तु कियत्पूर्व्वं भारतमत्यजन्, साम्प्रतं विद्यमानानामपि केचित् केनचित् कारणानुरोधेन स्ववृत्तिविलोपिनः सम्वृत्ताः, केचित्तु यत्र कुत्रचित् पुण्याश्रमनिर्व्विशेषे देशे दुरवगाहसुखपारावारनिमग्नचेतसः तामेव वृत्तिं प्रतिपालयन्ति, सुतरासुल्लिखितं कदाचित् कुत्रचिदित्यादिकम्। किं वहुना, दुःसमयः समुपस्थितोऽस्माकमिति सर्व्वैरेव समुत्साहैः प्रणिधातव्यम्, विशेषतस्तु तत्कार्य्यपारगैः, येषामनवधानतया सेयमार्य्यभाषा चीरवासिनी चिरदुःखिनीव प्रतिपथं विलपन्ती कथमपि प्राणिति। पुनः परिणामिनि जगति महारण्यं नगरत्वेन, नगरमपि महारण्यत्वेन, नदी पुलिनत्वेन, पुलिनमपि महानदीत्वेन, महैश्वर्य्यशाली दारिद्र्येण, दरिद्रोपि महैश्वर्य्यशालित्वेन प्रतिनियतं क्रमपरिणाम चक्रावर्त्तेन परिवर्त्तते, तथा शीतोष्णसुखदुःखादिकद्वन्द्वपरिणामोऽपि दृश्यते। एतावता समायातं सर्व्वं खल्विदं विनश्वरं न किमपि

सनातनमिति, एतदालोचनेन कस्यचित् महापुरुषस्य वचनं मनसि मे समुदितं, यथा—

"यदुपतेः क्व गता मथुरापुरी, रघुपतेः क्व गतोत्तरकोशला।
इति विमृश्य कुरुष्व मनःस्थिरं, न सदिदं जगदित्यवधारय॥"

इति परिवर्त्तनचिन्तया या चित्तभूमिपरिवर्द्धिता क्षणमप्याशालता नैव संप्रति सुदूरपराहता, यतो लक्ष्यभ्रष्टेन न केनचित् सयत्नेनापि किमपि फलमवाप्यते, स यत्नेनापि निमिषात् विलीयते, अतः सावलम्बेन भवितव्यम्, अवलम्बनं हि वहुत्र वहुतरमद्यापि विद्यते, यादृशावलम्बनमुपजीव्य पूर्व्वं पूर्व्वगुरुभिः, सुदीर्घकालमधीत्य शास्त्राणां परं पारं गतम्,अनन्तरं सुखेन जीवनमतिवाहितम्। अनन्यचिन्तापरवशतया तेषाञ्च लेखनीमुखात् वहुतरशास्त्रं काव्यालङ्कारादिकञ्च विनिःसृतम्, अतएव "निराश्रया न जीवन्ति पण्डिता वनितालता इति" किं वदन्ती श्रूयते,किन्तु तादृशावलम्बनं सुदीर्घकालसापेक्षं सुदीर्घकालपरिणामिनापि सम्पत्स्यते नवेति सन्देहाभासोऽपि कदाचिदुद्भवेत् इति वह्वाशानोद्दितैश्चित्तावेगविभीषिकाभीतभीतैरुद्भावनीया महती शङ्का, बुभुक्षितानां भुवनाशनलिप्सेव तथार्थिनां स्वाराज्यतृषेव कथञ्चित् समयोचितलभ्यलाभेनैव प्रशमिष्यतीति मन्यामहे।

आः किमितोऽपि हास्यास्पदमस्ति? यद्येषामुपेक्षया मध्यार्घरत्नस्य चरणताड़नवद् विदूरितमार्य्यभाषायाः सुगौरवम्। अधुनापि किं तेषामेव सविधे प्रार्थितमालम्बनम्?, हा धिक् महती विड़म्बना समुपस्थितेति न केनापि मुखमानेतुमिष्यते, यतो भूमिपतितानामतिदुर्व्वलानामासन्नावलम्बनं यथा भूमिरेव भवितुं युज्यते, न तथा किमप्यसम्बद्धमन्यत्। अतः साम्प्रतमुपसंहृतिकाले निरतिशयशान्तिसुखमूलं सततमनुसन्धीयतां सर्व्वैस्तथा तत्र सचेष्टैः प्रति-

विधीयताञ्च इत्यलम्। इदमप्याशास्महे "प्रवर्त्ततां प्रकृतिहिताय पार्थिवः, सरस्वती श्रुतिमहती न हीयतामित्यादि।"

श्रीयदुनन्दनशर्म्मा काव्यतीर्थः।
बेलडाङ्गा हाइस्कुल मुर्शिदाबाद।

---

# मकरन्दिका।

## प्रथमोच्छ्वासः।

### भागिरथीपुलिने।

वहति मन्दं कलस्वनविमोहितयावदीयभूतपरिषत्श्रुतिविवरा परिपूतसलिलपविचित्रितत्रिलोकी अशेषातीतानागतभवत् साक्षिरूपिणी त्रिभुवनैकशान्तिसुधाप्रसविनी तटदेशविराजितानेकतालतमालसरलाशोककिंशुकवनराजिप्रतिकृति प्रसाधिततोयप्रवाहा निखिलजीवलोकार्त्तिहरहरजटाकलापविनिःसृता त्रिमार्गगा भगवती भागीरथी। आगतश्च सरसनवकिसलयव्रततीलास्योपदेशकुशल दक्षिणाचलप्रवृत्तानिलसखो ऋतुराजो वसन्तः। निसर्गसौन्दर्य्यललामभूतं समस्तविदर्भभूभागावतंसरूपं कुसुमपुरमधुना-मध्यमलोकस्यममरेशलीलोपवनं नन्दनमिव द्वितीयमुपजातम्। अशोकशाखिनः स्कन्धात् प्रभृतिरवालोलरक्तपल्लवप्रसूनप्रलम्बा भागीरथीसैकतशीतलकल्लोलस्पृष्टसमीरणाकम्पिता उन्मदनकान्तप्रार्थितसुरता चिरपरिणीतवनितायास्त्रपाकम्पनमनुकुर्व्वन्ति। सहकारपोतका अभिलषितमुकुलमञ्जरीपरिशोभिता अशेषाभरणविमण्डिता दिव्याङ्गना इव, किं किरातकुसुमैरापीतीकृताः ककुभो वालारुणोद्भासितं पूर्व्वदिक्चक्रवालमिव, कुसुमप्रसूतिपरिशोभिता

सहकारालम्बिनी अतिमुक्तकालता अभिमन्युपरिशोभिता पार्थाङ्ग-शोभिनी सुभद्रेव, मलयमारुतप्रवातोत्कोरकिता नीपचम्पकतिलक-बकुलकुरवका: यौवनकृतपदा मदविलसिता: मकरकेतनकुसुम-व्यतिरिक्तामोघास्त्ररूपिण्य: नायिका इव, उद्दामकान्तारविकसित किंशुकानि वातेरितानि दानवारिप्रमत्त निरङ्कुशवारणा इव प्रती-यन्ते। भगवति हारितहरिद्वाजिनि सरोजिनीजीवितवल्लभे जीवञ्जीवकहृदयानन्दकरे सहस्रांशुमालिनि सवितरि राजराजाधि-श्रितदिग्भागप्रचलनप्रवृत्ते तावज्जीवलोकमनोमोहनमधुसमागमे च सर्व्वैव सजड़चेतना प्रकृति: महारजतमयीव, उत्सवमयीव, मदन-मयीव, प्रेममयीव, औत्सुक्यमयीव सरभसमेव समुपजाता। तथा मधुकर: प्रेमरसार्द्रीभूतहृदय: दयिताद्वितीय: एकपुष्पभाजन एव मधुपानरत:। मृग: पुन: मलयमारुतविताड़ितकुसुमरजो-मण्डितेन विषाणेन तदङ्गसंस्पर्शनिमीलितलोचनाया: मृगवधा: कण्डूयनपर:। नागेन्द्रसीमन्तिनी तु रसैकपरवशा स्वकान्ताय गजराजाय पङ्कजमकरन्दसुरभिगण्डूषवारिदानपरा। रथाङ्ग-नामापि अर्द्धोपभुक्तविसखण्डेन प्रतिरजनि प्राणेशविरहपरि-मृदितां तदेकजीवितभूतां स्वां कान्तां विनोदयति। किं बहुना सर्व्वकान्तारकाननोपवनविटपिनोऽपि आमूलात् किसलयितास्तदै-कालम्बनाशेषकुसुमस्तवकपरिशोभित व्रतती सनाथा: अशेषाभरण विमण्डिततताम्बूलरागरञ्जिताधरोपकान्तासमागतान् सुरलोक-सुन्दरीसमवायहृदयहरणक्षमान् अतिशयितनलकूवररूपानपि नायकान् निन्दन्ति। मधुमदमत्ता: पिका: काकलिभिरुन्मादयन्ति यावदीयपथिकजनश्रुतिविवरान्। सततमलयमारुतविचलित कुसुममकरन्दसीकरसारदुर्द्दिनोन्मादितं मुनिजनानामपि हृदयम्। उद्दामषट्चरणझङ्कारकातरिता सर्व्वत्र दयितविरहातुराणां मनो-वृत्ति:। भगवति वसन्ते मलयमारुतसहचरे जगति कृताधिष्ठाने

कोनाम जन्तुः दुरन्तमन्मथचापविच्छिन्नकुसुमास्त्रपीड़ितो न भवति ।

एवम्बिधे वसन्तोदारसमये अस्ताचलचूड़ावलम्बिनि भगवति कमलिनीनायके सहस्रांशुमालिनि कुसुमपुरप्रवाहिनया जाह्नव्या वेलाभूमि सैकततले मृदूपचरितवेदिकास्तरणे भागीरथीतटोपजातस्य कस्यचन लतामण्डपस्य पुरतो भागे छायाशीतले विहितात्मावस्थितिः; सान्ध्यसमीरणमृदुविकम्पितं पौरवृद्धसपर्य्याविहितकुसुमनिकरपरिमलसुगन्धि, अचिरसम्पादितपुरसुन्दरीसमवायाङ्गयष्टि निमज्जनाकम्पितं परिणतारुणकिरणजालपतनेन तप्तचामीकरमिव भास्वरं, सर्व्वलोकमनोहरं, भागीरथीसान्ध्यकल्लोलं प्रत्यक्षं कुर्व्वन्, चतुर्व्विंशतिवर्षदेशीयः; पुञ्जीकृतत्रिभुवनसौन्दर्य्यसारसम्भारेण विधिमनोविरचित इव; प्रस्फुरद्देहकान्त्या निर्भर्त्सयन् पार्व्वतीनन्दनवपुः, अचिरविनिर्गत इव क्षीरनिधेः; नयनपुण्डरीकयुगलेन तिरस्कुर्व्वन् कन्दर्पजनयितृनेत्रपुण्डरीकयुगलं; निखिलसंसाराशेषलावण्यसम्भारावरणं सरलतरुयुगलमिव बाहुयुगलं विभ्रत्; प्रोन्नत स्कन्धेन महादेववृषभस्कन्धं निन्दन्; आकुञ्चितेषत्कम्पितभ्रूयुगलेन तरङ्गभङ्गविकम्पितं सरसमृणालखण्डं विड़म्बयन्, विशदमलयजानुलिप्तं सुविस्तृतं चिन्तालेखालक्षितं ललाटदेशम् भारतीशयनमिव मनोभवलीलाप्राङ्गनमिव कमलास्तरणमिव, आयतविष्फारित तीव्रोद्भासितसुस्थिरे नयने स्नेहामृतह्रदाविव अरातिकूलतरुदवाविव, सुकुमारवलान्वितं देहं नवकिसलय परिशोभितं सरलतरुमिव, माधवीपरिशोभितं चूतमिव, कुसुमपरिव्याप्तं गिरिप्राङ्गनमिव, उद्वहन्; मानिनी मानभङ्गविषये मदनामोघास्त्रं; यौवने वयसि विहितपदक्रमः; कश्चित् पुमान् । तस्य च पादतलमधिशयाना, मूर्त्तिमतीव सौन्दर्य्यलक्ष्मीः, नारायणस्य मोहिनीमूर्त्ति द्वितीयेव, सौन्दर्य्यकलाजितामरसुन्दरी, द्वादशवर्षदेशीया, पुरसुन्दरी

परिषदवतंसभूता, नारायणपदतलशायिनी कमलेव, हरपादपद्म-मधिशयाना पार्व्वतीव, कन्दर्पसहचरी रतिरिव, देवेन्द्रपुरोगता शचीव, तदाननमभिध्यायन्ती इतस्ततो दत्तदृष्टिर्न्न कुत्रापि तत् सादृश्यमालोकयन्ती उत सर्व्वेषु दिग्भागेषु तन्मयमिवालोकयन्ती विस्रम्भार्थं भूयोऽपि युवाननप्रेक्षिणी दुकूले वसाना, निरलङ्कारापि सर्व्वालङ्कारविमण्डितां कामवधूं विनिन्दन्ती, स्वप्रभोद्भासित-दिक्चक्रवाला, कामारेरपि दर्पनिसूदनं मनोहरं यौवनमुद्वहन्ती काचन रामा। तयोश्च प्रेमिकयोः पुरत आनन्दविह्वलहृदया लतामण्डपमध्यवर्त्तिनो विहङ्गमाः सर्व्वलोकमनोमोहनं कूजन्ति। आलोलभागिरथीसैकतशीतलपङ्कजसम्पर्कसुरभिवारिपरिकरपरिस्पृष्ट साम्प्रानिलो वितनोति मुदं सर्व्वेषां जीवानाम्। सैकतशयान-वालाचरणयुगलेन क्रीड़ाभिलासयेव परिणतारुणरक्तो मृदुवाता-कम्पितसान्ध्यभागिरथीतोयकल्लोलः मन्दं मन्दमागत्य आस्पृष्टचरण-द्युतिः प्रतिकूलनायिकापरितोषप्रवृत्तनायकवृत्तिं विड़म्बयन् प्रत्यावर्त्तते। क्रमेण च आताम्रांशुजालो भगवान् भास्करः विहाय धरातलं उन्मुच्य करुणैकरसां सरोजिनीवधूं विहङ्गवृत्तिमनुसरन् भूधरशिखरेषु कियच्चिरं स्थितिमापन्नः। अस्तमुपागते भगवति भास्करे नरकपङ्ककलुषेण महाप्रलयपयोधिसलिलपूरेणेव तिमिरे-णावष्टभ्यमाने जीवलोके, सहसैव अपरपारावारतलाद् उल्लसन्तीव पूर्णचन्द्रलेखाधारिणी रजनी उपस्थिता सञ्जनयन्ती हर्षस्य परां कोटिं सर्व्वजनानाम्। निराविलं गगनतलं शशाङ्कतारकाराजि-विमण्डितं अच्छोदभागिरथीतोयः प्रतिफलितं अशेषचन्द्रकान्त-मणिपरिशोभितं मारकतकुट्टिममनुकरोति। परिवेष्टितसर्व्व-निसर्गसौन्दर्य्यमालावलि तारकाराजिपरिवेष्टिता नीलगिरिमध्य-वर्त्तिनी पूर्णचन्द्रलेखेव तत्पुरोवर्त्तिनं अनिन्द्यकान्तिं नरपुङ्गवं तम-भिध्यायन्ती नेतरं किञ्चित् तदवधानगोचरतां आपादयति।

अथ सहसैव मोहयन्निव सर्व्वजीवलोकहृदयकन्दरं मधुमदमत्त-कोकिलकाकलिं निर्भर्त्सयन्, निमज्जयन्निव शान्तिह्रदमशेषविषयसन्तापोत्तप्तजनानपि तत्क्षण एव, विविधरागरागिणीताललय-समन्वितो भगवद्रमावल्लभस्तोत्रं वाचयन् मधुरवीणानिक्वणपुरः-सरः सुदूरावस्थितगिरिसानुदेशवल्लीमण्डपादिवागच्छन् कश्चन गीत-शब्दस्तयोः प्रेमिनोः श्रुतिविवरमगमत्।

"श्रितकमलाकुचमण्डल,धृतकुण्डल, कलितललित वनमाल !
जय जय देव हरे !
दिनमणिमण्डलमण्डण, भवखण्डन, मुनिजनमानसहंस।
कालियविषधरगञ्जन, जनरञ्जन, यदुकुलनलिनदिनेश।
मधुमुरनरकविनाशन, गरुड़ासन, सुरकुलकेलिनिदान।
जनकसुताकृतभूषण, जितदूषण, समरशमितदशकण्ठ।
अभिनवजलधरसुन्दर, धृतमन्दर, श्रीमुखचन्द्रचकोर।
तव चरणे प्रणता वयमिति भावय, कुरु कुशलं प्रणतेषु॥"

ततो यावदेषा, गीतलहरी ललितवाग्विनिःसृता आप्लावयन्तीव भक्तपरिषन्मानसहंसान् तन्मयमिव कुर्व्वन्ती नवीनप्रेमिमिथुनं तयोः श्रवणपथातिथिर्जाता तावत् प्रियदर्शनो युवा वाक्पीयूषधारो-ज्जीवयन्निव सर्व्वदिक्चक्रवालं वाङ्मुखेनेव विनिर्गमनयन् भगवतीं भारतीं सुपरिष्कृतं, परिस्फुटं, स्मितप्रदीप्तं, व्यङ्ग्यविरञ्जितं अक्षर-मात्रयेव स्नेहासारं विमुञ्चन् मृदुमधुरं दन्तराजिप्रभया विड़म्बयन् भगवन्तममृतकिरणम् ब्रवीति।

(क्रमशः।)

वि, ए, उपाधिधारी
रायचतुर्धुरीनोपनामाः
श्रीमद् उपेन्द्रनाथ सेनः।
(रायेर काठी।)

---




( यथा हेमाद्रौ व्रतखण्डे प्रथमाध्याये आदित्यपुराणम् । )

"चतुर्व्वक्त्र श्चतुष्पाद श्चतुर्व्वाहुः सिताम्बरः ।
सर्व्वाभरणवान् श्वेतो धर्म्मः कार्य्यो विजानता ॥
दक्षिणे चाक्षमाला च तस्य वामे च पुस्तकम् ।
मूर्त्तिमान् व्यवसायस्तु कार्य्यो दक्षिणभागतः ॥
वामभागे ततः कार्य्यो वृषः परमक[illegible]न् ।
कार्य्यौ पद्मकरौ मूर्द्धि विन्यस्तौ तु तथा तयोः ॥"

---

# धर्म्मावतरणा।

संप्रति वहुषु देशेषु धर्म्मो धर्म्मो धर्म्म इत्येवं ब्रह्माण्डकटाह-भेदी गज्जनादानुकारी सर्व्वतो दिगन्तप्रतिरोधिजगत्प्लाविजलोदर भयङ्करमेघनिर्घोषतिरस्कारी निर्घोषः परितः श्रुतिविवरं भिनत्ति। नृत्यन्तीव जनगणा धर्म्मो धर्म्मो धर्म्म इत्येवं ब्रुवाणाः चिल्कु-र्व्वन्ति कलकलायन्ते उन्माद्यन्ते च। न जाने कस्यायं महिमा? कथं वा? केन वा? ईदृशे धर्म्मविप्लवकालेऽपि मुहुः श्रूयते धर्म्मो धर्म्मो धर्म्म इति, केचित् अनन्तमपुरपायं समाश्रिताः मामको धर्म्मः श्रेष्ठतर इति गर्ज्जन्ति गर्ह्हन्ति च परेषां धर्म्मो भ्रान्तिमूलक इति। एवं ब्राह्मणा अपि खृष्टधर्म्मं वहु मन्यन्ते कियन्ति दिनानि। खृष्टीया अपि हिन्दुधर्म्मं श्लाघन्ते वहु मन्यन्ते च।

अपरे केचित् गर्भस्रावायमाणाः आजन्मचपलमतयः अस्थिर-विश्वासाः निर्व्बोधा हिन्दुतनया अपि खृष्टधर्म्मः श्रेयानिति खृष्टै-रुच्यमानमनुवदन्ति। पुनः विज्ञानमूलको धर्म्मः ( थियो यफिष्ट ) श्रेयानिति इंरेजै रुच्यमानमनुवदन्ति! पुनः हिन्दुधर्म्मः श्रेयानितीं-रेजै रुच्यमानमनुवदन्ति। कारणमत्र केवलं तेषामनभ्यस्तस्वधर्म्म-व्युत्पत्तित्वम्, विधर्म्मसंसर्गित्वम् परधर्म्मरीत्याध्ययनादिकञ्च। एवमधुना "मुखार्जि एण्ड कों" इत्येवमुपाधिमादधानाः कुलीना अपि मुखोपाध्यायाः रजककार्य्यं वस्त्रनिर्णेजनादिकं बिदधति, रजका अपि विचारपतयो भवन्ति, ब्राह्मणाश्चर्म्मकारायन्ते, चर्म्म-कारा अपि ब्राह्मणायन्ते, अथच ते धर्म्मो धर्म्मो धर्म्म इत्युच्चै ब्रुवते निर्णयन्ति च। यद्भवतु भूयताम्। अद्यास्माभिः यथाशास्त्रं यथा-ज्ञानं यथाविश्वासं धर्म्मं विचारयितुं, पुरातनगाथया तस्य कथावतार्य्यते।

आसीत् कस्याञ्चित् नगर्य्यां सत्यधर्म्मा नाम नरपतिः, स सत्यमेव परं धर्म्मं व्यजानात्। तस्य धर्म्मवत एवं धर्म्म आसीत्, राजकीय-विपणौ सर्व्वमेव विक्रयावशिष्टं विक्रेयं क्रीणाति सः। अब्रवीच्च सः प्रत्यज्ञासीच्च विक्रयावशिष्टं सर्व्वमेव विक्रेयं क्रेष्यामीति।

अथैकदा केनापि कारुणा अलक्ष्मीप्रतिमा निर्म्माय लक्षमुद्रया क्रय्येयमलक्ष्मीः, कश्चित् क्रेष्यतीति राजापणे अवतारिता, क्रेतारस्तु कस्याः प्रतिकृतिरियमिति श्रुत्वा दृष्ट्वा लक्षमुद्रा मूल्यमाकर्ण्य उपहस्य च दूरमपसरन्ति। क्रमशस्तु क्रेतारः प्रतिगताः, सायं प्रत्युपस्थितम्।

अथ तदा हट्टप्रहरिकः कश्चित् राजानं व्यज्ञापयत् महाराज! कश्चित् शिल्पी अलक्ष्मीप्रतिकृतिं विक्रेतुं विपणौ समानीयत मूल्यन्तु तस्या लक्षमुद्रेति, तदाकर्ण्य राजा अथवा का गतिः प्रदाय लक्षमुद्रामानीयतां सा राजभवनमित्यादिशत्।

अथैकदा राजभवनं प्रविश्यालक्ष्मीमर्द्धरात्रे सौधशिखरमध्यासीने दुश्चिन्तयति राजनि काचित् षोड़शवर्षीया दिव्याङ्गना कान्त्या-दिशो द्योतयन्ती अस्फुटं रोरुद्यमाना च तत्राविरभूत्। तामालोक्य नरपतिराह का भवती भगवत्यम्ब! इति, सा कथयति भवद्भवन-वासिनी राजलक्ष्मीरहमस्मीति जानीहि। राजाह किमिति रोदिषि मातः! लक्ष्मीराह भवान् स्वं भवनमलक्ष्मीं प्रावीविश-दिति न तया सहैकत्र स्थातुमलमिति नात्र तिष्ठासामि रोदिमि च तदाकर्ण्य राजा गललग्नीकृतवासाः भक्तिप्रह्वीभावः सगद्गदं स्तोतु-मारेभे।

"लक्ष्मीस्त्वं सर्व्वभूतानां वरदासि हरिप्रिये!।
या गति स्त्वत्प्रपन्नानां सा मे भवतु सर्व्वदा॥"
"विष्णोर्व्वक्षसि पद्मे च शङ्खे चक्रे तथाम्बरे।
लक्ष्मीर्नित्यं यथासि त्वं मयि नित्यं तथा भव॥"

मातः किं मयापराध्यते चिरसेवकेन कृपालेशशरणेन?। अलक्ष्मी प्रतिकृतिरानीता सत्यधर्म्मपालनाय, सत्यस्वरूपो हि विष्णुः। मातः! विष्णुवल्लभे! यदि सत्यं न पालयेयं तेनापि त्वया कुप्यते अधार्म्मिकाय मह्यम्। अधर्म्माद्बिभेमि सततम्।

लक्ष्मीराह—सत्यमेव प्रवक्ति भवान्, किं विधास्यामि नालमहमेकत्रावस्थितुमलक्ष्म्या इति। राजाह मातः! तवैव प्रीतये नाहमलं धर्म्मं परिहातुमिति, यदि स्वधर्म्मरक्षणमेव ते त्यागकारणं तत्त्यज्यताम्, वरं वनं प्रविविक्षामि मुमूर्षामि किन्तु तथापि नैव धर्म्मं जिहासामि। श्रुत्वैतत् लक्ष्मी राजभवनान्निर्ज्जगाम। लक्ष्मीनिर्गमनमालोक्य मूर्त्तिमद् भाग्यमवोचत् महाराज! विना लक्ष्म्या नाहं स्थातुमलमिति लक्ष्मीमनुसरामि इति तथैव राजानमाभाष्य सह तेन विहिताधरोत्तरं निर्ज्जगाम। तद्दृष्ट्वा बुद्धिरप्याह महाराज! भाग्यलक्ष्मीभ्यां विना नाहमपि स्थातुमलमिति राजानमाभाष्य पुरान्निश्चक्राम, तदवलोक्य धर्म्मोऽपि चतुर्म्मुखश्चतुष्पाच्चतुर्व्वाहुः राजानमिदमुवाच महाराज! लक्ष्मीर्भाग्यं बुद्धिश्च भवन्तं तत्यजुः कथमिहैककेन मया स्थातव्यम्, अहन्तु तदनुचरः सुतरां मामपि निर्गन्तुमनुजानीहि। राजाह नहीति, भवन्तं नानुजानामि, भवता कथमहं त्यक्तव्यः? भवदर्थं मया लक्षमुद्रा व्ययिता, अलक्ष्मीरानीता लक्ष्मीस्त्यक्ता, भाग्यं बुद्धिश्च समुपेक्षितम्, अतोऽहं भवता त्यक्तुं नैव साम्प्रतम्, इत्युक्त्वा कृतानुनयो राजा धर्म्मं करे गृहीत्वा वलादिव विवदमान इव न्यवर्त्तयत्। धर्म्मोऽपि मनसा विचारितवान् सत्यमेव राजा मद्रक्षार्थं वह्वर्थौ निःस्वार्थं विसर्ज्जितः अतो धर्म्मं मामेवाधर्म्मः स्पृशेद्यद्यहं धार्म्मिकमिमं त्यजेयं इति परावृत्त्य धर्म्मो यथा पूर्व्वमवातिष्ठत।

ततश्च धर्म्मं नागच्छन्तमालोक्य तदाकर्षणेन क्रमशो बुद्धिर्भाग्यं लक्ष्मीश्च परावृत्त्यागत्य च राजानमूचुः महाराज! धर्म्मेण विना न

क्वापि नास्मभ्यो रोचतेऽवस्थानाय स्थानमिति निवर्त्तामहे, तदाकर्ण्य राजाह चिरदासं प्रति दयैयं वः स्थीयतां पूर्व्ववत् इति।

अलक्ष्मीस्तु यथाशास्त्रमश्वत्थतले स्थापिता यथारुचि शनैर्गृहे स्वधर्म्मवर्जिते विहर्त्तुमारेभे।

अहो धर्म्मशक्तिर्गरीयसी धन्या च, यस्याकर्षणात् प्रनष्टापि लक्ष्मीः बुद्धिर्भाग्यञ्च स्वयं न्यवर्त्तिषत। तमेव धर्म्मं व्याख्यातुं यथाशक्ति यथा-युक्ति ग्राहकेभ्यः क्रमशः समुपहरामि।

( क्रमशः। )

---

# नीतिसंग्रहः।

## कथा सरित्सागरे सुभाषितानि।

१ स्पृशन्ति न नृशंसानां हृदयं बन्धुबुद्धयः।

The hearts of the cruel are never affected by family ties.

२ को हि वित्तं रहस्यं वा स्त्रीषु शक्नोति रक्षितुम् ?

It is next to impossible not to disclose one's riches and secrets to his wife.

३ स्त्रीषु वाक्संयमः कुतः ?

Women can not control their tongues.

४ आपद्यपि सतीवृत्तं किं मुञ्चन्ति कुलस्त्रियः ?

Is it that the ladies of respectable families ever give up their morals in time of distress. ?

५ आश्चर्य्यमपरित्याज्यो दृष्टनष्टापदामपि।
अविवेकान्धबुद्धीनां स्वानुभावो दुरात्मनाम्॥

It is quite strange that the evil disposition of the wicked whose minds are entirely blind with the darkness of ignorance, still continues the same though they have felt and passed the rubs of misfortune.

६ कृतघ्नानां शिवं कुतः ?

The ungrateful are never happy.

७ वरं हि मृत्युर्नाकीर्तिः।

Death is undoubtedly preferable to infamy.

८ वरं पत्यौ प्रवासस्थे मरणं कुलयोषितः।
न तु रूपारमल्लोकलोचनापातपात्रता॥

For ladies of respectable families whose husbands are away in distant lands, it is certainly a far greater boon to die than to be the cynosure of the public eye rapturously converging on them to enjoy the beauty.

९ कष्टो ह्यविनयक्रमः।

Evil habits are unquestionably full of miseries and sufferings.

१० अचिन्त्यं शीलगुप्तानां चरितं कुलयोषिताम्।

The good character of virtuous women whose doings are ever guided by the rules of sound morality is truly inconceivable.

११ अशीलं कस्य भूतये ?

Bad conduct is never productive of good to any one.

१२ किमज्ञेयं हि धीमताम् ?

There is nothing unknowable by the wise.

१३ प्राणेभ्योऽपि हि धीराणां प्रिया शत्रुप्रतिक्रिया।

Revenging the foe is really dearer to the hearts of the brave than their own lives.

१४ कष्टं क्रूरा जिगीषवः।

It is to be regretted that those bent on conquering others are very cruel.

१५ न स्वेच्छं व्यवहर्त्तव्यमात्मनोऽभूतिमिच्छता।

One who wishes good to himself should not act according to his own free will ( i. e. without consulting others ).

पुरोहितः श्रीगोपीनाथशर्म्मा—जयपुर।

---

## समस्या।

अधुना इंरेजिशिक्षितानां राज्ञां परिषत्सु पुरेव पण्डितानां मिथः शास्त्रार्थः काव्यालोचना समस्यापूर्त्तिप्रभृति च प्रायो विलुप्यते। तेन विना हि पर्य्यालोचनां तत्र ते पण्डिताः रिक्त-शक्तयो जाताः। अहो इदमतीव दुःखाकरम्। किन्तु शास्त्रार्थ-स्यात्र सम्यगसम्भवात् संस्कृतप्रियानां शक्तिरक्षणार्थं पञ्च-समस्या विदधामहे प्रार्थयामहे च ग्राहकान् इमाः समस्याः पूरयन्तु-इति। पूर्णाश्च ताः येषां सुष्ठुतराः स्युः तदा आगामिन्यां चन्द्रिकायां तेषां नाम्ना ताः पूर्णसमस्या मुद्रयिष्याम इति।

व्यहमब्दे मिथो वक्त्रं पश्यतो नैव दम्पती॥

"तदा मयूरमस्तके ननर्त्त पन्नगेश्वरः॥"

"पिपीलिका नृत्यति वह्निकुण्डे॥"

कात्कतां कुण्डलीशः॥

चक्रवत् परिवर्त्तते॥

( क्रमशः। )

श्रीश्रीदुर्गा

शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी॥

## भासावतरणिका।

दिवीह तारस्तनितं तड़िस्त्वतां भुवि प्लवानां श्रुतिकर्कशः स्वरः।
रवैरलं मे चतुरः प्रियारवः पिकोऽस्ति मूकः खलु तत् शुचौ शुचा॥

## उद्भटश्लोकाः।

"दानभोगविहीनेन धनेन धनिनो यदि।
पृथ्वीखातस्थितेनैव धनेन धनिनो वयम्॥"८१॥

"वरं दरिद्रो बहुशास्त्रपारगो नचापि मूर्खो रहुरत्नभूषितः।
सलोचनो जीर्णपटोऽपि (४) भाषते, न नेत्रहीनः कनकैरलङ्कृतः॥"८२॥

"सा निष्प्रभुः श्वशुरभूमिरभूदयोध्या लङ्केयमीदृशगतिं दहनामवाप।
इत्थं पुनर्निजतनुव्ययशङ्कयेव, मां तापिनीं नयति नात्मपुरीं यमोऽपि॥"८३॥ (५)

"तातस्येव दुरन्तता हरधनुर्भङ्गो विवाहे पणः
तद्वत्तु श्वशुरेण दण्डकवने निर्म्मोहमावासिता।
किम्वान्यत् पतिरेष पावकमुखोत्तीर्णां परित्यक्तवान्
मातर्म्मेदिनि! मा भजस्व करुणां कर्म्मैव मत्तादृशम्॥"८४॥ (६)

---

(४) जीर्णः पटो यस्य सः दरिद्रः। (५) भर्त्तुः कामायाः सीतायाः खेदोक्तिरियम्।
(६) सीतायाः पृथिवीं प्रति खेदोक्तिरियम्।

# ताम्बूलम् ।

## तृतीय वीटिका ।

---

दिनान्यतीत्य द्वित्राणि मित्राणि दयितस्य नः ।
ज्योतिर्व्विंत्ता स भृत्याश्च कुटीर उपतस्थिरे ॥ १ ॥
हा कालोऽपाणिपादोऽपि अत्येति खचरानपि ।
के वयन्तु ततः कालो वलीयानिति मे मतिः ॥ २ ॥
अहस्तोऽप्यतिदूरस्थान् आकृष्याधो निपातयेत् ।
कांश्चित् प्रवर्द्धयेत् कालो वलीयानिति मे मतिः ॥ ३ ॥
शैलभूतलपातालं युगपत् सवलावलम् ।
निरन्ध ईच्छते कालो वलीयानिति मे मतिः ॥ ४ ॥
शैलाचला जलायन्ते गिरीयन्ते सरिद्भुवः ।
तदायत्ताः क्षितौ कालो वलीयानिति मे मतिः ॥ ५ ॥
श्रुतेतिवृत्तास्तेऽमात्याः धात्रीमुखत आदितः ।
आरूढ़ दोलामनयत् मां तयाप्तिजमालयम् ॥ ६ ॥
आदत्तकाश्यपिकरो विलक्ष इव पार्थिवः ।
शुभेऽहनि तु मां दीनां करे सादरमग्रहीत् ॥ ७ ॥

---

(२) अतेयति अतिक्रामति । खचरान् पक्षिणो ग्रहादींश्च ।

(३) अहस्तोऽपि हस्तरहितोऽपि । अति दूरस्थान् पदार्थान् ।

(४) सवलावलं वलवन्तं दुर्व्वलञ्च । निरन्धः अन्धः ।

(५) शैलाचला पर्व्वतमयः । सरिद्भुवः जलस्थानानि । गिरीयन्ते पर्व्वतायन्ते । तदायत्ताः कालाधीनाः ।

(६) आरूढ़दोलां दोलामारूढ़वतीं मां । तया सह उपमाता सह । आप्तिजमालयं राजपुरोहितभवनम् ।

(७) आदत्तेति भूपतिरपि । करे करावच्छेदे । मत्पाणिग्रहणमकरोदित्यर्थः ।

उपभुक्तापि राज्ञा श्रोर्म्मामालिङ्गत् ततो मया।
अधीतवत्या तां नीतिं युष्मान् वीच्येऽनुजा इव ॥ ८ ॥
इति वः कथितं वृत्तं मदीयं प्रथमावधि।
ध्यायन्ती यत् पुनस्तेन नीताद्य जगतो वहिः ॥ ९ ॥
निशम्य विमलावाचम्चुस्ता नतिमाश्रिताः।
नीतिं विनय नो गुर्व्वि! यया स्म त्वादृशा वयम् ॥ १० ॥
ज्योत्स्नापीयूषपयसां धारां कृत्वा पराङ्मुखीम्।
तन्वीवेणुपिकालापं जित्वा वाच सुवाच सा ॥ ११ ॥
अवगच्छत भग्नयो! मे नारीणां नीति मादितः।
ययामुत्र परत्रापि पूज्या देवीव सा जनैः ॥ १२ ॥
लोके परम्परा यासौ श्रूयते तद्‌यथा श्रुतिः।
प्रमाणं योषितां तद्वदाचारो वेदसम्मितः ॥ १३ ॥
स्त्रीणां प्राचां नृणाञ्चैव व्यवहारं हितेच्छवः।
किरीटं परिहृत्यापि वहेरन् शिरसा ततः ॥ १४ ॥

---

(८) राज्ञा शक्रजिता। श्रीः राजलक्ष्मीः। आलिङ्गत् मयि संक्रान्ता। ततः लक्ष्म्याः सकाशात्। अधीतवत्या शिक्षितवत्या। युष्मान् सपत्नीः।

(९) यत् वृत्तं पूर्व्ववृत्तान्तं। ध्यायन्ती चिन्तयन्ती। तेन चिन्तितेन वृत्तान्तेन नीतेति इह जगति नासमिव, वाह्यज्ञानशून्याभवम्।

(१०) ताः सपत्न्यः। विनय शिक्षय। नोऽस्मान्। यया नीत्या। त्वादृशाः त्वत्समाः लोकप्रियाः। स्म भवामः।

(११) अतीव विशदार्थां सुन्दरीं मधुराञ्च वाचमितिभावः।

(१२) अवगच्छत शृणुत। यया नीत्या। अमुत्र इहलोके परत्र परलोके। सा नीतिमती कुलस्त्री।

(१३) तद्वत् तथा परम्परागतः स्त्र्याचारः वेद सम्मितः वेदतुल्यः अतो नावज्ञेयः। भविष्यति सर्व्वमेव प्राचीनस्त्रीणां नीतिः कथ्यते इति भावः।

(१४) किरीटस्तु इहलोके एव शोभाजनकः स्त्र्याचारः प्राचीनलोकाचारश्च उभयलोके, अतः शिरोधार्य्यः माननीयः इति भावः।

अन्याभिः कन्यकाभिश्च बाल्ये क्रीड़ाच्छलेन माम्।
गार्हस्थ्यं प्रायशो नीतिमुपमाता व्यशिक्षयत्॥ १५॥
सावगुण्ठनमागुल्फं पुत्रिकां रक्तमम्बरम्।
परिधाप्य वधूं मेने तथात्मानञ्च वा क्वचित्॥ १६॥
चुल्लीं मकरवं स्थानमलिम्पं कल्पितं फलम्।
अक्लान्तमच्छालयञ्च अन्नपूर्णामथानमम्॥ १७॥
अग्निं प्रज्वाल्य वितथमेवं पाकमकल्पयम्।
कटिवेष्टितचेलान्ता सलज्जमवगुण्ठिता॥
बालवृद्धातिथिस्वांश्च गुर्व्विणीश्चाथ कल्पितान्।
तुष्णीं संयुतपादा च प्रथमं पर्य्यवेशयम्॥ १८॥ १९॥
ना ना देयं उँ हूँ देयं देयञ्च करकम्पने।
शिरसः कम्पने देयं न देयं व्याघ्रकम्पने॥ २०॥
सर्व्वान्ते स्वयमश्नन्ती कर्म्म निष्पाद्य सर्व्वशः।
इत्थं कृत्रिमपाकादिक्रियामहमशिक्षयम्॥ २१॥
व्रतं देवार्च्चनं स्तोत्रवन्दनं सत्कथाश्रुतिः।
गुरुशुश्रूषणञ्चैते विषयाः क्रीड़नस्य नः॥ २२॥

---

(१५) कन्याभिः सह। बाल्ये बाल्यकाले। क्रीड़ाछलेन खेलनव्याजेन।

(१६) सावगुण्ठनं आगुल्फञ्च यथा स्यात्। तथैव वस्त्रपरिधानस्य ऋषिभिर्व्विहित त्वात्। पुत्रिकां कृत्रिमां क्रीड़ापुत्तलीम्। क्वचित् कदाचित्।

(१७) चुल्लीं उद्धानम्। अलिम्पं गोमयादिना। कल्पितं मृदालुकाकर्करतृणादिकं एषा वार्त्ताकुः इयमलावूः एवं रूपेण आरोपितम्। अक्लान्तम् छिन्नमिव सा। अथ अनन्तरम्। अन्नपूर्णां अनमम् पाकस्य स्वादुतायै इति शेषः।

(१८) कटीति कटौ वेष्टितश्चेलान्तो वस्त्रप्रान्तदेशो यया सा। गात्राणां सम्यगावरणाय वायुना वस्त्रस्यापसरणवारणाय च। वस्त्राञ्चलेन कटिबन्धनं परिवेशने विधेयम्।

(१९) मन्वादि स्मृतिषु बालादीन् प्रथमं भोजयेदिति विधानात्।

(२२) सत्कथाश्रुतिः सत्प्रसङ्गश्रवणम्।

अभेद्याट्टालिका लज्जा दुर्लक्ष्यानुचरी सदा।
कुलजाः पालिता पाति प्रजाः कृषिरिवापदः॥ २३॥
आपादमस्तकन्यस्तलज्जावज्राधिकञ्चुकीम्।
स्पृष्ट्वा विफलतां यान्ति दुर्ज्जनानां कुदृष्टयः॥ २४॥
आस्वादयन्तु लोकानां मधुरं सद्यशः फलम्।
कूजन्तु मृदु कामिन्यः लज्जापञ्जरकोकिलाः॥ २५॥
ललितं पादसम्पातं पश्यन्ती चेद्व्रजेद्वधूः।
देवीव जनयेत् प्रीतिं भीतिञ्चाप्यसतां नृणाम्॥ २६॥
सतीत्वं रक्षितुं रत्नं रमणीनां विरिञ्चिना।
रचिता विटचौरेभ्यो लज्जैवायसपेड़िका॥ २७॥
कटूक्तिं शासनं निन्दां सहन्ते च धृतिव्रताः।
छेदनं भेदनं दाहं धत्ते सर्व्वंसहा क्षमा॥ २८॥
कौलिन्यं गौरवं मानं पितृभर्त्तृकुलस्थितिम्।
कीर्त्तिञ्चावति नारीणां मातेव तनयं क्षमा॥ २९॥
शयनाशनयोः साध्वी प्रयतेत ह्यमायया।
वशीकरणमन्यच्च पत्युरिच्छानुवर्त्तनम्॥ ३०॥

---

(२३) दुर्लक्ष्येति लज्जा अलक्षिता सती सह चरति। कुलजाः कुलस्त्रीः। लज्जावत्याः परपुरुषात् आपदो न सम्भवन्ति इतिभावः।

(२४) आपादेति आ पादात् मस्तके न्यस्तं लज्जारूपं वज्राधिकं कुञ्चुकं यया तां स्त्रियं। कुदृष्टयः पापभावेनावलोकनानि।

(२५) आस्वेति लज्जावत्याः स्त्रियाः मृदु मृदु वचो वदन्त्याश्च यशो लोकैर्गीयते इति भावः।

(२६) ललितं धीरं। पादसम्पातं स्वकीयं स्वयं पश्यन्ती। गमनकाले स्त्री चकितं चञ्चलितमितस्ततो न पश्येत् केवलं पादन्यासस्थानमालोक्य गच्छेदिति भावः।

(२७) आयस पेड़िका लौहपेड़िका, सिन्धुक इति प्रसिद्धिः।

(२८) कटूक्तिं गुरुजनादीनाम्। धृतिव्रताः धैर्य्यशालिन्यः।

(३०) अमायया अकौटिल्येन केवलं भक्त्या प्रेम्णा। सर्व्वं सहा सर्व्वं सहते।

नवीकृतमिवातन्द्रा नैपुण्यात् भोग्यमन्वहम्।
प्रीणयेदुपभोज्येव सृष्टं ब्रह्ममयीश्वरम्॥ ३१॥
युक्तापि दासदासीभिः गृहकृत्ये सदाकुला।
क्लिष्टापि सुखयेत् कान्तं यथा प्रोषितभर्तृका॥ ३२॥
प्रतीपदर्शिनी शास्त्रे भीरुर्युद्धे च मानुषी।
अबला च निषिद्धा तत् विहिता गृहकर्मणि॥ ३३॥
गार्हस्थ्यनीतिः पक्तिश्च परा विद्या कुलस्त्रियाः।
तयैव सफलो देहोऽन्यथा मांसकरण्डिका॥ ३४॥
अतस्तु विपरीता या नारी पुम्प्रकृतिस्तया।
स्त्रीसुखं नानुभूयेत पुंसेव स्त्रीकृतात्मना॥ ३५॥
लज्जा भयं मृदुत्वञ्च गृहकृत्यं स्वगोपनम्।
लक्ष्मैतदान्तरं स्त्रीणां विपरीतं ततो नृणाम्॥ ३६॥
एवमेवमुपमातुराग्रहात् शिक्षितास्मवलोचिताध्वनि।
तेन मेऽत्र प्रियता द्रढीयसी हे भगिन्य! इति वः समाप्ये॥

इति श्रीजयचन्द्रसज्जिते ताम्बूले तृतीयवीटिका॥०॥

(क्रमशः।)

---

(३१) नवीकृतं नवं नवं। अतन्द्रा निरलसा। भोग्यं उपभोज्य भोजयित्वा सृष्टं जगत् व्यञ्जनादिकञ्च। अन्वहं प्रत्यहं। ब्रह्ममयी प्रकृतिः कापि स्त्री च। ईश्वरं जगदीश्वरं भर्त्तारञ्च।

(३३) प्रतीपेति प्रतीप दर्शिनी इति स्त्री नाम, कथम्? प्रतीपं विपरीतं पश्यति बुध्यति यतः शास्त्रे शास्त्राभ्यासे। भीरुरिति स्त्रीनाम कथं? मानुषी स्त्री अबला च अतो युद्धे बिभेति अतस्तत्र तत निषिद्धा।

(३४) पक्तिः पाकः। तया विद्यया। मांसकरण्डिका मांसाधारः निष्फलः। अतः गार्हस्थ्यनीतिपाकविद्यातः। विपरीता केवलं मनोविकारि नाटकादिपाठे पत्रादि लिखने विलासविद्यायाञ्च रता। पुंप्रकृतिः पुरुषस्वभावा।

(३५) स्त्रीकृतात्मना स्त्रीवेशधारिणा।

(३६) स्वगोपनं आत्मगोपनं। लक्ष्म चिह्नं। आन्तरं। अभ्यन्तरीणम्।

# धर्म्मविवेकः ।

गुरून् प्रणम्य विचार्य्य संहिताः प्रचीय प्राचां वचनानि यत्नतः ।
धर्म्मः प्रसङ्गाद्गुरुशिष्ययोर्म्मिथः विविच्यते श्रीजयचन्द्र शर्म्मणा ॥

अथैकदा कश्चिद्धर्म्मं जिज्ञासुर्युवा नानानगरीं तीर्थस्थानञ्च वंभ्रम्यमाणः कुतोऽपि शान्तिमलभमानश्च स्वग्रामवासिनं पैत्रिकगुरुं प्राचीनतमं पण्डितं शिवरामशर्म्माणमुपेत्य प्रणम्य च प्रोवाच गुरवः! ब्रुवन्तु मां प्रणतं धर्म्मतत्त्वम्, अहमितस्ततो व्याकुलमटाट्यमानः केनचिद्धार्म्मिकेन समुपदिष्टः श्रीमत्पदोपान्तं प्राप्तः। श्रीमद्भिरपि दयालुभिर्धर्म्मोपदेशेन स्वस्थीक्रियै।

शिवरामः। वप्र! (१) त्वन्तु युवा दृश्यसे, ईदृशी ते धर्म्मप्रवणता साधीयसी। वत्स! कीदृक् ते अध्ययनादिकम्? किं नाम?

युवा। देव! नाहमार्य्यशास्त्रमध्यैषि, परन्तु आ-बाल्यात् म्लेच्छशास्त्र एव शिक्षितः। नाम मम वामापदः, जात्याहं ब्राह्मणः।

शिव। वत्स! ब्राह्मणस्य शर्म्मान्तं श्रीपूर्व्वञ्च नाम व्यक्तव्यं, तेन श्रीवामापदशर्म्मा इत्येवं वक्तुं युज्यते। नामश्रवणेनैव ब्राह्मणोऽयं निश्चीयते।

(श्रुत्वैतत् वामापद स्तूष्णीं स्थितः। अहो नामकथनरीतिरपि न ज्ञायते इति मनसा स्वयं धिक्कृतः।)

वत्स! त्वं धर्म्मं वभुत्सुः पर्य्यटितवान् वहुदेशम्, क्व कीदृशीं धर्म्मप्रवणतामद्राक्षीः?

वामा। वङ्गभूमावस्यां गङ्गातीरवर्त्तिनी कलिकातानगर्य्येव प्रधानं नाभिस्थानमिव, गत्वा तत्र, सार्द्धं विविधधर्म्मप्रचारकैः वह्निरिव सम्बन्धमापाद्य परीक्षितम्, प्रायः सर्व्व एव ब्रुवन्त्येकमाचरन्त्यन्यदिति, अनेके अमुक ब्रह्मचारी ए, मे, अमुक ब्रह्मचारी वि, ए,

(१) वप्रः पितरि केदारे इति विश्वः। वापु, वावा, इति च भाषा।

इत्येवमुपाधिं गैरिकवस्त्राणामुत्तमानां पादत्राणं कञ्चुकादिकञ्च दधाना अपि "वौडनोद्याने" उच्चैर्व्वक्तृतां श्रावयन्ति परन्तु व्यवहारं तेषामपि समीचीनं न मन्ये। केचित् हिन्दवः गृहीत खीष्टधर्म्माणोऽपि पुनः कृतप्रायश्चित्ताभासाः व्यवहार्य्यतामर्ज्ज-यन्ति, केचित् खीष्टीया अपि हिन्दूभवितुं यतन्ते, तदेतदव-लोक्य न क्वापि स्थितिपदमालभते मे चेतः। अतो देवपादानेवात्र गुरून् शरणमिति निश्चित्य समुपस्थितः। श्रीमद्भिरपि धर्म्ममुप-दिश्य मोहध्वान्तमपनुद्यतामिति।

शिव। वत्स! वामापद! धर्म्मबुभुत्सायै महानभिनिवेशस्ते जातः। त्वन्तु धर्म्मशास्त्रे नितान्तमनभिज्ञः। तत् कथङ्कारं बोध-यितव्यगतिगभीरं सूक्ष्मञ्च धर्म्मतत्त्वमिति।

वामा। गुरवः! क्षम्यतामविनयो मे। अहं वक्तृतोपयो-गीनि धर्म्मशास्त्रवचनानि जानामि।

शिव। ज्ञातानि तानि कथ्यन्ताम् श्रोष्यामि।

वामा।

"न मांसभक्षणे दोषो न मद्ये न च मैथुने।
प्रवृत्तिरेषा भूतानां निवृत्तिस्तु महाफला॥" मनौ।५।५६।
"काममामरणात्तिष्ठेत् गृहे कन्यर्त्तुमत्यपि।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हिचित्॥"
"नष्टे मृते प्रव्रजिते क्लीवे च पतिते पतौ।
पञ्चस्वापत्सु नारीणां पतिरन्यो विधीयते॥" पराशरे।४।२६।
त्रीणिवर्षाण्युदीक्षेत कुमार्य्यृतुमती सती। मनौ।९।९०।

इत्यादीनि मनुपराशरवचनानि शिक्षितानि॥ १॥

शिव। (किञ्चिद्विहस्य) वत्स! आद्यन्तमध्यवचनानि तेषां ग्रन्थानां नैव ज्ञातानि?

वामा। नैव ज्ञातानि, परन्तु येभ्योऽधिगतानि तेऽपि वक्तारो धर्म्मप्रचारका नैव जानन्ति। तैः केवलं इंरेजिविद्याः पठिताः।

एवं वङ्गभाषयानुवादितानां पुस्तकानां छिन्नाणि पत्राणि उत्प्लुतानि।

शिव। तर्हि कथं ते धर्म्मप्रचारकाः? कथं वा धर्म्मं उपदिशन्ति? आद्यन्तग्रन्थसन्दर्भं उपक्रमोपसंहारं विधिनियमपरिसंख्यादिकं देशकालभेदं अधिकारिभेदादिकञ्चाविदित्वैव व्यवस्थापयन्ति?

वामा। अथ किम्।

शिव। शिवशिव नारायण!!! अहो रे गरीयान् कालः समायातः, यदश्रुतमपि श्रावयति अदृष्टमपि दर्शयति। वत्स! वामापद! त्वं बुद्धिमानसि, किन्तु शास्त्रं नाभ्यासीः, तत् कथं पुङ्खानुपुङ्खरूपेण बुध्येः धर्म्मतत्त्वम्? वत्स! धर्म्मयुधिष्ठिरयोः संवादस्ते ज्ञातोऽस्ति?।

वामा। नहि, इंराजिविद्यालयपाठ्यपुस्तके स नास्ति।

शिव। तच्छ्रूयतां स धर्म्मयुधिष्ठिरसंवादः। तत्र हि सुविचक्षणेनापि धर्म्मतत्त्वस्य दुर्ज्ञेयत्वं प्रतिपादितं युधिष्ठिरेण। तथाहि—

दुरन्तात् द्यूततो राजा युधिष्ठिरः पराजितश्च प्रतिपालयितुं प्रतिज्ञातं मात्रा कलत्रेण भ्रातृभिश्च गहनं गतवान्। पर्य्यट्य वनं ते निरतिशयं पिपासया ग्लानिमापुः। तत्रानतिदूरे सरसः पानीयमानेतुं प्रथमं सहदेवो गतः। तत्र च तेषां धर्म्मपरीक्षार्थमास्थाय वकरूपं यक्षः तमुवाच। भो जलार्थिन्! मत्कृतानां प्रश्नानां चतुर्णां विधायोत्तरं जलं पिब, स्नाहि नय वा, नोचेत् स्पृशेरपि जलं तदा म्रियेथाः।

तथाहि—महाभारते वनपर्व्वणि ३१२ अध्याये।

"का च वार्त्ता? किमाश्चर्य्यं? कः पन्थाः? कश्च मोदते?।
ममैतांश्चतुरः प्रश्नान् कथयित्वा जलं पिब॥" इति।

तृषार्त्तस्तु सहदेवः तद्वचनमवज्ञाय यावत् जलं पपौ तावत् ममार च। एवं नकुलः अर्ज्जुनः भीमश्च तत्र गता मृताश्च।

चरमे तु युधिष्ठिरस्तत्र गत्वा महदत्याहितं दृष्टवान्। तमपि वकरूपो यक्षस्तथैवाप्राक्षीत्। तदाकर्ण्य बुद्धिमान् धार्म्मिकश्च युधिष्ठिरः आह श्रूयतामुत्तरम्।

"मासर्त्तु दर्व्वीं परिवर्त्तनेन सूर्य्याग्निना रात्रिदिवेन्धनेन।
अस्मिन् महामोहमये कटाहे भूतानि कालः पचतीति वार्त्ता॥" (१)

"अहन्यहनि भूतानि गच्छन्ति यममन्दिरम्।
शेषाः स्थिरत्वमिच्छन्ति किमाश्चर्य्यमतःपरम्॥" (२)

"वेदा विभिन्नाः स्मृतयो विभिन्ना नासौ मुनिर्यस्य मतं न भिन्नम्।
धर्म्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥ ३॥

"दिवसस्याष्टमे भागे शाकं पचति यो नरः।
अनृणी चाप्रवासी च स वारिचर! मोदते॥" ४॥

श्रुत्वैतद् युधिष्ठिरोत्तरम् यक्षस्तुतोष, ते च पुनर्जीविता इति।

हे वत्स! वामापद! श्रुतं युधिष्ठिरवचनात् "धर्म्मस्य तत्त्वं निहितं गुहायामिति" धर्म्मस्य दुर्ज्ञेयत्वम्, तत् कथं त्वया सम्यगवगम्यते धर्म्मतत्त्वम्? मया वा कथ्यते? अतएव बुद्ध्वा अलम्, केवलं पितृपितामहादिभिरनुष्ठितः कर्त्तव्यबोधादनुष्ठीयताम् धर्म्म इति।

मनुनाप्युक्त एव धर्म्मः समुपदिष्टः। यथा—

"येनास्य पितरो याता येन याताः पितामहाः।
तेन यायात् सतां मार्गं तेन गच्छन्नरिष्यते॥" इति।४।१७८।

वामा। देव। यदि ते मय्यनुकम्पा जाता तदा कियन्तमपि क्लेशमुररीकृत्य अनतिसूक्ष्मतया व्याख्यायतां धर्म्मतत्त्वम्, अहमपि श्रद्धया बोद्धुं यतिष्ये।

अपि च। देव! ज्यैष्ठमासीय संस्कृतचन्द्रिकाभिधायां मासिकपत्रिकायां "धर्म्मावतारणा"इत्येवं नाम प्रबन्धे कीर्त्तिता धर्म्मशक्तिरनिर्व्वनीया श्रुता युज्यते च तया, परन्तु सा खलु धर्म्मविषयिणी जनश्रुतिः, क्वापि ऋषिप्रणीत पुराणादितः प्रसृता? उत केवलं लौकिकी सा? लौकिकी चेत् न सम्यक् प्रमाण पदमधिरोहेत्।

शिव। सा जनश्रुतिरपि नामूला। "नह्यमूला जनश्रुति" रिति शासनात्। अपि च विष्णुपुराणेऽपि प्राचीनतमे भूयोभूयो गीयते धर्म्मशक्तिरनिर्व्वचनीयेति कुतूहलञ्चेत् निशम्यताम्।

वामा। अनुजानन्तु गुरवस्तच्छ्रवणाय, दयया ब्रुवन्तु।

शिव। श्रूयतां मनः प्रणिधीयताम्। अस्ति विष्णुपुराणे तृतीयांशे १८ दशाध्याये वर्णिता धर्म्मशक्तिः।

एकदा इन्द्रादिदेवाः पराजिताः स्वधर्म्ममाचरद्भिरसुरैः त्याजित-यज्ञभागा नितान्तं निर्व्वेदमापन्ना भगवन्तं विष्णुं शरणमीयुः तुष्टुवुश्च प्रणिपात पुरःसरम्।

देव! भगवन् रमापते! त्वदेकशरणार्थिणस्त्रायस्व दैत्येभ्यो नः। देव! ह्रादप्रभृतिभिर्द्दैत्यैः यज्ञभागा त्रैलोक्यञ्च हृतम्। अस्माभिः तपसान्वितैरपि ते रिपवः वेदमार्गानुसारिणः स्ववर्णधर्म्माभिरताश्च हन्तुं न शक्याः। अतस्तानसुरान् हन्तुमस्मभ्यः उपायं दातुमर्हसि। तैरेवमुक्तो भगवान् स्वशरीरतः मुण्डितशिरसं दिगम्बरं मायासोहं नाम पुरुषमुत्पाद्य तेभ्यो ददौ प्राह चेदम्। नीयतामयं मच्छरीरप्रसूतोऽवतारविशेषो मायामोहोऽयम्। अयं खलु मायया सकलानेव दैत्यान् मोहयिष्यति, यदा ते वैदिकधर्म्ममार्गं वहिष्कृता भविष्यन्ति तदा ते वध्याश्च। स च गत्वा मायामोहः नर्म्मदातीरसंश्रयान् तपस्याभिरतानसुरान् ददर्श। उवाच च तानसुरानिदं वचः। भो दैत्यपतयः! यदर्थं तपस्तप्यते तद्ब्रूत, ऐहिकं पारत्रं वा तपसःफलमिच्छथ?।

श्रुत्वा तद्भाषितमेतदसुरा ऊचुः। हे महामते! पारत्रफललाभाय तपश्चर्य्येयमस्माभिरारब्धा। अत्र त्वया किं विवक्षितमस्ति?। ततो मायामोहः कथयति—

हे धार्म्मिकाः! यदि मुक्तिमभीप्सथ, तदा मम वाक्यानि शृणुध्वम्। अयमेव धर्म्मो विमुक्तयेऽर्हः, अस्मिनेव धर्म्मे स्थिताः

स्वर्गं विमुक्तिं वा गमिष्यथ, अतएव सर्व्वे एव यूयं धर्म्ममेत मर्हत।

तस्माद्यज्ञे पशुघातादि दुष्टधर्म्मैरलम्। एतदशेषं जगत् विज्ञान मयमवगच्छथ।

तथा च तत्रोक्तम्।३।१८।१६।

"स्वर्गार्थं यदि वो वाञ्छा निर्व्वाणार्थं मथासुराः!।
तदलं पशुघातादि दुष्टधर्म्मैर्निबोधत॥ १५॥
विज्ञानमयमेवैतदशेषमवगच्छथ।
बुध्यध्वं मे वचः सम्यग्बुधैरेवमुदीरितम्॥" १६॥
"नैतद्युक्तिसहं वाक्यं हिंसा धर्म्माय नेष्यते।
हवींष्यनलदग्धानि फलायेत्यर्भकोदितम्॥ २४॥
यज्ञैरनेकैर्देवत्वमवाप्येन्द्रेण भुज्यते।
शम्यादि यदि चेत् काष्ठं तद्वरं पत्रभुक् पशुः॥ २५॥
निहतस्य पशोर्यज्ञे स्वर्गप्राप्तिर्यदीष्यते।
स्वपिता जजमानेन किन्नु तस्मान्न हन्यते॥ २६॥
तृप्तये जायते पुंसो भुक्तमन्येन चेत् ततः।
दद्याच्छ्राद्धं श्रद्धयान्नं न वहेयुः प्रवासिनः॥" २७॥
"एवं बुध्यत बुध्यध्वं बुध्यतैवमितीरयन्।
माया मोहः स दैतेयान् धर्म्ममत्याजयन्निजम्॥" १८॥
"स्वल्पेनैव हि कालेन मायामोहेन तेऽसुराः।
मोहितास्तत्यजुः सर्व्वां त्रयीमार्गाश्रितां कथाम्॥" २२॥
"कुरुध्वं मम वाक्यानि यदिमुक्तिमभीप्सथ।
अर्हध्वं धर्म्ममेतञ्च मुक्तिद्वारमसंवृतम्॥" ५॥
"इत्यनेकान्तवादाञ्च मायामोहेन नैकधा।
तेन दर्शयता दैत्यैः स्वधर्म्मास्त्याजिता द्विज!॥" १०॥

वत्स! वामापद! "अर्हध्वं" "बुध्यत" इत्येवं मायामोहप्ररोचनावाक्यात्ते धर्म्मं तत्यजुः, अतएव ते असुरा "अर्हन्तः" "बौद्धाश्च"

कथ्यन्ते। ततः प्रभृत्येव बौद्धधर्म्म प्रवृत्तिः। किन्तु अधुना अर्व्वाचीनानां इंराजिशिक्षितानां मुखतः श्रूयते "बौद्धधर्म्म आधुनिकः" पञ्चशतवर्षमेव बौद्धधर्म्मप्रवृत्तेः समयः। अत आकाशकुसुमायमानं तेषां तद्वचनं न प्रतिवाद्यम्। बौद्धधर्म्मप्राचीनतायां उपरोक्त विष्णुपुराण वचनान्येव प्रमाणम्। विशेषतः मत्स्यपुराणे २४ध्याये ऽपि तत्कथा श्रूयते।

एवं त्यक्तधर्म्मबलास्ते ऽसुराः शक्रेण विनायासं निहताः। श्रुतानि-धर्म्मशक्तौ आप्तवचनानि प्रमाणम्। धर्म्मावतारणाप्रसङ्गे निर्गतापि लक्ष्मीर्धर्म्मबलेनाकृष्टा प्रत्यागता। अत्रतु प्रतिष्ठितापि लक्ष्मीः धर्म्म-त्यागात् पलायिता इति।

अधुना यथावसरं धर्म्मो व्याख्यायते। त्वया श्रोष्यते। किन्तु सन्ध्यादि नित्यकर्म्माद्यनुष्ठानानुरोधात् युगपत् व्याख्यातुं नैव शक्यते किन्तु क्रमशः।

वामा। वाढ़ं तथैव श्रोष्यामि क्रमशोऽल्पशश्च।

( क्रमशः। )

---

# मकरन्दिका।

## प्रथमोच्छ्वासः।

( पूर्व्वप्रकाशितात् परम्। )

---

"प्रिये मकरन्दिके! तव हृदयप्रतिरूपं सरलतामधुरिमामय-मनवरतं विसर्पन्तं वदनपयोधरसमुपजातं सुधापटलनिस्यन्दमास्वा-दयतो मे अरातिम्प्रति यानपिपासा क्रमेण श्लथीभवतीति लक्षये। स्वप्रभाववित्रासितनिखिलशत्रूपरिगतहृदयकन्दर क्षत्रियान्वयप्रभ-

वोऽयं जनः, तत् किमिति आत्मप्रतापप्रकटनसमये आपतिते समरपराङ्मुखो भीतो भीतो धृतदेशान्तरगमनमानस आत्मानं स्वपदात् पातयामि। अशेषप्राक्तनसुकृतिसमासादितं यावदीय सुरसुन्दरीसमवायावतंसीभूताया भवत्याः सुरेन्द्रोपवनसुदुर्लभं प्रसूनमिव प्रेमदाम किमनार्य्यजनोचितेनाचरणेन शाखामृगकरतल-गतां कनकमेखलामिव अवमाननां नयामि। आशैशवं जनक-निर्व्विशेषं परिपालयति मां तावन्महीधरकुलेश्वरो महाराजाधि-राजः कुसुमपुरनायकः श्रीमच्छशाङ्कशेखरः, सः अद्यादिशति मही-पालः। वत्स! शिखण्डिवाहन! मदीयदुहितृदूषणमभिलाषुको नरपतिकुलापसदः अङ्गपालहतको हन्तव्यः इति अद्यप्रभृति मच्छास-नात् विहिताभिषेको मदनोकिनीनायकस्त्वं समरशिरसि समानयन् निर्व्वर्त्तयन् मदशेषप्रियहितं प्रकटयंश्च सर्व्वलोकातीतमात्मप्रभावं विमोहय तावज्जीवलोकमिति। ततो 'यथाज्ञापयति महाराजः सर्व्वजीवलोकेश्वर' इत्यभिदधानस्तदादेशं सादरं उत्तमाङ्गे निधाय आगतोऽहं प्रिये त्वदन्तिकं। अधुना विषमजलदपटलपरिवृतां सर्व्वजनहृदयहारिणीं शशाङ्कलेखामिव आननकमलिनीं भवत्याः परमविषादपरिगतामालोक्य विस्मरामि तावत् साम्प्रतिकं करणीयं, कथं सौदामिनी प्रियतमजलधराङ्कमधिशयाना परिप्लवं न गच्छेत्। प्रिये, विधीयतामुत्थानं। अतिसुकुमारं वदनं सन्तापपरमाणवः मालतीकुसुममिव म्लानिमानयन्ति। दारयति च दारुणः क्रकच-पात इव हृदयं संस्तुतजनविरहः। अत्र तु नास्ति कोऽपि शोकाव-सरः। अचिरेणैव निर्वर्त्तितारातिनिधनव्यापारः व्यपनीय कुसुमपुर-महाशैलं पुनरागच्छामि त्वदङ्कमलं। इदं ते त्रिभुवनमङ्गलैक-कमलं अमङ्गलभूताः कथमिव मुखम् अपवित्रयन्ति अश्रुविन्दवः। किमिति क्षत्रियजनोचिते कार्य्यावसरे सुतरां हर्षस्थाने अश्रुविप्लवे-नामङ्गलमानयसि इत्यभिदधान एव युवा प्रेमोद्वेलेनेव गाढ़-

मायतञ्च परिष्वज्य कान्ताङ्गलतां सुवासरमणीयं सुशीतलपानीयं सुचिरविचरितसैकतभूमिभागः अध्वगजन इव दयितामुखसुधाकर-विनिर्गतां सुधाधारां चकोर इव दीर्घोपोषितलोचनाभ्यां पपौ। ततः सुचिरं तमभिध्यायन्ती वाला उष्णायतेन श्वासमरुता छिन्न-वीणा शोकोच्छ्वासमभिनयन्ती, तुहिननिकरपरिम्लदितमृणा-लिनीव, प्रचण्डमार्त्तण्डमयूखसन्तप्ता कुमुद्वतीव, समुद्बाष्पमुखी, आसन्नभर्त्तृवियोगशिथिलितकरकमला शिशिराश्रुविषादिनी हैमन्तिकनिशीथिनीव, उद्दामकेशपाशपरिवृतेन कपोलदेशेन शैवालानुविद्धसरसिजश्रियं बिभ्रती हृदयेशमभिहितवती "आर्य्य-पुत्र! मकरन्दिकावान्धव! स्वकीर्त्तिधवलिताशेषसंसारात् नरपति कुलात् समुत्पन्नेयं त्वदधीनजीविता, विशेषतः रमणीजनसुदुर्लभेन भवदीयप्रेमदाम्ना प्रसाधनीकृतोत्तमाङ्गा सुदूरमारोपितं गुरुता-ञ्चनीतं आत्मानं कथं अवनीपालेन स्वकरविहिताभिषेकं तावद्धर्म्म-विलोपमापादयतः नरहतकस्याङ्गपालस्य शासनाय कृताभियानं भवन्तं गमनवाधामुत्पाद्य लघूकृत्य पातयामि। सुचिरं भवदीय समागमेन कृतार्थीकृतात्मा त्वदाश्रितेयं मकरन्दिका अवैति च महान् सम्परायो हि क्षत्रियप्रवीरस्य कर्म्मैकभूमिरिति।

किन्तु एतावदेव प्रार्थयते त्वदनुग्रहप्रवर्द्धितप्रगल्भा त्वदेका-वलम्बिनी लतैषा त्वदाननसुधाकरचन्द्रिकापानेन जीवन्ती चकोरीव त्वत्पादतललालिता रेणुकणिकेव यदेषरणप्राङ्गने त्वत्समीपं आत्मानं संस्थापयितुं आदिश इति। भीषणे सम्परायेऽपि कायं छायेव भवन्तमनुगन्तुं प्रार्थयते त्वदधीनजीविता। तथा, एषाहि नैसर्गिकीरीतिर्दृश्यते यथा महाभीषणाशनिपातविभीषणेऽपि जलधराङ्कतले विराजते कमलिनीपेलवा सौदामिनी। तथा श्वेतभानुविरहिता ज्योत्स्ना न क्वापि दृश्यते, तथा दीपहीना शिखा नावलोक्यते, विशुष्कपयसि सरोवरे पङ्कजिनी म्रियते। प्रमदा पति-

वर्त्म गतिरितिरीतिः स्वाभाविकी। अतस्त्वदङ्ग समाश्रितेयं व्रतती कथं त्वद्विप्रयोगं सहेत? जीवितवल्लभ! दुरन्तप्रतिभटप्रहरणनिपीड़ितं त्वां तुहिननिकरपरिम्लदितान् विटपिनो वसन्तानिलसंस्पर्श इव अनुलेपनादिभिः पुनः प्रकृतिस्थमापादयामि, इति कथयन्ती तन्वी हृदयेशविशालोरसि निह्नितात्मतनुलता नारायणनाभिसरोजिनीलक्ष्मीश्रियं विड़म्बितवती। अहो किमिवाभिनवं, सर्व्वलोकोत्तरं, सर्व्वकरणग्रामविमोहनं, अभूतपूर्व्वं, अन्तःसर्व्वरमणीयानां, अवधिः निखिलाह्लादनीयानां, सीमान्तलेखा मनोहराणां परिसमाप्तिः प्रीतिजननानां, अवसानभूमिः दर्शनीयानां, दृश्यं समुपजातं। अहो! किमियं क्षीरनिधिप्रस्फुटिता हैमनलिनी, उत विमलगगनाङ्कविलम्बमाना पूर्णशशाङ्कलेखा, आहोस्वित् मथ्यमानपीयूषपारावारगर्भावस्थिता कनककमलिनीसंस्तरविराजिता भगवती सकलसुरासुरमुनिमनुजवृन्दवन्दनीया कमला। अनयोः दम्पत्योर्मेलनापादनेन दया धर्म्मेण, प्रीतिः पुण्येन, मन्दाकिनी त्रिदिवेन संयोजिता विधिना। अहो अनिर्व्वचनीयता धातुर्निर्म्माण कुशलतायाः य एवं विधस्य यावदीयविश्वमण्डलललामभूतस्य नरमिथुनस्य निर्म्माणविधिं निरवर्त्तयत्। नूनमेतौ दम्पती विश्वसृजा यावदीय सौन्दर्य्यसारसम्भारेण मनसाकल्पितौ अथवा कथं विधिकठोरकरसम्पर्कविमर्द्दनमतिजीवेदियं मृणाजिनीपेसला। अद्य प्रभृति अनयोः समागमनेन चिरवचनीयपरिमुक्तः अशेषप्रशंसास्पदतां गतः प्रजापतिः। धन्या जाह्नवी या सततमनयोरङ्गलतासंस्पर्शसम्पर्केण आत्मवारिपरिकरपावनक्षमा। धन्यश्चार्य्यावर्त्तः य एवम्विधेन सुकविकल्पनातिगेन मानवद्वन्द्वेन समलङ्कृतः आसीत्। धन्याः पुनर्वयं येषाम् अशेषकल्मषकलुषिता लेखनी एतद् दम्पतिचरितवर्णनावतारणेन प्रक्षालितसर्व्वपापं लेखकेभ्योऽपि आत्मपुरुषसम्भवं अवदानप्रस्तारं वितनुते। (क्रमशः।)

# महाप्रभुश्रीगौराङ्गदेवस्य जीवनचरितम् ।

( पूर्व्वप्रकाशितात् परम् । )

गतानि कियन्ति दिनानि, श्रीवासभवने प्रवर्त्तितमेकान्ते हरिनामकीर्त्तनं, अस्मिन्नेव समये नवद्वीपवासिनो विदेशागताश्च बहव एव चैतन्यधर्म्मदीक्षिताश्चैतन्यमतानुसारिणश्च सञ्जाताः। कदाचित् परिणामदर्शिना चैतन्यचन्द्रेण सर्व्वान् वैष्णवदलानाहूय अनुमोदितमेतत्। वैष्णवाः! प्रवर्त्तितव्यं यथाभिलषितं नामकीर्त्तनं, नवद्वीपस्य प्रतिपत्तनं, प्रतिपथं प्रतिगृहञ्च समभावेनैव अद्यावधि अवाधेन भवतु कीर्त्तनं, किमपरं प्रार्थयन्ति वैष्णवचेतांसि, यदेवाभिलषितं तेषां चैतन्येन तदेवानुमोदितं। अचिरेणैव कालेन सर्व्वमेव नवद्वीपपत्तनं नामकीर्त्तनेनाभवत् स्वर्गादपि सुखमयं, सर्व्वत्रैव समभावेनाहर्निशं चलति हरिगुणकीर्त्तनं, मृदङ्गनादानुवर्त्तिना आवेशवशेन उत्तालनर्त्तनप्रवृत्तानामुन्मत्तप्रायाणां वैष्णवानां "जयकृष्णचैतन्य" इत्यादि सुमधुरकण्ठरवेण नवद्वीपनगरमुन्मत्तमिवाभवत्। तदानीं नवद्वीपनगरे यवनप्रधानः कश्चिद्धनशाली काजी निवसति। तत्रत्यानां यवनानां सएव प्रभुः, सर्व्वे च यवनास्तन्मतानुसारिणस्तदाज्ञावहाश्च वर्त्तन्ते। अस्ति च तस्य वाल्यत एव धर्म्मभावः। सर्व्वैरेव विदितमस्ति, यद् यावनिकधर्म्मप्रचार एव तस्याभिलषितः, धर्म्मान्तरस्य प्रचारणवाधने शतसहस्र जीवहिंसनं कर्त्तुमपि नासीत् तस्य काचित् कुण्ठिता। अनेकेषामपि धर्म्मप्राणानां जातिः प्राणाश्चानेन दुष्टतमेन समुच्छेदिताः।

चैतन्यदलस्तु प्रवलतरमेव कीर्त्तनमारभत। तेषां कण्ठरवेण मृदङ्गनादेन च वाधितं यवनहृदयं। सर्व्वे यवना मिलिता वैष्णवधर्म्मप्रचारणं यवनहृदयविदारकं निवेदयितुं काजिभवनमागताः

कथितवन्तः। प्रभो! हतप्राया वयं, यवनधर्म्मोऽपि समुत्पन्नः, वैष्णवानां कीर्त्तनरवेण दारुणमृदङ्गनादेन न पारयामः रात्रावपि निद्रासुखमनुभवितुं। "निमाइ"नामा कश्चिद्ब्राह्मणतनयः, प्रियदर्शनः सर्व्वेषां समादरणीयश्चासीत्। गयातः प्रत्यागमनप्रभृति तस्य महान् चित्तविकारः, लोकविरुद्धं किमप्यनुतिष्ठति, किं प्रलपति, किञ्चा कर्त्तुमुपदिशति। संप्रति चिरप्रायेण तेनेदमनुमोदितं,तदनुमोदनेनैव सर्व्वे चलन्ति, तेनैवास्माकं दारुणा यातना। चलत्यवाधे कीर्त्तनं अस्माकं नगरवासोऽपि दुष्करो भविष्यति धर्म्मस्तु नश्यति प्रागेव। धर्म्माभिमानिना काजिना धर्म्मान्तरस्य बहुलप्रचारमाकर्णयता सगर्व्वमनुमोदितं गच्छन्तु यूयं, सबलमेव प्रतिगृहं कीर्त्तनबाधनं कर्त्तव्यं निवेदयितव्यञ्च पामराणां ममानुमोदनं, जातिं धनं प्राणांश्चाभिलषन्ति चेत् निवर्त्तन्तां ते हरिगुणकीर्त्तनात्; अन्यथा काजिना स्वयमेव विधास्यते युष्माकं समुचिता शास्तिरिति। काजिना अनुमोदिता यवना नागरिकाणां गृहं प्रविष्टाः कीर्त्तनबाधनमकुर्व्वत, काजिना स्वयमपि कस्यचित् गृहे उदपादयत कीर्त्तनबाधनं,मृदङ्गादिकं च भग्नं, कांश्चित् नागरिकान् आहूय तीव्रमभिहितवांश्च सः। "अरे पामराः! अद्यास्माभिः कृपया सर्व्व एव यूयं परित्यक्ताः,न पुनरेवं कदाचिदपि कर्त्तव्यं, आज्ञालङ्घने सर्व्वस्वमेव दण्डनीयं जातिश्च युष्माकं खण्डिता भविष्यति।" इत्यादिकमन्यच्च भीतिवचनमभिधाय स्वकीयभवनं प्रतिनिवृत्तः। प्रतिहतं कीर्त्तनं, काजिभयेन सर्व्वेषामेव वैष्णवानामकम्पतहृदयं। प्रातरेव सर्व्वे मिलिताः प्रभोश्चैतन्यस्य सकाशमागताः सर्व्वं काजिवृत्तान्तमाभूलतो निवेदितवन्तः। काजी प्रतिकूलतामाचरिष्यतीति श्रवणेन च जायते सर्व्वेषामेव भीतिसंचारः काजिविरोधे प्रबलतरा अपि भूमिपतयो भीता भवन्ति। अहो! चित्रमेतत्, समुपस्थिते तस्मिन् भयहेतौ चैतन्यचन्द्रस्य भयलेशोऽपि नावलोक्यत। तेन तु किमपि चिन्तयित्वा निर्भयमेवा-

भिहितं। "वैष्णवाः! अकिञ्चित्करमेतत्, का भीतिः" सायाह्ने प्रतिरहमेव पूर्व्ववत् कीर्त्तनं ववर्त्तयितव्यं युष्माभिः। क्रियतामिदं सर्व्वमेव सज्जितम्।

( क्रमशः। )

---

## तत्त्वप्रपञ्चः।

( पूर्व्वप्रकाशितात् परम्। )

अथ पुनरियमाशङ्का समुदेति। सर्व्वाण्येव कर्म्माणि बुद्धिधर्म्माः सुखदुःखादिकमपि बुद्धिधर्म्मः इति प्राक् पुनः पुनः प्रतिपादितं साधितञ्च, अतो यस्या एव बुद्धेः दुःखादिकं धर्म्मोऽस्ति तया सह दुःखादीनां योगोऽप्यस्ति, सुतरां तस्या एव बुद्धेः दुःखयोग-रूपबन्धोऽपि कल्पयितुं युक्तः न तु पुरुषस्य। न खलु रामे ज्वरिते श्यामः शिरःशूलेन पीड्यते, अतः किमर्थं पुरुषस्यापि कल्प्यते बन्ध इति। सत्यं नाहमेवं ब्रवीमि केवलं पुरुषस्यैव दुःखयोगरूपो बन्ध इति, किन्तु द्वयोरेव चित्तपुरुषयोः दुःखयोगरूपो बन्ध इति ब्रवीमि। अन्यथा यदि दुःखयोगरूपो बन्धः केवलं चित्तस्यैव स्यात् तदा जगति विचित्रभोगानामुपपत्तिर्न स्यात्। कथमिति? पुरुषस्य सुखदुःखयोगं विनापि सुखदुःखसाक्षात्कार एव भोग इत्येवं स्वीकारे नियमाभावात् सर्व्वदा सर्व्व एव सुखिनः सर्व्व एव दुःखिनः स्युः, किन्तु दृश्यते केचित् सुखिनः केचिद्दुःखिन इति। न चानादौ संसारे केनापि सुखहेतुकर्म्म दुःखहेतु कर्म्म वा न कृतम्, अतो भोग वैचित्र्योपपत्तये भोगनियामकतया दुःखादियोगरूपो बन्धः पुरुषेऽपि स्वीकार्य्यः। अन्यधर्म्मेणान्यत्र कार्य्यजनने सर्व्वे दुःखिनः सुखिनो वा

स्युः। परन्तु एतावानत्र विशेषः बुद्धौ सुखदुःखादियोगरूपो बन्धः समवाय सम्बन्धेन,पुरुषे तु बुद्धिवृत्तिप्रतिबिम्बरूपः संयोगसम्बन्धेन। यद्वा भोग्यतारूपस्वत्वसम्बन्धो धनादीनामिव इति प्रागेव प्रतिपादितम्। प्रतिबिम्बश्च स्वस्वोपाधिबुद्धिवृत्तेरेव घटते इति न सर्व्वपुंसा सर्व्वदुःखयोगः सर्व्वसुखयोगो वा इत्यभिप्रायः। एतदेव सूत्रकारोऽप्याह—

"विचित्रभोगानुपपत्तिरन्यधर्म्मत्वे।१॥ १७॥" इति।

यत्तु बुद्धेरेव बन्धमोक्षौ न पुरुषस्येति श्रुतिस्मृतिषु गीयते तथाहि सांख्यकारिका।६०।

"तस्मान्न बध्यतेऽसौ न मुच्यते नापि संसरति कश्चित्।
संसरति बध्यते मुच्यते च नानाश्रया प्रकृतिः॥"६२॥ इति।

तद्बिम्बरूपदुःखयोगरूपं पारमार्थिकं बन्धमेवाङ्गीकृत्य बोध्यम्। पुरुषे तु प्रतिबिम्बरूपोऽपारमार्थिको बन्ध इति।

अथ अन्यधर्म्मेण अनत्र कार्य्यजनने प्रकृतिरेव नियामिका भविष्यति,अतो यं पुरुषं प्रति सा प्रवर्त्तते तस्यैव बन्धो भविष्यति नान्यस्य पुरुषस्य इति नोक्त दोषः। सत्यम् प्रकृतिरेव पुरुषभोगनियामिका, किन्तु सा खलु सर्व्वव्यापिनी, पुरुषा अपि सर्व्वव्यापकाः अतस्तस्याः पुंभिः सदा सम्बन्धात् सदा बन्धापत्त्या च अन्ततः संयोगविशेष परतन्त्रैव प्रकृतिः तत्तत् संयोगविशेषमनुसृत्य पुमांसं बध्नाति इति कल्पनीयम्, न तु स्वतन्त्रा। अतः प्रकृति निबन्धनोऽपि पुरुषस्य बन्ध इति वक्तुं न युज्यते। एतदेव सूत्रकारोऽप्याह—

"प्रकृतिनिबन्धना चेत्तस्या अपि पारतन्त्र्यम्॥" १।१८॥ इति।

अत इदमेव सिद्धान्तितम् जन्मनामकः स्वस्वबुद्धिभावापन्न प्रकृतेः संयोगविशेषरूपो य उपाधिः स एव पुरुषस्य बन्ध इति। पुष्पसंयोगात् काचमालिन्यवत्। प्रकृतियोगं विनातु पुरुषस्य बन्धो नास्त्येव एतदेव सूत्रकारोऽप्याह—

"न नित्यशुद्धबुद्धमुक्तस्वभावस्य तद्योगस्तद्योगादृते।" १ ॥ १९ ॥ इति।

तथा प्रकृतिसंयोगनिवृत्तिरेव साक्षात् त्रिविधदुःख निवृत्त्युपायः तथाच स्मृतिः।

"यथा ज्वलद्गृहाश्लिष्ट गृहं विच्छिद्य रक्ष्यते।
तथा सदोषप्रकृतिविच्छिन्नोऽयं न शोचति॥"—

स्वभाव शुद्धस्यापि पुंसः स्फटिकस्य जवायोगाद्रक्तिमवत् प्रकृति-संयोगोपाधिं विना दुःखयोगो नैव सम्भवति यदाह सौरपुराणे।

"यथाहि केवलो रक्तः स्फटिको लक्ष्यते जनैः।
रञ्जकाद्युपधानेन तद्वत् परमपूरुषः॥"

पुरुषस्तु नित्यशुद्धः सकलकाले पापपुण्यशून्यः। नित्यबुद्धः सकलकालेऽविलुप्त चिद्रूपः। नित्यमुक्तः सकलकाले पारमार्थिक दुःखायुक्तः। तस्य नित्यशुद्धत्वादौ च श्रुतिः।

"अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरिति॥"

सांख्यकारिका च।

"तस्मात्तत्संयोगादचेतनं चेतनावदिव लिङ्गम्।
गुणकर्त्तृत्वे च तथा कर्त्तेव भवत्युदासीनः॥" २०॥

पातञ्जलेऽप्युक्तम्।

"द्रष्टृदृश्ययोः संयोगो हेयहेतुः॥" २॥१७॥

गीतायामपि।

"पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्॥"

श्रुतावपि।

"आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।"

अथाधुना पुनरपरमप्यादृशी आशङ्का समुत्थाप्यते, ननु पूर्व्वमुक्तं तस्यासङ्गत्वात् अवस्थातोऽपि वन्धो नास्तीति, अधुना पुनर्व्वन्धानुरोधात् बुद्धिरूपेण परिणतायाः प्रकृतेः संयोगेऽङ्गीक्रियमाणे कथं तस्यासङ्गित्वं कथं वा अपरिणामित्वञ्च समुपपद्यते? सत्यं नहि संयोगमात्रं सङ्गः किन्तु येन संयोगेन परिणामः स्यात् स एव

संयोगः सङ्गशब्दार्थः इत्येव वक्तव्यत्वात्। एवंविधे संगे न परिणामः सम्भवति,किन्तु सामान्यगुणातिरिक्तो यो धर्म्मविशेषः तस्यैवोत्पत्त्या परिणामव्यवहारात्, अन्यथा सामान्यगुणयोगादपि यदि परिणामः स्वीक्रियेत, तदा कूटस्थस्य तस्य सर्व्वगतत्वापरिहार्य्यत्वात् परिणामापत्तेः विभुत्वानुपपत्तेश्च।

पुनरपरान्यविधाशङ्का! ननु नित्ययोः पुंप्रकृत्योः महदादिहेतुरनित्यः संयोगः कथमुपपद्यते। सत्यं त्रिविधगुणवती प्रकृतिः पुनः द्विविधा, यथाहि परिच्छिन्नत्रिविधगुणवती, अपरिच्छिन्नत्रिविधगुणवती च, एवञ्चेत् परिच्छिन्नत्रिगुणवत्याः प्रकृतेः पुरुषेण संयोगोऽपि परिच्छिन्न इति अनित्यः संयोगो महदादिहेतुरिति। एवं अपरिच्छिन्नत्रिगुणवत्याः प्रकृतेः पुरुषेणसंयोगः सामान्याख्योऽपरिच्छिन्नो नित्य इति तदैवासौ कूटस्थो विभुरिति कथ्यते। तस्मात् संयोगविशेष एवात्र बन्धाख्यदुःखहेतुरिति सूत्रकाराभिप्रेत इति सर्व्वमनवद्यम्।

(क्रमशः।)

---

सद्वराजविभागस्य—

## विश्वविद्यालय प्रश्नोत्तरादर्शाः!

(पूर्व्वप्रकाशितात् परम्।)

---

*VI. Question.*

*(a)* Give the nominative of मित्र (friend) and दार (wife); nominative plural of दुर and अहन्; the accusative plural of पथिन् and सखि; the genitive singular of भूपति and महा + राजन् and the vocative singular of उशनस्।

(b) (1) what part of the verb is each of the following ; 1. अन्वयुः 2. रच्येथाः 3. प्रशाधि 4. आत्थ।

(2) Give the third person singular perfect ( लिट् ) of स्तु ( to praise ) सू ( to bring forth ) ; the first person singular aorist ( लुङ् ) of सृज् and दृश् ; the first person plural second future ( लृट् ) of त्यज् and इ ( to go ) ; the first person singular imperfect ( लङ् ) of रुध् ( to obstruct ) and the third person singular imperfect of दुह्।

(c) Combine the following according to the rules of Sandhi.

1. अवसन्+तत्र, 2. एषः+रामः, 3. हृत्+शक्ति, 4. अगमत्+लाभं, 5. वसन्+चक्री, 6. हरी+एतौ।

*Answer.*

| | | | | |
|---|---|---|---|---|
| (a) मित्रशब्दस्य एकक्रिय वाचकस्य | प्रथमायाः | एकवचने मित्रं | द्विवचने मित्रे | वहुवचने मित्राणि |
| दार शब्दस्य नित्यवहुवचनान्तस्य | „ | | | दाराः |
| दुग्र शब्दस्य | „ | | | द्यवः |
| अहन् | | | | अहानि |
| पथिन् | द्वितीयायाः | | | पथः |
| सखि | | | | सखीन् |
| भूपति | षष्ठ्याः | | | भूपतेः |
| महाराज | | | | महाराजस्य |
| उशनस् | सम्बोधने | | | उशन, उशनन्, उशनः |

(b) (1)*

1. अत्र या धातुः अदादि गणीयः परस्मैपदी च।

2. रक्ष धातुः भ्वादिगणीयः परस्मैपदी च, अत्र तु आत्मनेपद प्रयोगः। स च चिन्त्यः।

3. अत्र शास् धातुः अदादिगणीयः परस्मैपदी च।

4. ब्रू धातुः अदादिगणीयः उभयपदी च, अत्र तु परस्मैपदीय प्रयोगः।

(2) स्तु धातोः लिटि प्रथमपुरुषैकवचने तुष्टाव, तुष्टुवे।

सू " सुषुवे।

सृज् " लुङि उत्तम असाक्षिषम्, असृषि।

दृश् " अद्राक्षिषम्, अदर्शम्।

त्यज् " लृटि उत्तमपुरुषबहुवचने त्यक्ष्यामः।

इ " एष्यामः।

रुध् " लङि प्रथमपुरुषैकवचने अरुणत् अरुध।

दुह् " " अधोक्, अदुग्ध।

(c) 1. अवसंस्तच इत्येव स्यात्, नोऽप्रशामम्छते इति वोपदेवः।

2. एष राम हस्येतत्तदोनञकः सेर्लोप " "

3. हृच्छक्तिः स्तुश्चुभिः श्चुशात् " "

4. अगमल्लाभं लेलस्तोः " "

5. वसंश्चक्री नोऽप्रशामम्छते " "

6. अत्र सन्धिः न स्यात् "हरी" इत्यस्य द्विवचनत्वात्। वद्दमीये इति वोपदेवः।

श्रीशानशरण चक्रवर्त्तिनः।

---

* प्रश्नस्यास्य प्रागुक्त आकारः रेभारेण्ड के, एम्, वाणुर्जी नाम कलिकाता विश्वविद्यालयस्य भूतपूर्व्वेण साहित्यपरीक्षकेण किल प्रथमतः प्रवर्त्तितः। तन्मते Verb इति शब्द समस्त क्रिया समूहस्य वाचकः, स च गणभेदाद्दशधा पदभेदाद्द्विधा च भिन्नः। अतएव क्रियायाः कोयमंश इत्यर्थकस्य प्रश्नस्यास्य उल्लिखितरूपमेवोत्तरं भवितव्यम्।

श्रीश्रीदुर्गा

शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।

मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

---

## भासावतरणिका ।

निरन्तरं नीरधरा हि नीरवं गिरन्ति नीरं तरुराजिमूर्द्धनि ।

चिरं परं तद्विरहं सुदुर्ज्जरं प्रदातुमेवातिसुखं व्यथान्तकम् ॥

---

## श्रीलक्ष्मीः श्रीसरस्वती ।

"लक्ष्मीस्त्वं सर्वभूतानां वरदासि हरिप्रिये ! ।

या गतिस्त्वत्प्रपन्नानां सा मे भवतु सर्वदा ॥ ८५ ॥"

"जय जय देवि ! चराचरसारे ! कुचयुगशोभितमुक्ताहारे ! ।

वीणारञ्जित-पुस्तकहस्ते ! भगवति ! भारति ! देवि ! नमस्ते ॥ ८६ ॥"

"आलस्यं स्थिरतामुपैति भजते चाञ्चल्यमुद्योगिता

मूकत्वं मृदुभाषितां वितनुते वाचालता वक्तृताम् ।

कार्य्याकार्य्यविचारमूढ़धिषणा गच्छन्त्युदारात्मताम्

मातर्लक्ष्मि ! तवैव दृष्टिवशतो दोषा गुणाः स्युर्नृणाम् ॥ ८७ ॥"

"अपूर्व्वको हि भाण्डारो दृश्यते तव भारति ! ।

अव्यये च व्ययं याति व्यये याति च विस्तरम् ॥ ८८ ॥"



## श्रीश्रीसरस्वती ।

तरुण शकलमिन्दोर्बिभ्रती शुभ्रकान्ती:
कुचभरनमिताङ्गी सन्निसन्ना सिताब्जे ।
निजकरकमलोद्यल्लेखनी पुस्तक श्री:
सकलविभवसिद्ध्यै पातु वाग्देवता न: ॥

## श्रीश्रीलक्ष्मी: ।

पाशाक्षमालिकाम्भोजसृणिभिर्याम्यसौम्ययो: ।
पद्मासनस्थां ध्यायेच्च श्रियं त्रैलोक्य मातरम् ॥
गौरवर्णां सुरूपाञ्च नानालङ्कारभूषिताम् ।
रौक्मपद्मव्यग्रकरां वरदां दक्षिणेन तु ॥

भगवान् श्रीनारायणः त्रिलोकीं पालयति। स खलु श्रीगोलोकनाथः यद्यपि सर्व्वशक्तिमान् तथापि तस्य पालनीशक्तिरेव प्रसिद्धा, तयैव शक्त्या जगन्ति त्रीणि परिपालयति। सा च शक्तिः द्विविधा धनशक्तिर्ज्ञानशक्तिश्च ।

धनशक्तिरेव श्रीः लक्ष्मीः कमला पद्मा हरिप्रिया इत्यादि नाम्ना समाम्नायते। ज्ञानशक्तिस्तु गीः वाक् वाणी सरस्वती इत्यादि नाम्ना भाष्यते ।

श्रीलक्ष्मीस्तु हिरण्यरजतादिषु धातुषु मणिरत्नभूमिकपर्दिकादिषु धान्यगोधूमादिषु शस्येषु जड़वस्तुषु वणिक्कृषकादिषु च जड़ज्ञानेषु अधिष्ठात्री देवी वर्त्तते। इति धनमञ्जूषां धान्यगुच्छञ्च सा दधाति, एवं चञ्चला च सा न कुत्रापि चिरायैकत्र स्थिरतां भजते। न वा ब्राह्मणोऽयं जातिश्रेष्ठ इति तमनुगृह्णाति। न वा चाण्डालोऽयं निकृष्ट इति तं न स्पृशति, किमधिकं सगुणं निर्गुणं वा पुरुषं नैव लक्ष्मीर्व्विचारयति।

श्रीसरस्वती तु भगवती नारायणगेहिनी ज्ञानमयी ज्ञानशक्तिः केवलं ज्ञानिषु तिष्ठति। इयं ज्ञानशक्तिरपि द्विविधा, शिल्पविद्या शास्त्रविद्या च, शिल्पविद्याः कलानामकचतुःषष्टीप्रकारा गीतनृत्यवादित्रादिरूपाः। शास्त्रविद्याः चतुर्व्वेदशिक्षाकल्पादिरूपा अष्टादशविधाः चतुर्दशविधा वा। (१) शिल्पविद्यासु वीणायन्त्रमेव गरीयः श्रुतिमधुरं मनःप्रीणनं मोक्षसाधनञ्च (२) शास्त्रविद्यासु

---

(१) अङ्गानि वेदाश्चत्वारो मीमांसान्याय विस्तरः ।
पुराणं धर्म्मशास्त्रञ्च विद्या ह्येताश्चतुर्द्दश ॥
आयुर्वेदो धनुर्वेदो गान्धर्व्वश्चैव ते त्रयः ।
अर्थशास्त्रं चतुर्थन्तु विद्या ह्यष्टादशैव ताः ॥ इति विष्णुपुराणे ।३।६।२८-२९।

(२) "वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं नियच्छति ॥" याज्ञवल्क्यसंहिता प्रायश्चित्ते ॥११५॥

पुस्तकमेव प्रधानं साधनं लेखनी च तत् सहकारिणी इति सरस्वती वीणां पुस्तकं लेखनीञ्च गृह्णाति। गुणिषु ज्ञानिश्रेष्ठेषु पण्डितेषु च सरस्वती वासमङ्गीकरोति नियतम्। पण्डिताश्च सरस्वती पुत्रा इति प्रसिद्धम्।

वर्णानां पीत एव वर्णो नयनमनोहरः स्वाधिष्ठित कनकसमान इति हिरण्मयवपुषः श्रीविष्णोः शक्तित्वाच्च श्रीलक्ष्मीः समाश्रयति विष्णोरङ्गकान्तिं गलत्कनकप्रभामिति।

वर्णानां शुक्ल एव वर्णानन्यानुपकरोति जगत्प्रकाशयति व्याकरणादिसंस्कारेण सुसंस्कृतं परिशुद्धं निर्दुष्टं विशदमेव वाक्यं सा अधितिष्ठति इति सरस्वती वाङ्मयी शुक्ला।

लक्ष्मीस्त्रिजगत्सु परमा सुन्दरीति रूपपक्षपातित्वात् सुन्दरं शोभमानमेव समाश्रयति वस्तु इति विशालं कमनीयं विष्णोर्वक्षः-स्थलं, पद्मं, शङ्खं, चक्रं, चन्द्रं, वस्त्रादिकञ्चाधिवसति।

सरस्वती तु वचनव्यापारः जिह्वाया एव कार्य्यः इति विष्णो-र्वदनवासिनी।

लक्ष्मीस्तु गृहकर्म्मादिकं सेवाञ्चामायया विधत्ते विष्णोः इति विष्णुप्रिया। अधुना तादृशी योषिदपि लोकैरुच्यते लक्ष्मीरिति।

या हि सततं ज्ञानमेवानुदिनमनुशीलयति प्रियञ्च मन्यते, समुद्भावने शिल्पादीनां सततं ध्यानं वितनोति, तस्या गृहादि-विषयकृत्येषु मनो न रमते नावसरञ्च लभते, सुतरां सरस्वत्यपि लक्ष्मीवत् सेवां विधातुं विष्णोर्न शक्नोति इति विष्णुस्तां मनाक्-प्रियतां दर्शयन् मुखे वासयति। (३)

---

(३) अधुनापि तथैवोपलभ्यते इंराजराजरीत्या या नारी शिक्षति लेखनं पठनं सीमतन्तुवापनादिकञ्च शिल्पं, सा गृहकृत्यं पतिसेवाञ्च न स्मरत्यपि। अतएव मन्ये प्राचीनाभिः स्त्रीभिः नीतिं विना केवलं स्त्रीनां पठनादिकं निषिद्धम्।

लक्ष्मीस्तु विष्णुपत्नी अनन्यमनसा विदधाति गृहकृत्यं पाकादिकम्, इति गाम्भीर्य्यं मौनञ्च समाश्रयति। एवं यं पुरुषं समनुगृह्णाति तमपि वचने अपटुं सौभाग्यलक्षणं मौनस्वभावञ्च विदधाति ।

सरस्वती तु वीणादिवादने नर्त्तनादौ वेदादिगाने च उदारा मुदारा तारा, उदात्तः अनुदात्तः समाहारः इत्यादिभिः शब्दैः सदा रमते इति सा स्वयं मुखरा, एवं वागधिष्ठात्री वर्णमयी मातृका सरस्वती यं कञ्चित् पुरुषमनुगृह्णाति तमपि गीतं गापयति शास्त्राणि वाचयति प्रचारयति अध्यापयति इति तं पुरुषमपि मुखरयति ।

जगत्पालने विष्णुः द्वे एव शक्ती अपेक्षते, द्वाभ्यामेव शक्तिभ्यां विष्णुना जगत्पाल्यते। न पुनरेकया शक्त्या विना अन्यया जगद्रक्षणं शक्यं स्यात्। तथाहि विचार्य्यतां तावत् मनसि—

ज्ञातं मया अनाहारेण शीर्णकायानां दीनान्धखञ्जानां क्षुधा दुःखं, किन्तु नास्ति मे गृहे तण्डुलमुष्टिरपि, सुतरां तया ज्ञानशक्त्या नैव सम्भवेत् जगदुपकारः। अतो धनशक्तिरावश्यकीया ।

एवं सन्ति खाद्यद्रव्याणि विविधानि मम गेहे किन्तु क्षुत्क्षामाणां बुभुक्षां दुःखञ्च बोद्धुं नास्ति मे ज्ञानशक्तिः, तदा सत्स्वपि खाद्येषु नार्त्तपालनं स्यात् इति ज्ञानशक्तिरपेक्षणीया ।

यो हि धनशक्तिमादरति स ज्ञानशक्त्यै न प्रभवति यथा वणिक् कृषकश्च। यश्च ज्ञानशक्त्यै यतते स धनी भवितुं नैव शक्नोति यथा ऋषयः पण्डिताः शिल्पिनश्च। किन्तु तया कथञ्चिज्जीवन्ति ।

इति धनज्ञानशक्त्योर्विरुद्धत्वात् एकपतिकत्वाच्च लक्ष्मीसरस्वत्योः सपत्नीभावः साहजिकः ।

( क्रमशः । )

---

# ताम्बूलम्।

चतुर्थवीटिका।

लौकिकीं नीतिमाश्रित्य वाल्ये वाचनिकश्रुतिः।
स्मृत्युक्तां शिक्षितां नीतिं वक्ष्ये शृणुत भक्तितः॥ १॥
पत्येकात्मतया साध्वी रुग्णे रुग्णा च भर्त्तरि।
प्रीते प्रीता क्रुधि त्रस्ता आदर्शे वा भवज्जने॥ २॥
शिक्षाभेदेन गुरवः सेव्यभेदात्तथेश्वराः।
बहवः स्युर्गुरुःस्त्रीणामेकस्तु पतिरीश्वरः॥ ३॥
व्रतं देवार्च्चनं शौचं सत्यं लोकानुरञ्जनम्।
पतिसेवाविहीनाया यत्नतस्तुषपेषणम्॥ ४॥
भर्त्तुरुच्छिष्टभोक्त्री या पतिपादाम्बुपायिनी।
पतिं सुष्वापयति च तस्या विभ्यति यामिकाः॥ ५॥
दुष्टभार्य्या विषं वह्निः शस्त्रमस्त्रं तथा फणी।
परप्रयुक्ता घ्नन्त्येव स्वामिनं न स्मरत्यपि॥ ६॥
सा स्त्री श्रीर्या प्रियं वक्ती स पुत्रो धार्म्मिकः सुधीः।
तन्मित्रं स्वयमुद्युक्तः स देशोऽक्लिष्टवृत्तिकः॥ ७॥
कृच्छ्रेण तपसा पुंभिः लभ्यते वा न लभ्यते।
नेतुं पतिव्रतां व्यग्रः प्रत्युद्व्रजति वासवः॥ ८॥
पतिर्नारायणो देवः गतिः पुण्यं व्रतं तथा।
तस्मात् सर्व्वं परित्यज्य पतिमेकं भजेत् सती॥ ९॥
पुत्रसूः पाकनिपुणा पूता चैव पतिव्रता।
पेशला पञ्चपैर्नारी भूमावाप्नोति गौरवम्॥ १०॥
बाला वा युवती वापि वृद्धा वा कुलकामिनी।
स्वातन्त्र्यं नावलम्बेत कुलद्वयहितैषिणी॥ ११॥

पितुः पत्युश्च सूनोश्च बाल्ययौवनवार्द्धके ।
वशे तिष्ठेत् सदा नारी कुलद्वयहितैषिणी ॥ १२ ॥
पित्रा भर्त्रा सुतैर्व्वापि वियुक्ता शुचिमत्यपि ।
प्रवसेन्न दिनादूर्द्धं कुलद्वयहितैषिणी ॥ १३ ॥
सदा प्रसन्नहृदया गृहकृत्ये पटीयसी ।
सुसंस्कृतोपकरणा स्यादमुक्तकरा व्यये ॥ १४ ॥
निर्गुणो वा कुरूपो वा दुःशीलो वा भवेत्पतिः ।
सततं देववत्सेव्यः स्त्रिया साधुचरित्रया ॥ १५ ॥
गृहकृत्येऽन्नपक्त्याञ्च व्यासक्ता सततं भवेत् ।
चिन्तयन्ती वृथा नारी क्षणा द्विक्रियते यतः ॥ १६ ॥
असत्या सह संलापः अटनं दृश्यदृष्टये ।
असन्नीतिश्रुतिश्चैव लयं विकुरुते स्त्रियम् ॥ १७ ॥
वस्त्रान्नभूषणैर्यादृक् सन्तोषो नोपपद्यते ।
प्रेम्णा कोमलवाक्यैश्च सन्तोषोऽभून्महान् स्त्रियाः ॥ १८ ॥
देवपित्रतिथीनाञ्च सम्यगर्च्चन मेकया ।
अनुष्ठातुं न पुरुषैः शक्यते भार्य्यया विना ॥ १९ ॥
अर्ज्जितञ्च धनं पुंभिः वानीतञ्च स्वकं गृहम् ।
विनश्यति विना भार्य्यां कुभार्य्यासंश्रितञ्च वा ॥ २० ॥
सततं देहसंस्कारं समाजोत्सवदर्शनम् ।
हावभावगतिं नारी विलासित्वञ्च वर्ज्जयेत् ॥ २१ ॥
सा भार्य्या या गृहे दक्षा सा भार्य्या या मृदुस्वरा ।
सा भार्य्या या पतिप्रीता मूका च कलहे सदा ॥ २२ ॥
अप्राज्ञा गृहकृत्येषु प्राज्ञा कलहभोजने ।
उत्तरोत्तरवादा या यमदूती प्रतिष्ठिता ॥ २३ ॥
पुण्यद्वारार्गला नारी स्वर्गमार्गकपाटिका ।
नाटिका नवभावानां मायानां वज्रपेटिका ॥ २४ ॥

पूर्णा पुत्त्रैर्धनै रूपैः सम्पद्भिर्यौवनैश्च या।
वञ्चिता चेत्पतिप्रेम्णा विफलं बिभृयाद्वपुः॥ २५॥
मुखदुष्टा योनिदुष्टा रूपगर्व्वेण या पतिम्।
द्वेष्टि विष्णुसमं तस्याः कुम्भीपाके गतिर्ध्रुवा॥ २६॥
पत्यौ प्रसुप्ते सुप्ता च प्रबुद्धातिप्रगे सती।
गेहं मृजन्ती लिम्पन्ती सगोमयमृदम्बुभिः॥ २७॥
गृहकृत्यं विनिष्पाद्य सुस्नाता बिभृयाच्छुचि।
वस्त्रं देवं द्विजं नत्वा पूजयेद्गृहदेवताम्॥ २८॥

( क्रमशः। )

---

## अदूरदर्शिता।

"सहसा विदधीत न क्रियामविवेकः परमापदाम्पदम्।"

अस्ति कस्मिंश्चित् प्रदेशे काचित् महती नगरी। तदन्तर्गते कस्मिंश्चित् गर्त्ते वर्व्वरको नाम भेकराजः प्रतिवसतिस्म। बहुदिनावधि मेघे अदृष्टे तस्य ज्ञातयो मण्डूका जलं विना जीवनहीना इव आसन्। आत्मभाग्यं तिरस्कुर्व्वतां निरन्तरं सुदीर्घं रुदताञ्च तेषामार्त्तनादमाकर्ण्य विषादितो वर्व्वरक उक्तवान् अहो! जीवति मयि वर्व्वरके मदधीनाः परिजना आयुषि विद्यमानेऽपि जलेन विना मृतप्राया भवन्ति। इह गर्त्ते जलं गतप्रायं दृश्यते, मेघो न च वर्षिष्यतीति मन्ये। इतः पूर्वस्मिन् वर्षे मेघे विपुलं वर्षति इमे मे बान्धवाः कतिकति तनयान् सुषुविरे। साम्प्रतन्तु दूरे आस्तां तावत् तनयप्रसूतिः, आत्मानमपि रक्षितुं न पारयन्ति। किं बहुना, क्रमेण वंशहीना इव वयं भवामः। असह्या सर्व्वथा मयेयं वेदना। न च शक्नोमि ज्ञातिदुःखं सोढुम्, किं

करोमि ? क्व गच्छामि ? का गतिः ? हा हतभाग्य ! कथमस्मादृशानां मण्डूकानां विनाशार्थं त्वां ससर्ज्ज विधाता । हा हतविधे ! मादृशान् साधुशीलान् क्षुद्रजीविनो नाशयित्वा अपि नाम सुखी भवसि ? उत स्वदयालुतामियतीं प्रचारयसि जगति ? भगवन् देवराज ! आदिशतु भवान् कृपया मेघम्, इहापि गर्त्ते जलं वर्षितुमिति । अपि भवान् तत्रापि बद्धमुष्टिरसि ? पाषण्ड ! साम्प्रतमनुभव आश्रितानामपालनजं फलमिति भूयो भूय उक्त्वा, नाहमिन्द्रं तृणं मन्ये विग्रह्य तं पराजित्य इन्द्रत्वं लभमानः यथेष्टवर्षेण ज्ञातीनां दुःखमपहरिष्यामि । कः सहते इदृशमनुचितं परपीड़नं सति शक्तिसमूहे । मया प्रतिज्ञातम् ।

"शृणु कान्ते ! च मद्वाक्यं जलं नास्ति महीतले ।
ज्ञातिदुःखं न पश्यामि हनिष्यामि पुरन्दरम् ॥"

अथ तस्य अविवेकिनो वर्व्वरस्य स्वविनाशकारणं तद्वचः श्रुत्वा तत्कान्ता मण्डूकी ब्रूते अयि नाथ ! इन्द्रेण योद्धुं भवतो महती वर्त्तते शक्तिः । भवति रणभूमिं गते को नाम समरः ! भवन्नामश्रवणमात्रेणैव जीवितुकामो देवराजः पलायिष्यते । किन्तु—

"धीर ! कान्त ! जहि क्रोधं कीर्त्ति शक्तोऽसि युद्धवान् ।
दिवा चेद्‌ भक्षयेत् काकी रात्रौ च पवनाशनः ॥"

अतो वयं सर्वे समस्वरेण देवराजमुपतिष्ठामहे । तत एव भक्तवत्सलो भगवान् पुरन्दरः परदुःखकातरः सन् अस्माकं दुःखमिदं निराकरिष्यति, अतो ममैवमनुरोधं प्रतिपालयस्व ।

अथ तद्वाक्यं अनुचितमिवमन्यमानः कोपज्वलितः स तां भर्त्सयन्नाह हा अल्पमतिके ! क्षीणजीविते ! किमिदं कथयसि, मा मनसि कुरु मां कापुरुषम् । का शक्तिः काकानां सर्पाणाञ्च मां भक्षयितुम् । विशेषतो मेघे अवृष्टे, तेषामपि महती क्षीं शपरम्परा

वर्त्तते। दिवाकरस्य प्रखरकरेण उत्तप्तदेहः पिपासाकुलितो वायसो भुजङ्गश्च जलं पातुं न शक्नोति, न वा रजसि तपनतप्ते दिवा चरितुमपि पारयति। वरं तेऽपि इन्द्रेण सह योद्धुकामा मम सहायका भविष्यन्ति। अलम् अमङ्गलशङ्कया। एवं सरलां स्वभार्य्यां प्रबोध्य आसन्नमृत्युना यथा औषधं न पीयते न श्रूयते च सुहृद्वचः, केवलं मृत्योरनुकूलमनुष्ठीयते तथा प्रियाया हितकरमपि स्वजीवनहेतुमपि तत् निषेधवाक्यम् अविगणय्य स मण्डूकः कदाचित् इन्द्रं पराजेतुं गतः। किन्तु अनुगच्छन्तं कृतान्तमिव द्वितीयं सर्पं न दृष्टवान्। सर्पं भक्षितुमना एको मयूरश्च अनुससारः, न च अनुष्ठितशरसन्धानमनुगामिनं किरातमेकं स ज्ञातवान्। नरमांसलोलुपः कश्चित् व्याघ्रोऽपि तं हन्तुं पश्चात् पश्चात् जगाम।

ततो यावत् मण्डूकः पश्चात् पश्यति तावद्दृष्टवान् यमकिङ्करमिव भक्षितुमागच्छन्तं भीषणं सर्पमेकम्। दृष्ट्वा च अवहेलितं प्रियावचः सास्मर्य्यमानः निर्बुद्धिताया एतदेव फलं जिज्ञायमानः आसन्नमृत्युं निश्चीयमानश्च भीत भीत इव चकित चकित इव, विपदि धैर्य्यमेव श्रेयः परामृशन् उक्तवान् सखे! अपि स्वागतं ते? अकृतवर्षणत्वात् धरावासिनामस्माकं परमवैरिणः इन्द्रस्य वधाय आगच्छ मम सहायको भव इति वदन् स तेन सर्पेण खादितः। ततः अर्द्धगिलितभेकं तं मयूरो जघास। मयूरश्च व्याधेनानुविद्धः। तञ्च व्याधं मांसाशी शार्दूलो व्यापादयामास। सहसा आक्रमणेन भाङ्कारितेन व्याधहस्तगतेन धनुषा विद्धः स शार्दूलश्च ममार।

अहो विषयवासनापरिणामः। एते हि केवलं परविनाशमनुतिष्ठन्तः सुखेन हन्तुं परस्परं गताः केऽपि तावत् पश्यन्ति नात्मक्षयम्।

सुविविच्य कृते कार्य्ये दैवायत्तं फलं भवेत् ।
आत्मनाशः क्रियाधीनो न भवेत् न भवेत् कदा ॥

श्रीद्वारिकानाथ शर्म्मा काव्यतीर्थः,
प्रधान पण्डित मालखानगर
इं स्कुल ढाका ।

---

# धर्म्मविवेकः ।

( पूर्व्वप्रकाशितात् परम् । )

शिव । वत्स ! वामापद ! श्रुतं स्वधर्म्मस्य यावद्बलम् । तत्रापि चेन्नाति तृप्यस्व तदा धर्म्मवत्वविषये मुनीनां मतमाकर्णय । तदपि महामहोपाध्यायेन हेमाद्रिणा स्वकृते चतुर्व्वर्गचिन्तामणौ व्रतखण्डे प्रथमाध्याये सङ्कलितम् ।

वामा । गुरो ! पण्डितः स हेमाद्रिः कदा जातवान् ? प्राचीनोऽसौ अर्व्वाचीनो वा ?

शिव । ( सहास्यम् ) नासौ प्राचीनतमः न वा अतितरामर्व्वाचीनश्च । परन्तु यदा देवगिरिप्रदेशे यदुवंशीयश्चक्रवर्त्ती राजाधिराजः श्रीश्रीमहादेवो भारतराज्यमशासत् तदा तस्य राज्ञः स हेमाद्रिः प्राड्विवाकपदमध्यासीनः । व्याससमः पण्डितो वोपदेवश्च तस्यैव राज्ञः सभासदासीत् । एतस्मादनुमिनुमः हेमाद्रिः प्रायः किञ्चिदधिकैकादशशकाब्दे समजनिष्ट । एतेन षट्शतवत्सरादूर्द्ध्वं तस्य स्थितिकालः । विशेषतः श्रीकमलाकरभट्टः निर्णयसिन्धौ हेमाद्रिवाक्यमपि प्रमाणीकृतम् । वत्स ! वामापद ! यथा तथास्तु हेमाद्रिः किन्तु तस्यापाण्डित्येऽमानुषे नास्तिकोऽपि विकल्पलेशोऽपि । तस्यालौकिकपाण्डित्ये व्रतखण्ड दानखण्ड कालखण्ड

आद्यखण्ड परिशेषखण्डसमाख्यैः अतीवस्थूलतरग्रन्थैः साश्चर्य्यं प्रदास्यते साह्यम्। तत्सन्देहेनालम्। परं किञ्चित् पृच्छ्यते— कथेयं कथमुत्थाप्यते "प्राचीनोऽसौ अर्व्वाचीनो वा" इति ?।

वामा। गुरो! चम्यतामविनयः आधुनिकास्तु नार्हन्ति भक्तिं पण्डिताः अतो न तेषां निबन्धोऽपि भवति श्रद्धेयः।

शिव। अथ किम्। श्रूयते इदानीम् असत्यपि ज्ञाने केवलं वृत्तये पण्डितवेशं विदधत्यनेके अनन्यगतिकाः। येऽपि विद्वांसस्तेषां केचित् धनलोभेन शास्त्रार्थमपार्थयन्ति, कृत्वा चासत्कर्म्म पुनरपलपन्ति ते खलु कापुरुषाः सत्यमेवाश्रद्धेयाः।

वामा। गुरो! धर्म्मशक्तिविषये वक्तुमुपक्रान्तं मुनिजनमतमन्तरा मया हेमाद्रिजन्मकालं जिज्ञासुना प्रतिबद्धमधुना पुनर्वक्तुमनुजानीहि।

शिव। श्रूयतां धर्म्मबलम्। यथा चतुर्व्वर्गचिन्तामणौ व्रतखण्डे। १माध्याये। भगवती श्रुतिः।

"धर्म्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्म्मिष्ठः प्रजा उपसर्पन्ति धर्म्मेण पापमपनुदति धर्म्मे सर्व्वं प्रतिष्ठितम् तस्माद्धर्म्मं परं वदन्तीति।"

### चतुर्वर्गचिन्तामणौ भारते।

"विद्यावित्तं वपुः सौर्य्यं कुले जन्म विरोगिता।
संसारोच्छित्तिहेतुश्च धर्म्मादेव प्रकीर्त्तितः।
शब्दस्पर्शे च रूपे च रसे गन्धे च भारत।
प्रभुत्वं लभते जन्तुर्धर्म्मादेतत् फलं विदुः॥" तथा-
अर्थसिद्धिं परामिच्छन् धर्म्ममेवादितश्चरेत्।
न हि धर्म्मादपैत्यर्थः स्वर्गलोकादिवामृतम्॥
धर्म्मं चिन्तयमानोऽपि यदि प्राणैर्विमुच्यते।
ततः स्वर्गमवाप्नोति धर्म्मस्यैतत् फलं विदुः॥
यथा धर्म्मेण ते सत्या येऽधर्म्मेण धिगस्तुतान्।
धर्म्मं हि श्राम्यते लोके न जात्यज्ञनकाङ्क्षया॥

ऊर्द्ध्वं बाहुर्विरौम्येष न च कश्चिच्छृणोति मे ।
धर्म्मादर्थश्च कामश्च स किमर्थं न सेव्यते ॥
उत्सवादुत्सवं यान्ति स्वर्गात् स्वर्गं सुखात् सुखम् ।
श्रद्दधानाश्च शान्ताश्च धनाढ्याः शुभकारिणः ॥
धर्म्मः प्रज्ञां वर्द्धयति क्रियमाणः पुनः पुनः ।
वृद्धप्रज्ञास्ततो नित्यं पुण्यमारभते नरः ॥"
"बाल एव चरेद्धर्म्ममनित्यं जीवितं यतः ।
फलानामिव पक्वानां शश्वत् पतनतो भयम् ॥
न कामान्न च संरम्भान्नोद्वेगाद्धर्म्ममुत्सृजेत् ।
धर्म्म एव परे लोके इह चैवाश्रयः सताम् ।
इदञ्च तं त्वामपरं ब्रवीमि पुण्यप्रदं तात ! महाविशिष्टम् ।
न जातु कामान्नभयान्न लोभात् धर्म्मं जगज्जीवितस्यापि हेतुः ॥"
"एकस्मिन्नप्यतिक्रान्ते दिवसे धर्म्मवर्जिते ।
दस्युभिर्मुषितस्येव युक्तमाक्रन्दितुश्चिरम् ॥
अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युनाधर्म्ममाचरेत् ॥
यस्य त्रिवर्गशून्यस्य दिनान्यायान्ति यान्ति च ।
स लोहकारभस्त्रेव श्वसन्नपि न जीवति ॥
तस्मात् सर्व्वात्मनाधर्म्मं नित्यमेव समाचरेत् ।
मा धर्म्मविमुखःप्रेत्य तमस्यन्धे पतिष्यति ॥
नावसीदति चेद्धर्म्मः कपालेनापि जीविता ।
आढ्योऽस्मीत्येव मन्तव्यं धर्म्मवित्ता हि साधवः ॥"

**धर्म्मशक्तिविषये चतुर्व्वर्गचिन्तामणिधृत कूर्म्मपुराणम् ॥ त्रं ॥ १ ॥**

"धर्म्मात् सञ्जायते ह्यर्थो धर्म्मात् कामोऽभिजायते ।
धर्म्मादेव परं ब्रह्म तस्माद्धर्मं समाश्रयेत् ॥"

**धर्म्मशक्तिविषये चतुर्व्वर्गचिन्तामणौ वेदव्यासमतम् ॥ त्रं ॥ १ ॥**

"कामार्थौ लिप्समानस्तु धर्म्ममेवादितश्चरेत् ।
न हि धर्म्मादृते किञ्चित् दुष्प्रापमिति मे मतिः ॥

निपानमिव मण्डूका रसपूर्णमिवाण्डजाः।
शुभकर्म्माणमायान्ति विवशाः सर्व्वसम्पदः॥"

धर्म्मशक्तिविषये चतुर्वर्गचिन्तामणौ स्कन्दपुराणमतम्॥ ३ं॥ १॥

"धर्म्माद्राज्यधनं सौख्यमधर्म्माद्दुःखसम्भवः।
तस्माद्धर्म्मं सुखार्थाय कुर्य्यात् पापञ्च वर्जयेत्॥
लोकद्वयेऽपि यत् सौख्यं तद्धर्म्मात् प्राप्यते यतः।
धर्म्ममेक मतः कुर्य्यात् सर्व्वकामार्थसिद्धये॥
"धर्म्मात् सुखञ्च ज्ञानञ्च यस्मादुभयमाप्नुयात्।
तस्मात् सर्व्वं परित्यज्य विद्वान् धर्म्मं समाचरेत्॥"

(क्रमशः।)



# आर्य्यपुरावृत्तस्य कश्चनोच्छ्वासः।

नालन्दा विद्यायतनम्।

अतीता खृष्टीया षष्ठशताब्दी। आगता च सप्तमी अशेषोत्सव पुरःसरा विपुलसम्पत् परिगता च। अस्मिन्नेव काले आर्य्यधात्र्याः नालोकितः कुत्रापि वर्त्तमानसदृशो मलिनो वेशः, न च मर्म्मोच्छेदन शोकोच्छ्वासः निराशाप्रणोदितार्त्तनादः संहारभीषणमूर्त्या महामार्य्याः करालच्छाया वा। आसीत् सदैव प्रफुल्ला स्वाधीनता गरीयसी धनसम्पन्नमहिमभिः परमश्लाघास्पदा भगवती श्रीमत्यार्य्यमाता। गता च पूर्णतामार्य्यकीर्त्तिर्वितसर्व्वदिक्चक्रवाला। आर्य्यज्ञान विकाशेन सहैव गतमतुल्यदर्शनशास्त्रं लोकेषु विरचितम्। विकसितानि ललितकवितालतिकाया मकरन्द विलसितानि कुसुमानि। विततञ्च सर्व्वत्र ज्योतिर्गणितचिकित्साप्रमुखानामशेषार्य्यशास्त्राणां सौरभम्। किं वहुना निमिलार्य्यकुलधुरन्धरस्य

नरपतेः हर्षवर्द्धनशीलादित्यस्य महिम्ना शासनस्य सर्व्वैव आर्य्यभूमिरशेष सम्पत्समन्विता समुपजाता। महाराष्ट्रकेशरिणः पुलकेशस्य लोकोत्तरशौर्य्यप्रकटनस्य प्रभावेन परममौज्ज्वल्यमापादितमार्य्यवीर्य्यम्। तथाहि—नालन्दायाः अभिनवभारतीसपर्य्या आर्य्यमहिमानमाशासु सर्व्वासु परिव्याप्तिं निनाय।

आसीदिदं नालन्दाक्षेत्रं वर्त्तमानगयाया नातिदूरमवस्थितं, बोधिसत्त्वपादान्तेवासिनां परमं पवित्रं तीर्थम्। पुरा तत्र किञ्चनरसालकाननमतिरमणीयमासीत्, यदेव केनापि धनाढ्येन वणिक्सूनुना बोधिसत्त्वाय निर्मेदितम्। तत्रैवातिक्रान्तानि बहूनि दिनानि बुद्धेनेति श्रूयते। गच्छता कालेन कियता प्रतिष्ठिता तत्र काचन विद्यार्थिमठिका। क्रमेण च कालान्तरवर्त्तिनां परमधर्म्मनिष्ठानां बौद्धभूपतीनां अनुकम्पया विद्यायतनमेतत् विस्तृतिमारोपितं औन्नत्यञ्च नीतम्। ततः राजर्षेः विदग्धमण्डलपक्षपातिनः शीलादित्यस्य अधिकारसमये भारतीविहारप्राङ्गनमेतत् सर्व्वेषु बौद्धविद्यागारेषु प्राधान्यमवाप। अष्टादशसु बौद्धसाम्प्रदायिकेषु दशसहस्रश्रमणाः अत्र स्थितिमासाद्य तावद्धर्म्मशास्त्रन्यायदर्शनविज्ञानगणितादीनां सर्व्वेषां शास्त्राणां अनुशीलनरता आसन्। महीपालप्रसादेन अचिरेणैव विद्यामन्दिरोऽयं अतिमहता तुहिनाचलशिखरमालाविडम्बिना सुधाधवलितेन प्राकारमण्डलेन परिगतः, अतिदृढ़कपाटसंपुटः, उद्घाटितैकद्वारप्रवेशः, सुरपतिप्रासाद इव द्वितीयः समानीतः। संगृहीताश्च स्वल्पेनापि कालेन नानादिगलङ्कारभूताः वहवः विद्यासय्याः। तत्र षट्सु चतुस्तलप्रासादेषु विद्यार्थिनो वसतिं मापुः। स्वतन्त्रविषयानां उपदेशार्थं केन्द्रदेशेषु बहूनि प्रकोष्ठानि सज्जीभूतानि आसन्। नरपालस्य शीलादित्यस्य दानशीलतया तत्रस्थानां अध्यापकाध्ययनार्थिनां तावत् परिधेयाहारौषधानि प्रतिदिनमेव निर्व्वर्त्तितानि। अतिदवियस्तया

तस्य प्रदेशस्य न तत्र प्रवेशक्षमः जनकलकलो राजपुरात्। नापि तत्र सांसारिकाणि प्रलोभनानि गमनक्षमाणि विद्यार्थिपरिषत्सु। किन्तु तत्रस्था अध्ययनार्थिनः केवलं आचार्य्यकुलपुत्त्रप्रायपरिजन-परिवारा अपनीताशेष पुरजनकलकलाः अनन्यमनसः अखिल-विद्योपदेशकुशलेभ्यः आचार्य्येभ्यः यथा स्वमात्मकौशलं प्रकटयद्भ्यः पात्रवशादुपजातोत्साहेभ्यः अहर्दिवं यथान्यायं शास्त्रोपदेशं गृहीत-वन्तः। नायं मन्दिरः केवलं वाह्यसौन्दर्य्याणां एकमेवास्पदं, किञ्च आन्तरसौन्दर्य्येण च ततोऽधिकां ख्यातिमवाप। अत्रस्था आचार्य्याः शास्त्रकुशलतया अभिज्ञतया च सर्वत्र विश्रुताः, विद्यार्थिनश्च शास्त्रानुशीलनेन तच्चिन्तया च परां प्रतिपत्तिं लेभिरे। अस्मत् कथिते तु समये वङ्गादिगौरवास्पदं सोमतटराजनन्दनः सर्वशास्त्रा-चार्य्यधर्म्मपालपादान्तेवासी आर्य्यः श्रीशीलभद्रः अत्रस्थाध्यक्षस्य पदमलङ्कृतवान्। नासीत् कापि विद्या आर्य्याणां यामार्य्यः शील-भद्रो नाधिगतवानिति जनविश्रुतिः। ( १ ) किन्तु एतावदेवावेद-नीयं यदसौ स्वकीयज्ञानमहिम्ना तरुणे वयसि वर्त्तमानः नाना-देशागतानां विविधशास्त्रविशारदानां भारतीनन्दनानां शास्त्रा-लोचनया पराभवमानीय तस्य शिष्यत्वेन च परिगृह्य नालन्दायाः प्रधानाचार्य्यस्य आसनोपवेशनक्षमोऽभूत्। अतःपरं किमधिकतर-माश्चर्य्यास्पदं यदसौ आत्मजीवनेन निखिलं शास्त्रोपदेशजातं प्रकटितम्।

अथ चीनप्रदेशागतः परमविश्रुतः परिव्राजकः हि श्री येन्थसङ्गः ( Houen Tsang ) अस्मिन्नेव समये बोधिसत्त्वस्य आद्यविहारभूमिं भारतं वर्षमागतः। परमविधानज्ञस्याख्यागमनवार्त्तां निशम्य वैदे-शिकपण्डितसंलापकुतूहलपरवशः आचार्य्यचूडामणिः शीलभद्रः

( १ ) कोऽयं पुनः परमविधानज्ञः शीलभद्रः को दिग्भागो वा जन्मनानेनालङ्कृत इति प्रबन्धेनेतरेण प्रकटीभवितव्यम्।

तदा मन्त्रनाथं कञ्चन आचार्य्यं वज्रासनं ( mod. बुद्धगया ) प्रस्थापितवान्। स च वैदेशिकोऽतिथि: विनयावनत: नालन्दामुपस्थित:।

अथ तस्य मन्दिरप्रवेशसमये अति महानेव उत्सवो बभूव। अशेष शास्त्रविशारदा बहव: श्रमणा: परमश्रद्धास्पदाय तस्मै अतिथि पुङ्गवाय स्वागतं व्याहृतवन्त:। पृष्ठतस्तेषां अपरिसंख्येया परिव्राजका: केचन छत्रपाणय: केचन वा जय जीवेति मधुरवचसा-मङ्गलप्रायमनवरतं पठन्त:, केचन गीताक्षरशतेन अतिथिगुणान् गायन्त: केचन वा पताकाचीनांशुकेषु अतिथिगुणावलिं विलिख्य तदुड्डयनपरा: तस्यैव परमां शोभामानैन्यु:। अनेन विधिना परिगृहीतो महात्मा हिओयेन्थसङ्ग: ( Houen Tsang ) आर्य्यस्य शीलभद्रस्य समीपं नीत:। तत: आचार्य्यवेदिकास्समासीनं द्वितीयमिव देवं हिरण्यगर्भं मूर्त्तिमन्तमिव भगवन्तं धर्म्मं वर्षीयांसं तं पुरुषमालोक्य भक्तिगद्गदवचन: क्षितितलनिहितजानुचरणकमल: विनयनम्रस्तं प्रणनाम। नानाशास्त्रपारं गतयोरनयो: परस्परसमागमेन उभौ परं ननन्दतु:। तत: कथाप्रसङ्गेन नालन्दाचार्य्यस्य अपरिमेयपाण्डित्यमवगत्य चीन: पण्डित: तमेव आचार्य्यत्वेन स्वीकृत्य कस्मिंश्चित् शोभने दिवसे अन्तेवासी बभूव। पाठशालाया: कस्मिंश्चित् परमरमणीये गृहप्रदेशे तस्यावासो निरूपित: नियोजिताश्च दशानुचरास्तस्य शुश्रूषायै। नरपति: शीलादित्यस्तस्य प्रात्यहिकं प्रयोजनीयं ददौ। एवं समादृत: वैदेशिकोऽतिथि: अध्ययनेन तत्र पञ्च वर्षाणि वसति स्म। इयतैव कालेन महाप्रज्ञस्य गुरो: पादमूलात् सर्व्वं पाणिनीयं व्याकरणं तथा त्रिपिटकं तावद् वैदिकशास्त्रञ्च अधीतवान्। मणिदर्पण इव अतिनिर्म्मले तस्मिन् सञ्चक्राम अचिरेणैव सकल: कलाकलाप:। तथाहि पदे, वाक्ये, प्रमाणे, धर्म्मशास्त्रे अपरेषु च अशेषशास्त्रेषु परं कौशल-

मवाप। एवं तस्य सर्वविद्यापरिचयमाचरतश्चीनपरिव्राजकस्य त्रिभुवनविलोभनीयोऽमृतरस इव अम्बुनिधेः, कुसुमप्रसर इव कल्पपादपस्य, सकलजीवलोकहृदयानन्दजननश्चन्द्रोदय इव प्रदोषस्य संस्कृतशास्त्रपरिचयः अशेषगुणां रमणीयतां पुपोष।

ततः विदिताशेषशास्त्रार्थः परमविद्यानिधिः परिव्राजकधुरन्धरः स्वदेशगमनाय गुरवे निवेदितवान्। तदाकर्ण्य गुरुरुवाच "वत्स! पूर्णा नो मनोरथाः। अधीतानि शास्त्राणि। शिक्षिताः सकलाः कलाः, गतोऽसि सर्वासु विद्यासु परां प्रतिष्ठाम्। अनुमतोऽसि विनिर्गमनाय विद्यालयात् सर्वाचार्य्यैः। अतएव स्वगृहगमनेन वर्द्धयाधुना त्वद्दर्शनोत्सुकानां आत्मीयानां आनन्दवितानमिति। एवं गुरुपादमूलात् स स्वावासं प्रतस्थे।

अहो गतानि दिनान्येतानि यदा सर्वदेशपूजितैः अशेषविधानज्ञैः अस्मद्देशीया आचार्य्याः पूजिता आसन्। योऽयं भारतो वर्षः निखिलतत्त्वनिधिरिति अशेषदेशीयैः विदग्धमण्डलैः परिपूजितः परमपूज्या व्यासजैमिनिकपिलप्रमुखाः यस्य तत्त्वज्ञसूनवः शङ्करशीलभद्रादिकाः यस्य शास्त्रज्ञाः तनयाः प्रादुर्भूताः, सोऽयमधुना नियतिवशंगतः ज्ञानानुशीलनार्थं स्वसन्तानं देशान्तरं प्रेषयति। अहो! नियतेः परिक्रमणम्।

"कस्यैकान्तं सुखमुपनतं दुःखमेकान्ततो वा।
नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण॥"

श्रीउपेन्द्रनाथ सेन रायः।

---

# कथा सरित्सागरे सुभाषितानि ।

१६ ज्ञानमार्गे ह्यहङ्कारः परिघो दुरतिक्रमः ।
ज्ञानं विना च नास्त्येव मोक्षो व्रतशतैरपि ॥

Self-conceit is the one insurmountable barrier in the acquirement of true spiritual knowledge ; and, without that there is no salvation, notwithstanding our observing a hundred vows.

१७ स्वर्गस्तु न मुमुक्षाणां क्षयी चित्तं विलोभयेत् ।
तस्मादहं कृतित्यागा ज्ज्ञाने यत्नं मुने ! कुरु ॥

The seekers of salvation are never tempted by the pleasures of heaven which are perishable after all. You should, therefore give-up your self-conceit and try your best to obtain spiritual knowledge.

१८ धीर्नं चित्रीयते कस्मादभित्तौ चित्रकर्मणा ?

Who is not swoprised at the sight of a painting which has no support whatever ?

१९ विभवैः किं नु मूर्खस्य काष्ठस्याभरणैरिव ?

Like ornaments to a wooden image, wealth & prosperity are quite useless to one who does not know how to use them.

२० दिवा नैषां प्रभावोऽस्ति ध्वस्तानामर्कतेजसा ।
यक्षरक्षः पिशाचानां तेन हृष्यन्त्यमी निशि ॥
न पूज्यन्ते सुरा यत्र न च विप्रा यथोचितम् ।
भुज्यतेऽविधिना वाऽपि तत्रैते प्रभवन्ति च ॥
अमांसभक्षः साध्वी वा यत्र तत्र न यान्त्यमी ।
शुचीञ्छूरान् प्रबुद्धांश्च नाक्रामन्ति कदाचन ॥

Overpowered with the light of the sun, the Jakshás, Rákshashás & Pishácha's can not make their appearance in the day, and, therfore, they delight themselves in the night. They are very common in those places where the gods are not worshipped, the Brahmans are not honoured, and the meals are taken without the obeservance of due ceremonies. Where there is a vegetarian and a chaste woman, they do not go. They do not also cross the path of the pious ( pure ), the brave & the learned.

२१ स्त्रीणां चञ्चलाश्चित्तवृत्तयः।

The mental tendencies of women are very fickle.

पुरोहितः श्रीगोपीनाथ शर्मा।

जयपुर।

---

## प्रश्नोत्तरादर्शाः।

### कलिकाता विश्वविद्यालयस्य प्रवेशिकाप्रश्नाः।

खृष्टीयाब्दाः १८६४।

( वर्षेऽस्मिन् संस्कृतभाषापरीक्षकैः नवानां छात्राणामर्थे विद्यासागरकृतादृजुपाठात् अप्रथमारम्भानाञ्च कृते न्यायरत्न-सङ्कलित प्रवेशिकातः एवं द्विविधा प्रश्नमाला विरचिता। तयोस्तु प्रवेशिकायाः आगामि वर्षेऽपि पाठ्यत्वात् तद्ग्रन्थावलम्बिन एव प्रश्नाः सोत्तरा अत्र निविष्टाः। )

1. Question.

(a) अथासौ गृहमध्ये तान् प्रवेश्य द्वारं निभृतं पिधाय लगुड़प्रहारैः शिरस्यताड़यत्।

(d) नूनमनेन दुरात्मना दारको मे भक्षित इति विचिन्त्य कोपात्तस्योपरि जलकुम्भं चिक्षेप।

( c ) भो निषिद्धस्त्वं मयानेकशः । नाशृणोर्मेवाक्यम् ।

( b ) भो यदि ममेप्सितं प्रयच्छसि तर्हेहि मे द्वितीयं बाहु-युगलं शिरश्च ।

( a ) ततस्तेषु चिरायमाणेषु राजा वानरमाह भो यूथाधिप ! किमिति चिरयति मे परिजनः ।

( 1 ) Translate the above extracts into English.

( 2 ) Expound the *samása* in लगुड़प्रहारैः, दुरात्मना, जलकुम्भं, बाहु-युगलं and यूथाधिप ।

( 3 ) Give the rule of *sandhi* between निषिद्धः and त्वम् ।

( 4 ) In what case is शिरसि in extract ( a )

( 5 ) In what case is शिरः in extract ( d )

( 6 ) By whom were the words in extract ( e ) spoken and on what occasion.

1. *Answer.*

( 1 ) ( a) Then that man having made them enter the house and having closed the doors, struck blews with the cudgel on their heads.

( b ) "Surely by this wicked ( animal ), my child has been devoured" ; thinking this she threw the pitcher of water on it out of anger.

( c ) O ! many a time were you by me forbidden ; ( but ) did not listen to my words.

( d ) O ! if you will give me my wished for object, then give me a second pair of hands and ( a second ) head.

( e ) Then, on their delaying, the king asked the monkey "O leader of the troop, why are the members of my family making delay."

---

प्रश्नमिमं नितरामसंलग्नं मन्यामहे वयम् । (*c*) इत्यत्र (*e*) इति मुद्राकरप्रमादःसुष्पष्टं एव प्रतिभाति । किन्तु परीक्षार्थिनः प्रत्ययमस्माकं परामर्शः यत् प्रदत्तेषु प्रश्नेषु सर्व्वथैव अनुत्तीर्य्यैर्ष्वेव ते कथञ्चित् परिवर्त्तितव्याः न कदाप्यन्यथेति ।

(2) लगुड़ेन ये प्रहारास्ते लगुड़प्रहारास्तैः लगुड़प्रहारैः कृता कर्त्तृकरणयोरिति तृतीयातत्पुरुषसमासः ।

दुर्दुष्टः आत्मा यस्य स दुरात्मा तेन दुरात्मना बहुव्रीहिः।

जलस्य कुम्भः जलकुम्भ स्तं षष्ठीसमासः ।

बाह्वोः युगलं बाहुयुगलं तत् बाहुयुगलं षष्ठीतत्पुरुषः ।

यूथस्य अधिपः यूथाधिपः तत्सम्बोधने यूथाधिप। षष्ठीतत्पुरुषसमासः ।

(3) वेः सोऽश्रसन्ते कृते इति वोपदेव सूत्रात् "निषिद्धः" "त्वम्" च अनयोः सन्धिः स्यात् ।

(4) शिरसीत्यत्र अवच्छेदाधिकरणे ७मी विभक्तिः।

(5) शिरः इति देहीत्यस्य कर्म्म ।

(6) सर्वे हि नराः लोभपरवशाः, अतएव लौल्यादिमां शोचनीयदशां प्राप्तवतः कस्ते दोष इति स्वमित्रं चक्रधरं प्रति प्रबोधवचनानि कथाच्छलेनोपदिशता सुवर्णसिद्धिनोक्तस्य चन्द्रभूपतेराख्यानस्यान्तर्गतान्येतानि वाक्यानि ( extract (e) )।

( क्रमशः। )

---

## समस्यापूरणम् ।

प्रचण्डवह्नौ मणिसुप्रभावं दिदृक्षुभिश्चन्द्रमणौ विसृष्टे ।
तदैव तेजःप्रतिबन्धशान्ते "पिपीलिका नृत्यति वह्निकुण्डे" ॥
होमे समाप्ते विधिवत् कृशानौ निर्वापिते भस्मनि भार्जिते च ।
लिप्तेऽथताक्षीर्णसमस्तभागे "पिपीलिका नृत्यति वह्निकुण्डे" ॥ १ ॥

श्रीतुलाकिराम शास्त्रि विद्यानिधिः ।
एम्, ए, ओ, स्कुल ।
अमृतसर, पञ्जाब ।

चतुर्थ्यां सिंहगे सूर्ये गौरी चन्द्रार्द्धशेखरौ ।
"इन्दुमन्देि मिथौ वक्त्रं पश्यतो नैव दम्पती ॥"

समीक्ष्य शङ्करी रणात्समागतं स वाहनम्
षड़ाननं सुरारिनाशकं स्वकं सुतं यदा ।
चुचुम्ब तन्मुखं मुदा स नीलकण्ठकण्ठत
"स्तदा मयूरमस्तके ननर्त्त पन्नगेश्वर: ॥"

विशूलिनी रोषवशाद्विनष्टे दत्तक्रतौ शीतलतां गतेऽग्नौ ।
हवि:समास्वादितुमुद्यता तत् "पिपीलिका नृत्यति वह्निकुण्डे ॥"

रात्रिन्दिवं सुखं दुःखं ग्रहाणां गमनन्तथा ।
दम्पत्योर्म्मिवताकीश "श्चक्रवत्परिवर्त्तते ॥"

श्रीरोहिणिकान्त विद्याभूषण:
**ढाका, विक्रमपुर, कुरापाड़ा ।**

समस्तलोकभीतिदं सुरेन्द्रकष्टदायकं
सुरारिनाथतारकं स्तुतिं मयूरवाहने ।
नयत्यहीन्द्रभूषणो मुदा लिलिङ्ग नन्दनं
"तदा मयूरमस्तके ननर्त्त पन्नगेश्वर: ॥"

दामरचिन वेङ्कटराय: । विशाखपत्तन, पालतेरु ।

यदोत्तरं प्रयुज्यते सुनिश्चितं बुधैन किम् ?
शिखा समुज्ज्वला क्व किं चकार रङ्गगो नट: ? ।
दधाति क: स्वमस्तके महाभरां वसुन्धराम् ?
"तदा मयूरमस्तके ननर्त्त पन्नगेश्वर:" ॥

अनारतं का मधुराभिलाषा ? लयाश्रित: किं कुरुते नटश्च ? ।
जुहोति सन्ध्यासु हवि: क्व होता ? "पिपीलिका नृत्यति वह्निकुण्डे ॥"

उत्थानधस्ताद्दिदधदवचांश्च समुन्नतौ ।
अरा इव जनान् कालश्चक्रवत् परिवर्त्तते ॥

वक्ष:पीठे वीक्ष्य कान्ताजनस्य पीनोरोजम्फद्मनेशं वसन्तम् ।
पाटीरात्मा तं परिष्कर्त्तुकामो मन्ये यातं "कल्कतां कुण्डलीश: ॥"

**कोल्हापुरवासी,**
राशिवड़ेकर: श्रीअप्पाशास्त्री ।

मुखचन्द्रं मन्यमानौ चतुर्थ्यां नाम नाभसे।
"द्वादशाब्दे मिथो वक्त्रं पश्यतो नैव दम्पती॥"
कुर्वन्ति केऽसार्थ्यमिहैकतायाः कुर्वीत किं साधुसमागमात् सन्।
तप्येत कुत्र प्रथमं तपस्वी "पिपीलिका नृत्यति वह्निकुण्डे॥"
जननान्मरणं यातं मरणाज्जननं पुनः।
दृशीयं जीविनां लोके "चक्रवत् परिवर्त्तते॥"

**श्रीद्वारिकानाथ विद्यालङ्कारः।**
ढाका, मालथानगर हाइ स्कुल।

---

मिथ्याभिशप्तिसन्त्रस्तौ चन्द्रमण्डलशङ्कया।
"द्वादशाब्दे मिथो वक्त्रं पश्यतो नैव दम्पती॥"
का वेत्ति गुप्तस्य गुड़स्य भाण्डं मेघोदये किं कुरुते मयूरः।
परीक्षिता कुत्र विदेहकन्या "पिपीलिका, नृत्यति, वह्निकुण्डे॥"
यदा जितासुरं गुहं विषसर्जि शिवो द्रुतम्।
"तदा मयूरमस्तके ननर्त्त पन्नगेश्वरः॥"
यदि प्रभाकरः क्वचित् प्रभां निजां समत्यजत्।
"तदा मयूरमस्तके ननर्त्त पन्नगेश्वरः॥"

**श्रीश्यामाचरण कविरत्नः।**
निउ इण्डियान् स्कुल—कलिकाता।

चन्द्रावतंसौ गौरीशौ चतुर्थ्यां भाद्रमासि तत्
"द्वादशाब्दे मिथो वक्त्रं पश्यतो नैव दम्पती॥ १॥"
निम्ने नमं कर्कशं कूर्मपृष्ठमूर्द्धे चौणिः पीड़िता ग्रावयन्त्रम्।
मध्ये यातो निर्गलन्मांसरक्तः चण्डीयुद्धे "कल्कतां कुण्डलीशः॥ २॥"
पतिष्यन्तं रणे शुम्भं सर्व्वाङ्गनयनैरलम्।
दिदृक्षुः प्रमदाच्छक्र "श्चक्रवत् परिवर्त्तते॥ ३॥"
सीतां सतीं नौमि पुनः पुनस्तां माहात्म्यमस्या वचसामगम्यम्।
यदङ्गसंसक्तलवङ्गपुष्पे "पिपीलिकानृत्यति वह्निकुण्डे॥ ४॥"

**कश्चिद्भट्टाचार्य्यः।**

---

श्रीश्रीदुर्गा

शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्बाते सेयमम्बा श्रीशिवसुन्दरी॥

## भासावतरणिका।

कदापि विश्लिष्टघनान्तरोच्यते
क्वचिद्घनैः संयवनैः पिधीयते।
विधुर्नभस्ये नभसि प्रतीयते
यथेति प्रावृट् शरदा नियुध्यते॥

## उद्भट-श्लोकः।

अव्याद्वः करणेरणो रणरणो राणोऽरणो रावणो
हृत्वा येन रमार मारमरमा रामा रमासारमा।
स श्रीमानदयोदयो दयदयो दायो दयो वेदयो
विष्णुर्जिष्णुरभीरभीरभरभीराभो रभोसौरभो॥ ८८॥

---

अस्यार्थः। येन रामचन्द्रेण अयोऽसिं हृत्वा रावणो दायः खण्डितः सोऽव्यादित्यन्वयः। दोऽवखण्डने इत्यतोऽकर्त्तरिच कारके संज्ञायामित्यसंज्ञायामपि कर्म्मणि घञ्। अयः स्यादस्त्रलौहयोरिति विश्वप्रकाशः। रावणः कीदृशः करणेरणः। करणे क्रियायाम् उरणो मेष इव कार्य्याकार्य्यविवेकशून्यत्वात्। पुनः कीदृशः रणरणः रणे युद्धे रणति

# श्रीलक्ष्मीः श्रीसरस्वती ।

आस्तां तावत् तयोः सपत्नीभावः साहजिकः, किन्तु समपक्ष-पातया धिया श्रद्धया समेन च स्नेहेन समाराधिते चेत्तदा श्रीलक्ष्मीः श्रीसरस्वती च द्वे एव एकस्मिन् पुरुषे असापत्न्यं सन्तिष्ठेते—यथा विष्णौ नलनहुषमान्धातृषु च नृपतिषु धनिषु ज्ञानिषु च, आपाततो विरुद्धे अपि शक्ती द्वे अन्योन्ये वर्द्धयतः, कदाचित् धनशक्तिं ज्ञानशक्तिः ज्ञानशक्तिमपि धनशक्तिर्वर्द्धयति। यथा ज्ञानी वेतन-रूपं सत्काररूपं वा राजादितो धनमासादयति, धनी च प्रदाय वृत्तिरूपं धनमुपादत्ते ज्ञानं ज्ञानिभ्यः ( २ )।

---

गर्जति इत्यचि रूपम्। राति ददातीति राणः नन्द्यादित्वाद्युः दानशील इत्यर्थः। पुनः कीदृशः न विद्यते रणो युद्धं यस्य असावरणः दिग्विजयित्वात्। यद्वा रणतीति रणः न विद्यते रणो योद्धा यस्मात् सः। यस्य रामस्य रामा सीता रं वह्निं आर प्राप्तवती। सा रामा पुनः कीदृशी मारमरमा मारं कामं प्रति अरमा अनभिलाषा इत्यर्थः। पुनः कीदृशी रमासारमा रमाया लक्ष्म्याः सारं मयते माति वा इति क्विप्। सम्यचरेत्यादिनाकारः। रामः कीदृशः स विष्णुः जिष्णुर्जयशीलः। शोभमानस्य दया च तासामुदयो यत्र स तथा, पुनः कीदृशः दयदयः दये दाने दया यस्येति। यद्वा स श्रीमान्, एवम् अदये अज्ञाने उदया प्रकाशिता दया यस्य। यद्वा अदय इति इदं रावणविशेषणम्। तथाहि, न विद्यते दया येषां ते राक्षसास्तेषु दया यस्येति। दाय इति प्रागुक्तम्। पुनः कीदृशः वेदयः साह्विशातीत्यादिना शप्रत्ययः ज्ञानीत्यर्थः। पुनः कीदृशः अभीरभीरभरभीः ईरणमीरः भावे घञ् अभि सर्वतो गमनं यस्य इत्यभीरो वायु-स्तस्य भियं राति ददाति इत्यभीरभीरः सर्पः स एव पुनर्भरम् अतिशयं भीर्भयं राति यस्मादित्यसौ गरुड़ः तेनाभ्येति गच्छत्यसौ अभी रामचन्द्रः। पुनः कीदृशः अभीसौरभी इति न विद्यते भीर्यस्मात् असावभीः सौरभमाश्चर्यरूपं तदस्यास्तीति पश्चात् कर्मधारयः॥८

( २ ) “गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा।
अथवा विद्यया विद्या चतुर्थी नोपपद्यते॥”

परमार्थतः एकैव भगवतो वैष्णवी शक्तिः वृत्तिभेदाद्भिन्नेव प्रतिभाषते लक्ष्मीरूपतया सरस्वतीरूपतया च। अतएव लक्ष्मीवाचकोऽपि श्रीशब्दः सरस्वतीं प्रतिपादयति, यथा "पञ्चम्यां श्रियं पूजयेत्" इत्यतो विधिवाक्यात् श्रीपञ्चम्यभिधायां माघशुक्लपञ्चम्यां सरस्वतीं तयाधिष्ठितां पुस्तिकां लेखनीप्रभृतिञ्च पूजयेत्।

एवं लक्ष्मीरपि सरस्वत्या एव तनुविशेषत्वात् नतस्या भिद्यते। तथाच मत्स्यपुराणे।

"लक्ष्मी मेंधा धरा तुष्टिः गौरी पुष्टिः प्रभा धृतिः।
एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वती॥"

इत्यत्र तथैवाभिधानात्। तथा संवत्सरप्रदीपेऽपि।

"पञ्चम्यां पूजयेल्लक्ष्मीं पुष्पधूपान्नवारिभिः।
मस्याधारं लेखनीञ्च पूजयेन्न लिखेत्ततः॥"
"माघे मासि सिते पक्षे पञ्चमी या श्रियः प्रिया।
तस्याः पूर्वाह्ण एवेह कार्य्यः सारस्वतोत्सवः॥"

उपासनानुरोधात्तु कथञ्चिद्भिद्यते, अभिधानकारस्तु व्याड़िः कथञ्चिद्भेदमुररीकृत्य श्रीसरस्वत्योर्भिन्नता प्रतिपादिता।

तथाच—

"लक्ष्मी सरस्वती धी त्रिवर्गसम्पद्विभूतिशोभासु।
उपकरणवेशरचना विधासु च श्रीरिति प्रथिता॥"

श्रीलक्ष्मीर्नीतिमनुरक्ता स्फीतीभवति, तथाच महाजनवाक्यम् "नीतिमधि श्रियः क्रमन्ते।" अन्यच्च,

"जितेन्द्रियस्य नृपतेर्नीतिमार्गानुसारिणः।
भवन्त्युज्ज्वलिता लक्ष्म्यः कीर्त्तयश्च नभस्पृशः॥"

श्रीसरस्वती तु विद्यादानान्नित्यमनुशीलनाच्च प्रवर्द्धते। तथाच महाजनवाक्यम्।

"अपूर्व्वको हि भाण्डारी दृश्यते तव भारति!।
अव्यये च व्ययं याति व्यये याति च विस्तरम्॥"

विद्यारूपिणी सरस्वती सापि लक्ष्मीवत् नीचमाश्रितापि गुरूकरोति। तथाच देवीपुराणे विद्यादानाध्याये।

"न हि विद्या कुलं जातिं रूपं पौरुषमाचताम्।
वश्यते सर्व्वलोकानां पठिता उपकारिता॥"
"सर्व्वेषामेव वृद्धानां विद्यावृद्धे हि मान्यता।
वयो वृद्धो हि शूद्राणां विश्यानां धनवान् यतः॥
चत्त्रियाणान्तु वीर्य्येण विप्राणां शास्त्रपारगः।
वित्तं बन्धुर्वयश्चैव तपो विद्या यथोत्तरम्॥'
पूजनीयानि सर्व्वेषां विद्या तेषां गरीयसी।
गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा॥
विद्यया लभ्यते विद्या चतुर्थी नोपपद्यते॥"

अन्यच्च,

"विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम्।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि॥"

यः खलु शयानो वा भुञ्जानो वा पर्य्यटन् वा निरन्तरं न विद्यां ध्यायति न तस्मिन् सरस्वती करुणां विधत्ते।

(क्रमशः।)

## ताम्बूलम्।

### (पूर्व्वानुवृत्तम्)

तैलादिलिप्तपात्राणि भस्मोष्णपयसा भृशम्।
प्रचाल्य शोधयित्वा च यथास्थानं निवेशयेत्॥ २९॥
सम्पुटानि च पात्राणि वियोज्य न हि रक्षयेत्।
महानसस्य पात्राणि सुचारु चालयेद्बहिः॥ ३०॥
मृद्गोमयेन तोयेन चूल्लीं प्रातर्विशोधयेत्।
कृतपूर्व्वाह्णकर्त्तव्या श्वश्र्वादीनभिवादयेत्॥ ३१॥
तासां प्रणीतपादाम्बुः भक्तितोऽन्नादिकं पचेत्॥ ३२॥

सर्व्वांस्ते स्वयमश्नीयान्नातिष्ठसि यथारुचि।
सम्मार्जन्या शोधयित्वा गेहं सायं तथाम्बुभिः॥ ३३॥
सिञ्चेद्द्वारं दीपतरुं मल्लिकाञ्च विशोधयेत्।
सायं शय्यामास्तृणीयात् सम्यक् शुभ्रां परिष्कृताम्॥ ३४॥
पत्यौ सुप्ते स्वपेत् भक्त्या सुवेशा तद्गतान्तरा।
जितेन्द्रिया च निष्कामा विष्णुवच्चिन्तयेत् पतिम्॥ ३५॥
नित्यं नैमित्तिकं काम्यं वैदिकन्तु रजस्वला।
त्यजेदलक्षिता सर्व्वैर्लज्जितान्तर्गृहे वसेत्॥ ३६॥
नालङ्कुर्य्यान्न च स्नायान्न स्पृशेदेकवस्त्रधृक्।
मौनिनी स्यान्न खट्टायां स्वपेत्तैलं न धारयेत्॥ ३७॥
भुञ्जीत नक्तमल्पाल्पं येन क्षीणं भवेद्बलम्।
एवमाचारनिरता स्नायाच्चातुर्थिकेऽहनि॥ ३८॥
भर्त्तारं भास्करं वापि पश्येद्वा दर्पणे स्वकम्।
पश्येद्यद्यन्यं पुरुषं तद्रूपं जनयेत् सुतम्॥ ३९॥
दिवसादष्टमादूर्द्ध्वं युग्मे पुत्त्रः सुपूजितः।
अयुग्मे च भवेत् कन्या पर्व्ववर्ज्जं व्रजेत् पतिम्॥ ४०॥
सानन्दं साधुभावञ्च पतिं परिचरेत् सती।
पुत्रकामा ततः पुत्रं लभेत क्षितिपूजितम्॥ ४१॥

इति परमुपदेशमिमा दिशन्तीं स्फटिकतरोरुपस्थल्य रिक्तधैर्य्यः।
अहमिह भुवि धन्यधन्यधन्य इति प्रवदन् विमलां विसस्रजे सः॥४२
संलापमासामस्तायमानमापीय चानन्दमसीममाप।
श्रीशक्रजिह्वारचतुष्टयं स भेजे चतुर्व्वर्गमिवार्थ्यबुद्धिः॥ ४३॥
ताम्बूलमेतद्वदने निधाय सौजन्यमस्मिन् भुवने विधाय।
गृही सुखं जीवतु बन्धुवर्गैः स्वर्गैः किमस्मादथवापवर्गैः॥ ४४॥

इति जयचन्द्रसज्जिते ताम्बूले चतुर्थवीटिका।

( समाप्तमिदम् )

## क्षणप्रभा ।

मन्नयनं घनशोभिनि ! कृत्वा, रञ्जितमुज्ज्वलतीक्ष्णसुदीप्त्या ।
नीलघने स्फुरणास्फुरणेन, क्रीड़सि किं ? सदृशी कनकेन ॥१॥
स्वर्णसुवर्णकरं प्रविकीर्य्य, ह्लादिनि ! साध्वि ! प्रतिक्षणमत्र ।
नीलघने स्फुरणास्फुरणेन, क्रीड़सि किं सदृशी कनकेन ? ॥२॥
घनतिमिरत्वात् निजकिरणैः किं, प्रकृतिमनोज्ञां सुविकशितां हि ।
पश्यसि कृत्वा स्वतनुसुकान्तिं, स्मितवदने ! स्वे वपुषि अमान्तीम् ॥३॥
नीरदवृत्तसुवर्णलते किं ?, हासयसि क्षणशोभिनि ! पृथ्वीम् ।
नीलविहायसि किञ्च सुहास्ये !, क्रीड़सि हेमविनिन्दितगात्रे ! ॥४॥
विश्वरमे ! च सखीमवनीं किं ?, दीप्तिमिमां स्वां दर्शयसि त्वम् ।
अम्बरशोभिनि ! सुन्दरवेशे !, क्रीड़सि किं स्फुटतामरसास्ये ! ॥५॥
धरणितले तव मूर्त्तिं सुशोभां, किमिति प्रकाशयितुं स्मितवक्त्रे ! ।
त्रिदिवविमोहिनि ! जायत इच्छा, सौदामिनि ! भण नीरदमध्यात् ॥६॥
नयनसुरञ्जिनि ! चञ्चलशोभे !, कल्पितमेव मयात्र च वेद ।
घनचिकुरे ! चपले ! न तवेष्टं, सकलमतथ्यमिदं कृतपूर्वम् ॥ ७ ॥
मुहुरुन्मेषनिमिषणकार्य्यैः, ज्ञापयसि त्वमखिलमनिवार्य्यैः ।
क्षणभङ्गुरमिह अहह निसर्गैः, निश्चेतव्यमिदं जनवर्गैः ॥ ८ ॥
मोहकरा विषयाः क्षणमात्रं, स्पर्शनजीवननाशकराश्च ।
भोगविलासप्रमत्तमनुष्यान्, कारयसीति च देवि ! प्रमाणम् ॥९॥
(जलधरशोभा नवचपलाया, अरुणप्रभाभिः सुमुदित दृष्ट्वा ।
सुखमयरात्रावपि तपसश्च ?, निद्रोत्थितया हि मया रचिता ॥१०॥)

श्रीमती सरोजमोहिनी देवी ।

## कविवरः श्रीभवभूतिः ।



अस्ति दक्षिणापथे विदर्भेषु पद्मपुरं नाम नगरम् । पुरा तत्र केचन तैत्तिरीयिणः काश्यपाश्चरणगुरवः पंक्तिपावनाः पञ्चाग्नयो धृतव्रता सोमपीथिन उडुम्बरा ब्रह्मवादिनः प्रतिवसन्ति स्म ।

"ते श्रोत्रियास्तत्त्वविनिश्चयाय भूरिश्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्त्ताय च कर्म्मणेऽर्थान् दारानपत्याय तपोऽर्थमायुः ॥"

आसीत् तदा मुख्यायणस्य तत्र भवतो वाजपेययाजिनो महाकवेः पञ्चमः सुगृहीतनाम्नो भट्टगोपालस्य पौत्रः पवित्रकीर्त्तेः नीलकण्ठस्यात्मसम्भवः भट्टश्रीकण्ठपदलाञ्छनः पदवाक्यप्रमाणतत्त्वज्ञः कविर्भवभूतिर्नाम जातुकर्णीपुत्रः, यं ब्राह्मणं गिरां देवी वाग्वश्येव अनुवर्त्तते स्म । स्वरचितेषु त्रिषु काव्ये कविनैतावती एव आत्मसम्बन्धिनी वार्त्ता प्रकटिता । तदनेन आत्मपरिचयमुखेन कविगोत्रे निरुपिते तथा वीरचरितप्रस्तावनया ज्ञाननिधिरस्य गुरुरिति विज्ञाते च साम्प्रतमादावेव तत्कालनिरूपणे यत्न आचरितव्यः ।

तत्र राजतरङ्गिनीकृता कल्हन पण्डितेन (Kalhana) कान्यकुब्जपालो यशोवर्म्मा ( Tasovarman, king of Kanauja ) भवभूतिमनुगृहीतवानिति स्वकृते ग्रन्थे प्रकटितम् । स च यशोवर्म्मा कालेन काश्मीरपतिना ललितादित्येन जितः । तथाह तरङ्गिनी कविश्चतुर्थे तरङ्गे—

"कविवाक्पतिराजश्रीभवभूत्यादिसेवितः ।
जितो ययौ यशोवर्म्मा तद्गुणस्तुतिवन्दिताम्" ॥ १४५ ॥

नरपतिपुङ्गवोऽसौ ललितादित्यः कालेनाचिरेण सर्वं भारतं वर्षं तत्करतलमानिनाय । अनया च तरङ्गिनीवार्त्तया एतावदेव

स्फुटमवगम्यते यत् अस्माकं कविर्भवभूतिस्तथा वाक्पतिराजनामा कोऽप्यपरः कविश्च नरपतियशोवर्म्मास्थानमण्डपमलङ्कृताविति। वाक्पतिराजविरचितं प्राकृतभाषोपनिबद्धं गौड़काव्यं डाक्तार वुलारेण (Dr. Buhleir) सम्प्रति समासादितम्। तत्र काव्ये यशोवर्म्मणः वीरचितवर्णनमुखेन कविना राज्ञो गौड़पतिपराभवः वर्णितः। प्रस्तावनायां कविरात्मविवृतिमुखेन ब्रवीति—

"भवभूइ जलनिहि निग्गयकव्वामय रसकणा इव फुरन्ति।
जस्स विसेसा अज्जवि वियतेसु कहा पवन्धेसु॥"

अस्य च संस्कृतानुवादः।

"भवभूति जलनिधिनिर्गतकाव्यामृतरसकणा इव स्फुरन्ति।
यस्य विशेषा अद्यापि विकटेषु कथाप्रबन्धेषु॥"

आर्य्ययानया एतावदवधार्य्यते यदसौ कविः भवभूतेः शिष्येषु एकतम आसीदुत तत्साहचर्य्यात् महदुपकृतोऽभूदिति, अन्यथा कथं वाक्पतिराजकृतमिदं भवभूतिस्तुतिवाक्यं संगच्छेत। यशोवर्म्मणस्तु गौड़विजयिनः गच्छता कालेन कियता राज्यं ललितादित्येन जितम्। अतः काव्यमेतत् यशोवर्म्मणः राजत्वस्य चरमे लिखितमिति उत्प्रेक्षिते भवभूतिरेव तस्य राज्ञो राजत्वस्य प्रारम्भे प्रादुर्भूत इत्यस्मन्मतं उन्मत्तप्रलापवत् न प्रेक्षावतामनवधेयवचनतां भजते। यावदीयप्रत्नतत्त्वविदामग्रणीः परमविधानज्ञः जेनारेल कानिंह्यामसाहेवः ( General Cunning Ham ) तदीयपुरातत्त्वविचारे खृष्टीयाष्टमशताब्द्यामेव ( From 693 A. D. to 729 A.D. ) ललितादित्यः प्रादुर्भूत इति निश्चिनोति। अस्यानुमानस्य प्रतिकूलानुमानं नाद्यापि प्रदर्शितम्। एतन्मतानुमोदनेन च सर्वं सङ्गतं भवति। अतः कानिंह्यामाभिमतमाश्रित्य ललितादित्यस्य राजत्वकाले निरूपिते राजानुगतविवाहप्रवृत्तभृत्यवत्

यशोवर्म्मणो राजत्वकालोऽपि अवधार्य्यते। एतञ्च पूर्वमुत्प्रेक्षितं यदस्माकं कवि: यशोवर्म्मण: राजत्वस्य प्रारम्भे एव प्रादुर्भूत इति। अत: कविवरो भवभूति: खृष्टीयाया: सप्तमशताब्द्या: पश्चिमे काल एव प्रादुर्भूत इत्यस्मन्निरूपणं सर्वत: सङ्गतम्।

एतन्निरूपणमाश्रित्य कविना सह अपरेषां कवीनां सामयिक: सम्बन्ध: स्फुटीभवति। तत् किमिति वाणविरचिते हर्षचरितान्तर्गते अशेषकविगणनानिबन्धे भवभूतेर्निर्देशो न समासाद्यते पृच्छैषा सुलभमुत्पद्यते। कविकुलाचार्य्य: श्रीमद्वाणभट्ट: खृष्टीयसप्तमशताद्द्या: प्रारम्भे एव आसीदिति सर्वसुधीजननिर्णय:, अतस्तेन पूर्वकालवर्त्तिना स्वकृते कविगणनानिबन्धे भवभूति-नामनिर्देशो न कृत:। चीरस्वामिकृतायाम् अमरकोषटीकायां भवभूतिकाव्योद्धृतानि वाक्यानि समासाद्यन्ते। स च चीरस्वामी ललितादित्यनप्तु: जयापीड़स्य शिक्षयितेति राजतरङ्गिन्यां प्रकटितम्। तद्यथा,—

"चीराभिधाच्छब्दविद्योपाध्यायात् सम्भृतश्रुत:।
बुधै: सह ययौ वृद्धिं स जयापीड़पण्डित:॥"

तथाच भवभूतिविरचिता: कविता: दशरूपालोककारेण खृष्टीयैकादशशताब्दीप्रादुर्भूतेन धनञ्जयेन, सरस्वतीकण्ठाभरणप्रणेत्रा धरराजेन भोजेन, काव्यप्रकाशकृता मम्मठभट्टेन च स्वकीयेषु ग्रन्थनिवहेषु उद्धृता दृश्यन्ते। अस्मदुत्प्रेक्षितभवभूतिकालपूर्ववर्त्तिनि न कस्मिन्नपि ग्रन्थे तदुल्लेख: दृश्यते। अनेन च अस्मदुत्प्रेक्षित: काल एव समीचीन इति मन्यामहे।

आसामप्रदेशागत: परमविधानज्ञ: श्रीमदानन्दराम: (Ananda-ram Borooah, B.A., B.C.S.) स्वदीयभवभूतिसमालोचनाप्रबन्धे ( In his essay on Bhavabhuti and his place in Sanskrit literature ) खृष्टीयपञ्चमशताब्दी एव भवभूते: समय

इति निश्चिनोति। कालनिर्णयपक्षे तदानीतं तावदुपादानं सर्वथा अकिञ्चित्करमिति सहृदयमात्रबोध्यम्। परन्तु तेन राजतरङ्गिनी-सन्निविष्टा भवभूतिसम्बन्धिनी कथा नावगता, अतस्तेन स्वमतस्थापनार्थं नानाकथा अवतारिता। राजतरङ्गिनीगतायाः कवितायाः तात्पर्यं तेन न बुद्धं, अथवा किमिति तरङ्गिनीवाक्यमधिकृत्य वाक्पतिराजोपाधिकः कश्चनापरः भवभूतिः यशोवर्म्मसदसि आसीदिति तन्मतं संगच्छेत। स्वमतस्याकिञ्चित्करत्वं जानन्नपि नानोपादानेन भ्रमात्मकं स्वमतं पुरस्करोति। कादम्बरीकथासमालोचनायान्तु (In the Falgoon issue of the Chandrika, in my essay on कादम्बरीकथा ) पूर्वमेव प्रदर्शितमस्माभिः यन्निसर्ग एवायं प्रायः यूरोपविदुषां मिथ्योपचारेण केनापि स्वाभिमतमेव पुरस्कुर्वन्ति ( See page 252 Chandrika S'aka 1815. Sa'la 1300 ).

वल्लालस्य तदीये भोजप्रबन्धे "वारानसीदेशादागतः कोऽपि भवभूतिर्नाम कविर्द्वारि तिष्ठति (Page 74, Jivananda Vidya Sagara's Edition) इति कथनेन मुञ्जराजभ्रातुष्पुत्रस्य धरराजभोजस्य सभायां भवभूतिप्रवेशनेन एकादशशताब्द्यामेव स आसीदिति निश्चिनोति। परन्तु मुञ्जसभासदा दशरूपकारेण भोजराजपूर्ववर्त्तिना तत्कृते ग्रन्थे भवभूतिकविता उद्धृता दृश्यन्ते, अनेन तु वल्लालमतं निराकृतम्। दशरूपकारस्य मुञ्जराजसमसामयिकत्वे दशरूपमेव प्रमाणम्। तत्र "आविष्कृतं मुञ्जमहीशगोष्ठी वैदग्ध्यभाजा दशरूपमेतत्"। पुरातत्त्वनिर्णये भोजप्रबन्धस्य सम्यक् निःसारतां सर्व्वैव विदग्धपरिषत् कीर्त्तयति।

( क्रमशः )

रायचतुर्धुरीणोपनाम्नः
श्रीउपेन्द्रनाथसेनस्य।

# मकरन्दिका ।

## ( पूर्व्वानुवृत्ता )

ततः पिबन्निव दयितावदनमदिरां शिखण्डिवाहनः प्रियतमावागर्थं सुचिरं मनसि विचारयन् पुनः वाक्प्रभया प्रोद्भाषयन्निव तद्देशभागं प्रत्यवादीत् । अयि मदेकजीवितभूते ! प्रिये ! मकरन्दिके ! अनवरतामृतनिस्यन्दमिव मम हृदयं प्रविशन्तं तव वदनसुधाकरविनिर्गतं वाक्प्रवाहं श्रावं श्रावं न जानामि किं प्रतिवचनीयम् ? सर्वपतिव्रतानामग्रणीस्त्वमिति चिरमवैमि । क्षणमपि मत्संसर्गविरहिता नात्मधारणक्षमेति च जानामि । किन्तु प्रिये ! महत्यस्मिन् रणसमुद्यमे पीयूषफेनपटलपाण्डुरे मलयजजलार्द्रपद्मिनीपत्रसंस्तरे अभ्यस्तशयनस्य अबलाजनस्य सर्वथा न गन्तव्यम् । अत्र वयम् अङ्गेशराजधानीं चम्पां रिपूनवरुरुत्सवः । परराष्ट्रावरोधसमये सुमहता सम्परायेन भवितव्यम् । क्व सर्वजनरञ्जिनी मधुरालापिनी मृणालिनीपेलवा शुद्धान्तचारिणी कठोरपरप्रतिविम्बपातेनापि परिम्लदिताङ्गलता, क्व च सर्वजनभीषणः अनवरतकठोरप्रहरणनिकररववधिरितश्रुतिविवरः प्रलयरङ्गभूमिरिव सतत-प्रचण्डरणरतशूरपरिषन्निधनकोलाहल-वित्रासितः प्रतिक्षणदर्शनागतशमनरङ्गरसः वीरवीभत्सरसैकप्राङ्गनदेशः समरभूमिभागः । उद्यानशोभैकास्पदविटपिकोमलाङ्कप्रसाधिव्रततीमञ्जरी किं कठोरवैश्वानरज्वालां सहेत । अनवरतकलहंसकुलकलपरिवाराच्छोदसरोवराङ्करुहा कमलकलिका सततानन्ततरङ्गसन्तानविक्षुब्ध पारावारे किमतिजीवेत् । निसर्गविरोधिनी चेयं पयःपावकयोरिव अङ्गनाजनपरिशोभितायाः अवरोधपुर्य्याः कठोरखङ्गपट्टिसतोमरपरिशोभिताया सततपरहननैककार्य्यरतायाः रणभूमेश्च एकत्र वृत्तिः ।

तदुत्सृज मदनुगमनानुबन्धं जीवय च मां त्वदनुबन्धावधीरण भीरुम्। अवधारय तावत्, अनार्य्यजनोचिताचरणकल्पनया अवधीरितमङ्गेशेन तावन्महीपालमण्डलम्। समायातस्तच्छासन-समयः। न युज्यते सम्प्रति वृथा समयातिपातः। देहि मे प्रतिवचनं समरयानाय, रक्ष च क्षत्रधर्म्मम्। नरपतितनुजादूषणाभिलाषिणम् अनार्य्यमङ्गपालहतकं शिष्ट्वा तदाचरणोचितं प्रत्यागत्य च पुनरचिरप्रत्यावृत्तप्रवासीव त्वदङ्कशायिनमात्मानं करिष्यामि। प्राणाधिके! न दुरापस्तवविरहविनोदनोपायः। इत आरभ्य मनोवाक्कायकर्म्मभिः सर्वमङ्गलविधात्रीम् अबलाजनैकशरणां सर्वविघ्नविनाशिनीं चरणरजःपवित्रितसुरासुरमनुजवृन्दोत्तमाङ्गां त्रिभुवनैकगुरुहरमहिषीं समरदेवीं चण्डिकाम् अहर्दिवम् अनन्यशरणा क्षेमकाङ्क्षिणी प्रपद्यस्व आराधनपरा। देवीप्रसादात् अचिरेणैव पुनः दयितया त्वया समागमो भवितेति शूरो नीरराव। ततस्तद्वचनावसाने मुक्तमुक्ताफलधवललोचनजललवा प्रत्यवादीत् कलिङ्गराजकन्यका—"आर्य्यपुत्र! त्वया सह विचरन्त्याः न मे कठोररनाङ्गनमपि पीड़ामुत्पादयिष्यति। त्वत् सनाथाहं विषरसमपि पीयूषपानकमिव पिबामि। किन्तु त्वदादेशमतिक्रम्य किमन्यद्वक्तुं क्षमा इयं त्वदङ्गविलम्बिनी लतिका। अद्यप्रभृति त्वदादेशादनन्यशरणया मया सर्वक्षेमङ्करी सर्वदुरितविनाशिनी देवीचण्डिकापादपद्मृणालिनी अवलम्बनीया। तद्गच्छामि चण्डिकायतनमिति विरराम। निपीय तावद्दयितावाचम् अक्षरपंक्तिव्याजेन विनिर्गच्छन्तीं सुधाधारां शूरशेखरः शिखण्डिवाहनः गच्छन् मुदः परां कोटिं यावत् स्वीयां प्राणाधिकां दयितां सुगाढ़माश्लिष्यति तावदुत्तरतीरप्रदेशादागच्छन्तं वीणाझङ्कारविमिश्रं मानुषोत्तरम् अक्षरमालाव्याजेन सुधाधारां विकिरन्तं तमेव गीतशब्दं पुनरश्रौषीत्।

अथातिमनोहरं तद्गीतशब्दमाकर्ण्य कुतोऽस्मिन् देशे एतादृशस्य अमानुषगीतध्वनेः सम्भूतिरिति परमकुतूहलपरवशः उत्थाप्यात्मानं तस्माद् वेदिकास्तरणात् तस्यामेव गीतसंपातकृतपिशुनायां दिशि प्रयत्नव्यापृतलोचनोऽपि अतिदवीयस्तया तस्य देशस्य न किञ्चिदपश्यत्। तमेव केवलं मृदुसमीरणपरिचालितं मनोमोहनं गीतशब्दमशृणोत्। मानवजनसहभवकौतुकवशात् तस्य गीतध्वनेः प्रभवजिज्ञासया कृतगमनानुबन्धः दयितासनाथः गीतश्रवणकुतूहलमाकृष्टैररण्यमृगयूथैरुपदिश्यमानमार्गः अशेषकुसुममकरन्दसुगन्धेन विविधविटपिशतविचारिणा मान्द्येन रजनीप्राग्भागप्रवृत्तेन समीरणेन प्रसाद्यमानः तं गीतध्वनिमुद्दिश्याभिप्रतस्थे।

क्रमेण च तं गीतध्वनिमनुसरतस्तस्य पत्नीद्वितीयस्य कियद्दूरमतिक्रामतः जाह्नव्याः पूर्वकच्छदेशेन उपसर्पतः कश्चिन्निविड़कान्तार आपतितः नयनयोः पुरतः। तेन च गच्छता कियन्तमध्वानं गीतशब्दमाहात्म्येनाकृष्टेनेव परमरमणीया विन्ध्यपादविशीर्णा अशेषतरुगुल्मवल्लीविराजमाना नानाविधकुसुमपरिकरपरिमलसम्भारसुवासिता, शाखिविटपेषु अपरिसंख्येयकुलायपरिचितविहङ्गधृतावासा विविधमधुराव्यक्तकलस्वनप्रकटिताशेषमृगपरिकरविचरणदेशा अतिप्रशस्ता बहुयोजनशतव्यापृतदेहा अनवरतप्रियतमातुरजीवञ्जीवाक्रन्दित-प्रकटितप्रत्यासन्नसुविमलवारिसनाथ-सरोवरा काचन शिला दृष्टिपथमापतिता। आगत्य च तं प्रदेशं शिखण्डिवाहनः शिलारोहनमारभमाणः प्रत्यासन्नं किञ्चन पद्मसर अद्राक्षीत्। याममात्रमिव गतोऽधुना भगवान् श्वेतभानुः, इयतैव कालेन विरतिं गतः यावदीयमत्तकलहंसकोलाहलः। अथ विकसिताशेषकुमुदकह्लारः तनौ प्रतिबिम्बिततारासनाथतारानाथः अशेषमणिरत्नराजिप्रसाधितः काञ्चनकुट्टिम इव तत् सरोवरपृष्ठभागः तदा समजायत। कुसुमपरिमलवाही समीरणो

मृदुमन्दं सञ्चालितो निद्रापयतीव तत्सरस्तीरधृतवासान् सर्वसत्त्वनिवहान्। तं सरोवरं तथा तत्तीरदेशमशेषम् आलोकयतो मनसि समुपजातं यथा दयिताबान्धवनिवहपरिवृतः ऋतुपतिर्वसन्तः सततमत्र विराजते इति। अस्य श्रीनारायणशैलस्य निम्ने भूमिभागे तस्य च सरसः दक्षिणे तीरे अतिमनोरमदर्शनं भूतलभागसन्निविष्टम् अतिधवलं भगवतो रमावल्लभस्य सिद्धायतनमेकमपश्यत्। तत्र च सुविमलस्फाटिकघटितविग्रहं सकलसुरासुरमुनिमनुजवृन्दवन्दनीयं, त्रिभुवननाथं, स्वचरणरजःपविचितत्रिदशासुरमौलिं रमासनाथं भगवन्तं नारायणम् आलोकितवान्। तस्य च दक्षिणां मूर्त्तिमाश्रित्याभिमुखमासीनां पीयूषफेनपटलपाण्डुरं श्वेतवल्कलं वसानां तिसृभिरनाम्लानचन्दनविरचितपुण्ड्रकराजिभिर्विराजितललाटाजिरां स्कन्धावलम्बिना सुधाफेनधवलेन योगपट्टकेन विरचितवैकक्षकां उपरचितब्रह्मासनां तनुच्छायानुलिप्तभूतलां विग्रहवतीं भगवतीं तपोदेवतामिव, तपोऽनुष्ठानपरां द्वितीयामिव पार्वतीं, हरकोपभस्मीकृतकामदेवप्राप्तये धृतब्रह्मव्रतां रतिमिव, प्रतिपन्नरथाङ्गपाणिव्रतां, क्षितितलनिहितजानुकरकमलाम् अतिमनोहरवीणावादनपुरःसरं देवदेवनारायणस्तुतिं वाचयन्तीं चारुसर्वाङ्गीं त्रिभुवनैकलावण्यमयीं काञ्चन कन्यकां यौवनमध्यगतामपश्यत्। दृष्ट्वैवेनां युवकोऽचिन्तयत् देवो कमला किं रमणीयतया अस्य प्रदेशस्य अनभिलषितवैकुण्ठवासा अत्रोपरचितात्मनिवासा भर्तृवियोगविधुरा स्वयमेव धृतनारायणाराधनव्रता इति।

ततः परमरमणीयतया तत्प्रदेशस्य परमप्रीतस्य राजसूनोः अदृष्टपूर्वं अनुत्प्रेक्षितपूर्वं तथा अश्रुतपूर्वं नरलोकदर्शनातिगं तत् दृश्यमालोचयतः मनस्यजायत—"अहो! अतिमहानयम् आश्चर्याणामवकाशः। एकपद एव साफल्यं गतं तावन्मानवजन्म। सार्थकीभूताः करणवृत्तयः। अहो वेधसः सृष्टिमाहात्म्यम्। केयम् अमा-

नुषाकृतिः मनोरमा ? कथमनया अपास्य सर्वाभरणानि अङ्गीकृतं कठोरं ब्रह्मचर्य्यम्। मन्ये तपोदेवता स्वव्रतानुष्ठानप्रदर्शनाय धृत-नारीविग्रहा नारायणस्तोत्रं वाचयति, नेयं अस्मादृशा मानवी। भूतलात् प्रभातरलज्योतिषः सम्भूतिर्न जायेत। इत्येवंविधैर्विविध-कल्पनाशतैः सन्दोलितहृदयः प्रतीक्ष्यमाणः सङ्गीतपरिसमाप्तेरवसरं तत्रैव अन्यतमं स्तम्भमाश्रित्य दयितासनाथः उपविष्टः।

( क्रमशः )

रायेर काठी } रायचतुर्धुरीणोपनाम्नः श्रीमद् उपेन्द्रनाथसेनस्य

---

## महाप्रभु-श्रीगौराङ्गदेवस्य जीवनचरितम्।

( पूर्वप्रकाशितात्परम् )

सायाह्ने नगरकीर्त्तनं भविष्यति, पश्यामि को वा समुद्यति कीर्त्तन-वाधने। अद्य स्वयमेव काजिनिधनं कर्त्तव्यम्।" नवद्वीपपत्तने तदानीं चैतन्यदलमेव प्रबलं, चैतन्यस्यानुमतिमात्रेण परःसहस्रा वैष्णवास्तृणानीव प्राणान् परिहातुमपि नापेक्षन्ते। सर्वैरवधारितं संग्राम एव भविष्यति, काजिनिधनं निश्चितमेव। धर्म्मः समाहतः, धर्म्मप्राणा वैष्णवा उन्मत्तप्रायाः, तेषां तृणानीव प्राणाः, सर्वैरेव मृत्युभयं विसर्जितमासीत्। अजायत च तेषां कथञ्चित् समाश्वासो गौराङ्गवचनेन। समुपस्थिते सायाह्ने सर्वे वैष्णवाः समायाताः। गौराङ्गचन्द्रस्तु सम्प्रदायत्रयं विधाय वहिरगच्छत् नगरकीर्त्तनाय। सर्वप्रथममेव हरिदाससम्प्रदायः, तदनन्तरमाचार्य्यसम्प्रदायः, ततस्तु चैतन्यचन्द्रः स्वयमेव स्वकीयभक्तवृन्दैरनुगम्यमानो हरिनामकीर्त्तने उन्मत्तप्रायोऽभवत्। क्रमेण प्रतिगृहं गृहवासिनो नामामृतेन

परितोषयत् प्रबलं वैष्णवदलं काजिभवनसकाशमेव समायातम्। उद्धतेन केनचिद् वैष्णवदलेन पुष्पोद्यानभङ्गादिभिरपकृतः कटु-कषायेण वचसा बहुशो निर्भर्त्सितश्च, काजिना तथापि तेषां प्रतिकूलताचरणाय बहिर्नोपस्थितम्। विवादः परापकारः परनिन्दनं वा न चैतन्यचन्द्रस्याभिलषितं, तेन तु शान्तेन वचसा क्षिप्तप्रान् वैष्णवान् निवारयता शान्तप्रकृतिः कश्चित् काजिनमाकारयितुं प्रेषितः। स हि संवादमात्रेणैव चैतन्यचरणमूलं समायातो दूरादेवावनतमस्तकश्चाभवत्। निरभिमानो गौराङ्गचन्द्रस्तु परापकार-निरतं निकृष्टप्रायमपि काजिनं सहस्तेन सबहुमानमुपवेशयन्निद-मकथयत्। "काजिन्! अद्य भवतामभ्यागतोऽस्मि, अभ्यागताय समुपचितमातिथेयमकृत्वा पलायितोऽसि, किमिदमुचितमनुष्ठित-मासीत्?।" काजिना तु विनीतस्वरेणाभिहितम्, "प्रभो! भीतेन मया एवमनुष्ठितं, ग्रामसम्बन्धाद् भागिनेयोऽसि, मां प्रति क्रुद्धेन न भवितव्यम्।" मर्म्माहतं प्रबलवैष्णवदलं समुत्साहितम्। चैतन्य-भ्रूभङ्गीमात्रेणैव सभवनं सग्रामं वा काजिनं व्यापादयितुं समर्थम्। परन्तु अपरधर्म्मप्रचारकेभ्यो विलक्षणा हि प्रकृतिश्चैतन्यचन्द्रस्य, अभीप्सितञ्च तस्य स्वदेशवासिनां शोणितपातं विना केवलेनोपदेश-बलेन धर्म्मप्रचारणम्। चैतन्यस्तु वचनमात्रेणैव काजिनं सादर-मग्रहीत् गतरोषश्चाभवत्। यावनिकधर्म्मशास्त्राणां पारदर्शिना काजिना चैतन्यस्य धर्म्मालापः, हिंसा सर्वानर्थकरी, आत्मनः समाजस्य वा मङ्गलमभिलाषुकानां मनुजानां सा सर्वैव परिहर-णीया, वेदपुराणादिषु हिन्दुशास्त्रेषु निषिद्धा, यावनिकशास्त्रेष्वपि निवृत्तिमार्गे गोवधादिकं प्रतिषिद्धमेव इत्यादि विचारश्च जायत। युक्तिबहुलेन हृदयहारिणा चैतन्यवाक्येन यावनिकरक्तशोणिताभ्यां समुत्पन्नस्य आबाल्याद् यवनधर्म्मपरिगृहीतस्यापि तस्य क्षणेनैव हिंसादिबुद्धिरलुप्यत वैष्णवधर्म्मानुरागश्चाभवत्। यस्य लगुड़ाघातेन

कति कति धर्म्मप्राणा हिन्दवो विसर्जितप्राणा आसन्, येन पूर्वं द्युरेव शतसहस्राणि कीर्त्तनमृदङ्गा भग्नाः, यस्य च प्रभावेण नवद्वीपपत्तनं प्रतिहतकीर्त्तनं विषादपूर्णञ्चाभवत्; संप्रति स एव गूढ़संस्कारवैष्णवतया परिचीयते, गलन्ति च हरिनाममात्रेणैव नयनजलानि॥ चैतन्यचन्द्रस्य एवमेव काजिनिधनं (१) विधाय कीर्त्तनेन नामोपदेशेन च सर्वानेव पुरवासिनः समुल्लाहयन् सहर्षं प्रत्यवर्त्तत। एतावदेव काजिवृत्तान्तं वृन्दावनदासादिभिर्वैष्णवैरचनालौल्येन विकृतप्रायं प्रकारान्तरेण वर्णितमासीत्।

एवमेव कतिदिनेषु गच्छत्सु नवद्वीपपत्तने हरिनामकीर्त्तनं निर्वाधं, चैतन्यमतानुसारि वैष्णवदलमेव प्रवलं चाभवत्। नवद्वीपप्रभुसदृशेन काजिनापि चैतन्यमतमेवावलम्बितम्। समाजगौरववतां ब्राह्मणादीनां हिन्दूनां हृदयविश्वासो यत् समाजबन्धनमेव प्रधानं धर्म्मकारणं, विनिहते केनचित् कारणेन शिथिलिते वा समाजबन्धने धर्म्मनाशः हिन्दूनां सर्वनाशश्च भवति। एकता सम्पादनं चैतन्यचन्द्रस्य धर्म्मप्रचारणञ्च जायेत तेषां हृदयविदारि शूलसदृशम्। ते तु प्रथममेव यथाबलं चैतन्यचन्द्रं हिंसितवन्तः। क्रमेण प्रवले चैतन्यदले हिंसितुमसमर्था दुर्वृत्तं काजिनमेव चैतन्यहिंसनाय प्ररोचितवन्तः। उपदेशप्रभावात् ईश्वरकृपया वा काजिनि चैतन्यपक्षपातिनि हिन्दवो निरुपाया मर्म्माहताश्च समाजनियमेन नितरामपीड़यन्त गौराङ्गदलम्, स च समाजनियमेन कर्षितः क्रमेण समाजच्युतो वा समाजबन्धनच्छेदनमेवाभिलषित-

---

(१) स्वधर्म्मपरिहारेण धर्म्मान्तरग्रहणं मरणमेव। भारतवासिनः प्राचीना आर्य्या दुर्वृत्तानामपि स्वदेशवासिनां रक्तपातमन्तरेण शान्तिसम्भवे इममेव पन्थानमवलम्बितवन्तः। अतएव सूर्य्यवंशप्रभवेण सगरेणापि समाजा दुराचाराः केचन क्षत्रिया म्लेच्छतां प्रापिताः (हरिवंशे १४।१९) एतादृश प्राचीनमतस्य पक्षपातिना चैतन्येनापि तदेवानुष्ठितमिति मतम्।

वान्। इदमेव चैतन्यस्य बालसन्यासकारणमित्येवानुमीयतेऽस्माभिः। पश्यन्तु चरितामृते आदिलीला १७ परिच्छेदे काजिवृत्तान्तम् (२) भवतु एतेन कारणान्तरेण वा परमकारुणिकस्य धर्म्मप्रचारक-चैतन्यचन्द्रस्य बाल्ये एव समुन्मूलितः संसारः, केवलेन जनन्या आग्रहातिशयेन संसारं निरवशेषं परित्यक्तुमसमर्थो निवसति स्म जीवन्मुक्तप्रायः। तेन च संसारः समाजबन्धनं वा तादृशधर्म्मप्रचारस्य प्रतिकूलमिति विचारितं, परन्तु जननीसकाशे न सम्भवि संन्यास-ग्रहणम्। ततस्तु नित्यानन्दचन्द्रशेखराचार्य्यमुकुन्ददत्तैः सह "काटोया" नाम पत्तने समुपस्थितः सन्यासधर्म्मेण दीक्षित आसीत्। सुगृहीतनाम्ना अद्वितीयेन केशवभारतीसन्यासिना चैतन्यः सन्यास-धर्म्मे दीक्षितः। पञ्चविंशतिवर्षे वयसि १४३१—१४३२ शकाब्दे प्रभुं गम्भीराकृतिं बालसन्यासिनं तं सर्वे भक्तवृन्दाः पूर्वतः समधिकेन भक्तिप्रवणचेतसा गृहीतवन्तः। क्रमेणापरेऽपि हिन्दवः समभवन् चैतन्यपक्षपातिनः। प्रतिदिनमेव सन्यासधर्म्मावलम्बिनो गौराङ्गस्य धर्म्मभावः भक्तिरसश्चावर्द्धत नामकीर्त्तनं धर्म्मप्रचारणञ्च निर्बाध-मभवत्। एतावदेव आदिलीला नाम वृत्तान्तं चैतन्यचन्द्रस्य।

(क्रमशः)

श्रीलक्ष्मीचन्द्रशर्म्मसांख्यतीर्थः।

---

(२) चरितामृतमते तु वैष्णवधर्म्मविरोधिनां चैतन्यशिष्याणामन्येषाञ्चोद्धरणाय अर्थात् अवलम्बिते सन्यासे विद्वेषाभावात् सर्व्वैरेव साम्येन चैतन्यस्य धर्म्मोपदेशः सादरं ग्रहीष्यते इति मन्वान एव प्रभुः सन्यासं गृहीतवान्। इति

# नीतिसंग्रहः ।

CONTINUED FROM PAGE 48.

( कथासरित्सागरे सुभाषितानि )

२२ तपोऽधीना हि सम्पदः ।

Riches are subject to religious devotion.

२३ न हि मोहयति प्राज्ञं लक्ष्मीर्मरुमरीचिका ।

The wise are never led astray by the wily temptations of the riches of the mirage of the sandy deserts.

२४ अकाण्डपातोपनता कं न लक्ष्मीर्विमोहयेत् ?

Who is not charmed at an unexpected turn of good fortune ?

२५ मृदवो हि द्विजातयः ।

The twiceborn are indeed gentle.

२६ पञ्चभिर्मिलितैः किं तज्जगतीह न साध्यते ?

What in the world can not be achieved by the combined efforts of a group of five ?

२७ एकचित्तं द्वयोरेवं किमसाध्यं भवेदिति ?

What is unattainable by the two who are of one mind ?

२८ जायन्ते वत मूढानां संवादा अपि तादृशाः ।

The quarrels of the ignorant are founded on trifles.

२९ या यस्याभिमता ( मूर्ख ! ) सुरूपा तस्य सा भवेत् ।

The object of one's love is indeed the fairest in his eyes.

३० न हि धर्मोन्यथा भवेत्।

Religion is religion and it can't be anything else which is irreligious.

३१ प्रतिभातश्च पश्यन्ति सर्वं प्रज्ञावतां धियः।

The wise can see every thing by their genius.

३२ शीलं हि विदुषां धनम्।

The true wealth of the learned is morality.

३३ प्रियबन्धुविनाशोत्थः शोकाग्निः कं न तापयेत्?

Who is not distressed with the burning fire of affliction caused by the death of his dear relatives?

३४ आसंसारं जगत्यस्मिन्नेका नित्या ह्यनित्यता।

Nothing is immortal in this world except mortality itself.

पु० गोपीनाथ शर्मा— जयपुर।

---

## प्रश्नोत्तरादर्शः।

(कलिकाता-विश्वविद्यालयस्य प्रवेशिकायाः।)

चन्द्रो यदा सपरिजनः रत्नमालालोभाकुलः कुलसंचयकृद्-वानरयूथपतिना राक्षसावासकृदसकाशमागत्य मालालाभाय स्वजनान् तत्र प्रेषितवान्, भक्षिताश्च राक्षसेन ते कृदान्न यदा निर्गच्छन्ति स्म तदा स्वपरिजनानिष्टचिन्ताक्लिष्टो राजा चतुरं वानरदलपतिं किमितीत्यादिकं वाचमुवाच।

2. QUESTION.

(a) को हि नामाप्रियं पुत्रं त्यजेदनपकारिणम्।
प्रतिश्रुत्य सतां मध्ये यौवराज्याभिषेचनम्॥

(b) न हि सिंहः परालीढमामिषं भोक्तुमिच्छति।
नृसिंहो भरतालीढं रामो राज्यं न भोक्ष्यते॥

(c) दिव्यैर्गुणगणैर्युक्तः पुत्रस्ते देवि राघवः ।
पितुर्नियोगे तिष्ठन्तं तं न शोचितुमर्हसि ॥

(1) In (a) give a synonym for अनपकारिणम् । In what vibhakti is सताम् in the second half of (a), and why ?

(2) Give the *anvaya* or Syntactical concord of extract (b)

(3) In (c) give a synonymous expression for पितुर्नियोगे तिष्ठन्तं What is the meaning of दिव्यैः here ?

ANSWER.

(1) अनपकारिणम्—अननिष्टसाधकं, निरपराधम् । सतामित्यत्र सम्बन्धे षष्ठी विभक्तिः ।

(2) सिंहः परालीढ़म् आमिषं भोक्तुं न हि इच्छति । (तथा) नृसिंहो रामः भरतालीढ़ं राज्यं न भोक्ष्यते ।

(3) तातस्यादिष्टकार्य्ये नियुक्तम् इति जनकस्य आदेशे वर्त्तमानम् इति वा । दिव्यैर्देवोचितैः मनोहरैर्वा ।

3. QUESTION.

शरे तु तस्मिन् व्यपनीतमात्रे हिक्कोद्गतश्वाससमुद्धर्त्तखिन्नः ।
विचेष्टमानः परिवृत्तनेत्रः प्राणानमुञ्चत् स मुनेस्तनूजः ॥

Turn the above into prose using as many words of your own as you can.

ANSWER.

परन्तु दशरथत्यक्ते सायके (तदङ्गात्) निःसारिते एव सति स मुनेः सुतः सक्लेशोद्गारैः सह उत्थितैः दीर्घनिश्वासैः क्षणकालेनैव कातरः सन् अङ्गानि सबलं सञ्चालयन् उद्भ्रान्तलोचनश्च सन् असून् अत्यजत् ।

4. (अनावश्यकतया तुरीय: प्रश्न: नोद्धृत:)

5. QUESTION.

(दीर्घत्वादस्य प्रश्नस्य चतुर्षु श्लोकेषु एकएव दृष्टान्तरूपेण परिगृहीत: )

(d) तस्मात् सम्प्रार्थयेऽहं ते तनयां मनुजाधिप।
सुषात्वेनोत्तरां राजन् प्रतिगृह्णामि ते सुताम् ॥

(1) Explain the above (four) Sloka (s) in Sanskrit.

(2) Name the roots of लून, यान्ति, स्मयमान: and प्रतिगृह्णामि, and give their second person singular in the perfect tense ('लिट्)।

(3) (परित्यक्तश्लोकसम्बद्धत्वात् न गृहीत:)

ANSWER.

प्रतिगृह्णातूत्तरां सव्यसाचीति कथिते विराटे अर्ज्जुनस्तं कथयति—

हे मनुजाधिप !, मनोर्जायन्ते ये ते मनुजा मनुष्या: तेषामधिपो राजा, हे नरपते ! तस्मात् तव कन्याया: मयि आचार्य्यवद्भक्ते: सम्मानाच्च, अहं ते तव तनयां दुहितरं सम्प्रार्थये याचे, तव कन्यां लब्धुकामोऽस्मीति भाव:। परं न पत्नीत्वेनेत्याह, हे राजन् ! भूमिप !, ते तव सुतां कन्यकाम् उत्तरां तन्नाम्नीं ते तनुजामित्यर्थ:। सुषात्वेन पुत्रवधूरूपेण प्रतिगृह्णामि स्वीकरोमि। कन्यावत् शिष्यावद्वा तस्या: व्यवहारात् तां पत्नीरूपेणाहं परिग्रहीतुमशक्त: परं पुत्रेण मे तथा ग्राहयिष्यामीति भाव:।

(2) लून इति लूधातोर्निष्पन्नं तस्य च लिटि मध्यमपुरुषैकवचने लुलविथ

| | | | | |
|---|---|---|---|---|
| यान्ति ... या | ... | ... | ... | { ययिथ / ययाथ |
| स्मयमान: स्मि | ... | ... | ... | सिस्मिये |
| संगृह्णामि ग्रह | ... | ... | ... | { जग्रहिथ |

6. QUESTION.

Translate into Sanskrit ;—

The stag came again, was ensnared, and said to himself 'O ! who can save me from this snare which is like the snare of death excepting a friend'. Then the jackal came to that spot, looked at his plight and thought.

ANSWER.

मृगोऽसौ पुनराजगाम, पाशबद्धो बभूव, स्वगतमुवाच च अहो को मां मित्रादृते मरणपाशसमात् अतः पाशात् रक्षितुं समर्थः। अतोऽसौ शृगालः तत्स्थानमाजगाम तस्यावस्थाम् अवलोक्य च चिन्तयामास।

( क्रमशः। )

श्रीज्ञानशरणचक्रवर्त्ती।

---

## ब्रह्मचर्य्यम्।

अर्वागेव वर्णधर्मव्यवस्थाया ब्राह्मणानेव वर्णेषु त्रिषु प्राधान्यं प्रापितवान् कोऽपि परमपुरुषः न खल्वेतेषु पक्षपातया न वा अपरेषु द्रोहयुजा धियेति। तत्र कारणमपि दर्शितं भगवता। यथाह गीतायाम्—४।१३।

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम्॥"

तत्र कारणमप्यनुमाय किञ्चित् विचार्य्यते तथाहि—
तत्र ब्राह्मणो ब्रह्मणो मुखात् क्षत्रियो बाहुभ्यां वैश्य ऊरुभ्यां शूद्रास्तु

पद्भ्यामिति (१) विदां कुर्वन्तु तत्र भवन्त: उपादानकारणगुणा उपादेये संक्रामन्ते, यथा नीलैर्नीलम् शुक्लै: शुक्लं लोहितैश्च सूत्रैर्लोहितं वसनं जायत इति।

अङ्गेषु सर्वेषु शिर एव प्रधानम्, व्यवहरति च लोके तथा, आज्ञा ते शिरसा धार्य्यते, पादौ ते शिरसा वन्द्येते, इति शिर एव प्रधानम्। तथा चाभिधीयते—उत्तमाङ्गं शिर इति। कथमिति ज्ञानाकरत्वात् शिरस इति। चत्वारि सत्त्वगुणप्रधानानि ज्ञानेन्द्रियाणि शिर एवाधितिष्ठन्ति, श्रोत्रचक्षुरसनघ्राणाख्यानि त्वक् पुन: शिरसि अन्यस्मिन्नप्यङ्गेऽस्ति।

तस्मादेव ज्ञानाकरात् ब्रह्मवदनात् ब्राह्मणा अजायन्त ज्ञानगुणप्रधाना:। तस्मान्नतेषु तथा भुजवार्य्यं उरुवीर्य्यं वा विद्यते यथा-ज्ञानवीर्य्यम्। तथा बाहुजानां बाहुवीर्य्यम् उरुजातानामुरुवीर्य्यं वाणिज्यव्यपदेशेन देशान्तराटनमित्यन्यदेतत्। ज्ञानन्तु तुष्णीम्भावान्नो जृम्भते, इति ब्राह्मणा वेदादिकान् उदात्तानुदात्तस्वरितै: स्वरैरधीयन्ते अध्यापयन्ति, विरचयन्ति ग्रन्थान्, उपदिशन्ति धर्म्मान्, अनुशासति तत्त्वानि। महाकविकालिदासोऽपि उपजीव्यैतदाह कुमारे—।५।४०।

"अतोऽत्र किञ्चिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापल:।
अयं जन: प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हति॥"

किमधिकं जगदुपकृतये उत्सृजन्ति दीर्घजीवनं विसृजन्ति च विषयसुखानि सञ्चिन्वन्ति ब्राह्मं तेज: कठोरैस्तपोभि: येभ्यो भूरिविक्रान्ता राजानोऽपि बिभ्यति, शिरसा पादरज: स्वीकुर्वते, कृतार्थम्मन्यन्ते चात्मानमिति। किमिति तत्र कारणं केवलब्राह्मण्यं ब्रह्मचर्य्यमिति।

(क्रमश:)

---

ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यत: कृत:।
उरू तदस्य वैश्यस्य पद्भ्यां शूद्रोऽजायत॥ इति श्रुति:।

श्रीश्रीदुर्गाशरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भासावतरणिका ।

दुश्चिन्तितौ पदमिहार्पयतीति दुर्गा
तामाश्विने विमनसोऽपि समर्च्चयन्ति ।
चन्द्रः करैः शुचिजलैः सर ऋत्वचक्रै-
र्व्योमाम्बुजै रविररव्यमसीमपुष्पैः ॥

## उद्भट-श्लोकाः ।

'अवतु वो गिरिसुता शशिभृतः प्रियतमा ।
वसतु ते हृदि सदा भगवतः पदयुगम् ॥ ८९ ॥"

'उक्तिर्नान्या स्फुरति वदने ध्यानमन्यन्न चास्ते
पश्यत्यन्यं न खलु नयनं न श्रवोऽन्यच्छृणोति ।
श्यामं दृष्ट्वा पथि सचकिते रीतिरेतावती नो
वृन्दारण्ये चिरपरिचिताः केन जीवन्ति नार्य्यः ॥ ९० ॥"

'गोप्या न दोषो मथुराङ्गनानां खलस्य कृष्णस्य चरीतिरेषा ।
विपर्य्ययो येन कृतः खपित्रोः किं तस्य भार्य्यापरिवर्त्तनेन ॥ ९१ ॥"

'कराविव शरीरस्य चक्षुषोरिव पक्ष्मणी ।
अनिवेद्य हितं कुर्य्यात्तन्मित्रं मित्रमुच्यते ॥ ९२ ॥"

# श्रीलक्ष्मीः श्रीसरस्वती ।

यासौ धनाधिष्ठात्री देवी यं यमनुगृह्णाति स लक्ष्मीवान् कथ्यते। परन्तु ये ये खलु त्रितलं प्रासादमधितिष्ठन्ति घोटकशकटं वा द्रावयन्ति त एव लक्ष्मीवन्तः सुखिनश्च नैवं ब्रूमः शास्त्रकिङ्कराः।

सुखं खलु ऐहिकं पारत्रिकञ्च भवेत्। सा च भगवती केषाञ्चि-देहिकस्य केषाञ्चिद्वा पारत्रिकस्य अन्येषां वा इहामुत्रस्य च सुखस्य निदानं स्यात्। यस्तु आत्मम्भरिः स्वयमेव केवलमात्मभोगाय यतते, तस्यैहिकमेव ददाति सुखम्। यस्तु अमितव्ययी अतिदाता च स पारत्रिकमेव भोक्ष्यति सुखम्। यः पुनः साधुवृत्तिः स्वयं भुनक्ति परानपि भोजयति, स्वधर्ममाचरति स ऐहिकं पारत्रिकञ्च लक्ष्मी-प्रसादात् सुखमनुभवति।

बहव एवं ब्रुवते यदनेके न पितरौ बिभ्रते स्थविरौ, न देवान् यजन्ते न च पुण्यकर्म समाचरन्ति, हिन्दवोऽपि गोरसेन अलब्ध-तृप्तयः गवास्थीन्यपि मड़मड़ायन्ते, तेऽपि त्रितलहर्म्यमधिवसन्ति, घोटकशकटेन विहरन्ति, राजप्रसादं भजन्ते, गौरवमर्जयन्ति च, सुतरां त एव लक्ष्मीवन्तः सुखिनश्च। सा च भगवती तानेव दुरा-चारान् यथा अतितरामनुगृह्णाति न तथा सद्वृत्तान् स्वधर्ममनु-तिष्ठतो हिन्दून्। गोमयोपलिप्तं हिन्दुकुट्टिममपहाय विरागात् वंशपट्टिकाकटादिभिः सर्वतः समास्तृतकुट्टिमं त्रितलं हर्म्यतलं समा-श्रृणोति, सा जिघ्रति च सादरं कलञ्जवर्त्तिधूपं षोड़शाङ्गधूपविरक्ता।

सत्यमेतदापातदृष्ट्या प्रतिभाति, वस्तुतस्तु सा भगवती सुकृतिनां भवने लक्ष्मीरपि पापात्मनां गेहे तामसी विष्णुशक्तिरलक्ष्मीरेव (१)

---

(१) या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः पापात्मनां कृतधियां हृदयेषु बुद्धिः।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा तां त्वां नताः स्म परिपालय देवि ! विश्वम् ॥
इति देवीमाहात्म्ये।

लोके निन्दामुत्पादयति, मृतानाञ्च तेषां दुरुत्तरं नरकं रचयति। सात्त्विक-राजसिक-तामसिकभेदेन धनस्य त्रैविध्यात् (१) तदधिष्ठात्री लक्ष्मीरपि सात्त्विकी राजसिकी तामसिकी च भवति। तत्र तामसिकी लक्ष्मीरेवालक्ष्मीः इहामुत्र च जुगुप्सानरकविधायिनी। अतएव स्थूलदृष्ट्या भ्रष्टधर्म्माणां हर्म्यादिदर्शनात् तेषां लक्ष्मीः प्रमत्तानां मदिरेव, दरिद्राणां सुप्तानां गन्धर्वनगरमिव, क्षिप्तानां स्खलद्गतिरिव न परमार्थतः सुखमुत्पादयति, ते खलु अधार्मिका धनिनः अनागसोऽपि प्रहरन्ति, अल्पापराधानपि शिरसि घ्नन्ति, गुरूनवजानन्ति। राजसिकी लक्ष्मीस्तु कुषीदादीनामादानादौ किञ्चित्क्लेशकर्य्यपि वैश्यस्य शूद्रस्य च धार्मिकस्य सुखाय कल्पते।

---

ततः कोपयुता जाता महालक्ष्मीस्तमोगुणा।
तामसी तु तदा शक्तिस्तस्या देहे समाविशत्॥   इति देवीभागवते।१।५।७८।

(१) धनं त्रिविधं ज्ञेयं शुक्लं शवलमेव च।
कृष्णञ्च तस्य विज्ञेयो विभागः सप्तधा पृथक्॥ इति गारुड़े २०५।८७ (क्वचित् २१०। क्वचित् २१६ अध्याये।)

पार्श्विकद्यूतचौर्य्यार्त्ति प्रतिरूपकसाहसैः।
व्याजेनोपार्जितं यत्तु तत् कृष्णं समुदाहृतम्॥
कुषीदकृषिवाणिज्य शुल्कगानानुवृत्तिभिः।
कृतोपकारादाप्तञ्च राजसं समुदाहृतम्॥
श्रुतशौर्य्यतपः कन्या शिष्य याज्यान्वयागतम्।
धनं सप्तविधं शुद्धं मुनिभिः समुदाहृतम्॥ (क) इति शुद्धितत्त्वे देवलनारदौ।

---

(क) पार्श्विकः पापतया योऽर्जयति। आर्त्त्या परपीड़या। प्रतिरूपकेण कृत्रिमरत्नादिना। साहसेन समुद्रयानगिर्य्यारोहणादिना। व्याजेन ब्राह्मणवेशेन शूद्रादिना। कृष्णं तामसम्। कुषीदेन वृद्धिग्रहणेन। अनुवृत्त्या सेवया। श्रुतेन अध्ययनेन। शौर्य्येण जयादिना। कन्यागतं श्वशुरादेर्लब्धम्। शिष्यागतं गुरुदक्षिणादिना। याज्यागतं पौरोहित्येन लब्धम्। अन्वयागतम् उत्तराधिकारिक्रमेण लब्धं शुद्धं सात्त्विकम्।

सात्त्विकी लक्ष्मीस्तु इहपरत्र च परमं सुखं जनयतीति। स एव लक्ष्मीवान् नित्यसुखं शान्तिञ्च समश्नुते।

एवं सात्त्विक-राजसिक-तामसिकेन ज्ञानस्य त्रैविध्यात् ज्ञानमात्राधिष्ठात्री सरस्वती अपि त्रिविधा भवितुं युज्यते। या खलु द्यूतचौर्य्यादिज्ञानमधितिष्ठति सा तामसी, कुषीदसेवादिज्ञानं याधितिष्ठति सा राजसी। शास्त्रतपस्यादिज्ञानन्तु याधितिष्ठति सा सात्त्विकी सरस्वती। तामसी सरस्वती तु "दुष्टसरस्वती" इत्याख्यायते, सैव कैकेयीमधिष्ठाय पुरा त्रेतायां रामं वने अवासयत्। (१) एवं सत्यपि धर्म्मशास्त्रज्ञाने ये ब्राह्मणा अपाचरन्ति तेषामपि सरस्वती दुष्टैव। अतो वाञ्छितसुखाप्तये सर्वैरेव गृहस्थैर्लक्ष्मीः पूजयितव्या।

अतोऽत्र लक्ष्मीपूजादिनिरूपणं यथा स्कन्दपुराणे।

पौषे चैत्रे तथा भाद्रे पूजयेयुः स्त्रियः श्रियम्।
सिंहे धनुषि मीने च स्थिते सप्त तुरङ्गमे॥
प्रत्यब्दं पूजयेल्लक्ष्मीं शुक्लपक्षे गुरोर्दिने।
नापराह्णे न रात्रौ च नासिते न त्र्यहस्पृशि॥
द्वादश्याञ्चैव नन्दायां रिक्तायाञ्च निरंशके।
त्रयोदश्यां तथाष्टम्यां कमलां नैव पूजयेत्॥
न पूजयेत् शनौ भौमे न बुधे नैव भार्गवे।
पूजयेत्तु गुरोर्वारे चाप्राप्ते रविसोमयोः॥
गुरुवारे च पूर्णा हि यत्नेन यदि लभ्यते।
तत्र पूज्या तु कमला धनपुत्रविवर्द्धिनी॥
न कुर्य्यात् प्रथमे मासि नैव कुर्य्याद्विसर्जनम्।
न घण्टां वादयेत्तत्र झिण्टीं नैव प्रदापयेत्॥ (इत्यादि)

---

(१) "एतस्मिन्नन्तरे देवा देवीं वाणीमचोचयन्।
गच्छ देवि! भवो लोकमयोध्यायां प्रयत्नतः।
रामाभिषेकविघ्नार्थं यतस्व ब्रह्मवाक्यतः।
मन्थरां प्रविशस्वादौ कैकेयीञ्च ततः परम्॥" इत्यध्यात्मरामायणे।१।२।४४—४५

प्राङ्मुखीं पूजयेल्लक्ष्मीं पश्चिमाननसंस्थिताम्।
गन्धपुष्पधूपदीपनैवेद्याद्युपचारकैः ॥

**लक्ष्म्या अगम्यानि गृहाणि। लक्ष्म्या उक्तिः।**

यं यं रुष्टो गुरुर्देवो माता तातश्च बान्धवः।
अतिथिः पितृलोकश्च न यामि तस्य मन्दिरम् ॥
मिथ्यावादी च यः शश्वन्नास्तीति वाचकः सदा।
सत्त्वहीनश्च दुःशीलो न गेहं तस्य याम्यहम् ॥
सत्यहीनः स्थाप्यहारी मिथ्यासाक्ष्यप्रदायकः।
विश्वासघ्नः कृतघ्नो यो न यामि तस्य मन्दिरम् ॥
चिन्ताग्रस्तो भयग्रस्तः शत्रुग्रस्तोऽतिपातकी।
ऋणग्रस्तोऽतिकृपणो न गेहं यामि पापिनाम् ॥
दीक्षाहीनश्च शोकार्त्तो मन्दधीः स्त्रीजितः सदा।
पुंश्चलीपतिपुत्रो यो तद्गेहं नैव याम्यहम् ॥
यो दुर्वाक् कलहाविष्टः कलिः शश्वदयालये।
स्त्रीप्रधाना गृहे यस्य न यामि तस्य मन्दिरम् ॥
यत्र नास्ति हरेः पूजा तदीयगुणकीर्त्तनम्।
नोत्सुकश्च प्रशंसायां न यामि तस्य मन्दिरम् ॥
कन्यान्न वेदविक्रेता नरघाती च हिंसकः।
नरकागारसदृशं न यामि तस्य मन्दिरम् ॥
स्वदत्तां परदत्तां वा ब्रह्मवृत्तिं सुरस्य च।
यो हरेद्दानहीनश्च न यामि तस्य मन्दिरम् ॥
मातरं पितरं भार्य्यां गुरुपत्नीं गुरुञ्च तम्।
अनाथां भगिनीं कन्यामनन्याश्रयबान्धवान् ॥
कार्पण्याद्यो न पुष्णाति सञ्चयं कुरुते सदा।
तद्गृहान्नरकागारान् न यामि तान्मुनीश्वराः! ॥
मूत्रं पुरीषमुत्सृज्य यस्तत् पश्यति मन्दधीः।
यः शेते स्निग्धपादेन न यामि तस्य मन्दिरम् ॥
मूर्ध्नि तैलं पुरो दत्त्वा योऽन्यदङ्गमुपस्पृशेत्।
ददाति पश्चाद्ग गात्रे वा न यामि तस्य मन्दिरम् ॥
विवाहं धर्म्मकार्य्यं वा यो निहन्ति च कोपतः।

दिवा-मैथुनकारी च न यामि तस्य मन्दिरम् ॥

इति ब्रह्मवैवर्त्ते गणेशखण्डे २३ अध्याय:।

कुचेलिनं दन्तमलोपधारिणं बह्वाशिनं निष्ठुरवाक्यभाषिणम्।
सूर्य्योदये चास्तमिते च शायिनं विमुञ्चति श्रीरपि चक्रपाणिनम् ॥

नित्यं छेदस्तृणानां क्षितिनखलिखनं पादयोरल्पमार्ष्टि:
दन्तानामल्पशौचं वसनमलिनता रूक्षता मूर्द्धजानाम्।
द्वे सन्ध्ये चापि निद्रा विवसनशयना ग्रासहासातिरेक:
स्वाङ्गे पीठे च वाद्यं नियतमपि हरेत् केशवस्यापि लक्ष्मी: ॥

शिर: सपुष्पं चरणौ सुपूजितौ वराङ्गनासेवनमल्पभोजनम्।
अनग्नशायित्वमपर्वमैथुनं चिरप्रनष्टां श्रियमानयन्ति षट् ॥

यस्य कस्य तु पुष्पस्य पाण्डरस्य विशेषत:।
शिरसाधार्य्यमानस्य अलक्ष्मी: प्रतिहन्यते ॥

दीपस्य पश्चिमा छाया छाया शय्यासनस्य च।
रजकस्य तु यत्तीर्थमलक्ष्मीस्तत्र तिष्ठति ॥

इति गारुड़े ११४ अध्याय:।

( क्रमश: )

---

## संशयात्मा विनश्यति।

### ( काशी वा मक्का वा )

आसीत् कस्मिंश्चित् प्रदेशे आचारपूतो व्यवहारनिपुण: सुपण्डित: परमधार्मिक एकब्राह्मण:। स च जायया कृतिना पुत्रेण पौत्रेण च तथा दुहित्रा दौहित्रेण च एवञ्च भ्रात्रा जामात्रा च सह सुखेन कालं निनाय।

एकदा आश्रितवत्सल: स स्वगृहपालितकुक्कुरार्थं भुक्तावशिष्ट-मन्नं हस्ते कृत्वा भोजनगेहात् वहिर्बभूव। "तु तु" शब्दश्रवण-मात्रेणैव सवेगमागत: स श्वा बुभुक्षया अत्यादरेण वा लाङ्गूलं घूर्णयन् अपूर्वकायं नमन् किमिति ध्वनयन् गृहस्वामिनं तं

पस्पर्श। गृहकर्त्ता च महाभारतम् महाभारतम् इति उच्चार्य्य स्वभक्ष्यं शुने प्रदाय आचम्य स्नात्वा च श्रीविष्णुनामादिकं स्मृत्वा शुचिर्बभूव ।

किन्तु सन्देहेन दोलायमानः स वहिःशुद्धोऽपि नान्तःशुद्धो यथा अजीर्णभोजनेनोदरं पटपटायते तथा मनसि बहुतरमालोचितवान्, कृतमन्याय्यं मया सारमेयाह्वाने, स च दुष्टोऽकृताचमनं मामयथा स्पृष्टवान्। यद्यपि शास्त्रकृद्भिरुक्तम् ।—

"अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरे शुचिः॥"

तथापि न मे मनः पवित्रम्। अतो नाहमन्तःशुद्धिः सुतरां पापी अतो नाधिकारी दैवे पैत्रे च कर्म्मणि। ज्ञातं मया शास्त्रे दृष्टञ्च पापिनां पापनाशिनी पतितपावनी गङ्गा। अतस्तस्यां स्नात्वा पूतो भविष्यामीति कृत्वा गङ्गां गन्तुं प्रचक्रमे। नासीत्तदानीं अधुनातनं इंरेजशक्तिसम्पन्नम् आशुगामि वाष्पीययानं (रेल्ओये)। ये गङ्गादिकं ययुः, ते केवलं पद्भ्यां शिविकया नौकया वा। अयन्तु परं पादरथेन जगाम ।

अथ गच्छन् स पथि मध्यन्दिने प्रचण्डमार्त्तण्डस्य भीषणकिरणेन सन्तप्तदेहो गन्तुं न शशाक। आशिश्राय च वृहत्तरुतलम्। किन्तु प्रवलशत्रुः आतपतप्तः पवनः तत्रावस्थानस्य महान् प्रतिबन्धकः। पुनस्ततो गच्छन् कियन्तं मार्गमतिवाहयन् पिपासाकुलः क्षुत्क्षामः शुष्ककण्ठ आतिथ्यकामो यथोचितं गृहमटन् कृते बहुतरे श्रमे द्विजगेहमेकं प्राप। अतिथिस्वरूपेणोपतस्थे च। तत्रत्यो द्विजोऽर्थलिप्सया देशान्तरे तस्थिवान्, तत्पत्नी एकं शिशुबालकं वृद्धाञ्च श्वश्रूं कथाद्वितीयां कृत्वा गृहरक्षित्री। सा च मध्याह्नसमये समागतं ब्राह्मणमतिथिं प्राप्य परमपरितुष्टा सती सादरं सच्चकार। यद्यपि सा लज्जावनतमुखी अवगुण्ठनवती च

तथापि गुरुतरकार्य्यानुरोधात् वधिरश्वश्रूवर्जं शिशुमुखेन तेन अतिथिना यथोपयुक्तं वाक्यमुवाच। ब्राह्मणश्च आत्मजास्वरूपाया-स्तस्या आशातीतादरेण आग्रहातिशयेन च परं परितुष्टः मिष्टान्न-मात्रं पपाच, पक्का च मिष्टान्नरक्षणे गृहकर्त्रीं रक्षयित्रीत्वेन नियोज्य, स्वयमनातपे तरुतले विश्रामार्थं ययौ। वस्तुतस्तु परिश्रान्तो जनो विश्रामात् पायसादप्यधिकां तृप्तिं लभते।

इतश्च गृहस्वामिन्या असतर्कतया कुतोऽपि आगतैकसारमेयो ब्राह्मणपक्कं तत्पायसं बुभुक्षुः गृहं प्रविवेश जिह्वया लिलेह च। किन्तु अत्युष्णतया शुनो रसनादग्धेव समजायत, तेन च "घेउ घेउ" इत्युच्चैरुत्क्रुश्य यावदसौ गृहान्निर्गच्छति तावदेव द्विजपत्नी दूरं दूरं याहीति कृत्वा कुक्कुरं प्रहृत्य गृहं प्रविवेश, गत्वा च ददर्श कुक्कुरभोजनचिह्नं मिष्टान्ने तन्मुखे च। ततः सा हाहेति कृत्वा चक्रन्द, आत्मनोऽनवधानतामपि निनिन्द।

इतश्च सुखविश्रान्तो निद्रितप्रायो ब्राह्मणः कुक्कुरस्यार्त्तनादेन लब्धचैतन्यो भोक्तुमागत्य किमप्यपृष्ट्वैव तूष्णीं भक्षितुमारेभे। आकण्ठं भुक्त्वा सम्पाद्य चाचमनादिकं सुखं विशश्राम। किन्तु गृहकर्त्री मलिनानना दुश्चिन्तारता निभृतं रुरोद, अनिभृते चासीत् कार्य्यव्यासक्ता।

कृते विश्रामे च गमनोन्मुखो ब्राह्मण आशिषं दित्सुराजुहाव गृहस्वामिनीं, मातः! अहमिदानीं जिगमिषुरस्मि। एहि प्रणम तावन्मां गृहाण मे आशीर्वचनं तुष्टोऽस्मि तव सुश्रूषया पूत-स्वभावेन च।

ततः सजलनेत्रा मलिनवक्त्रा समागता सा तं प्रणनाम। ब्राह्मणश्च आशिषं दत्त्वा मुखमालिन्यकारणं पप्रच्छ। अयि मातः! आगतमात्रेण मया यदाननं सुप्रसन्नमवलोकितं, यियासुना पुनः कथं मलिनं दृश्यते तत् नूतनजलधराच्छन्नं चन्द्रमण्डलमिव, किं

तव सम्पन्नमसुखमशिवं वा निवेद्य कुरु मां वीतचिन्तम् । एवं पुनः पुनरनुरुद्धा सा वक्तुमशक्तापि सुलभब्राह्मणकोपाङ्गीतीवाच । प्रभो ! अहमतिपापकारिणी सर्वनाशिनी, क्षमस्व मामित्युक्त्वा उच्चै रुदती ब्राह्मणस्य पादे निपत्य कराभ्यां संवेष्ट्य च पादं यथाभूतं सर्वं सारमेय वृत्तान्तं निवेदितवती ।

ब्राह्मणस्तु तस्य न चुकोप, परं शान्तवचसा तां सान्त्वयामास । हा भगवन् ! इत्युक्त्वा सुदीर्घं निश्वस्य आत्मतिरस्कारं विदधे । उच्छिष्टमुखोऽहं कुक्कुरस्पर्शदोषेण दूषित इति मत्वा गङ्गां प्रस्थातुकामो भवामि । इदानीं शुन उच्छिष्टमपि दग्धोदरे मे नरीनृत्यते । क्षुधया पिपासया परिश्रमेणापि गतप्रायस्य जीवनस्य परिरक्षणाय आतिथ्यं ग्रहीतुमागतस्य मे भाग्यदोषात् विपरीतमिह सम्भूतम् ।

"विषमप्यमृतं क्वचिद्भवेदमृतं वा विषमीश्वरेच्छया ।"

इयं हि द्विजपत्नी आतिथ्येन जीवयामास मां, किन्तु ममैव अविमृष्यकारितया दुष्कृतेश्च जाज्वल्यमानं फलमेतत् । साम्प्रतं मन्ये सारमेयोच्छिष्टभक्षणेन जीवनान्मे मरणं श्रेष्ठतरमासीत् ।

इदानीं कर्त्तव्यं किमिति । गङ्गास्नानेन पापमिदं याति न वा, इति बद्धमूले सन्देहे वाराणस्यां गन्तव्यं यतश्च ।

"गङ्गायान्तु कृतं पापं वाराणस्यां विनश्यति ।" इति शास्त्रीयं वचनम् ।

अतो यद्भवितव्यं तद्भवतु, वाराणसीमेव यामि । इत्युक्त्वा जगाम ।

अथातिक्रान्ते कियति पथि, कञ्चिदपरं ब्राह्मणालयं प्राप, आतिथ्यं जग्राह च, तत्रैका विधवा ब्राह्मणी तं यथोचितमानर्च्य, गृहीत्वा चानुमतिं स्वयमेव पक्त्वा तं भोजयामास । भोजनावसाने कृतविश्रामं तं पण्डितं ज्ञात्वा व्यवस्थामेकां प्रष्टुं कृतप्रार्थना सा यावदेव व्यवस्थां पृष्टवती तावदेव तस्या अष्टादशवर्षदेशीयोऽङ्कुरितश्मश्रुरपि अनुपनीतः सुत आजगाम गृहम् । दृष्ट्वा च तं गृहस्वामिनीं पृच्छति स्म । मातः ! कोऽयमायातः ? साब्रवीत् ममायं

तनयः। ततः सम्यक् निरीक्ष्य ब्राह्मणो विस्मितः सन्नुवाच,—अपि अनुपनीतोऽयन्ते सुतः? सा ब्रूते स्म अथ किम्? ब्राह्मणस्ततोऽधिकं विस्मयमापन्नो दुःखितश्च पुनरेवाब्रवीत्—हन्त पतितासुश्च सावित्री। मातः! कथमिदानीमपि अगृहीतयज्ञसूत्रोऽयं बालकः? सा पुनरप्याह, हे विद्वन्मन्य! इममेव विषयमधिकृत्य मयापि प्रच्छते त्वां व्यवस्था। श्रूयतां तावत्, गृहान्तरं अस्मिन्नेव ग्रामे पश्चिमेन तत्र मे देवरस्थानीयः कश्चित् ब्राह्मणः प्रतिवसति। स ब्रूते, अमुं मे भ्रातुष्पुत्रमुपनेष्यामि यथोक्तेन विधानेन। किन्तु मम पुनरधन्यतया दक्षिणेन यवनवाटिकां, तत्रत्यः "करिमखां" नामको यवनः कथयति, एनं महम्मदीयधर्म्ममनुसृत्य त्वक्छेदनेन दीक्षितं (छुन्नत्) करिष्यामि, एवमुभयोर्विवाद एवास्य अनुपनयनकारणम्। इह तु ममेयं जिज्ञासा किमत्र कर्त्तव्यम्। पण्डितवरस्तु स सम्यक् विवेक्तुमशक्तः सन् विस्मयपारावारे निमग्नः कुलमप्राप्य भूयोऽपि तां पृच्छति स्म। अयि मातः! अनधिकारे धनिनोऽपि यवनस्य कथमाधिपत्यम्? नास्ति किं राजा? राजप्रतिनिधिर्वा अस्मिन् यवनप्रधाने प्रदेशे? यत् अश्रुतस्य अदृष्टस्य च असम्भवपरस्यैतस्य प्रतीकारे साक्षात् कृतान्त इव शासकः प्रतिपालकश्च विराजते। अहो रे गरीयान् कालः समायातः यदश्रुतमपि श्रावयति अदृष्टमपि दर्शयति। तदाकर्ण्य "अरसिकोऽयं वटु"रिति विहस्य मनसा, पुनरौच्यत तया। न हि न हि यवनस्य अनधिकारः, न वा ब्राह्मणस्य इत्युक्त्वावनतमुखी सा मन्दं मन्दं जगाद। शृणु हे विचक्षण! यदैवासौ मे गर्भस्थः तदैव दुरन्तकृतान्तेन कवलीकृतोऽस्य पिता, अथवा मम पाणिग्रहीता। न जाने, अयं मे पाणिग्रहीतुः, आहोस्वित् "करिमखां" नामकयवनाद्जातः, इत्युक्त्वा सा विरराम, अवगुण्ठनेन च म्लुष्टमुखमावृणोति स्माधिकम्।

अथ स ब्राह्मणः श्रुत्वा भ्रष्टावाक्यं "रामो राम" इति ब्रुवन्

भृशं विषादितः पर्य्यतप्यत। हा हा दैवहतोऽपि हा हतः पुनः, अथवा दैवी विचित्रा गतिः।

मूढ़ोऽहं, न कदाचिदज्ञातकुलशीले जने विश्वसिति साधुजनः। अहं पुनरेवंविधो मन्दभाग्यः, अमृतभ्रमात् गरलं भुक्तवान्, रज्जुभ्रमादाशीविषं धृतवान्, ब्राह्मणीभ्रमात् यवनीपक्वमन्नमास्वादितवान्। नमः कर्म्मभ्यः। यत्पापं श्रीविष्णुस्मरणादेव वह्निः पलायते, न कथं मम तत्र विश्वासः तुच्छपापशङ्कया भीतभीतोऽहं साम्प्रतमसीमपापसागरे पतितः। अत्र पुनः परमदयालुः काशीनाथो नो चेत् कर्णधारः, न वा तत्पादतरणी ममावलम्बनं तदावश्यम्भावि मे घोरनरकपतनम्।

इत्यवसरे सा पुनः पृच्छति स्म। हे पण्डितवर! अमुष्यां मत्पृष्टायां व्यवस्थायां किमुत्तरं देयं तत् मे सत्वरं वाच्यम्। भवति च मे अन्यकार्य्यातिपातः।

तच्छ्रुत्वा स सुदीर्घं निश्वस्य उक्तवान्। यदि त्वं मम प्रश्नस्य यथायथमुत्तरं प्रदातुं शक्नोषि, तदा मामपि जानीहि तव व्यवस्थोत्तरदाने सवाकम्।

ततः पण्डितवाक्यमाकर्ण्य निर्लज्जैकसहोदरी साब्रवीत् शक्ता चेद् ब्रवीमि, उच्यतां किं तवापि प्रष्टव्यमस्ति।

ततः स ब्राह्मणो निगदितवान्, वद साम्प्रतं या **"काशी वा मक्का वा"** गम्यते? **"सन्ध्या वा नमाजं वा"** पठ्यते? एवमुक्ता स पण्डितो भ्रष्टां तां बहुलं निर्भर्त्स्य, आत्मानमपि अनेकशो विनिन्द्य पुरीं वाराणसीं ययौ। इति।

**श्रीद्वारिकानाथशर्म्मा काव्यतीर्थः।**

मालखानगर, ढाका।

# कविवरः श्रीभवभूतिः ।

( पूर्वानुवृत्तः )

तथाच अस्मन्मतनिर्णये भवभूतिकाव्येभ्य एव उपादानं संग्रहीतव्यम्। तच्च न दुरापम्। मालतीमाधवे कामन्दक्याः प्रभुत्वं सर्वथा अस्मदुत्प्रेक्षितकालसङ्गतं मन्यामहे। खृष्टीयसप्तमशताब्द्याः पश्चिमे भागे तथा अष्टमशताब्द्याः प्रारम्भे शिलादित्यराजत्वकाले आर्य्यधर्म्मचारिणः बौद्धधर्म्मावलम्बिनश्च न राजद्वारि किञ्चित् पार्थक्यमासीत्। बौद्धपाटमटिकायामेव हिन्दुशास्त्रं पठितमासीत्। वैदिका बौद्धा वा विदग्धाः समं राजानुग्रहभाजनतां गताः। तथा मालतीमाधवस्य पाञ्चमाङ्कप्रदत्ततान्त्रिकमतं तत्सामयिकमिति सम्यक् सुधीजननिर्द्धारणम्। अघोरघण्टसदृशः तदा बहवः तान्त्रिका योगिनः भीषणोज्ज्वलवेशाः मालतीसदृशीं कुसुमसुकुमारीं रमणीं अकालेन कालसदनं प्रापितवन्तः। नूनं कविः ज्ञानाञ्जनशलाका-प्रोद्भासितधीः तेषां दुराचाराणां शासनार्थं प्रकरणमेतत् विरचितवान्।

तथाच भवभूतिः कालिदाससमसामयिक इति जनवादः असङ्गत इति प्रकटीकर्त्तव्यम्।

> "धन्वन्तरिः चपणकोऽमरसिंहशङ्कुवेतालभट्टघटखर्परकालिदासाः।
> ख्याती वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य॥"

एतस्मिन् ज्योतिर्विदाभरणपठिते श्लोके भवभूतेरनिर्द्दिष्टत्वेऽपि भवभूतिरेव कालिदाससमसामयिक इति जनप्रसिद्धिः। एतन्मूलाश्च विविधसन्दर्भाः समासाद्यन्ते। तेषु एकतमः विषयगौरवादत्र प्रवेशितः। कविवरो भवभूतिः कालिदासाभिमतं जिज्ञासुः तं स्वविरचितमुत्तरचरितं श्रावितवान्। ततः कविना स्वाभिमतं

पृष्ट: कालिदास: "भवदीयं काव्यम् उत्कृष्टतमं मन्यामहे। परन्तु एक एव दोषोऽत्र दृश्यते यत् "अविदितगतयामा रात्रिरेवं व्यरंसीत्" इत्यत्र 'एवं' इत्यस्य अनुस्वारो निष्प्रयोजन इति अभिहितवान्। यदत्र एव पाठ एव साधीयान् तत् सुधीजन: आयासं विनैव अवगच्छति।

कालिदास: खृष्टीय षष्ठशताब्द्यामेव आसीत्। तस्य च भवभूते: प्राचीनत्वावबोधनाय भवभूतिप्रणीतं काव्यमेव प्रमाणम्।

मालतीमाधवे द्वितीयाङ्के कामन्दकी मालतीमुपदिशति "अयि सरले! किमत्र भवत्या मया शक्यं कर्त्तुम्? प्रभवति प्राय: कुमारीणां जनयिता दैवञ्च। यच्च किल कौशिकीशकुन्तला-दुष्मन्तं, अप्सरा: पुरूरवसञ्चकमे, इत्याख्यानविद आचक्षते। (Page 44 Jiban-anda Vidya Sagaras Edition) कविवरेण भवभूतिनात्र अभिज्ञानशकुन्तलस्य शकुन्तला, विक्रमोर्वशीयस्य उर्वशी च उद्दिश्येते महाभारतीयशकुन्तलोपाख्याने दुष्मन्तं प्रति शकुन्तलाया: पूर्वरागस्य अदृष्टत्वात्, तत्रस्थे उर्वश्युपाख्याने उर्वश्या: पूर्वरागस्य अदृष्टत्वाच्च।

तथाच मालतीमाधवस्य नवमे अङ्के।

"माधव:। तत् कथमत्र विपिने प्रियावार्त्ताहरं करोमि। (विलोक्य) साधु, साधु। * * * * *

"कच्चित् सौम्य! प्रियसहचरी विद्युदालिङ्गति त्वां
आविर्भूतप्रणयसुसुखाश्चातका वा भजन्ते।
पौरस्त्यो वा सुखयति मरुत् साधुसंवाहनाभि:
विष्वग् बिभ्रत् सुरपतिधनुर्लक्ष्यलक्ष्मीं तनोति॥"

(आकर्ण्य) अये! प्रतिरवभरितकन्दरानन्दितोत्कण्ठनीलकण्ठ-कलकेकानुबन्धिना मन्द्रहुङ्कृतेन, मामनुमन्यते, यावदर्थये। भगवन् जीमूत!

दैवात् पश्येर्जगति विचरन्निच्छया मत्प्रियां चेत्
आश्वास्यादौ तदनु कथयेर्माधवीयामवस्थाम्।
आशातन्तुर्न च कथयतात्यन्तमुच्छेदनीयः
प्राणं त्राणं कथमपि करोत्यायताक्ष्याः स एकः॥

(सहर्षम्) अहो! प्रचलितः तदन्यत्र सञ्चरामि।" यद्येष भावः कविना मेघदूतात् गृहीत इति सहृदयेन पठनमात्रमेवावगन्तव्यम्। तथाच सर्वं एव नवमाङ्कं कालिदासस्य विक्रमोर्वशीयस्य चतुर्थाङ्कस्य दर्शनात् कल्पित इति सम्यक् प्रतिभाति।

भवभूतिकाव्येषु कालिदासकल्पनाः प्रतिविम्बिता दृश्यन्ते। तथा उत्तरचरिते—

१। मनोरथस्य यद्बीजं तद्दैवेनादितो हृतम्।
लतायां विप्रलूनायां कुसुमस्यागमः कुतः॥

अभिज्ञानशाकुन्तले ७ मे अङ्के।

मनोरथाय नाशंसे किं बाहो! स्पन्दसे वृथा।
पूर्वावधीरितं श्रेयो दुःखं हि परिवर्त्तते॥

(Page 240 Nirnayasagara Press sereies. Bombay).

२। लक्ष्मणः। सोऽयं शैलः ककुभसुरभिर्माल्यवान् नाम यस्मिन्
नीलस्निग्धः श्रयति शिखरं नूतनस्तोयवाहः।
रामः। वत्सैतस्माद् विरम विरमातः परं न क्षमोऽस्मि
प्रत्यावृत्तः पुनरपि स मे जानकीविप्रयोगः॥

रघौ १३।२६

"एतद् गिरेर्माल्यवतः पुरस्तात् आविर्भवत्यम्बरलेखि शृङ्गम्।
नवं पयो यत्र घनैर्मया च त्वद् विप्रयोगाश्रु समं विसृष्टम्॥"

३। यत् सावित्रैर्दीपितं भूमिपालैः लोकश्रेष्ठैः साधु शुद्धं चरित्रम्।
मत्सम्बन्धात् कश्मला किंवदन्ती स्याच्चेदस्मिन् हन्त धिङ्मामधन्यम्॥

रघौ। १४।

राजर्षिवंशस्य रविप्रसूतेरुपस्थितः पश्यत कीदृशोऽयम्।
मत्तः सदाचारशुचेः कलङ्कः पयोदवातादिव दर्पणस्य॥

४। अपूर्वं कर्म्म चाण्डालमयि मुग्धे विमुञ्च माम्।
श्रितासि चन्दनभ्रान्त्या दुर्विपाकं विषद्रुमम्॥

रघौ। १४।

ना बुद्ध कल्पद्रुमतां विहाय जातं तमात्मन्यसिपत्रवृक्षम्॥

५। प्रभवति शुचिर्विम्बोद्ग्राहे मणिर्न मृदां चय:।

शकुन्तला। ७।

छाया न मूर्च्छति मलोपहतप्रसादे शुद्धे तु दर्पणतले सुलभावकाशा।

६। वितरति गुरु: प्राज्ञे विद्यां यथैव तथा जड़े
न च खलु तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा।
भवति च तयोर्भूयान् भेद: फलं प्रति तद्यथा
प्रभवति शुचिर्विम्बोद्ग्राहे मणिर्न मृदां चय:॥

शार्ङ्गधरस्तदीयपद्धतौ श्लोकोऽयं कालिदासविरचित इति निश्चिनोति। (See Subhasitavali, Bombay Edition Page 19—23).

७। परिपाण्डु दुर्बल कपोल सुन्दरं दधती विलोलकबरीकमाननम्।
करुणस्य मूर्त्तिरिव वा शरीरिणी विरहव्यथेव वनमेति जानकी॥

शकु। ७। वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणि:।
अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्त्ति॥

८। गुणा: पूजास्थानं गुणिषु न च लिङ्गं न च वय:।

कुमारे। न धर्म्म वृद्धेषु वय: समीक्ष्यते।

तथाच। स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम्।

रघौ। पदं हि सर्वत्र गुणैर्निधीयते॥

९। पुरन्ध्रीणां चेत: कुसुमसुकुमारं हि भवति।

मेघ। आशाबन्ध: कुसुमसदृशं प्रायशो ह्यङ्गनानां
सद्य: पाति प्रणयिहृदयं विप्रयोगे रुणद्धि॥

१०। न भिद्यते वा सद्‌वृत्तमीदृशस्य निर्म्माणस्य।

रघौ। ५। यत्राकृतिस्तत्र गुणा वसन्ति।

११। न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते
स तस्य स्वोभाव: प्रकृति नियतत्वादकृतक:।

मयूखैरश्रान्तं तपति यदि देवो दिनकरः
किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति॥

शकु। शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोऽभिभवा वमन्ति॥

तथा च तत्र बहवः अन्ये च श्लोका वर्त्तन्ते येऽपि पूर्वमेव कालिदासकल्पिता आसन्। एवं वीरचरिते मालतीमाधवे च यानि कालिदासवाक्यानि समासादितानि तानि अत्र नोपनिबद्धानि प्रबन्धविस्तृतिभयात्। अनेन च एतावदेव वक्तुक्षमा वयं यथा भवभूतिविरचिताः प्रायशः सर्वे एव श्लोकाः मौलिकभावार्थं पूर्ववर्त्तिनः अपरान् कवीन् अपेक्षन्ते। स्वकीयाशेषविद्यावत्वात् सर्वतः काव्यवस्तु संगृह्य स्वाशेषप्रज्ञावलेन च नूतनत्वमापादितमनेन इति मन्यामहे। गर्वितमपि अवितथमाह कविरात्मानमधिकृत्य "यद् वेदाध्ययनं तथोपनिषदां सांख्यस्य च ज्ञानं तत्कथनेन किम्?" वस्तुतस्तु यावदीयासु आर्य्यकविपरिषत्सु कालिदासं विना भवभूतिसदृशः सर्वशास्त्रपारं गतः परमविदग्धः कोऽपि अन्यतरः न समासाद्यते। तस्याशेषयोगशास्त्रकुशलता मालतीमाधवे पञ्चमाङ्के तथा वीरचरिते तृतीयाङ्के सम्यक् प्रकटिता। अस्य औपनिषदिकं ज्ञानं षष्ठाङ्के—

"विद्याकल्पेन मरुता मेघानां भूयसामपि।
ब्रह्मणीव विवर्त्तानां क्वापि विप्रलयः कृतः॥"

प्रकटितम्। वीरचरितस्य प्रथमे अङ्के कवेः वेदविशारदता, द्वितीये पुराणेतिहासज्ञता, तृतीये दर्शनकुशलता च सम्यक् प्रदर्शिता।

वीरचरितस्य चतुर्थाङ्के जामदग्न्यवाक्येषु कवेः अशेषशास्त्रपारदर्शिता प्रकटं गता। तद्यथा—

जाम। भगवन् मैत्रावरुण! * * * *
* * * * * * *

प्राग् धर्म्मस्य भवन्त एव परमं द्रष्टार आसन् गुरो-
र्लब्धा ज्ञानमनेकधा प्रवचनै: मन्वादय: प्राणयन् ॥ २५ ॥

मनुरेव आदिधर्म्मशास्त्रप्रणेता लोकेषु इति विश्रुति:, भवभूतिरेव प्रथमं तत् भ्रमज्ञानं निराकरोति।

भवभूतिना उत्तरचरिते चतुर्थाङ्के "श्रोत्रियायाभ्यागताय वत्सतरीं महोक्षं वा महाजं वा निर्वपन्ति गृहमेधिन: इति धर्म्मसूत्रकारा: समामनन्ति" (Page 134. Vidya Sagara's Edition). तथा वीरचरिते तृतीयाङ्के—

सङ्गीयते वत्सतरी सर्पिष्मन्नं च पच्यते।
श्रोत्रिय: श्रोत्रियगृहानागतोऽसि जुषस्व न: ॥

एवं कथनेन तथा शास्त्रानुशासनप्रदर्शनेन तस्मिन्नेव काले अभ्यागताय श्रोत्रियाय वत्सतरीनिर्वपणं अभूदिति सूचितम्। अत्र तु यावदीया: शास्त्रयुक्तय: सुधीभि: अनुसन्धेया:।

भवभूतिरेव प्रथमं रामराजत्वकाल एव भगवान् वाल्मीकि: रामायणं प्रणिनाय (१) इति प्रकटनेन रामायणवाक्यं प्रमाणितवान्। तद्यथा रामायणे—

"प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवान् ऋषि:।
चकार चरितं कृत्स्नं विचित्रपदमर्थवत् ॥
चतुर्विंशत् सहस्राणि श्लोकानामुक्तवान् ऋषि:।
तथा सर्गशतान् पञ्चषट् काण्डानि तथोत्तरम् ॥" इति बालकाण्डे ।४।१।२।

भवभूतिप्रणीतानि त्रीणि दृश्यकाव्यानि वीरचरित-मालतीमाधवोत्तरचरिताख्यानि समासादितव्यानि। शार्ङ्गधरस्तु तत्कृतायां पद्धतौ—

"निरवद्यानि पद्यानि यदि नाट्यस्य का क्षति:।
भिक्षुकक्षातिनिक्षिप्त: किमिक्षुर्नीरसो भवेत् ॥"

श्लोकोऽयं भवभूतिप्रणीत इति समाधत्ते। श्लोकोऽयं तु नैतेषु

(१) नायमर्थ: सम्पादकसम्मत: रामायणे बहुतरवाक्यविरोधात्।

त्विषु काव्येषु कुतोऽपि समासाद्यते। अतः मन्यामहे आसीदपरं किञ्चित् काव्यं कविप्रणीतं यदद्यापि नाविष्कृतं केनापि विदुषा। अस्मन्मते कविना प्रथमं वीरचरितं ततो मालतीमाधवं पश्चात् उत्तरचरितं विरचितम्। आनन्दपण्डितस्तु मालतीमाधवं कवि-परिणत-प्रतिभोद्भावितमिति मत्वा आदौ उत्तरचरितं पश्चात् मालतीमाधवमिति निश्चिनोति। उत्तरचरिते तु वीरचरित-मालतीमाधवगता बहवः श्लोका दृश्यन्ते; तथाच कविः स्वयं उत्तरचरितविषये "शब्दब्रह्मविदः कवेः परिणतप्रज्ञस्य वाणीमिमा-मिति स्वमतं पुरस्कुर्वन् अस्य सर्वपश्चात् प्रणयनं सूचयति।

काव्यानां सम्यक् पर्य्यालोचना पूर्वसूरिभिरनुष्ठितत्वात् अस्माक-मेतत्पक्षे किमपि वक्तव्यं नास्ति।

श्रीमद् उपेन्द्रनाथसेनवर्म्मणः।

कलिकाता—संस्कृतकालेज।

---

## ईश्वरप्रेम।

---

१। जननी-जठराद्विपुलामवनीमुपगम्य चिरेण यदातिलघुः।
करुणं व्यलपं जननीस्तनतः पतितं वदने मम शान्तिपयः॥
२। अथवा करुणा तव मूर्त्तिमती द्रवतां समुपेत्य हि विश्वहिता।
निरुपाय शिशोः परिपोषविधौ वसतिं विगता मम मातुरुरः॥
३। परिपीय विभो! करुणा स्तनकं कलिकेव वने स्फुटतामगमम्।
मलयानिल-सङ्गम-फुल्लसुखौ ललितावयवैरुत-चन्द्रकला॥
४। शिशुभावमपास्य दिनेन विभो! रिपुवृन्दवृतं परिलभ्य वयः।
विषये रमते मम मुग्धमनः न च ते मनुते करुणामधुना॥
५। विपिनान्तनिवासन-कौतुकिनो मधुरेण रवेण विबोधमियात्।
इति वैरनिदारुण-मानसजे नितरामुपहन्ति मनो मनुजे॥

६। अपरे रिपवः परिहृत्य सदा विषयानुरतं परिहीन मतिम्।
अनिलोऽनुगतामिव जीर्णलतां नमयन्ति विभो! निरयेऽर्पयितुम्॥
७। अलिगुञ्जन-मञ्जुल-कुञ्जवने दलपुष्प-सुशोभित-शाखिगणे।
महिमा तव चन्द्रक-कान्तिसितः द्विषतां मलिनो हृदये स्फुरति॥
८। यदि जीवनमीनविपत्तिहरी रमसे मम मानस-वासपरः।
रिपुपाशवशो जगदीश! तदा न पतेद्धरसने विषयाम्बुचरः॥
९। चरणामृतपानविमुग्धजने नियता करुणा तव भक्तिधने।
यदि मादृश कल्मषमार्गरते न पतेद्विभवः किमु विश्वपते?॥
१०। चिररोदन-सम्बल-बालसुते जननीव विभो! करुणा कलिकाम्।
वितराधम-भक्तिविहीन-नरे जलदोन्मुख-चातकभाव-परे॥

हुगली

श्रीयतीन्द्रमोहनशर्म्मवन्द्योपाध्यायः।

## पूर्वकालीनाः कथं दीर्घायुषः।

उक्तं द्वितीयखण्डस्य प्रथमसंख्यायां (१८ पृष्ठे) मनुवचने परदारोपसेवनमनायुष्यमिति। अत्रैतद्विचार्य्यते। स्मर्य्यन्तावत्—

"आलापाङ्गानसंस्पर्शान्निःश्वासात् सहभोजनात्।
सह शय्यासनाद्ध्यायात् पापं संक्रमते नृणाम्॥"
"संलापस्पर्शनिःश्वास सहशय्यासनाशनात्।
याजनाध्यापनाद्यौनात् पापं संक्रमते नृणाम्॥"

इत्यादीनि प्रथमखण्डस्य द्वादशसंख्याया (२७२ पृष्ठे) मनुवचनानि, तत्राह संसर्गवशात् एकस्य शरीरतोऽन्येषां शरीरे प्रविशन्ति पापानि आत्मनोऽहितकराणि इति सिद्धान्तितम् इति। दृश्यते चैतत् परस्पर-विरुद्धान्यपि जला नलादीनीति, तथा परस्परं व्यतिहरति दम्पत्योः शरीरगुणः, स दैवात् विरुद्धोऽपि शनैः शनैरल्पाल्प संसर्गं कुर्वतोः साम्यं भजते।

किन्तु तामेव परोपभुक्तां संक्रान्तपरशरीरगुणां परस्त्रियं ये सङ्गच्छेयुः पुमांसस्तेषां निःश्वासप्रश्वासादिना समागता विरुद्धधर्म्मा जीवनीं शक्तिं ह्रासयन्ति, गृहस्वामि त्रासादिना लोकापवादादिना च सदा कम्पमानवक्षसो बलमात्मनीनं परिहरन्तश्च ते दुराचाराः पारदारिका असमये मृतिं भजन्ते।

उक्तञ्च मुद्राराक्षसे विषकन्याप्रसङ्गे नारीणां धर्म्मादी मारणीशक्तिरिति।

एवं रजस्वलादिस्पर्शादिरपि आयुर्नाशकारणं यथा सुश्रुते चिकित्सितस्थाने २४ अध्याये—

"रजस्वलामकामाञ्च मलिनामप्रियां तथा।
वर्णवृद्धां वयोवृद्धां तथा व्याधिप्रपीड़िताम्॥
हीनाङ्गीं गर्भिणीं द्वेष्यां योनिदोषसमन्विताम्।
सगोत्रां गुरुपत्नीञ्च तथा प्रव्रजितामपि॥
सन्ध्या पर्वस्वगम्याञ्च नो पेयात् प्रमदां नरः।
रजस्वलां प्राप्तवतो नरस्यानियतात्मनः।
दृश्यायुस्तेजसां हानिरधर्म्मश्च ततो भवेत्॥"

अतएव यदुक्तं प्रथमखण्डस्य चतुर्थसंख्यायां (७८—८३ पृष्ठे) स्वस्व सदाचारः स्वस्वधर्म्मश्च एव दीर्घायुष्कारणं अनाचारः अधर्मश्चैव आयुर्नाशकारणम् इति तत्सर्वमेवानवद्यमिति। धर्म्माचारप्रकारस्तु धर्म्मविवेकप्रबन्धे वक्ष्यते इत्यवधेयम्। विस्तरेणालमिति शिवम्।

**श्रीजयचन्द्रशर्म्मसिद्धान्तभूषणः।**

---

## ब्रह्मचर्य्यम्।

---

(पूर्वानुवृत्तम्)

ब्रह्मचर्य्यमेव देवभावमापादयति मर्त्यान्, ब्रह्मचर्य्यमेव देवानामुपकरोति, ब्रह्मचर्य्यमेव तीर्थीकरोति भूतलम्, किमधिकम् एको-

ऽपि तथाविधो यस्मिन् विराजते देशे, स खलु देशो धन्यः स्वर्गी स्यात्। निष्पत्तौ तथाविधस्य ब्राह्मणस्य गर्भाधानादिकाः संस्कारा निदानम्। माता-पितृभ्यां तथैव व्यवहर्त्तव्यं यथा च निषेकादि-संस्कारात् जनिष्यमाणो बालको न प्रच्यवेत ब्रह्मचर्य्यात्, यथा च वीजगर्भादिपातकाद्बालो मुच्येत, यथा च जीवावस्थायामेव जनिष्यमाणो बालकः सद्वृत्तिमाहरेदिति। गर्भाधानादिसंस्कार-प्रकारस्तु नात्र विस्तरभयात् प्रपञ्च्यते। किन्तु उपनयनादधः ब्रह्म-चर्य्यविधिरणूद्य यूरोपीयभाषया प्रदर्श्यते येन च अवगच्छेयुरपरे प्राधान्यकारणं ब्राह्मणस्य। यदाह भगवान् मनुः। २।६८—

"एष प्रोक्तो द्विजातीनामौपनायनिको विधिः।
उत्पत्तिव्यञ्जकः पुण्यः कर्म्मयोगं निवोधत॥ ६८॥

68 Such is the revealed law of institution for the twice born; an institution, in which their second birth clearly consists, and which causes their advancement in holiness: now learn to what duties they must afterwards apply themselves. (१)

उपनीय गुरुः शिष्यं शिक्षयेच्छौचमादितः।
आचारमग्निकार्य्यञ्च सन्ध्योपासनमेव च॥ ६९॥

69 The venerable preceptor, having girt his pupil with the thread, must first instruct him in purification, in good customs, in the management of the consecrated fire, and in the holy rites of morning, noon, and evening.

अध्येष्यमाणस्त्वाचान्तो यथाशास्त्र उदङ्मुखः।
ब्रह्माञ्जलिकृतोऽध्याप्यो लघुवासा जितेन्द्रियः॥ ७०॥

70 When the student is going to read the

(१) स्यार उइलियमयोन्स कृतस्य अनुवादः अत्रोद्धियते।

*Véda*, he must perform an ablution, as the law ordains, with his face to the north ; and having paid scriptural homage, he must receive instruction, wearing a clean vest his members being duly composed.

ब्रह्मारम्भेऽवसाने च पादौ ग्राह्यौ गुरोः सदा।
संहत्य हस्तावध्येयं स हि ब्रह्माञ्जलिः स्मृतः॥ ७१॥

71 At the beginning and end of the leture, he must always clasp both the feet of his preceptor ; and he must, read with both his hands closed : ( this is called scriptural homage ).

व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः॥ ७२॥

72 With crossed hands let him clasp the feet of his tutor, touching the left foot with his left, and the right with his right, hand.

अध्येष्यमाणन्तु गुरुर्नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्॥ ७३॥

73 When he is prepared for the lecture, the preceptor, constantly attentive, must say : "hoa ! read" ; and, at the close of the lesson, he must say : "take rest."

ब्राह्मणः प्रणवं कुर्य्यादादावन्ते च सर्वदा।
स्रवत्यनोऽङ्कृतं पूर्वं परस्ताच्च विशीर्य्यते॥ ७४॥

74 'A Bráhmen, beginning and ending a lecture on the *Véda*, must always pronounce to himself the syllable *óm* ; for, unless the syllable *óm* precede, him learning will slip away from him ; and, unless it follow, nothing will be long retained.

प्राक् कूलान् पर्य्युपासीनः पवित्रैश्चैव पावितः ।
प्राणायामैस्त्रिभिः पूतस्तत ओङ्कारमर्हति ॥ ७५ ॥

75 If he has sitten on culms of *cusa'* with their points toward the east, and be purified by rubbing that holy grass on both his hands, and be further prepared by three suppressions of breath, each equal in time to five short vowels, he then may fitly pronounce *óm*.

अकारञ्चाप्युकारञ्च मकारञ्च प्रजापतिः ।
वेदत्रयान्निरदुहद्भूर्भुवः स्वरितीति च ॥ ७६ ॥

76 Brahmá milked out, as it were, from the three *Védas*, the letter A, the letter U, and the letter M, which form, by their coalition, the triliteral monosyllable, together whit three mysterious words, bhur, bhavah, swer or earth, sky, heaven :

त्रिभ्य एव तु वेदेभ्यः पादं पादमदूदुहत् ।
तदित्यृचोऽस्याः सावित्र्याः परमेष्ठी प्रजापतिः ॥ ७७ ॥

77 From the three Vedas also the Lord of creatures, incomprehensibly exalted, successively milked out the three measures of that ineffable text, beginning with the word tad, and entitled sa'virí or ga'yatri.

एतदक्षरमेतञ्च जपन् व्याहृतिपूर्विकाम् ।
सन्ध्ययोर्वेदविद्विप्रो वेदपुण्येन युज्यते ॥ ७८ ॥

78 A priest who shall know the Veda, and shall pronounce to himself, both morning and evening, that syllable, and that holy lest preceded by the three words, shall attain the sanctity which the Veda confers ;

सहस्रकृत्वस्त्वभ्यस्य वहिरेतत्त्रिकं द्विजः।
महतोऽप्येनसोमासात्त्वचेवाहिर्विमुच्यते ॥ ७९ ॥

79 And a twice born man, who shall a thousand times repeat those three (or óm, the vyáhritis, and the gáyatrí) apart from the multitude, shall be released in a month even from a great offence as a snake from his slough.

एतच्चैया विसंयुक्तः काले च क्रियया स्वया।
ब्रह्मक्षत्रियविड्योनिर्गर्हणां याति साधुषु ॥ ८० ॥

80 The priest, the soldier, and the merchant, who shall neglect this mysterious text, and fail to perform in due season his peculiar acts of piety, shall meet with contempt among the virtuous.

( क्रमशः )

## समस्या।

१। युक्तो न ते पिक मनागपि मूकभावः।

२। का वा दशाद्य भविता वत चातकस्य।

३। सतां मनांसीव शरद्दिनानि।

४। प्राचीवधूः क्षिपति कन्दुकमिन्दुविम्बम्।

५। यस्यासि तस्मै नमः॥

श्रीउपेन्द्रनाथसेनः।

श्रीश्रीदुर्गाशरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भासावतरणिका ।

शरत् सुरम्या त्वचिरात्तिरो भवेत्
निरूप्यतच्छैशिरशीकरैरलम् ।
किमन्तरीक्षं परिवीक्ष्य दुःखितं
अजस्रमस्रुप्रकरैः प्ररोदिति ? ॥

## उद्भट-श्लोकाः ।

"पिता ते शैलेन्द्रो गणपति कुमारौ च तनयौ
कृपानाथो नाथः शतमखमुखास्ते परिजनाः ।
न दृष्टा सामग्री तव कृपणताया मयि कथं
कणीयः कारुण्याञ्चितनयनलीला कृपणता" ॥ ९३ ॥
"धिगस्त्वेता विद्या धिगपि कविता धिक् सुजनता
वयोरूपं धिग् धिग् धिगपि च यशो निर्धनमतः ।
असौ जीयाट्टिकः सकलगुणहीनोऽपि धनवान्
वहिर्यस्य द्वारे तृणलभसमाः सन्ति गुणिनः" ॥ ९४ ॥
"नदीभ्योऽपि ह्रदेभ्योऽपि पिबन्त्यन्ये वयः पयः ।
चातकस्य तु जीमूत ! भवानेवावलम्बनम्" ॥ ९५ ॥

श्रीलक्ष्मीः श्रीसरस्वती ।

(पूर्वानुवृत्ता)

सर्वेषां सर्वसुखनिदानमधुना लक्ष्मीमचलां कर्तुं सदुप तच्चरितं लिख्यते ।

## अथ लक्ष्मीचरितम् ।

मेरुपृष्ठे सुखासीनां लक्ष्मीं पृच्छति केशवः ।
केनोपायेन देवि ! त्वं नृणां भवसि निश्चला ॥

श्रीरुवाच ।

शुक्लाः पारावता यत्र गृहिणी यत्र चोज्ज्वला ।
अकलहा वसतिर्यत्र तत्र कृष्ण वसाम्यहम् ॥
धान्यं सुवर्णसदृशं तण्डुलं रजतोपमम् ।
अन्नञ्चैवातुषं यत्र तत्र कृष्ण वसाम्यहम् ॥
यः संविभागी प्रियवाक्यभाषी वृद्धोपसेवी प्रियदर्शनश्च ।
अल्पप्रलापी न च दीर्घसूत्री तस्मिन् सदाहं पुरुषे वसामि ॥
यो धर्मशीलो विजितेन्द्रियश्च विद्याविनीतो न परोपतापी ।
अगर्वितो यश्च जनानुरागी तस्मिन् सदाहं पुरुषे वसामि ॥
चिरं स्नाति द्रुतं भुङ्क्ते पुष्पं प्राप्य न जिघ्रति ।
यो न पश्येत् स्त्रियं नग्नां नियतं स च मे प्रियः ॥
त्यागः सत्यञ्च शौचञ्च यत्र एते महागुणाः ।
यः प्राप्नोति गुणानेतान् श्रद्धावान् स च मे प्रियः ॥
सर्वलक्षणमध्ये तु त्याग एव विशिष्यते ।
देशे काले च पात्रे च स च त्यागः प्रशस्यते ॥
नित्यमामलके लक्ष्मीर्नित्यं वसति गोमये ।
नित्यं शङ्खे च पद्मे च नित्यं श्रीः शुक्लवाससि ॥
वसामि पद्मोत्पलशङ्खमध्ये वसामि चन्द्रे च महेश्वरे च ।
नारायणे चैव वसुन्धरायां वसामि नित्योत्सवमन्दिरेषु ॥

यथोपदिष्टा गुरुभक्तियुक्ता पत्युर्वचो नाक्रमते च नित्यम्।
नित्यञ्च भुङ्क्ते पतिभुक्तशेषं तस्या: शरीरे नियतं वसामि॥
तुष्टा च धीरा प्रियवादिनी च सौभाग्ययुक्ता च सुशोभना च।
लावण्ययुक्ता प्रियदर्शना या पतिव्रता या च वसामि तासु॥
श्यामा मृगाक्षी कृशमध्यभागा सुभ्रू: सुकेशी सुगति: सुशीला।
गभीरनाभि: समदन्तपङ्क्ति: तस्या: शरीरे नियतं वसामि॥
या पापरक्ता पिशुनस्वभावा स्वाधीनकान्त: परिभूयते च।
अमर्षकामा कुचरित्रशीला तामङ्गनां प्रेमसुखीं त्यजामि॥
पुष्पं पर्य्युषितं पूतिं शयनं बहुभि: सह।
भग्नासनं कुनारीञ्च दूरत: परिवर्जयेत्॥
चिताङ्गारकमस्थीनि वह्निं भस्म विजञ्च गाम्।
न पादेन स्पृशेत् पादं कार्पासास्थि तुषं गुरुम्॥
नखकेशोदकञ्चैव मैथुनं पर्वसन्धयो:।
वर्जयेन्नग्नशायित्वमेकाकी मिष्टभोजनम्॥
सम्मार्जनीरजो वातं निर्गुण्डीं लकुचं तथा।
रात्रौ विल्वपलाशञ्च कपित्थं वर्जयेद्दधि॥
स्वगात्रासनयोर्वाद्यं अपूजामूर्द्धपादयो:।
उच्छिष्टस्पर्शनं मूर्द्ध्नि स्नानाभ्यङ्गञ्च वर्जयेत्॥
शयनञ्चान्धकारे च रात्रिवासो दिने तथा।
म्लानाम्बरं कुवेशञ्च वर्जयेत् शुष्कभोजनम्॥
परिधोद्वर्त्तितं रक्ष: स्वयं माल्यापकर्षणम्।
आलस्यमवसादञ्च न कुर्य्याल्लोष्ट्रमर्द्दनम्॥
शुक्रवारे च यत्तैलं शिलापिष्टञ्च दर्शके।
स्वयं वामेन मूर्द्धानं पाणिना नैव संस्पृशेत्॥
तारका: पुष्पवन्तौ च न पश्येदशुचि: पुमान्।
नेक्षेद्गुह्यं परस्त्रीणां नास्तं यान्तं दिवाकरम्॥
कुर्य्यान्नान्यधनाकाङ्क्षां परस्त्रीणां तथैव च।
परेषां प्रतिकूलञ्च उदितार्के प्रबोधनम्॥
नखकण्टककाष्ठैश्च कृत्तिकाङ्गारवारिभि:।
वृथा विलिखनं भूमौ न कुर्य्यान्मम काङ्क्षया॥

स्वयं दीर्घं स्वयं माल्यं स्वयं घृष्टञ्च चन्दनम् ।
नापितस्य गृहे चौरं शक्रादपि हरेत् श्रियम् ॥
न निन्दां गणके विप्रे पादयोर्नर्त्तनं तथा ।
प्रतिकूलञ्चरेत् स्त्रीणां भुक्त्वा च दन्तधावनम् ॥
अघृतं मांससूपञ्च नग्नाञ्चैव स्त्रियं तथा ।
भक्षणात् दर्शनाच्चैव शक्रादपि हरेत् श्रियम् ॥
मन्त्रैरयुक्तः परदारसेवी आचारहीनः परसेवकश्च ।
सङ्कीर्णचारी परिवादशीलस्तं निष्ठुरं दम्भमयं त्यजामि ॥
शयनञ्चार्द्रपादेन रात्रिवासो दिने तथा ।
नोत्तरीयमधः कुर्य्यात् शुष्कपादेन भोजनम् ॥
अशुचिं स्नानवस्त्राञ्च दुर्गन्धामसुखावहाम् ।
अभूषणामपुष्पाञ्च न कुर्य्यादात्मनस्तनुम् ॥
कर्णे च वदने घ्राणे तथा करतलेऽपि च ।
पादे पृष्ठे तथा नेत्रे न कुर्य्यादनुलेपनम् ॥
गन्धं पुष्पं तथा तोयं रत्नञ्चैव महोदधिम् ।
गृहीतं प्रथमं वस्त्रं वर्जयेन्न कदाचन ॥
अजरजः खररजस्तथा सम्मार्जनीरजः ।
स्त्रीणां पादरजो राजन् ! शक्रादपि हरेत् श्रियम् ॥
एवं यः कुरुते नित्यं मयोक्तानि च केशव ! ।
तुष्टा भवामि तस्याहं त्वय्येषा निश्चला यथा ॥

**इति स्कन्दपुराणे लक्ष्मीकेशवसंवादे लक्ष्मीचरितम् ॥ * ॥**

**अत्र धनज्ञानकामिपाठ्यं श्रीसूक्तं सरस्वतीसूक्तञ्च लिख्येते ।**

## अथ श्रीसूक्तम् ।

**हिरण्यवर्णां हरिणीं सुवर्णरजतस्रजाम् ।**
**चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १ ॥**
**तां म आवह जातवेदो लक्ष्मीमनपगामिनीम् ।**
**यस्यां हिरण्यं विन्देयं गामश्वं पुरुषानहम् ॥ २ ॥**
**अश्वपूर्वां रथमध्यां हस्तिनादप्रबोधिनीम् ।**
**श्रियं देवीमुपाह्वये श्रीर्मा देवी जुषताम् ॥ ३ ॥**

कांसोऽस्मि तां हिरण्यप्राकारामार्द्रां ज्वलतीं तृप्तां तर्पयन्तीम्।
पद्मे स्थितां पद्मवर्णां तामिहोप ह्वये श्रियम् ॥ ४ ॥
चन्द्रां प्रभासां यशसा ज्वलन्तीं श्रियं लोके देवजुष्टामुदाराम्।
तां पद्मिनीमी शरणं प्रपद्येऽलक्ष्मीर्मे नश्यतां त्वां वृणोमि ॥ ५ ॥
आदित्यवर्णे तपसोऽधिजातो वनस्पतिस्तव वृक्षोऽथ विल्वः।
तस्य फलानि तपसा नुदन्तु या अन्तरायाश्च वाह्या अलक्ष्मीः ॥६॥
उपैतु मां देवसखः कीर्त्तिश्च मणिना सह।
प्रादुर्भूतोऽस्मि राष्ट्रेऽस्मिन् कीर्त्तिमृद्धिं ददातु मे ॥ ७ ॥
क्षुत्पिपासामलां ज्येष्ठामलक्ष्मीं नाशयाम्यहम्।
अभूतिमसमृद्धिञ्च सर्वं निर्णुद मे गृहात् ॥ ८ ॥
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम्।
ईश्वरीं सर्वभूतानां तामिहोप ह्वये श्रियम् ॥ ९ ॥
मनसः काममाकूतिं वाचः सत्यमशीम हि।
पशूनां रूपमन्नस्य मयि श्रीः श्रयतां यशः ॥ १० ॥
कर्दमेन प्रजाभूता मयि सम्भवकर्दम।
श्रियं वासय मे कुले मातरं पद्ममालिनीम् ॥ ११ ॥
आपः सृजन्तु स्निग्धानि चिक्लीत वस मे गृहे।
नि च देवीं मातरं श्रियं वासय मे कुले ॥ १२ ॥
आर्द्रां पुष्करिणीं पुष्टिं पिङ्गलां पद्ममालिनीम्।
चन्द्रां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १३ ॥
आर्द्रां यः करिणीं यष्टिं सुवर्णां हेममालिनीम्।
सूर्य्यां हिरण्मयीं लक्ष्मीं जातवेदो म आवह ॥ १४ ॥
तां म आवह जातवेदो लक्ष्मीमनपगामिनीम्।
यस्यां हिरण्यं प्रभूतं गावो दास्योऽश्वान्विन्देयं पुरुषानहम् ॥१५॥
यः शुचिः प्रयतो भूत्वा जुहुयादाज्यमन्वहम्।
श्रियः पञ्चदशर्चञ्च श्रीकामः सततं जपेत् ॥ १६ ॥

पद्मानने पद्मऊरु पद्माक्षि पद्मसम्भवे।
तन्मे भजसि पद्माक्षि येन सौख्यं लभाम्यहम् ॥ १७ ॥
अश्वदायी गोदायी धनदायी महाधने।
धनं मे जुषतां देवि ! सर्वकामांश्च देहि मे ॥ १८ ॥
पुत्र पौत्र धनं धान्यं हस्त्यश्वादि गवे रथम्।
प्रजानां भवसी माता आयुष्मन्तं करोतु मे ॥ १९ ॥
धनमग्नि र्धनं वायु र्धनं सूर्यो धनं वसुः।
धनमिन्द्रो बृहस्पतिर्वरुणं धनमश्नुते ॥ २० ॥
वैनतेय सोमं पिब सोमं पिबतु वृत्रहा।
सोमं धनस्य सोमिनो मह्यं ददातु सोमिनः ॥ २१ ॥
न क्रोधो न च मात्सर्य्यं न लोभो नाशुभामतिः।
भवन्ति कृतपुण्यानां भक्तानां श्रीसूक्तं जपेत् ॥ २२ ॥
सरसिजनिलये सरोजहस्ते धवलतरां शुभगन्धमाल्यशोभे।
भगवति हरिवल्लभे मनोज्ञे त्रिभुवनभूतिकरि ! प्रसीदमह्यम् ॥२३॥
विष्णुपत्नीं क्षमां देवीं माधवीं माधवप्रियाम्।
विष्णोः प्रियसखीं देवीं नमाम्यच्युतवल्लभाम् ॥ २४ ॥
महालक्ष्मी च विद्महे विष्णुपत्नी च धीमहि।
तन्नो लक्ष्मीः प्रचोदयात् ॥ २५ ॥
पद्मानने पद्मिनि पद्मपत्रे पद्मप्रिये पद्मदलायताक्षि !।
विश्वप्रिये विश्वमनोऽनुकूले त्वत्पादपद्मं हृदि सन्निधत्स्व ॥२६॥
आनन्दः कर्दमश्चैतश्चिक्लीत इव विश्रुतः।
ऋषयः श्रियपुत्राश्च श्रीर्देवीर्देवता श्रिया ॥ २७ ॥
श्रीवर्चस्वमायुष्यमारोग्यमाविधात् पवमानं महीयते।
धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ २८ ॥
ऋणरोगादि दारिद्र्यं पापक्षुदपमृत्यवः।
भयः शोकमनस्तापा नश्यन्तु मम सर्वदा ॥ २९ ॥

इति ऋग्वेदे खैलिके १० मण्डले ८ माष्टके श्रीसूक्तं समाप्तम् ॥ * ॥

# अथ सरस्वती सूक्तम्।

(अवश्शौनक:।) इयमित्येतदाद्यन्तु सूक्तं सारस्वतं जपेत्।
द्विज: प्रात: शुचिर्भूत्वा वाग्मी भवति बुद्धिमान्॥

इयमददाद्रभसमृणच्युतं दिवोदासं वध्र्यश्वाय दाशुषे।
या शश्वन्त मा च खादावसं पणिं ता ते दात्राणि तविषा सरस्वति॥१
इयं शुष्मेभिर्बिसखा इवारुजत्सानु गिरीणां तविषेभिरूर्मिभि:।
पारावतघ्नीमवसे सुवृक्तिभि: सरस्वती मा विवासेम धीतिभि:॥ २॥
सरस्वति देवनिदो निबर्हय प्रजां विश्वस्य बृसयस्य मायिन:।
उतक्षितिभ्योऽवनीरविन्दो विषमेभ्यो अस्रवो वाजिनीवति॥ ३॥
प्रणोदेवी सरस्वती वाजेभिर्वाजिनीवति। धीनामवित्र्यवतु॥ ४॥
यस्त्वा देवि सरस्वत्युपब्रूते धने हिते। इन्द्रं न वृत्रतूर्य्ये॥ ५॥
त्वं देवि सरस्वत्य वा वाजेषु वाजिनि। रदा पूषेव न:सनिम्॥ ६॥
उतस्यान: सरस्वती घोरा हिरण्यवर्त्तनि:। वृत्रघ्नी वष्टि सुष्टुतिं॥७॥
यस्या अनन्तो अह्रुतस्त्वेषश्चरिष्णुरर्णव:। अमश्चरति रोरुवत्॥ ८॥
सानो विश्वा अतिद्विष: स्वसॄरन्या ऋतावरी। अतन्नहेव सूर्य्य:॥९॥
उतन: प्रियाप्रियासु सप्तस्वसा सुजुष्टा। सरस्वतीस्तोम्याभूत्॥ १०॥
आपप्रुषी पार्थिवान्युरु रजो अन्तरीक्षं। सरस्वती निदस्पातु॥ ११॥
त्रिषधस्था सप्तधातु: पञ्चजाता वर्द्धयन्ती। वाजेवाजे हव्याभूत्॥१२
प्रया महिम्ना महिनासु चेकिते द्युम्नेभिरन्या अपसामपस्तमा।
रथ इव बृहती विभ्वने कृतोपस्तुत्या चिकितुषा सरस्वती॥ १३॥
सरस्वत्यभि नो नेषि वस्यो माप स्फरी: पयसा मान आधक्।
जुषस्व न: सख्या वेश्या च मा त्वत्क्षेत्राण्यरणानि गन्म॥ १४॥

इति ऋग्वेदे ४ र्थाष्टके ८ माध्याये। ६ष्ठमण्डले सरस्वतीसूक्तं समाप्तम्॥ *॥

श्रीलक्ष्मी: श्रीसरस्वत्यो: पूजा स्तवकवचादिकं विशेषत: पुराणात् तन्त्राच्च ज्ञातव्यं विस्तृतिभयान्नात्र लिख्यते।

(क्रमश:)

# "आशा"।

जगति जन्तूनामाशैव जीवनसहाया, तां प्राणसमां विन
कस्मिंश्चिदपि कर्म्मणि प्रवर्त्तन्ते जीविनः। ग्रीष्मवर्षादिऋतू
मेकस्यैवान्ते अन्या एव समुद्भूय मनसि अभिनवोत्साहेन विध
त्सुक्यं नियोजयति कर्म्मणि मानवान्। वन्ध्याऽबला भावि
सुखदर्शनसुखमाकलय्य अन्धः पुनर्दृष्टिसुखमपेक्ष्य खञ्जः स
गन्तुकामः जराजीर्णः पुनः पुष्टवपुःप्राप्तिलालसः दुराशयैव त
कर्म्मणि नियुज्यते, यद्यदिहजीवनेऽपि तत्सद्दशस्य कस्यापि
सम्भवः तस्मिन्नपि द्विगुणतरोत्साहेन प्रवर्त्तयति। जानन्तो
मृगतृष्णिकयेवातिदुराशया प्रतार्य्यन्ते लोलुभ्यमानाः। शक्नुव
हि ज्योतिर्विदः ज्योतिःशास्त्रज्ञानप्रभावेण भाविकार्य्यमपि नि
किन्तु एतावदेव महच्चित्रं यत् मानवचेतसि समुद्भूतायाः आ
परम्परायाः अनुमात्रमपि न कथयितुं प्रभवन्ति। आ सम
प्रतिदिनभिक्षोपजीविनोऽपि आशया प्रेर्य्यमाणाः प्राणान् धारयं
आशैव मायायाः द्वितीया सखीव तयैव सह संयुज्य परा
करोति जगतीम्। असम्बन्धाशेषव्यापार-शोकातुरस्यापि
मातृबन्धुरहितस्य चेतसि समुपनीय च्छलान् कृतविद्यपुत्रन
तुरायाः जनन्या अपि मनसि स्थापयित्वा बहुलोभान्
सुखं विचरति। प्राणत्यागकृतनिश्चयेनापि समाद्रियते सा।
पतिः सृष्टिनैपुण्यप्रदर्शनाय आशासूत्रेणैव बबन्ध हृदयानि जीवि
परन्तु जगदेकरूपायाः आशायाः विना विधातुः सृष्टिरपि
स्यात्। मनःसङ्कल्पितमेवं पश्यामि, एवमुन्नतिपदं यास्यामि,
भविष्यामि बान्धवेनाभिनन्द्यमानः इत्यादिप्रकाराः आशाः
धिकाः पालयन्ति स्वेन्द्रियसंहतिरिव मानवाः। मूर्खाः
एतदपि न जानन्ति यत् सर्वेषामपि फलवत्यामाशायां जग

न केऽपि निराशतामुपययुः। सर्वतः सुखिजनानामेव सद्भावो माभूत्; सर्व एव ईप्सितसुखानामन्तर्लेखामनुमयुः। इत्येतावद्विचार्य्य मनसि कर्त्तव्यमपहाय दुराशया समाकृष्टेन कार्य्यं यथेच्छाचारित्वं; कर्त्तव्यपरेण च महाजनेन यत्क्रियते तदपि कार्य्यम्। अतः आशैव संसारग्रन्थिः। साधूनां सर्वत[एव] सदाशा आश्रयनीयेति।

श्रीकेदारनाथमुखोपाध्यायः।
मूलायोड़।

---

## शरत् (१)

नीरद इह, गर्जति खलु, वर्षति न हि, जीवनं;
सन्ततमिव, वर्षणप्रिय,-चातकचय,-जीवनम्।
वासवधनु-रायतकपि,—शारुणसित,-चित्रितं
शारदनव, मेचकगग,-नोपरि-परिशोभितम्॥ १॥
निर्म्मलनव-शीतलजल-पूरित सुखवीच्चिते,
क्रीड़ति सित-हंसनिकर एव सरसि रञ्जिते।
श्वेतविमल-पङ्कजदल-मध्यमधि स संस्थितः
शुभ्रकमलमेव तमपि पश्यति जन एव सः॥ २॥
अभ्रविगत निर्म्मलगगने च कमलफुल्लकः
तीक्ष्णकिरणमर्पयति स भूमिषु दिननायकः।
रम्यमधुरमेव हसति कोमलमतिपद्मिनी
मोहित-प्रियषट्पदकुलवाञ्छितमधुशालिनी॥ ३॥

---

(१) अत्र रचयित्र्याः सकलमविकलं वर्णितं रचितं, अतोऽत्राकिञ्चित्करोऽपि कश्चिद्दोषः "अभ्रविगत" इत्यादिकः स्वीकृतः।

निर्म्मलप्रिय दर्शनमिह काननमुपकाननं
मन्दपवन ताड़ितसितकाशकुसुमशोभितम्।
षट्पदप्रिय चारुकुसुम रेणुचयसुवासित:
स्निग्धहृदय मुग्धक इत एव वहति मारुत: ॥ ४ ॥
प्रावृषि नव नीरददल मण्डिततर यामिनी
न स्म पिबति चन्द्रकिरण मित्यमतिपिपासिनी।
सा भ्रमति च साम्प्रतमपि चात्र खलु चकोरकी
चन्द्रकिरणपूर्णनभसि चेतसि अतिनन्दिनी ॥ ५ ॥
किन्नर-सुर-मानवजगतां हि हृदयमोहिनी
शुभ्रसुकरचन्द्रखचित-शारदसुखयामिमी।
कौमुदचय शोभित सितमेव निखिलभूतलं
निर्म्मलमखिलं हि भवति सम्प्रति शरदि क्रम: ॥ ६ ॥

**श्रीमती सरोजमोदिनी देवी।**

---

## स्त्रीशिक्षालयम्।

प्रतिप्रभाते दश-वादिते च, धनेशदीनप्रभृतेश्च कन्या:।
समुत्सुकाश्चारुविमुक्तकेशा:, सुपुस्तिकां रम्यकरेण धृत्वा ॥
सम्यक् सुवेशा हि मयात्र दृष्टा: संप्रेरिता वा स्वजनेन पित्रा।
मार्गन्त्वलंकृत्य प्रयान्ति सर्वा: विद्यालये तत्र विधर्मिणश्च ॥१-२॥
सिंहस्य किंवा हि मृगादनस्य च सर्पावलीनां वरमाननेष्वपि।
श्रेयस्करं हा खलु रक्षसोमुखे निक्षेपणं तत् किल बालिकानाम् ॥३
गभीरनीराम्बुधिनीरमध्ये विसर्जणं वा दुहितुर्भवेच्च।
यमस्य वासे नरके च प्रेरणं वरं विधर्मिव्रजसंस्रवात् तत: ॥ ४ ॥
तामार्य्यनारीं नवकोमलाङ्गीं देवीं पवित्रां गृहिणीहलक्ष्मीम्।
शिक्षा-निमित्तं स्वजना: कथञ्च म्लेच्छालयं हा खलु प्रेरयन्ति ॥५॥

तासां हि चित्तन्त्वतिभक्तिपूर्णं अतीव नम्रं वरकोमलञ्च।
इत्थञ्च वज्रादधिकं दृढ़न्तत् कुसंस्रवादुग्रमभक्तिकञ्च॥ ६॥
आचारशून्या कुविलासपूर्णा स्नेहैर्विहीना स्वजनेषु नारी।
गार्हस्थ्यकृत्ये विरता हि चेत्थं देवेषु तीर्थेषु भवत्यभक्तिः॥ ७॥
धात्रैव समर्थ्यैव हि बालकानां संपालनं वा खलु रन्धनञ्च।
संन्यस्य हस्ते परिचारिकाणां रता असन्नाटकपाठकार्य्ये॥ ८॥
सदैव कार्पेटपटं वयन्ति किंवा बहिः सौधतले अटन्ति।
आबाल्यमेवञ्च यदेव दृष्टं कुर्वन्ति लेडीस्कुलतोऽबलास्ताः॥ ९॥
तदपि हि जनकेन स्वात्मजा तत्र तत्र
न खलु न खलु नूनं प्रेरणीया कदाचित्।
इदमशुभकुविद्यागारमेवं हि येन
झटिति भवति निर्मूलं हि कर्त्तव्यमेतत्॥ १०॥

श्रीमती सरोजमोदिनी देवी।

---

## कुन्दमाला।

### प्रथमोच्छ्वासः।

जीवनसंग्रामः।

"सर्वङ्कषा भगवती भवितव्यतैव" मालतीमाधवे।

आसीदेकदा मधुराषाढ़मासि परिणते यामे वासरस्य कश्चन सर्वमनोरमे तरुणे वयसि वर्त्तमानो निसर्गसौन्दर्य्यसारभुवि श्रीवृन्दावने परमपूतसलिलाया भगवत्या यमुनाया सैकतशीतले पुलिने कृतोपवेशः। प्रावृष्यपि अम्बरशिरसि न क्वापि तत्कालसहभवो घनलेशो नयनगोचरतां गतः। य एव वा मेघलवो लोकितव्यः स पुनः

हैमलहरीराजिरिव पश्चिमगगणपयोधरे विराजितः। अस्ताचल-चूड़ावलम्बी भगवान् भास्करो हिरण्मयांशुलेखाभिः प्रतिबिम्बितो यमुनाकूलतिकायां कृष्णहरितसङ्केतेन दृश्यमेकमभिनवमुत्पादितवान्। वर्षासमागमेन यमुना परिपूर्णदेहयष्टिः वातविताड़ितलहरी-विलसितेन प्रकटितवती स्वयौवनभरालसम्। निसर्गत एव श्रीवृन्दा-वनं भूतलस्थं द्वितीयमिव सुरेन्द्रविलासोपवनं नन्दनम्। प्रावृट् सङ्गेन पुनः यौवनकृतपदा अलोकसुन्दरी ललनेव किमपि अपूर्वम् अदृष्टपूर्वम् अनुत्प्रेक्षितपूर्वम् अनुद्भावितपूर्वम् अशेषभुवनजनमनो-मोहनं रूपमापादितम्। सर्वतः अशेषफलकुसुमकिसलयविमण्डितेषु लतामण्डपेषु नीड़प्रत्यागतानां विहङ्गमपरिवाराणां मनोहारिभिः कूजनैः सर्व एव प्रदेशः परमरमणीयतां गतः। एवंभूते सौन्दर्य्यैक-प्रकटने भूमावपि युवा किमिवाभिध्यायन् अतर्कितोद्गतवाष्पभर-परिषिक्तगण्डो निमीलितलोचन एव आसीत्। परमरमणीये प्रकृतिलीलाप्राङ्गने सौन्दर्य्यैकास्पदस्य तरुणपुरुषस्य सर्वेष्वेतेषु दर्शनीयेषु किमिति वयस आकृतेर्वा असदृशी भावविकलतेति पाठकेषु मानुषजनसहजं कुतूहलं कथं नोत्पादयेत्। कुतूहलस्यास्य दूरी-करणमानसेन आदावेव युवकपरिचयः करणीय इति तदवतरणिका संयोजिता। देहसंस्कारेण युवा चतुर्विंशतिवर्षदेशीय इति प्रतीयते। आकारकान्त्या सदन्वयावतंस इति चेतसि जायते। वेशादि पर्य्यालोचनेन तु सततमसमीक्ष्यकारिणं विधिं प्रति परमरोषाविष्टता दर्शकेषु। जनपरिशून्ये सुदूरे यमुनाकच्छे कथमेवास्यावस्थितिरिति परं संशयपदम्। कथं वा विकसितारविन्दप्रतिमाभ्यां हैम-पारिजातविड़म्बनकपोलफलकप्रवाही अनवरतं वाष्पविमोक्षः। कथं पुनः गाढ़मायतञ्च श्वासविक्षेपः। कथञ्च पुनः अवसरतः अन्तःसारपरिहीनाः सुगाढ़ा अपि शून्यदृष्टयः अन्तरीक्षेषु। अहो विधेर्निर्माणकुशलता। सर्वास्वेवावस्थासु मनोहरदर्शना रमणीय-

कान्तयः । किञ्च नयनपुण्डरीकविनिसृता वाष्पाम्बुरेखा नारायणपादकमलविनिर्गता भगवती मन्दाकिनीव प्रतिभाति । सलिलाभ्यन्तरवर्त्तिन्यौ कनीनिके चीरकुल्यामध्यवर्त्तिन्यौ हैमकमलिन्यौ इव शोभां गच्छतः ।

( क्रमशः )

श्रीउपेन्द्रनाथरायः ।

---

## धर्म्मविवेकः ।

### ( पूर्वप्रकाशितात्परः )

यत् कर्म्म धर्म्मसंयुक्तं मनसापि विचिन्तयेत् ।
संवर्द्धते यथा वातः शुक्लपक्ष इवोडुराट् ॥
दीर्घकालेन तपसा सेवितेन तपोवने ।
धर्म्मनिर्धूतपापानां संसिद्धन्ति मनोरथाः ॥
धर्म्मवृद्धौ च वर्द्धन्ते सर्वभूतानि सर्वदा ।
तस्मिन्नसति क्षीयेत तस्माद्धर्म्मं विवर्द्धयेत् ॥

**धर्म्मशक्तौ मनुमतम् ।**

"श्रुतिस्मृत्युदितं धर्म्ममनुतिष्ठन् हि मानवः ।
इहकीर्त्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम् ॥ २ । ९ ।"
"मृतं शरीरमुत्सृज्य काष्ठलोष्ट्रसमं चितौ ।
विमुखा बान्धवा यान्ति धर्म्मस्तमनुगच्छति ॥ ४ । २४१ ।
तस्माद्धर्म्मं सहायार्थं नित्यं सञ्चिनुयाच्छनैः ।
धर्म्मेण हि सहायेन तमस्तरति दुस्तरम् ॥ ४ । २४२ ।
धर्म्मप्रधानं पुरुषं तपसा हतकिल्बिषम् ।
परलोकं नयत्याशु भास्वन्तं खशरीरिणम् ॥ ४ । २४३ ॥"
"धर्म्म एव हतो हन्ति धर्म्मो रक्षति रक्षितः ।
तस्माद्धर्म्मो न हन्तव्यो मा नो धर्म्मो हतोऽवधीत् ॥ ८ । १५ ॥"
"एक एव सुहृद्धर्म्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यद्धि गच्छति ॥ ८ । १७ ॥"

"वेदोऽखिलो धर्म्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥ १। ६॥"

धर्म्मविषये याज्ञवल्क्यमतम्। हेमाद्रौ। १। व्रं।

"कर्म्मणा मनसा वाचा यत्नाद्धर्मं समाचरेत्।
अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु॥ १। १५६॥"

धर्म्मशक्तौ व्यासमतम्, चतुर्वर्गचिन्तामणौ। व्रं। १।

"धर्म्मादपेतं यत्कर्म्म यद्यपि स्यान्महाफलम्।
न तत् सेवेत मेधावी शुचिः कुशतिलं यथा॥
सुदुर्लभमिदं प्राप्य मानुषं लोकमध्रुवम्।
न कुर्य्यादात्मनः श्रेयस्तेनात्माऽवञ्चितश्चिरम्॥
तृणपत्राग्रगाम्यम्बु विन्दुवच्चपलं यतः।
जीवितं वा धनं विप्रास्तस्माद्धर्मं समाचरेत्॥"

धर्म्मशक्तौ चतुर्वर्गचिन्तामणिधृतमत्स्यपुराणमतम्। व्रं। १।

"अनित्यं जीवितं यस्माद्वसु चातीव चञ्चलम्।
केशेष्विव गृहीतस्तु मृत्युना धर्म्ममाचरेत्॥"

धर्म्मशक्तौ चतुर्वर्गचिन्तामणिधृतादित्यपुराणमतम्। व्रं।

"मानुष्यं यः समासाद्य स्वर्गमोक्षप्रदायकम्।
द्वयोर्न साधयत्येकं स मृतस्तप्यते चिरम्॥
यावत् स्वास्थ्यशरीरत्वन्तावत् धर्मं समाचरेत्।
अस्वास्थ्यश्चोदितो नान्यत् किञ्चित् कर्त्तुं समुत्सहेत्॥"

धर्म्मशक्तिविषये विष्णुमतम्, चतुर्वर्गचिन्तामणौ। व्रं। १।

"युवैव धर्म्ममन्विच्छेदनित्यं जीवितं यतः।
कृते धर्मे भवेत् कीर्त्तिरिह प्रेत्य च वै सुखम्॥
यथेक्षुहेतोरपि सेवितं पयस्तृणानि वल्लीरपि च प्रसिञ्चति।
तथा नरो धर्मपथेन सञ्चरन् सुखञ्च कामांश्च वसूनि चाश्नुते॥"

धर्म्मशक्तौ श्रीमन्नारदमतम्। भागवते। ७। ११। ७।

"धर्म्ममूलं हि भगवान् सर्वदेवमयो हरिः।
स्मृतञ्च तद्विदां राजन् येन चात्मा प्रसीदति॥"

धर्म्मशक्तिविषये पञ्चशिखशिष्यस्य ईश्वरकृष्णस्य मतम् । सांख्य-कारिका ४४ ।

"धर्म्मेण गमनमूर्द्ध्वं गमनमधस्ताद्भवत्यधर्मेण ।
ज्ञानेन चापवर्गो विपर्य्ययादिष्यते बन्धः ॥"

धर्म्मशक्तौ बौद्धमतम् । यथा रसवाहिनीपुस्तके । 'वत्थु आदि'

"धम्ममेव सुणिस्सामि धम्मे मे रमति मनो ।
न हि धम्मादपरमत्थि धम्ममूलन्ति संपदन्ति ॥"

रक्षितेन धर्मेण धनपुत्रसम्पत्तिः प्रवर्द्धते । यथा अथर्ववेदे ।१८।३।१।

"इयं नारी पतिलोकं वृणाना नि पद्यत उपत्वा मर्त्त्यप्रेतम् ।
धर्मं पुराणमनुपालयन्ती तस्यै प्रजां द्रविणञ्चेह धेहि ॥"

धर्मेण प्रतिष्ठितो हि प्रजासु राजा भवति । यथा शुक्लयजुर्वेदे ।२०।९

जङ्घाभ्यां पद्भ्यां धर्मोऽस्मि विशि राजा प्रतिष्ठितः ।

( क्रमशः )

---

# तत्त्वप्रपञ्चः ।

( आषाढ़मासादनुवृत्तः )

तदेवं पुरुषे न स्वाभाविको बन्धः इति प्रतिपाद्य प्रकृतिसंयोग एव साक्षाद्बन्धनिमित्तमित्यवधारितम् । तत्र पुनरियमाशङ्का—भवतु प्रकृतिसंयोग एव पुरुषस्य बन्धनिमित्तम्, किन्तु प्रकृतिसंयोगस्य पुनः किं निमित्तम् ? अविवेकनिमित्तम् एतदेव सूत्रकारोऽप्याह—

"तद्योगेऽप्यविवेकान्न समानत्वम्" इति । १ । ५५ ।

स चाविवेकः मुक्तपुरुषे नास्ति नास्ति च ततो बन्धः । किन्तु संसारिषु पुरुषेषु अविवेकस्ततो बन्धोऽप्यस्तीति ।

अत्रेदं विचार्य्यते—योऽसौ बन्धकारणमविवेकः स किं पुरुष-धर्म्मः ? उत बुद्धिधर्म्मः ? बुद्धिधर्मोऽविवेकः, न तु पुरुषधर्मः कथ-

मिति ? नित्यशुद्धबुद्धस्य तदसम्भवात्। चेद्बुद्धिधर्मोऽविवेकस्तदा बुद्धिधर्मेण पुरुषः कथं बध्यते ? सत्यं समवायेन बुद्धिधर्मोऽप्यविवेकः विषयता सम्बन्धेन पुरुषनिष्ठत्वादसौ बध्यते। तथा हि प्रकृतिर्बुद्धिरूपेण परिणता सती स्वामीभूताय यस्मै पुरुषाय तनूं पृथक्कृत्य स्वव्यापारञ्च दर्शयति, तस्यैव पुरुषस्य बुद्धिरूपेण संयोगं कुरुते इति।

एतदेवोक्तमीश्वरकृष्णेन कारिकया,—

"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्गन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः॥ २१॥" इति।

पुनरप्यविवेकस्वीकारे आशङ्कते। हंहो अनादिसदसत्कर्मवासनैव बुद्धिपुरुषसंयोगे हेतुरस्तु अस्तु च तेनैव बन्धः तथापि किमिति अविवेकः बन्धकारणं स्वीकुर्य्याम्। नैवम् अनन्यगतिकत्वादेवाविवेको बन्धकारणमिति स्वीकर्त्तव्यं, तथा हि गीतायां भगवान् सङ्गाख्याविवेकस्यैव पुंप्रकृत्योः संयोगे हेतुत्वमित्युच्चैरुक्तवान्। यथा,—

"पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।
कारणं गुणसङ्गोऽस्य सदसद्‌योनिजन्मसु॥" इति (१)

अत्रैतावान् विशेषः—अविवेकापेक्षया कर्मादीनां पुरुषे सम्बन्धो दूरः, कथमिति चेत्—पुरुषस्य विवेकेन अविवेको नाश्यते, अविवेकनाशाच्च कर्म्माणि नश्यन्ति, अतएव अविवेक एव संयोगे मुख्यहेतुः कर्म्माणि तु अविवेकद्वारा हेतूनि इत्यवधेयम्।

अथ यमेव अविवेकमादाय परिश्राम्यसि विवदसे बहु जल्पसि च, कोऽसौ अविवेकः ? को वा पदार्थः ? किं स्वरूपो वा ? कस्य धर्मो वा ? सत्यम्, श्रूयतामुच्यते। अविवेको विवेकविरोधिज्ञानविशेषः। न स्वतन्त्रः पदार्थः। आवरकस्वरूपः। बुद्धेर्धर्म्म इति।

---

(१) अत्र युक्तिरपि वक्ष्यते।

अयमविवेकः अविद्येत्येवं नाम्ना पि व्यपदिश्यते, तथा हि पुरुषो हि विपर्य्ययज्ञानाद्बध्यते, तच्च विपर्य्ययज्ञानं पञ्चविधम् अविद्या अस्मिता रागः द्वेषः अभिनिवेशश्चेति। पातञ्जलेऽपि अविद्यैव बुद्धिपुरुषसंयोगे हेतुरुक्ता यथा—"तस्य हेतुरविद्येति" २।२४ सू०। एतच्च "बन्धोविपर्य्ययात्" ।३।२४। "विपर्य्ययभेदाः पञ्च" ।३।३७। इत्यस्य तात्पर्य्यमुत्थाप्य वक्ष्यते।

अयञ्च अविवेकः बहुविधः जन्माख्य संयोगहेतुर्भवति। साक्षात् रागादिद्वारा कर्मभिश्च यथा—अविवेकात् विषयेषु रागो जायते, रागात् सकामपुण्यापुण्यकर्माणि जायन्ते, कर्मभिश्च धर्म्माधर्म्मौ जायेते, ताभ्याञ्च स्वर्गीयं नरकीयं वा शरीरमुत्पद्यते ततोऽसौ पुरुषो बध्यते। तथाच योगसूत्रम् "सति मूले तद्विपाको जात्यायुर्भोगा न इति ।२।१३। "कर्त्ताऽस्मीति निबध्यते इति गीतावाक्यञ्च। न्यायदर्शनमपि व्यतिरेकमुखेन "वीतरागजन्मादर्शनात्" इत्यनेन रागस्यैव जन्मकारणत्वं प्रत्यपीपदत्। तथा च मोक्षधर्मे—

"इन्द्रियाणीन्द्रियार्थांश्च नोपसर्पन्त्यतर्षुलम्।
हीनश्च करणैर्देही न देहं पुनरर्हति॥
तस्मात्तर्षात्मिकाद्रागा बीजाज्जायन्ति जन्तवः॥"

सर्वमेतदभिप्रेत्याह ईश्वरगीता—

"अनात्मन्यात्मविज्ञानं तस्माद्दुःखं तथेतरत्।
रागद्वेषादयो दोषाः सर्वे भ्रान्तिनिबन्धनाः॥
कार्य्यो ह्यस्य भवेद्दोषः पुण्यापुण्यमिति श्रुतिः।
तद्दोषादेव सर्वेषां सर्वदोषसमुद्भवः॥"

गोतमोऽपि स्वदर्शने मिथ्याज्ञानापरनाम्नः अविवेकस्यैव दुःखकारणत्वमुक्तं यथा—

"दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति॥"

सिद्धमविवेको बन्धाख्य दुःखकारणमिति। दुःखनाशे पुनः किं कारणम्? दुःखकारणनिवृत्तिरेव दुःखनाशकारणम्। तच्च कारणम्

२१

अविवेकविरोधी विवेक एव, एकेनैव विवेकरूपेण कारणेन अविवेको निवर्त्तते, अविवेके निवर्त्तमाने सुखमुत्पद्यते। यथा—जलपिपासा-दुःखं जलपानमेव निवर्त्तयति नान्यथा। यथा च—मुहुर्विकटगर्जद्दुद्रप्रचण्ड-जलधरग्रस्यमानमार्गे भाद्रपदमास-निशमावस्यायाम् अन्धतमसे व्रजतो दुःखं प्रज्वलत्स्थूलोल्मूक एव निराकरोति सुखञ्चोत्पद्यते। अतएव सूत्रकारः प्रोवाच—

"नियतकारणात्तदुच्छित्तिर्ध्वान्तवत् ॥ १ । ५६ ॥"

पतञ्जलिरप्याह—

"विवेकख्यातिरविप्लवा हानोपायः ॥" इति।

अथात्र इयमाशङ्का-ननु यदि केवलं विवेक एव अविवेकोन्मूलने निदानं तर्हि किमिति वेदैः यज्ञादिकर्मानुज्ञायते? सत्यम् अत्रैतदवधेयं, सन्ति कर्म्माणि तु योगानुष्ठानादीनि रजस्तमोभावं विलापयन्ति सत्त्वञ्च शोधयन्ति ततश्च सत्त्वशुद्धिद्वारा कर्म्माणि विवेकसाधनानि न तु प्राधान्यात्। तथा च पतञ्जलिः—

"ज्ञानदीप्तिराविवेकख्यातेरित्याह। (क्रमशः)

---

# नीतिसंग्रहः।

CONTINUED FROM PAGE 116.

(कथासरित्सागरे सुभाषितानि)

35. रसिको हि वहेत्काव्यं पुष्पामोदमिवानिलः।

Just as the smell of the flowers is borne by the air the beauty of a good poem is learnt by heart by one who has the taete for it.

36. तत्त्वज्ञेन कृतावज्ञः को नामान्तर्न तप्यते ।

Who is it that does not suffer heartfelt pain at his being dishonoured by the wise ?

37. संयोगा विप्रयोगाश्च भवन्ति बहवो नृणाम् ।

Man is subject to various meeting (unions) and separations ( bereavements ) in the world.

38. पापं पापान्तराक्षेपक्रूरं हि क्रूरकर्मणाम् ।

The sin of the wicked is terribly great owing to its ever being multiplied by a series of vicious acts.

39. ( इत्थं नरपते ! ) दीर्घवियोगव्यसनार्णवम् ।
तरन्ति च लभन्ते च कल्याणं धीरचेतसः ॥

( Oh king! ), the patient and nobleminded are thus able to swim over the sea of long separation as well as to gain their object and secure good and happiness in the end.

40. जलाहतो विशेषेण वैद्युताग्नेरिव द्युतिः ।
आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि ॥

A brave and wise man is indeed he whose intellect is even brighter in days of distress and difficulties, like the flash of lightning which is more conspicuous when it appears in the midst of raining clouds.

41. शवं स्पृशन्ति सुजना गणिका न तु निर्धनम् ।

The good do touch a corpse but the prostitute will even avoid the contact of the poor.

42. सर्वं हि साधयन्तीह द्विजाः श्रौतेन कर्मणा ।

There is nothing difficult for the twiceborn who can accomplish every thing by the performance of Vedic cerimonials.

43. प्रियोपभोगवन्ध्येत्र हि विफले रूपयौवने ।

Beauty and youth are alike useless in one who is not

fortunate to enjoy the pleasures of life in the hap company of her ( or his ) beloved consort.

44. भूतेन्द्रियानभिद्रोहो धर्मो हि परमो मतः।

The absolute controul over ( or the complete subjecti of ) the animal senses in man is universally acknowledg to be the highest virtue or religion.

45. अरञ्जितस्य बालोऽपि रोषमुत्पादयेद् ध्रुवम्।

If not pleased or satisfied a child canalso be angry.

पु० श्रीगोपीनाथ शर्म्मा—(जयपुर।)

---

## ब्रह्मचर्य्यम्।

( पूर्वप्रकाशितात्परः )

ओङ्कारपूर्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव सावित्री विज्ञेयं ब्रह्मणो मुखम्॥ ८१॥ (१)

81. Know that the three imperishable Mahavyahrt preceded by the syllable Om, and ( followed ) by the thre footed Sâvitri are the portal of the Veda and the gate leadi ( to union with ) Brahman.

योऽधितेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः।
स ब्रह्म परमभ्येति वायुभूतः खमूर्त्तिमान्॥ ८२॥

82. He who daily recites that ( verse ), untired, duri three years, will enter (after death) the highest Brahman, mo as free as air, and assume an ethereal form.

एकाक्षरं परं ब्रह्म प्राणायामः परंतपः।
सावित्र्यास्तु परं नास्ति मौनात् सत्यं विशिष्यते॥ ८३॥

83. The monosyllable (Om) is the highest Brahman, (thre

---

(१) अतःपरं वुलारसाहेबस्यानुवादः विन्यस्यते।

suppressions of the breath are the best (form of) austerity, but nothing surpasses the Savitri; truthfulness is better than silence.

क्षरन्ति सर्वा वैदिक्यो जुहोति यजति क्रियाः ।
अक्षरन्त्वक्षरं ज्ञेयं ब्रह्म चैव प्रजापतिः ॥ ८४ ॥

84. All rites ordained in the Veda, burnt oblations and (other) sacrifices, pass away; but know that the syllable (Om) is imperishable, and (it is) Brahman, (and) the Lord of creatures (Pragapati).

विधियज्ञाज्जपयज्ञो विशिष्टो दशभिर्गुणैः ।
उपांशुः स्याच्छतगुणः सहस्रो मानसः स्मृतः ॥ ८५ ॥

85. An offering consisting of muttered prayers, is ten times more efficacious than a sacrifice performed according to the rules (of the Veda); a (prayer) which is inaudible (toothers) surpasses it a hundred times, and the mental (recitation of sacred texts) a thousand times.

ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः ।
सर्वे ते जपयज्ञस्य कलां नार्हन्ति षोड़शीम् ॥ ८६ ॥

86. The four Pakayagnas and those sacrifices which are enjoined by the rules (of the Veda) are all together not equal in value to a sixteenth part of the sacrifice consisting of muttered prayers.

जप्येनैव तु संसिद्धेद्ब्राह्मणो नात्र संशयः ।
कुर्य्यादन्यत्र वा कुर्य्यान्मैत्रो ब्राह्मण उच्यते ॥ ८७ ॥

87. But, undaubtedly, a Brahmana reaches the highest goal by muttering prayers only; (whether) he perform other (rites) or neglect them, he who befriends (all cretures) is declared (to be) a (true) Brahmana.

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान् यन्तेव वाजिनाम् ॥ ८८ ॥

88. A wise man should strive to restrain his organs which

run wild among alluring sensual objects, like a charioteer his horses.

एकादशेन्द्रियाण्याहुर्यानि पूर्वे मनीषिणः।
तानि सम्यक् प्रवक्ष्यामि यथावदनुपूर्वशः॥ ८९॥

89. Those eleven organs which former sages have named, I will properly (and) precisely enumerate in due order,

श्रोत्रं त्वक् चक्षुषी जिह्वा नासिका चैव पञ्चमी।
पायूपस्थं हस्तपादं वाक् चैव दशमी स्मृता॥ ९०॥

90. (Viz ) the ear, the skin, the eyes, the tongue, and the nose as the fifth, the anus, the organ of generation, hands and feet, and the (organ of) speech, named as the tenth.

बुद्धीन्द्रियानि पञ्चैषां श्रोत्रादीन्यनुपूर्वशः।
कर्मेन्द्रियाणि पञ्चैषां पाय्वादीनि प्रचक्षते॥ ९१॥

91. Five of them, the ear and the rest according to their order, they call organs of sense and five of them, the anus and the rest, organs of action.

एकादशं मनो ज्ञेयं स्वगुणेनोभयात्मकम्।
यस्मिन् जिते जितावेतौ भवतः पञ्चकौ गणौ॥ ९२॥

92. Know that the internal organ (manas) is the eleventh, which by its quality belongs to both (sets); when that has been subdued, both those sets of five have been conquered.

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम्।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति॥ ९३॥

93. Through the attachment of his organs (to sensual pleasure) a man doubtlessly will incur guilt; but if he keep them under complete control, he will obtain success (in gaining all his aims ).

न जातु कामः कामानामुपभोगेन शाम्यति।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥ ९४॥

94. Desire is never extinguished by the enjayment of

desired object; it only grows stronger like a fire (fed) with clarified butter.

यश्चैतान् प्राप्नुयात् सर्वान् यश्च तान् केवलां भजेत् ।
प्रापणात् सर्वकामानां परित्यागो विशिष्यते ॥ ९५ ॥

95. If one man should obtain all those (sensual enjoyments) and another should renounce them all, the renunciation of all pleasure is far better than the attainment of them.

न तथैतानि शक्यन्ते संनियन्तुमसेवया ।
विषयेषु प्रजुष्टानि यथाज्ञानेन नित्यशः ॥ ९६ ॥

96. Those (organs) which are strongly attached to sensual pleasures, cannot so effectually be restrained by abstinence (from enjoyments) as by a constant (pursuit of true) knowledge.

वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छति कर्हिचित् ॥ ९७ ॥

97. Neither (the study of) the Vedas, nor liberality, nor sacrifices, nor any (self-imposed) restraint, nor austerities, ever procure the attainment (of rewards) to a man whose heart is contaminated (by sensuality).

श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा तथैव च ।
न हृष्यति ग्लायति वा सविज्ञेयो जितेन्द्रियः ॥ ९८ ॥

98. That man may be considered to have (really) subdued his organs, who on hearing and touching and seeing, on tasting, and smelling (anything) neither rejoices nor repines.

इन्द्रियाणान्तु सर्वेषां यद्येकं चरतीन्द्रियम् ।
तेनास्य च्चरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥ ९९ ॥

99. But when one among all the organs slips away ( from control ), thereby (man's) wisdom slips away from him, even as the water (flows) through the one ( open ) foot of a ( water-carrier's ) skin.

वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा।
सर्वान् संसाधयेदर्थानक्षिण्वन् योगतस्तनुम् ॥ १०० ॥

100. If he keeps all the (ten) organs as well as the mind in subjection, he may gain all his aims, without reducing his body by (the practice) of Yoga.

पूर्वां सन्ध्यां जपंस्तिष्ठेत् सावित्रीमर्कदर्शनात्।
पश्चिमान्तु समासीनः सम्यगृक्षविभावनात् ॥ १०१ ॥

101. Let him stand during the morning twilight, muttering the Savitri until the sun appears, but (let him recite it), seated, in the evening until the constellations can be seen distinctly.

पूर्वां सन्ध्यां जपंस्तिष्ठन्नैशमेनो व्यपोहति।
पश्चिमान्तु समासीनो मलं हन्ति दिवाकृतम् ॥ १०२ ॥

102. He who stands during the morning twilight muttering (the Savitri), removes the guilt contracted during the (previous) night; but he who (recites it), seated, in the evening, destroys the sin he committed during the day.

न तिष्ठति तु यः पूर्वां नोपास्ते यश्च पश्चिमाम्।
स शूद्रवद्बहिष्कार्य्यः सर्वस्माद्द्विजकर्म्मणः ॥ १०३ ॥

103. But he who does not (worship) standing in the morning, nor sitting in the evening, shall be excluded, just like a Sudra, from all the duties and rights of an Aryan.

अपां समीपे नियतो नैत्यकं विधिमास्थितः।
सावित्रीमप्यधीयीत गत्वारण्यं समाहितः ॥ १०४ ॥

104. He who (desires to) perform the ceremony (of the) daily (recitation), may even recite the Savitri near water, retiring into the forest, controlling his organs and concentrating his mind.

(क्रमशः)

श्रीश्रीदुर्गाशरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

पादार्पणात् कुपितवृश्चिक आत्मगेहे
मित्रस्य हिंसनरुचिः कुटिलः प्रचण्डः ।
दन्ताङ्कुरेण तुहिनेन हि सूर्य्यशत्रून्
दीनान्दशत्युरसि सर्पति मार्गशीर्षः ॥

## उद्भट-श्लोकाः ।

"अविश्रमं यावदिदं शरीरं पतत्यवश्यं परिणामदुर्वहम् ।
किमौषधं पृच्छसि मूढ़ दुर्मते ! निरामयं कृष्णरसायणं पिव" ॥ ९६ ॥

"सेवे सदैव विषयान् पुरुषक्रमेण दासस्तवेति जगति प्रतिपादयामि ।
हे कृष्ण ! वञ्चयितुमन्तकदूतगोष्ठीं घट्टीं तरन्ति न शठा महदाख्यया किम् ?" ॥९७॥

पञ्चत्वं तनुरेतु भूतनिवहाः स्वांशं विशन्तु ध्रुवम्
धातारं प्रणिपत्य नम्रशिरसा तत्रापि याचे वरम् ।
तद्वापीषु जलं तदीयमुकुरे ज्योतिस्तदीयाङ्गन-
व्योम्नि व्योम तदीयवर्त्मनि धरा तत्तालवृन्तेऽनिलः ॥ ९८ ॥ (१)

---

(१) पतिवियोगिन्या मुमूर्षोरुक्तिरियम् ।

## श्रीलक्ष्मीः श्रीसरस्वती ।

( पूर्वानुवृत्ता )

"नासाध्यं हि तपस्वतः" "न च दैवात् परं बलम्" वाक्ये एते मूलं बलमवलम्बमानोऽद्य आर्य्याणां गुरु वेदान्तवाक्ये च श्रद्दधतां प्रीतये विद्योत्पत्तिकरं सारस्वतकल्पादिकं लिखामि ।

## अथ सारस्वतकल्पम् ।

### नारद उवाच ।

केनोपायेन देवेश ! विद्योत्पत्तिर्भवेन्नृणाम् ।
तत्त्वविद्याप्रकाशश्च तन्मे ब्रूहि जगत्प्रभो ! ॥

### ब्रह्मोवाच ।

साधु साधु त्वया पृष्टं लोकानां हितकारकम् ।
एतदेव पुरा पृष्टं कल्पादौ विष्णवे मया ॥
ब्रह्मशब्दस्वरूपेण प्रसन्नेनान्तरात्मना ।
यत्प्रोक्तं तेन मे ब्रह्मन् तत्ते वक्ष्यामि यत्नतः ॥

### श्रीभगवानुवाच ।

शृणु ब्रह्मन् परं गुह्यं कल्पं सारस्वतं शुभम् ।
यस्य विज्ञानमात्रेण जाड्यप्रहरणं भवेत् ॥
सर्वशास्त्रप्रकाशश्च सर्वज्ञो जायतेऽचिरात् ।
अभ्यासाच्च ध्रुवं यस्य वाचश्चित्रा भवन्ति हि ॥
अवापुस्त्रिदशावाप्तिं वागीशत्वं बृहस्पतिः ।
द्वैपायनोऽपि यां ज्ञात्वा वेदव्यासो भवेन्मुनिः ॥
मन्त्रोद्धारं प्रवक्ष्यामि साङ्गावरणपूजनैः ।
अनन्तं विन्दुना युक्तं वामगण्डविभूषितम् ॥
जपेद्द्वादशलक्षन्तु मूकोऽपि वाक्पतिर्भवेत् ।
नाभौ शुद्धारविन्दन्तु ध्यायेद्दशदलं सुधीः ॥
तन्मध्ये भावयेन्मन्त्री मण्डलानां त्रयं चिरम् ।

रत्नसिंहासनं ध्यायेत् वर्णज्योत्स्नामयं पुन: ॥
तस्योपरि पुनर्ध्यायेद्देवीं वागीश्वरीं तत: ।
रत्नकान्तिनिभां देवीं ज्योत्स्नाजालविकाशिनीम् ॥
रक्ताम्बरयुतां शुभ्रां शशिखण्डविमण्डिताम् ।
बिभ्रतीं दक्षहस्ताभ्यां व्याख्याविमलमालिकाम् ॥
अमृतेन तथा पूर्णं घटं दिव्यञ्च पुस्तकम् ।
दधतीं वामहस्ताभ्यां पीनस्तनभरान्विताम् ॥
मध्ये क्षीणां गुणै: स्वच्छां नानारत्नविभूषिताम् ।
आत्माभेदेन ध्यात्वा च तत: संपूजयेत् क्रमात् ॥
आद्येन दीर्घयुक्तेन कुर्य्यादङ्गानि हस्तयो: ।
हृदयादौ तथा कुर्य्याद्बीजेनाङ्गक्रियां मनो: ॥
भुवोर्मध्ये तथा नाभौ गुह्ये च देशिकस्तथा ।
न्यसेद्बीजं पुनर्वस्तौ व्यापकं विन्यसेत्तत: ॥
पीठन्यासं तत: कुर्य्यात् देवताभावसिद्धये ।
मातृकायास्तु यत्प्रोक्तं पीठमभ्यर्च्य यत्नत: ॥
वर्णाब्जेनासनं दद्यात् मूर्त्तिर्मूलेन कल्पयेत् ।
आवाह्य पूजयेत्तस्यां देवीं वागीश्वरीं तत: ॥
अङ्गे स्यात् प्रथमा वृत्ति: द्वितीया शक्तिभिस्तत: ।

दलाग्रेषु समभ्यर्च्य । आं ब्राह्म्यै नम: । ईं माहेश्वर्य्यै । ऊं कौमार्य्यै । ऋं वैष्णव्यै । ॡं वाराह्यै । ऐं इन्द्राण्यै । औं चामुण्डायै । अ: महालक्ष्म्यै ।

लोकपाला बहि: पूज्यास्तेषामस्त्राणि तद्बहि: ।
एवं संपूजयेन्मन्त्री जपहोमरत: सदा ॥
कवित्वं लभते वाग्मी सर्व्वैर्वादशभिर्ध्रुवम् ।
प्रातर्जप्त्वा सहस्रन्तु पिबेद्ब्राह्मीं वचान्विताम् ॥
न विस्मरति मेधावी श्रुतान् वेदागमानपि ।
कण्ठमात्रोदके स्थित्वा ध्यायेन्मार्त्तण्डमण्डले ॥
ज्योति: पुञ्जनिभां देवीं परिवारसमन्विताम् ।
वराभययुतां हस्ते मुद्रा पुस्तकधारिणीम् ॥
जपन् सहस्रमानेन षण्मासं विजितेन्द्रिय: ।
भीमां संप्राप्य वाक्सिद्धिं कवीनामग्रणीर्भवेत् ॥ * ॥

**इति कृष्णानन्दतन्त्रसार: । अस्य प्रकारान्तरमपि तत्रैव द्रष्टव्यम् ।**

जातस्य वालकस्य भावि पाण्डित्योपयोगिनीं मेधां वर्द्धयितुं वैदिके विधिरेष समादिश्यते। यथा—गोभिलगृह्ये २य प्रपाठके ७म काण्डे।

"तथैव मेधाजननं सर्पिः प्राशयेत्" ॥ २० ॥

इयमाज्ञेति मन्त्रेण कुमारस्य कनिष्ठाङ्गुष्ठेन मेधाजनकं सर्पिः पाययेत्। अन्यच्च,

"जातरूपेण वादाय कुमारस्य मुखे जुहोति—मेधान्ते मित्रावरुणावित्येतयर्चा सदसस्पति मद्भुतमिति च" ॥ २१ ॥

स्वर्णशलाकया घृतमादाय कुमारस्य मुखे मेधान्ते इति मन्त्रेण स्वाहान्तेन क्षिपेत्।

अत्र मेधावृद्धौ तान्त्रिकी प्रक्रिया लिख्यते। यथा—गन्धर्वतन्त्रे २य पटले।

वालकस्य तु जिह्वायां त्रिदिनाभ्यन्तरे न्यसेत्।
मधुना श्वेतदुर्वाभिः सुवर्णस्य शलाकया ॥
इदं वाग्भवकूटन्तु लिखिद्वै जनमान्तरे।
स एव पण्डितो भूयान्न तु मूर्खो भवेद्ध्रुवम् ॥

वाग्भवकूटमपि तत्रैव यथा—

कामदेवस्ततो योनिसूर्य्यश्वरपुरन्दरी।
भुवनेशी ततः पश्चात् पञ्चवक्त्रविभूषितः ॥
अयं स वाग्भवो देवि! वागीशत्वप्रदायकः।
इदं वाग्भवकूटन्तु वालिशस्यापि मूर्द्धनि ॥
हस्तं दत्वा पठेत् सिद्धमष्टोत्तरशतं प्रिये।
सोऽपि श्लोकं महेशानि करोत्येव न संशयः ॥
सत्तर्कपदवाक्यार्थशब्दालङ्कारसारवित्।
जिह्वायां न्यसनाद्देवी मूकोऽपि सुकविर्भवेत् ॥

वृहन्नीलतन्त्रे प्रथमपटलेऽपि।

इदानीं शृणु चार्वङ्गि! कविताकारकं परम्।
प्रयोगं दुर्लभं गोप्यं तव स्नेहात् प्रकाशितम् ॥

चण्डीं चाण्डालिनीञ्चैव त्यागिनं सर्वमोहनम् ।
बीजत्रयं जपेद्राचौ मध्ये चैव रवेर्दिने ॥
अष्टाधिकसहस्रस्य प्रमाणेन जपञ्चरेत् ।
शताभिमन्त्रितं कृत्वा पिबेच्च जलमुत्तमम् ॥
पाणिना दक्षिणेनैव मधुलाजान् समानयेत् ।
नाड़ीच्छेदाच्च प्राक् बालं संस्कुर्य्याच्चैव साधकः ॥
कवित्वं जायते तेन पाण्डित्वं सुरवन्दिते ।
जिह्वां सम्मार्ज्य देवेशि ! लिखेद्धेमशलाकया ॥
दुर्वया वा महादेवि ! जिह्वोष्ठयोः समालिखेत् ।
पङ्क्तिद्वयेन संलेख्य कुर्य्याच्च बालसंस्क्रियाम् ॥
एकादशाहे देवेशि ! द्वादशाहेऽथवा पुनः ।
वर्णजात्यादिभेदेन मासान्तः सम्भविष्यति ॥
यथाशक्त्युपचारेण देवतां पूजयेत् पुनः ।
संपूज्य देवतां भक्त्या लिखेन्मन्त्रं महेश्वरि ! ॥
यदा पिता न देशस्थो पितृव्यो मातुलोऽपि वा ।
लिखित्वा परमेशानि ! कुर्य्याच्च बालसंस्क्रियाम् ॥
मूलमन्त्रं लिखेन्मन्त्री यश्योष्ठे श्वेतदुर्वया ।
वाक्योच्चारणतो बालो वाग्मी द्रुतकविर्भवेत् ॥
जन्मसंस्कारकं नाम पुत्रे जाते प्रशस्यते ।
जिह्वायाञ्च लिखेद्द यन्त्रं यत्ने दारुकुशेन वा ॥
वारत्रयन्तु सम्मार्ज्य दक्षिणेनेव पाणिना ।
मन्त्रमुच्चार्य्य प्रत्येकं पङ्क्तिं कुर्य्यात् सुशोभनम् ॥
आदौ संस्कारः कर्त्तव्यस्तदन्ते विलिखेन्मनुम् ।
गन्धचन्दनपुष्पैश्च पूजयेत्तारिणीं शिवे ॥
उत्तराभिमुखो भूत्वा स्थापयेत् पीठमुत्तमम् ।
पूजयेत्तारिणीं देवीं नानाभक्ष्यैः सुशोभनैः ॥
षोड़शैरुपचारैश्च पूजयेद्भक्तिभावतः ।
धूपं दद्याद्द गुग्गुलूनां सर्वकर्मफलप्रदम् ॥
नारिकेलं तथा रम्भां बदरं वकुलं तथा ।
बीजपूरं कर्णिकारं शर्करां गन्धसंयुताम् ॥

मधूदकञ्च कलायञ्च सिद्धान्नं पयसाप्लुतम्।
मांसं मत्स्यं पिष्टकञ्च दद्यादतिप्रियं महत
कविर्वाग्मी भवेत् पुत्र: सर्वकामप्रकारक:।
जितेन्द्रिय: सत्यवादी धार्मिको जायते महान्॥

अत्रौषधादिरपि मेधादिवृद्धये तन्त्रशास्त्रे निर्दिश्यते। यथा कामरत्ने—

### पथ्या घृतम्।

पथ्या वचा कणा शुण्ठी सैन्धवं मरिचं वचा।
शिग्रुं प्रतिपलं चूर्णं द्वाविंशतिपलं घृतम्॥
घृताच्चतुर्गुणं क्षीरं दत्त्वा सर्वं विपाचयेत्।
घृतशेषं पिबेन्नित्यं वाङ्मेधास्मृतिबुद्धिदम्॥ १॥

### ब्राह्मीघृतम्।

वचा ब्राह्मीफलं कुष्ठं सैन्धवं तिलपुष्पिका।
चूर्णयित्वा द्रवैर्भाव्यं मण्डुकी ब्राह्मी सम्भवै:॥
दिनमेकं तत: पाच्यं कल्काच्चतुर्गुणं घृतम्।
घृताच्चतुर्गुणं देयं क्षीरं ब्राह्मी नियोजितम्॥
घृतशेषं समुत्तार्य्य लिहेद्वा बुद्धिदायकम्॥ २॥
द्वे हरिद्रे वचा कुष्ठं पिप्पली विश्वभेषजम्।
अजाजी चाजमोदा च यष्ठीमधुकसैन्धवम्॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत्।
तच्चूर्णं सर्पिषा लेह्यं कार्षिकं वाक्यशुद्धिकृत्॥
भक्षयेन्मासमेकन्तु बृहस्पतिसमो भवेत्॥ ३॥
ब्राह्मी शुण्ठी वचा मुण्डी पिप्पली समचूर्णकम्।
मधुना भक्षयेत् कर्षं स्पष्टवाग् जायते ध्रुवम्॥ ४॥
वचास्थि करवी गुन्ना सुषली मधुकं वला।
अपामार्गस्य पञ्चाङ्गं क्षौद्रेण पूर्ववत् फलम्॥ ५॥
अपामार्ग-वचा शुण्ठी विडङ्गं शङ्खपुष्पिका।
शतावरी गुडुची च समं चूर्णेत् हरीतकीम्॥

घृतेन भक्षयेत् कर्षं नित्यं ग्रन्थसहस्रधृक् ॥ ६ ॥
अश्वगन्धा चाजमोदा पाठा कुष्ठं कटुत्रयम्।
शतपुष्पी विश्ववीजं सैन्धवञ्च समं समम् ॥
एतदर्द्धं वचा चैव चूर्णितं मधुसर्पिषा।
भक्षयेत् कर्षमात्रन्तु जीर्णान्ने क्षीरभोजनम् ॥
सहस्रग्रन्थधारी स्यात् ब्रह्मचारी कविर्भवेत् ॥ ७ ॥
लिहेत् ज्योतिष्मतीतैलं वलया वचया सह।
स्तोकं स्तोकं क्रमेणैव यावन्निष्कचतुष्टयम् ॥
निर्वाते मधुराशी स्यात् ब्रह्मचारी कविर्भवेत् ॥ ८ ॥
सूर्य्यस्य ग्रहणे वैन्द्रीः समन्त्रामाहरेद्वचाम्।
चूर्णितां सघृतां भुक्त्वा सप्ताहे वाक्पतिर्भवेत् ॥
इत्येवमादियोगानां मन्त्रराजः शिवोदितः।
लक्षायुतेन सिद्धिः स्यात् पश्चात्तेनैव भक्षयेत् ॥
मन्त्रस्तु। ओं क्लूं हयशीर्षवागीश्वराय नमः ॥ ९ ॥
धात्रीफलरसैर्भाव्यं वचाचूर्णं दिनावधि।
घृतेन लेहयेन्निष्कं वाक्शुद्धि स्मृति बुद्धिकृत् ॥ १० ॥
वचाचूर्णं पिवेत् क्षीरैः पूर्वमन्त्रेण मन्त्रितम्।
भोज्यं क्षीराज्य शाल्यन्नं सप्ताहे वाक्पतिर्भवेत् ॥
सप्तमे अष्टमे चैव साक्षात् श्रुतिधरो भवेत् ॥ ११ ॥
वचाचूर्णं पिवेत् क्षीरैर्घृतैः क्षौद्रैश्च यत् पुनः।
सप्ताहक्रमयोगेण लेह्यं स्यात् पूर्ववत् फलम् ॥ १२ ॥
पुष्यार्कयोगे संगृह्य श्वेतार्कस्य तु मूलकम्।
छाया-शुष्कन्तु तच्चूर्णं मन्त्रेणैवाभिमन्त्रितम्।
कर्षमर्द्धपलं वापि प्रातरुत्थाय यः पिवेत् ॥
तक्रेण सर्पिषा वापि जीर्णान्ने क्षीरभोजनम्।
एवं सप्ताहमात्रेण कविर्भवति वालकः ॥
ओं महेश्वराय नमः अनेनाभिमन्त्र्य पिवेत् ॥ * ॥ इति।

———

# कुन्दमाला।

( पूर्वानुवृत्ता )

अथ चिरेणोन्मिलीतलोचनो युवा अव्यक्तं किमिवाभिदधानः गगनासक्तनयनः पुनरिव मन्युभरापहृतदृष्टिः अनवरतोद्दामागतं वाष्पभरं वर्षन् तत्क्षण एव अपहृतसंज्ञः भूमौ पपात। ततः सुचिरेण साम्ययमुनाकल्लोलस्पर्शिना वातेन प्रतिलब्धसंज्ञः क्रमेण उपसंहृत-मन्युवेगः उन्मिलीतलोचनः स्वगतमभाषत "अहो धिक् मामधन्यं, को वेहापरो मादृशो दग्धभागो वराकः ? नाहमेवगच्छामि कोऽहं कस्य वेति। अत्र सर्वैरेव दास्याः पुत्र इति सततमहं परम-वधीरितः। दग्धप्रजापतेरियदेवमन्निर्माणे दीर्घजीवितप्रदाने च प्रयोजनं निष्पन्नं यदनुपदमेव लोकैरवसादितव्य इति। सर्वथा वृथैव मे सर्जनविधिः। न विद्यते कश्चिदपि विशालेऽस्मिन् संसारे यो मया मत्पक्षपातीति अवगन्तव्यम्। तत् कथमहं परं हेयास्पदं जीवितं धारयामि। कथं पुनः हतजीवितस्य आशापदम्। धिङ्मां नरहतकं यस्य जीवितहृष्णा सारमेयाधिकहेयास्पदस्य। स मम नियोग्य इति महतायासेन तन्नियोजितमशेषं निर्वर्त्तयामि, तथापि मां सततम् आत्मावस्थापरिचिन्तनमृतकल्पं कदा वाक्पारुष्येण वा नितराम् अवसादयति। नास्ति करणान्तरावसरः। एव-मापतिते मरणमेव जीवितं, जीवितं पुनः मरणम्। तथापि किमिति मरणावसरे, बध्नाति इव माम्। केन जनेन वा बद्धो-ऽहम्। अहो सर्वमेव सुविज्ञातमधुना। निखिलेऽस्मिन् मरु-परिपूरिते संसारे दाहैकास्पदभूते मदीये देहहतके अस्ति काचन सुधासारप्रसविनी रमणीरूपिणी देवी या सततं पीयूषधारां क्षरन्ती दग्धं जीवितं प्रत्युज्जीवयति। अहो तस्याः प्रेम्णः प्रकारः। सततं पित्रा परिस्पन्दितापि मयि अनुरागं न विमुञ्चति। न शक्नोति

मृणालिकापेलवा सरला अनङ्गमञ्जरी मया विरहिता क्षणमपि स्थातुमिति मदर्थं नियतमेव पित्रा तर्जिता। मानवकुलापसदेन कामपालेन तादृशीं दुहितरं संयोज्य परां वाच्यास्पदतां गतो विधिः। सहेत किं कठोरवैश्वानरसन्तापं कोमला लतिका। मदनुरागेण पितूरोषविषयतां गता। अहो ग्रहविगुणतायाः प्रभावः, नासौ केवलं मां तपति, परन्तु य एव मत्पक्षपाती तमपि दहति निरूढ़म्। मन्ये मम दूरापसर्पणेन तस्याः क्लेशक्लासो भव्य इति। अतो देशान्तरं गन्तव्यम्। क्व पुनर्गन्तव्यम्। सर्वत्रैव मादृशास्तपस्विनः परिस्पन्दिता निपीड़िताश्च। स्मरामि, समायातः नगरेऽस्मिन् कश्चन वैदेशिको म्लेच्छजनो भृतनियोज्य संग्रहमानसः, तत्सकाशमेव सर्वथा गन्तव्यम्। श्रूयते म्लेच्छपुरुषाः नितरां भृत्यपीड़काः। मम पुनः पीड़ने नास्ति भीत्यवसरः। हतभागस्य सर्वत्रैव समम्। जीवितेऽपि पराधीनस्य नियोगावसरे कानुधावना इत्यभिदधानः नीरुराव।

भरागत-नयनवारिणा कपोलद्वयं सुसिक्तमभूत्। परिधेयप्रान्तेन वाष्पम् अपसार्य्य पुनरेव अवादीत् "अरे दग्धादृष्ट! कथं रोदिषि? निराश्रयस्य त्वादृशस्य कथं पुनरालोचना गमनागमने। अस्ति कश्चित् कामपालेन सदृशः पापाचारः। अशेषम्लेच्छनिग्रहोऽपि नानेन तुल्यमिति। दुःखैकभाजः भवतः सर्वत्रैव समम्। गच्छ म्लेच्छपतेः पुरतः नियोगाय।" इति कृतगमनानुबन्धो युवा आश्रयाद् उत्थाय स्वां पर्णशालां प्रतस्थे। अहो कालस्य परिवर्त्तनम्। सर्वभोगसुलभे वयसि वर्त्तमानस्यापि यूनः नास्ति कोऽपि भोगावसरः। सर्वथा वितथमाह कविः।

"को नाम पाकाभिमुखस्य जन्तु-
र्द्वाराणि दैवस्य पिधातुमीष्टे"

---

## द्वितीयोच्छ्वासः ।

### लतामण्डपे ।

"पश्यति दिशि दिशि रहसि भवन्तम् ।
तदधरमधुरमधूनि पिबन्तम् ॥ १ ॥
नाथ हरे सीदति राधावासगृहे ॥ ध्रु ॥
त्वदभिसरणरभसेन वलन्ती ।
पतति पदानि कियन्ति चलन्ती ॥ २ ॥
विहितविशदविसकिसलयवलया ।
जीवति परमिह तव रतिकलया ॥ ३ ॥
मुहुरवलोकितमण्डनलीला ।
मधुरिपुरहमिति भावनशीला ॥ ४ ॥
त्वरितमुपैति न कथमभिसारम् ।
हरिरिति वदति सखीमनुवारम् ॥ ५ ॥
श्लिष्यति चुम्बति जलधरकल्पम् ।
हरिरुपगत इति तिमिरमनल्पम् ॥ ६ ॥
भवति विलम्बिनि विगलितलज्जा ।
विलपति रोदिति वासकसज्जा ॥ ७ ॥"

प्रकृतिलीलाप्राङ्गनं वृन्दावनम् । मर्त्तस्य नन्दनम् । संख्यामतीता अशेषा लतामण्डपा अत्र विराजन्ते, तेषु श्रीवासुदेवक्रीडानिदर्शनं कदम्बोपवनं पुराकालादेव अद्वितीयरमणीयतायैव सर्वत्र विश्रुतिं गतम् । अहो प्रावृषि एतत् स्वकान्त्या देवोपवनमपि अतिक्रामति । तरुराजयः फुल्लकुसुमकिसलयविमण्डिताः सर्वतो विराजिताः । बालार्कागतेन मण्डपवासिनः पतत्रिणः कुसुमपरिमलवाहिमरुता आप्याय्यमानाः सर्वभुवनमनोमोहनकूजनेन दिक्चक्रवालं विमोहितवन्तः । क्वापि कर्णान्तायतलोचना कुरङ्गवधूः रसैकपरवशा स्वं कान्तं कण्डूयति । कुतो वा शारिकासुखमासीनः प्रियः शुकः मधुरं कूजति ! कुतो वा जीवञ्जीवनायकः

स्वदयितां सुदीर्घविरहरजनीकथाव्याजेन मधुरं गायति। कुतो वा व्रततीबाला अशेषपुष्पकिसलयविमण्डिता कान्तं महीरुहमालिङ्गितवती। नीलनीरदखण्डवत् नातिदूरं या शैवाल-कुमुदकह्लारोपशोभिता दीर्घिका विराजते तत्र मानिनी पङ्कजिनी मानभरेणैव कान्तालोकेनैव शनैः उन्मिलीतवती। अरसिको मीनः पुनः चपलतां प्रकाश्य मानिनीमानभङ्गेकरतं पादग्रहणपरं भास्करकरं दूरं प्रक्षिपति। ऊर्द्ध्वं सुनीलगगणतलं मेघपरिमुक्तं हिरण्मयदिवाकरकिरणपटलसमुज्ज्वलं विराजते। चिरादेव सविहमयूखं समासादितवतीव सर्वैव प्रकृतिः भ्रमति। एवंविधे रमणीये उषसि कश्चित् तरुणे वयसि वर्त्तमानः अनिन्द्यकान्तिः "पश्यसि दिशि दिशि रहसि भवन्तमित्यादि श्रीराधिकाविरहज्ञापिकां गीतलहरीं अशेषरागरागिणीसमन्वयेयन् गायन् वीणा निक्वण पुरःसरम् अत्र कदम्बोपवनं समायातः। तस्य च देहकान्त्या अशेषसुरपुरसुन्दरतरुणवृन्दमतिक्रामतः सर्वजनमनमोहने यौवने धृतपदस्यापि देहवयसो विरोधिनी गैरिके वसने वसानस्य, सुविस्तृते ललाटदेशे सरसमलयजानुलेपनार्हे भस्मत्रिपुण्ड्रकेण मण्डितस्य, अशेषमणिरत्नाविनिर्मितायाः स्रजः योग्ये कण्ठदेशे तुलसीमालया भूषितस्य पुराङ्गनासमवायावतंसीभूतायाः कमलिनीपेलवकरग्रहणयोग्येन पाणिना कमण्डलुं कलयतः अनवरतमनसिजस्तोत्रवाचनार्हे वदनपयोधरे सततं सर्वसन्तापसंहरणं पीयूषासारक्षरणच्छलेन भगवतो हरेः सङ्कीर्त्तनं कुर्वतः, सर्वे एव तत्प्रदेशस्था उपवनचारिणः मोहिता इव आविष्टा इव मत्ता इव परवशा इव पुरतः विमुक्तद्वन्द्वदोषाः समायाताः। अहो अतीतानि तानि दिनानि यदा अस्मिन् भारते वर्षे गीतशास्त्रं परमसमादृतमासीत्।

यदा ब्रह्मसाधने सङ्गीतमेव सर्वप्रधानकल्पमिति सर्वेषां मनीषिणामभिमतमभूत्। अहो अलौकिकमेव सङ्गीतमाहात्म्यम्।

वीणासहायानामार्य्यर्षीणां सामगानं त्रिदिवादेव देवान् मर्त्त्यमानयितुं क्षममासीत्। यदा "प्रतित्यं चारुमध्वरं गोपीथाय प्रहुयास। मरुद्भिरग्नआगहि" इत्यादिना स्वरताललयप्रयुक्तेन सङ्गीतेन पूज्यपादाः आर्य्यमुनयः देवान् अभ्यर्थितवन्तः तदा समूर्त्तयस्ते तेषां पुरत एव आगताः। अहो कालस्य परिणमनम्। या सङ्गीतविद्या पुरा सर्वैरेव पूजिता अधुना सा ललितविलासाङ्गतां गता। गीताव्यसनेन करणचपलतावृद्धिं गच्छतीति सर्वेषामत्रानादरता। अधुना वेशवधूजनशिक्षाङ्गभूता सङ्गीतविद्या, क्वापि वा तत्सहचारिषु दृश्यते। भगवति सङ्गीतविद्ये! कालपरिणामेन वयमकृतिनः भवदीयसमसंग्रहणाक्षमाः भवतीमनाद्रियामहे। संसारिणो भवतीं नाद्रियन्तां, किन्तु चित्तस्य समाधिकरणे तथा त्रिदिवानन्दविताने च भवती सर्वाग्रणीरनन्तमेव कालं भवित्री। सुदूरे भाविनि स एव कालः पुनः आपतिष्यति यदा तव साधकाः भूय एव भवितारः। यदा पुनरेवाशेषविद्याशिखरीभूता सङ्गीतविद्येति सुधीभिर्मन्यमाना सुमहता भक्त्यञ्जलिना पूजयितव्या इति। "कालो ह्ययं निरवधिर्विपुला च पृथ्वी"।

अथ सङ्गीतमाहात्म्येन विमोहित इव उदासीनस्तदेव सङ्गीतकं पुनरेव जगौ। जनपरिशून्ये स्वभावसौन्दर्य्यैकास्पदभुवि तत्र प्रततीमण्डपे तदेव सर्वजीवलोकमनोमोहनं तद्गीतकं गायन्तं तरुणमपि वार्द्धकोचितम् उदासीनवेशं बिभ्रतम् अनवरतं प्रेमासारं मोचयन्तमालोक्य स्वत एव दर्शकानां चेतसि जायते यथा भगवान् भूतभावनो हरिरशेषमानवार्त्तनादकातरः पुनरेव भुवि तदीय प्रेमपीयूषक्षरणाभिलाषी स्वकीये प्रियतमे लतामण्डपे सद्य एवाविर्भूत इति। ततः प्रेमार्द्रीकृतहृदयः आत्मन्यभाषत "अहो धर्मपरायणता मदीयजनयित्रोः। तयोर्वदनसुधाकरे सततमेव भगवतो दीनजनैकशरणस्य हरेर्नाम कीर्त्तितमभूत्। आजीवित-

मेव बुद्धा निःसारतां संसारस्य, निरूप्य च अप्रतीकारदारुणतां व्यसनोपनिपातानाम्, आकलय्य दुर्निवारतां शोकस्य पार्थिवस्य, भावयित्वा च अनित्यतां सर्वभावानाम्, अवधार्य्य च अकाण्ड-भङ्गुरतां सर्वसुखानां, तावेव परमकारुणिकस्य भगवतो हरेः पादतलमेव शरणं जग्मतुः। निद्रालसतायामेव हरिमालोक्य स्वप्नेन प्रेमरसपुलकितवपुषा बभूवतुः। हरिहरयुगलवाचनार्थिनौ मामेव हरिहर इति अभिहितवन्तौ। अहो मम बालिशतायाः प्रकारः। अहो यत्किञ्चन कारितायामादरः। अहो निरर्थकव्यापारेषु अभिनिवेशः। अहो मूर्खजनचरितेषु आसक्तिः। साधुफलस्य कर्मणः शिक्षा वृथा जाता। एवंविधस्य धर्मरतेरात्मजत्वेऽपि कथं मम पापाभिरतिः। धिङ्मां तयोरधन्यमपत्यहतकम्, अन्यथा कथं मम तस्य भक्तजनवत्सलस्य सच्चिदानन्दस्य अमृतपदं विस्मृत्य असारेषु विषयसन्तापेषु अभिनिवेशः। भगवन् दीनजनैकशरण-परमेश्वरहरे! पापात्मानमेनं तदशेषकृपाराशेः करुणिकयैव अनुगृह्णातु देवः। श्रूयते पुराणेषु ध्रुवप्रह्लादप्रभृतयः महाभागाः बालत्वेऽपि त्वद्दर्शनं लेभिरे। अहन्तु केवलं कामनाविमोक्षार्थं प्रार्थये।

"जय देव भुवनभावन ! जय भगवान् निखिल-निगमनिधे ।
जय रुचिर-चन्द्रशेखर ! जय मदनान्तक ! जयादिगुरो ! ॥"

गायन्नेव हरिप्रेमार्द्रीकृतहृदयः पुनरेव तं प्रदेशं मधुरेण गीत-शब्देन मोहितवान्। अथास्य तमेव गीतशब्दं वाचयतः पुरतः शान्तप्रकृतेः विग्रहवान् प्रचण्डमूर्त्तिः, मूर्त्तिमतः प्रेम्णः रूक्षचेताः, ज्ञानालोकस्याज्ञानान्धकारः, सुकृतिनः अपुण्यैकभाजनम्, अनुगतस्य वामस्वभावः, भावार्द्रहृदयस्य एकान्तनिष्ठुरहृदयः, मित्रस्य वैरी, वचनकरस्य अनाश्रयः, महात्मनः दुरात्मा, विस्रम्भैकभूमे-रशेषभीतेरास्पदं, धर्मराजस्य मूर्त्तिमान् नरकपालः, एकलव्य इव जन्मान्तरागतः कश्चन भीमपुरुषः म्लेच्छवेशोऽतर्कितमेव समा-

यातः। तस्यापि पापपुरुषस्य गीतमहिम्ना मुग्धस्य मनस्येव-मजायत "अहो परिसमाप्तमद्य श्रुतियुगस्य श्रोतव्यश्रवणफलम्। आलोकितः खलु रमणीयानामन्तः। श्रुतः आह्लादनीयानामवधिः। प्रत्यक्षीकृता प्रीतिजननानां परिसमाप्तिः। परिभ्रान्तो मया अशेषः प्रदेशः। परन्तु न कुत्रापि श्रुतिविषयतां गतः एतादृशो मधुरो गीतशब्दः। मोहितोऽस्मि। अपि समासाद्यते मूढ़ेषु एवमेव कश्चित् लोकोत्तरविनोदनोपायः? भावमनवगच्छत्यपि मयि गीताक्षराणि पीयूषनिस्यन्दमिव वर्षन्ति। नायं पुनः सङ्गीत-श्रवणावसरः। सर्वथा यतितव्यमेनं मत्पक्षमापादयितुमिति। अनेन साधनेन सर्वमेव जीवलोकं मद्वशं गतं मन्ये।" इति चेतसि संप्रधार्य्य तमभिहितवान् "कस्त्वं भद्र! किमर्थमत्र जनपरिशून्ये प्रदेशे च वर्त्तसे? कथं वा भोगसुलभे प्रथमे वयसि वर्त्तमानः सर्वमेव विषयोपभोगजातमुत्सृज्य वयसः आकृतेश्चाननुरूपं गैरिकं परिदधत् उदासीनजनोचितेन कमण्डलुना सुन्दरीजनैकप्रार्थनास्पदं पाणिं दूषयसि?"

हरिः। हरिहरशर्म्माणं मामवगच्छतु महाभागः। नास्ति काचन मम निवासभूमिः। सततं परिव्रजता समासादितमेव स्थानं किञ्चन आवासत्वेन परिकल्प्यते मया। भगवतो निखिल-भुवननाथस्य हरेः श्रीपादकमलमेव शरणमस्मादृशस्य तपस्विजनस्य। एतावदेव सुनिश्चितं मे यथा सर्वत्रैव श्रीहरेः कमलाकान्तस्य नामकीर्त्तनेन जीवितमसारं नयामीति।

म्लेच्छपुरुषः। (स्वगतं) सुमहान् चतुरोऽयं वटुः। आलोकय तावदस्य भण्डतायाः प्रकारम्। हरिनामव्याजेन सर्वमेव मुग्ध-जनसङ्घं मोहयित्वा आत्मवशमानयितुं यततेऽयं धूर्त्तः। कोऽयं पुनरस्य हरिः। अवगच्छामि तावत् सम्यगेव। गोपालसूनुः कामैकवशः अशेषगोपीजनपातिव्रत्यनाशनः वृन्दावनचारणः धूर्त्त-

चूड़ामणि: क्षणा: अस्य हरिरिति। यीग्यं योग्येन योजयेत् विधि:। आराधकाराधितौ उभावेव शठजनशेखरीभूतौ। तत् शिक्षयामि एनं स्वरूपत:। (सप्रकाशम्) अरे मूर्ख ! श्रूयतां सावहितं मद्वचनम्। कुत:प्रभृति व्याधिनानेन पीड़ितमात्मानमवैषि अद्य तावत् कतमेषु मुग्धनरहृदयेषु प्रतिपत्तिस्ते सञ्जाता। नायं देशो लाभाश्रय:। अहं तु कस्मिन्नपि सुमहति कर्म्मणि नियोजनार्थी तव भवामि प्रभूतलाभकरे।

हरि:। महाभाग ! बिभेमि प्रष्टुं कं पुनर्भवन्तमवगमिष्यामि; को दिग्भागो वा जन्मनालङ्कृतो भवता, मदीयेन वराकेण वा भवत: किं सुमहत् प्रयोजनं निर्वर्त्तितव्यमिति। लाभमाकाङ्क्षति नायं जन: सर्वभोगविहापनार्थी, भवदादेशस्तु करणीयश्चेत् जीवितेनापि निर्वर्त्तयिष्यते तदादेशेनानुगृहीतात्।

म्लेच्छपुरुष:। अभिलषामि तावत् अस्मदर्थं नियोज्यसंग्रहाय त्वां नियोजयितुमिति। अत्र त्वमेव क्षम इति मन्ये। यथार्हं वृत्तिञ्च निर्वाचयामि।

हरि:। अथ किमर्थम् ?

म्लेच्छपुरुष:। अस्ति आर्य्यभूमि: पूर्वोत्तरस्यां दिशि किञ्चन-कामरूपाभिधानं जनस्थानं तुहिनगिरिपादप्रसृतेन भगवता ब्रह्मपुत्रेण नदेन सततं पवित्रितभूमिभागं, यत्र सुदूरश्वेतद्वीपागता: अनेके महानुभावा: कषायपत्रोद्यानं (चा बागान) चिकीर्षव: विविधानि उद्यानानि स्थापितवन्त:। अधुना तत्र अनेकै: भृत्यै: प्रयोजनम्। तदर्थं त्वत्साहायकार्थितां गतोऽस्मि।

हरि:। (सखेदं) अथ त्वमुद्याननायकेषु एकतम:।

म्लेच्छ:। अथ किम्।

हरि:। अहो मे मन्दपुण्यस्य दारुणतर: कर्म्मणां विपाक:। येन मया धर्मैकरते: अशेषजीवलोकवन्दनीयस्य देवप्रतिमस्य पितु:

स्वकरतलवर्द्धितेन पठितविविधशास्त्रेण चाण्डालैरपि अस्पृश्यः म्लेच्छापशदः आलापविषयतां गतः। दुरात्मन् हरिहरहतक ! धिग्जन्मलाभं ते, यस्य कर्म्मणामीदृशः परिणामः। अम्ब ! अशेषमनुजवृन्दवन्दनीये ! रक्ष माम् अस्मात् महानरकपुरुषसमागमात्। तात ! धर्मैकरते ! मां त्रायस्व। नूनं सुमहत् पापमाचरितं मया अन्यथा किमिति अशेषजनकलकलविरहिते निसर्गसौन्दर्य्यललामभूते, शान्तिनिवासे अस्मिन् व्रततीमण्डपे एतादृशानां मूर्त्तिमतां पाप्मनामुपस्थितिः सङ्गच्छेत ? भगवन् पतितपावन ! कथमेवंविधानां नरपशूनां त्वत्कृते पुण्यवति संसारे प्रसूतिरस्ति ? अरे नरपिशाच ! वर्त्तेत चेद् भवच्छरीरे नरशोणितम्, तदेवंविधेषु राक्षसजनोचितेषु अकृत्येषु मा पुनर्नियोजयात्मानम्। नश्वरमिदम् प्राकृतं वपुः क्षणभङ्गुरम्। अनन्तपारत्रिकः कालः प्रत्यासन्न एव। प्रस्तूयतामात्मा तदर्थम्। कथमत्र परं मोहभावमापन्नः प्रस्तावयसि आत्मानमनन्तनरकाय इति।

म्लेच्छः। अरे रे वर्वर ! वराक ! किमर्थमात्मानं विस्मरसि। अचिरेणैव स्ववाक्यफलं भोक्ष्यसे। नाहं कीटव्यापादनेन कलुषतां नयामि स्वहस्तम्। तदधुना राजलोकं गमिष्याम्यहं त्वद्दण्डार्थम्।

हरिः। धिक् त्वां नरकुलापसदं, गम्यतां यथेच्छम्। नरपिशाचं नरशोणितलोलुपं नरकपालं वा त्वामभिधातुं नाहमत्र कञ्चित् दोषमालोकयामि। नाहं दण्डविधाता अन्यथा युष्मादृशस्य सारमेयैर्भक्षणं युक्तम्। भगवन् ! लोकत्रयपालन ! का शक्तिर्मम वराकस्य तव निर्माणरहस्यम् अवगन्तुम्। अहो मोहाविष्टता संसारिणाम्। मोहपरवशत्वात् आत्मस्थोऽपि आत्मानं न वेत्ति मानवः।

म्लेच्छपुरुषः। तिष्ठ तावत् क्षणमत्र। व्यपनयामि ते धर्मार्थं धर्माधिकरणकैः।

हरि:। गच्छ यथाभिलषितं देशम्। आनय वा नरकवासिभि: सह नरकनाथं मूर्त्तिमन्तम्। नास्त्यत्र कश्चित् भयावसर:।

(क्रमश:)

---

## आश्विनमासीय समस्या पूरणानि।

शीत्फुल्लपेलवरसालकुलाकुलानि नानाप्रसूनसुरभीकृतकाननानि।
अभ्यागतेषु रतये तरुणेषु सार्धं "युक्तो न ते पिक! मनागपि मूकभाव:॥" ?
हे हे पयोद! विमुखेऽपि भवत्यभूवन् मीनास्तु सागरनिवेशसुखेन पीना:।
आजन्मनोऽन्यजनयाचन कातरस्य "का वा दशाद्य भविता बत चातकस्य" ॥
प्राय: प्रदोषपुरुषेण समागतासौ ताम्राननेन सुतरामुदयाद्रिगेहे।
क्रीड़ोत्क इत्यरमणीव दिनावसाने "प्राचीवधू: क्षिपति कन्दुकमिन्दुबिम्बम्" ॥

बाले शारदपूर्णचन्द्रवदने! विद्युत्प्रभां शाटिकां
बिभ्राणैककरेण केशनिकरान् संस्कुर्वती वक्रकान्।
अन्यस्मिंश्च करे निधाय मुकुरं स्मित्वा लपन्ती पुन:
सौधेऽद्य मकरध्वजोद्भवकरी "यस्यासि तस्मै नम:" ॥

**झोपनामा श्रीपरमेश्वरशर्म्मा।**
(मिथिला, दर्भङ्गा, औढ़ी गन्धवारी)

---

स्थाणीस्तप: सुरपतेरववादतो हि हन्तुं स्मर: पिक वसन्तमरुत्कसैन्यै:।
युक्तो व्रजन्निति शशंस पिकं विमौनं "युक्तो न ते पिक! मनागपि मूकभाव:" ॥ ?
अस्तं गते ग्रहपताबुडुभूषिता सा संगृह्य मेघवसनं शतमन्युलेखा।
दिग्भिस्तया सह शरत्समये सखीभि: "प्राची वधू: क्षिपति कन्दुकमिन्दुबिम्बम्" ॥

हे राधे शरदोषधीवदने! राजीव योन्यादिभि-
राराध्ये! च महात्मनां सुविलसत् सद्योगिनां मोक्षदे!।
श्रीवृन्दावनधामगोपवनिताकीर्णस्य कृष्णस्य हि
लज्जाढ्यांपघन: प्रिया मधुरिपो: "यस्यासि तस्मै नम:" ॥

**गोस्वामी दुर्गादत्तशर्मा। (अमृतसर पञ्जाब)**

---

पुष्पाकरस्य समये मलयाचलस्य वायुश्च वाति फलिताः सहकारवृक्षाः।
गुञ्जन्ति षट्पदकुलानि लसन्ति बालाः? "युक्तो न ते पिक! मनागपि मूकभावः"॥ ?
घर्मार्चितप्रतनुरेष तृषार्तचित्तः प्रत्यहमुन्नतशिरा अभियाचतेऽम्भः।
नैकोऽपि वर्षति घनः शरदागमे तत् "का वा दशाद्य भविता बत चातकस्य"॥

श्रीबुलाकिरामशास्त्री विद्यानिधिः। ( अमृतसर, पञ्जाब )

---

सज्जे अरे नृपवरे सुहृदा समेते सस्पन्दने मलयमन्दसमीरणेन।
व्युत्थाय पान्थनिवहैः सह कामवन्दिन् "युक्तो न ते पिक! मनागपि मूकभावः"॥ ?
जानन्ति ते बुधवरा न हि काकसङ्घैः सारूप्यवन्तमहहा तिलके वसन्ते।
त्वां पञ्चमाप्तमहनीयशः समूहं "युक्तो न ते पिक! मनागपि मूकभावः"॥
शाहङ्घन! प्रखरसूर्यकराभितप्तजन्तुप्रहर्षजनकैर्ननु शीकरौघैः।
लब्धेन्न सिञ्चसि बत त्वदधीनवृत्तेः "का वा दशाद्य भविता बत चातकस्य"॥
रक्ताम्बरावृतपयोधरसक्ततारा हारोज्ज्वला दिनमणेर्विरहाधिनेव।
शुभ्रा क्रमेण सुरुषा हरिते सपत्न्यै "प्राची वधूः क्षिपति कन्दुकमिन्दुबिम्बम्"॥

पुनेकरोपाह्व नरसिंहशर्मा। ( कित्तूर )

---

काले प्रफुल्लसहकारविराजमाने गानेन याति मधुपेऽपि परां प्रसिद्धिम्।
याति प्रमोदमखिलेऽपि जने प्रमोदं "युक्तो न ते पिक! मनागपि मूकभावः"॥
विशुष्कपङ्कानि प्रसादवन्ति विकाशभाक्शुद्धजीवनानि।
समापतद्धंसविनिर्मलानि "सतां मनांसीव शरद्दिनानि"॥
पंक्त्युल्यमानकुसुदैककरप्रधावद्गुञ्जद्विरेफकरणद्वलया समोदम्।
व्योमाङ्गने सकुतुकेव विलासकार्ये "प्राची वधूः क्षिपति कन्दुकमिन्दुबिम्बम्"॥
आवातुं व्यदधत्तपः सुविपुलं मातर्यमेव स्वयम्
येनादाय वटुस्वरूपमचिराद्दुद्वासि हस्ते धृता।
अर्द्धाङ्गे विनिवेशिता सुरगणस्तुत्यापि येनाभवः
पत्नी त्वं तुहिनावनीधरसुते! "यस्यासि तस्मै नमः"॥

राशिवडेकरोपाह्वः अप्पाशास्त्री। (कोल्हापुर )

---

मेघागमे सकलजीवमनोऽनुकूले नानालतातत सुशोभितपुष्पपुञ्जे ।
काले मयूरकुलनादित वृक्षकुञ्जे "युक्तो न ते पिक ! मनागपि मूकभावः" ॥

श्रीनन्दकिशोरदेवशर्म्मा । ( मथुरा, अमृतसर )

---

सायं शनैः प्रति गतं तु दिशं प्रतीचीमन्यागतं चतुरमब पतिं विचिन्त्य ।
क्रुद्धा सती विरहदुःखगतेव तस्मै "प्राची वधूः क्षिपति कन्दुकमिन्दुबिम्बम्" ॥
ग्रीष्मात्मनः सविधमागतमीशमर्कं शान्ता सती विरहितेव निरीक्ष्य तूर्णम् ।
हृष्टोत्थिता विविधवस्तु विचिन्त्य तुच्छं "प्राचीवधूः क्षिपति कन्दुकमिन्दुबिम्बम्" ॥

श्रीवलराम-शर्म्मविद्यारत्नः । ( ढाका, मुन्सिगञ्ज )

---

वर्षास्वनेकविधकर्कशशब्दसंघैः क्लिष्टे श्रवस्यकटुवाङ्मियमस्तवेष्टः ।
फुल्लारविन्दमधुपैः शरदं समीक्ष्य "युक्तो न ते पिक ! मनागपि मूकभावः" ॥

श्रीरोहिणीकान्तविद्याभूषणः । ( ढाका, पुरापाड़ा )

---

आयान्ति पान्थनिवहा मुदिताः स्वगेहं सन्तापमुज्झति मही विरजाः समीरः ।
इत्थं गुणेऽपि नववारिधरागमेऽस्मिन् "युक्तो न ते पिक ! मनागपि मूकभावः" ॥
नाकाङ्क्षसि प्रतिदिनं न च भूरिधारां धाराधर ! प्रखरभानुकरार्दितोऽपि ।
विन्दुव्ययेऽपि यदि कातरतां प्रयायाः "का वा दशाद्य भविता वत चातकस्य" ॥
अपङ्कमार्गप्रसराणमन्दमनोरथानां विमलग्रहाणि ।
प्रकाशशालिन्यभितः समानि "सतां मनांसीव शरद्दिनानि" ॥
सायन्तनीणकरपाटलितां गुजालपिष्टातमुष्टिमसकृत् कुतुकात् किरन्तीम् ।
रक्ताम्बरोज्ज्वलरुचीमभितः प्रतीचीं "प्राचीवधूः क्षिपति कन्दुकमिन्दुकबिम्बम्" ॥

मानिन्यास्तव पादपङ्कजयुगं यन्मूर्द्धजैर्म्मृज्यते
यच्चेयः परिपाकजृम्भितमिदं वक्षोजकुम्भं तव ।
उत्कण्ठां कलकण्ठि ! यस्य विरहात् धत्ते त्वदीयं मनः
सोत्कम्पं परिरभ्य सम्मदकरी "यस्यासि तस्मै नमः" ॥

श्रीउपेन्द्रनाथरायः । ( वरिशाल, रायेरकाठी )

# नीतिसंग्रहः ।

## CONTINUATION.

( कथासरित्सागरे सुभाषितानि )

46 स्त्रीणामलीकमुग्धं हि वचः को मन्यते मृषा ।

Who can dare believe as false the simple utterances of a woman ?

47 एवमुत्पादयेद्दोषं बालोऽपि विकृतिं गतः ।

When roused to anger a child is also able to create serious difficulties.

48 पेशलं हि सतीमनः ।

The mind of a good and chaste woman is infact very tender.

49 सर्वं हि साध्यते बुद्ध्या ।

Every thing can be accomplished by the aid of the intellect.

50 निर्विमर्शा हि भीरवः ।

The fearful are no doubt void of any thought or deliberation.

51 बहुदोषो हि विरहः ।

Separation is the canse of numerous faults or troubles.

52 नान्यथोद्योगसिद्धिः स्यात् ।

Suceess must always be the inevitable result of perseverance.

53 स्वायत्तसिद्धेराज्ञो हि प्रज्ञोपकरणं मता ।
सचिवः को भवेत्तेषां कृते वाऽप्यथवाऽकृते ॥
सचिवायत्तसिद्धेस्तु तत् प्रज्ञैवार्थसाधनम् ।
त एव चेन्निरुत्साहाः श्रियै दत्तो जलाञ्जलिः ॥

The prince who always relies upon his ownself for the success of his measures does only need the help of his bright intellect, and counsellers are likewise useless to him whether they perform any thing or uot; whereas the chief, the completion of whose wishes is entirely dependent upon the wise counsels of his ministers, must, not only, look up for their valuable services, but do also give up every hope of conquest and prosperity, when they are quite idle and loath to work.

54 अभीष्टस्त्रीवियोगार्त्या सविवेकोऽपि बाध्यते।

The pangs of separation from a beloved wife are keenly felt even by the learned.

55 स्त्रीणां भावानुरक्तं हि विरहासहनं मनः।

The mind, which is much enamonred of the graceful acts of women, is really unable to bear the pangs of separation.

56 कर्त्तव्यं हि सतां वचः।

The words of the good are always to be obeyed.

पु० गोपीनाथ शर्म्मा, जयपुर।

---

# ब्रह्मचर्य्यम्।

## ( पूर्वानुवृत्तम्। )

वेदोपकरणे चैव स्वाध्याये चैव नैत्यके।
नानुरोधोऽस्त्यनध्याये होममन्त्रेषु चैव हि ॥ १०५ ॥

105. Both when (one studies) the supplementary treatises of the Veda, and when (one recites) the daily portion of the Veda, no regard need be paid to forbidden days, likewise when ( one repeats ) the sacred texts required for a burnt oblation.

नैत्यके नास्त्यनध्यायो ब्रह्मसत्रं हि तत् स्मृतम्।
ब्रह्माहुतिहुतं पुण्यमनध्यायवषट् कृतम्॥ १०६॥

106. There are no forbidden days for the daily recitation, since that is declared to be a Brahmasattra (an everlasting sacrifice offered to Brahman); at that the Veda takes the place of the burnt oblations, and it is meritorious (even), when (natural phenomena, requiring) a cessation of the Veda-study take the place of the exclamation Vashat.

यः स्वाध्यायमधीतेऽब्दं विधिना नियतः शुचिः।
तस्य नित्यं क्षरत्येष पयो दधिघृतं मधु॥ १०७॥

107. For him who, being pure and controlling his organs, during a year daily recites the Veda according to the rule, that (daily recitation) will ever cause sweet and sour milk, clarified butter and honey to flow.

अग्नीन्धनं भैक्षचर्य्यामधःशय्यां गुरोर्हितम्।
आसमावर्त्तनात् कुर्य्यात् कृतोपनयनो द्विजः॥ १०८॥

108. Let an Aryan who has been initiated, (daily) offer fuel in the sacred fire, beg food, sleep on the ground and do what is beneficial to his teacher, until (he performs the ceremony of) Samavartana (on returining home).

आचार्य्यपुत्रःशुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः।
आप्तः शक्तोऽर्थदः साधुः स्वोऽध्याप्या दश धर्म्मतः॥ १०९॥

109. According to the sacred law the (following) ten (persons, viz.) the teacher's son, one who desires to do service, one who imparts knowledge, one who is intent on fulfilling the law, one who is pure, a person connected by marriage or friendship, one who possesses (mental) ability, one who makes presents of money, one who is honest, and a relative, may be instructed (in the Veda).

नापृष्टः कस्यचिद् ब्रूयात् न चान्यायेन पृच्छतः।
जानन्नपि हि मेधावी जड़वल्लोक आचरेत्॥ ११०॥

110. Unless one be asked, one must not explain ( anything ) to anybody, nor (must one answer) a person who asks improperly; let a wise man, though he knows ( the answer ), behave among men as (if he were) an idiot.

अधर्मेण च यः प्राह यश्चाधर्मेण पृच्छति।
तयोरन्यतरः प्रैति विद्वेषं वाधिगच्छति ॥ १११ ॥

111. Of the two persons, him who illegally explains (anything), and him who illegally asks (a question), one (or both) will die or incur (the other's) enmity.

धर्म्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।
तत्र विद्या न वप्तव्या शुभं वीजमिवोषरे ॥ ११२ ॥

112. Where merit and wealth are *not* ( obtained by teaching) nor (at least) due obedience, in such (soil) sacred knowledge must not be sown, just as good seed (must) not (bee thrown) on barren land.

विद्ययैव समं कामं मर्त्तव्यं ब्रह्मवादिना।
आपद्यपि हि घोरायां न त्वेनामिरिणे वपेत् ॥ ११३ ॥

113. Even in times of dire distress a teacher of the Veda should rather die with his knowledge than sow it in barren soil.

विद्या ब्राह्मणमेत्याह सेवधिस्तेऽस्मि रक्ष माम्।
असूयकाय मां मादास्तथास्यां वीर्य्यवत्तमा ॥ ११४ ॥

114. Sacred Learning approached a Brahmana and said to him; 'I am thy treasure, preserve me, deliver me not to a scorner; so (preserved) I shall become supremely strong.

यमेव तु शुचिं विद्यान्नियतं ब्रह्मचारिणम्।
तस्मै मां ब्रूहि विप्राय निधिपायाप्रमादिने ॥ ११५ ॥

115. 'But deliver me, as to the keeper of thy treasure, to a Brahmana whom thou shalt know to be pure, of subdued senses, chaste and attentive.

ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् ।
स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते ॥ ११६ ॥

116. But he who acquires without permission the Veda from one who recites it, incurs the guilt of stealing the Veda, and shall sink into hell.

लौकिकं वैदिकं वापि तथाध्यात्मिकमेव च ।
आददीत यतो ज्ञानं तत्पूर्वमभिवादयेत् ॥ ११७ ॥

117. (A student) shall first reverentially salute that (teacher) from whom he receives (knowledge), referring to worldly affairs, to the Veda, or to the Brahman.

सावित्रीमात्रसारोऽपि वरं विप्रः सुयन्त्रितः ।
नायन्त्रितस्त्रिवेदोऽपि सर्वाशी सर्वविक्रयी ॥ ११८ ॥

118. A Brahmana who completely governs himself, though he know the Savitri only, is better than he who knows the three Vedas, (but) does not control himself, eats all (sorts of) food, and sells all (sorts of goods).

शय्यासनेऽध्याचरिते श्रेयसा न समाविशेत् ।
शय्यासनस्थश्चैवेनं प्रत्युत्थायाभिवादयेत् ॥ ११९ ॥

119. One must not sit down on a couch or seat which a superior occupies; and he who occupies a couch or seat shall rise to meet a (superior), and (afterwards) salute him.

ऊर्द्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते ॥ १२० ॥

120. For the vital airs of a young man mount upwards to leave his body when an elder approaches; but by rising to meet him and saluting he recovers them.

(क्रमशः)

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
आयावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भासावतरणिका ।

अयं सूचीक्षेपः किमु ? न खलु सोऽङ्गच्छतकरः
स्फुलिङ्गः किं वृष्टी ? न खलु स उदर्चिःशिखिभवः ।
किमुच्चैः कण्डूदः शतपदिकदंशोऽव्रणकरः
न सोऽत्तः पौषेऽस्मिन् प्रसरति तुषारोऽधनजने ॥

## उद्भट-श्लोकाः ।

"यत्पादाम्बुजवैभवं कथयितुं पञ्चाननः शङ्करः
ब्रह्माभूच्चतुराननो हरिरहो जातः सहस्राननः ।
एते वापि नखप्रभावमतुलं वक्तुं समर्था न ते
सा दुर्गा भवतः करोतु कुशलं श्रीराजराजेश्वरी" ॥ ९९ ॥
"मा धीरवंशे जननं विधेहि नये यशो नास्त्ययशस्यकीर्त्तिः ।
शुक्लाम्बरे शुक्लचयेन किं स्यात् कालस्य लेशोऽपि यशो निहन्ति" ॥ १०० ॥
"जिता धनवता भार्य्या वस्त्रशास्त्रैः सभा जिता ।
क्षुधा जितश्च दारिद्र्यं गव्यैरभ्यागतो जितः" ॥ १०१ ॥
या तु या तु किमनेन तिष्ठता मुञ्च मुञ्च सखि ! सादरं वचः ।
मर्म्मभेदि-मदपाङ्गनिर्जितः ग्रमतः कति पदानि गच्छति ? ॥ १०२ ॥

वर्षे पञ्चदशे शते व्यपगते सप्ताधिके कार्त्तिकस्याद्यानङ्गतिथौ नवीनविशिखां श्रीचित्रकूटे व्यधात् ।
उद्यत्तोरणचारुहीरनिकरस्फीतप्रभाभासुर-प्रोदञ्चत् कपिशीर्षकाङ्कितशिरोरम्यां महीवल्लभः ॥ १८४ ॥
श्रीविक्रमात् पञ्चदशाधिकेऽस्मिन् वर्षे शते पञ्चदशे व्यतीते। चैत्रासितेऽनङ्गतिथौ व्यधायि श्रीकुम्भमेरुर्वसुधाधिपेन ॥१८५॥



चितोरे जयस्तम्भः ।
( विश्वकोषसम्पादकाल्लब्धः । )

पुण्ये पञ्चदशे शते व्यपगते पञ्चाधिके वत्सरे माघे मासि बलक्षपक्षदशमी देवेज्य-पुष्यागमे । (?)
कीर्त्तिस्तम्भमकारयन्नरपतिः श्रीचित्रकूटाचले, नानानिर्मितनिर्जरावतरणैर्मेरोर्हसन्तं श्रियम् ॥ १८६ ॥
सत्प्राकारप्रकारं प्रचुरसुरगृहाडम्बरं मञ्जुगुञ्जद्भृङ्गश्रेणीवरेण्योपवनपरिसरं सर्वसंसारसारम् ।
नन्दव्योमेषु शीतद्युतिमितरुचिरे वत्सरे माघमासे पूर्णायां पूर्णरूपं व्यरचयदचलं दुर्गमुर्वीमहेन्द्रः ॥१८७॥

# चित्तहरम् । *

वा

## ( चितौर )

"चित्तहर"न्तु नगरं राजस्थानस्यान्तःपाति उदयपुरस्य (१) सुप्रसिद्धं महीसार इव प्राचीनतमं वर्त्तते । तत्र हि पूर्वतनानां प्रातः-स्मर्त्तव्यनाम्नां महीभृतां राजधानी आसीत्। अक्षा० २४० ५२/ उः द्राघि० १४० ४१/ पूः निमचनगरतः प्रसिद्धं राजवर्त्म नगरीमल-ङ्कुर्त्येमां"नसिराबाद"देशसुपतिष्ठते। तदेव होल्कार-सिन्धिया नगर्य्या अयःपथवाष्परथाधिष्ठानमेकम् । अहो अधुनापि चर्व्यमाणेऽपि कालेन पूर्वगौरवचिह्ने चित्तहरे पर्य्यटतां मनस्विनां क इवाभूतपूर्व-भावः समाक्रामत्यामूलतो हृदयम् । व्यक्तीकर्त्तुं तन्तुभावं लेखनी मे मन्दायते, तथापि लेशेनापि लिपिमुखेन ग्राहकेभ्यः हर्षशोक-विस्मयादिकान् प्रतिपादयिष्यतीति प्रबन्धोऽयमभिनन्द्यते ।

तत्र चित्तहरे किमप्युच्चतरं स्थानमारूढ़ास्चतुर्दिक्षु चक्षुंषि निक्षिपन्तः अदृष्टपूर्वं गोचरीकुर्वते सहसशो दृश्यम् । प्रथमतः सुदूरात् समारभ्य भुवः समतलप्रदेशं शनैरल्पाल्पशः क्रमोन्नतीभूय भूधरदृश्या भूमिरदृश्यत । तदुपरि उच्चप्राचीरवलयितं दुर्गं निसर्ग-भयङ्करं विराजते। क्वचित् आर्य्यकुलगौरवं सूचयन् निविड़निखात पादशः स्तम्भस्तोमो महीध्र इवाभ्रंलिहो विलोक्यते। क्वापि विविधसौधमाला अधुनापि नवीभूताः समुत्कीर्णरुचिरवर्णशाल-भञ्जिकादिभिः कारुकार्य्यवितानैश्च शिल्पनैपुण्यं लोकसीमानुवर्त्ति तात्कालिकं निवेदयति ।

---

* नगरस्य शोभाधिक्यसूचनायैव तथाविधं कृतं नाम, अस्यैवापभ्रंशः "चितौर" इत्यनुमीयते ।

(१) राजपुत्रा भूरिशो यत्र नायका बभूवुः स एव देशोऽद्य जातापभ्रंशो "राज-पुताना" इत्येवं नाम्नाभिधीयते ।

क्वापि स्वच्छवारिपरिपूर्णा: विशालजलाया: सागरमनुकुर्वन्ति। यस्य हि तीरे दण्डायमाना: पुरुषा: जलनीचैर्विचरतो मीनानवलोक्य प्रमोदन्ते। येषां हि तीरे श्रेणीक्षतानि देवमन्दिराणि अन्याश्च विविधसौधपङ्क्तय: प्रबलैर्विक्रान्तानां "राणागणानां" वासस्थानं प्रमाणयन्ति। तेषां खलु अवाङ्मनसगोचरं बलबुद्धिवीर्य्यं स्मृतिपथमापतितं युगपत् हर्षशोकविस्मयैरुद्वेलयति हृदयमामूलत:। सुचिरं विलोक्य प्रतिनिवृत्ता विदेशीया: कारव: क्षितिभृतश्च पथि पथि तेषां चित्तहरभूभुजामलौकिकमहिमानं गायं गायं व्रजन्ति, प्रासगृहा अपि तत्तदेव कीर्त्तिकलापं स्मारं स्मारं बन्धुभ्यो विवृखन्ति च विस्मयन्ति च विस्मापयन्ति च तान्।

पुरा सूर्य्यवंशावतंशस्य महाराजश्रीरामचन्द्रस्यान्वयभूषण: विश्रुतवीर्य्यनामा महाराज: श्रीमान् "वाप्पाराश्रो"नगरमिदं प्रतिष्ठापयामास, तदेवैतत् "चित्तहरम्"। यत्र हि यो द्वादशवर्षीयवालक: शौर्य्येण युवानमप्यतिक्रान्त: पद्मिनीरूपविमोहितस्य (१) दुर्जयस्य "आला उद्दिनस्य" असीमसैन्यमालातरङ्गायिते युद्धक्षेत्रे प्रमत्तजलहस्तीव निर्भीको व्यचरत्, तस्यैव महावीरस्य "वादलस्य" जन्मभूमिश्चित्तहरं नगरम्।

अहो यत्र हि महावीर: "भीमसिंहस्तथा "कुम्भराणा"जन्मना समधिकं भूषययामास जन्मभूमिं, तदेतत् भारतविख्यातं "चित्तहरम्"।

अहो ये खलु राणावंशीया राजान: मृत्युं कठोरहृदयं सस्मेरमालिलिङ्गुस्तथापि रणात् प्रत्यावृत्य तुङ्गस्तनीं कामिनीं न पस्पृशु:।

सेयं पर:शता वीरप्रसविनी चितोरनगरी अमरावतीप्रतिद्वन्द्विनी संप्रति शोकारण्यानीमभिनयति। क्व वा भग्नाट्टालिकायामगणितायां प्ररूढ़सस्यायां पशुपक्षिकीटा: पर्य्यटन्ति क्षतनिकेतना:।

अहो दशामिमां समालोक्य केषां जीवतां हृदयं न व्यथयते।

(१) भीमसिंहस्य पत्नी श्रीमती पद्मिनी महिषी।

अहो यत्रैव नेत्रं प्रसरति तत्रैव केवलं समृद्धि-वीरत्वलक्षणमेव लक्ष्यते। क्वापि भग्नमत्युच्चैस्तोरणं, क्वापि भूरयो भूरयो भग्ना अपि स्तम्भाः सुविशालाः। क्वापि पर्वतायमानाः भग्नप्रासादपुञ्जाः।

चित्तहरनगरी सुविशालक्षेत्रवत्, सा च चतुर्दिक्षु अभ्रंकषैः प्राचीरैः परिवेष्टिता। तस्याः पश्चिमतो अदूरे "गमरी" नाम नदी प्रवहति। तस्या उपरि करालकालस्य भ्रुकुटीकटाक्षमपि तृणाय मत्वा विशालसेतुः देदीप्यते। चितोरे शैलमालया दुर्गीकृते मध्यतो राजप्रासादाः अपराणि च संख्यामतिगतानि मन्दिराणि निर्मितानि। निम्नस्थनगरन्तु अधुना "तलहाटि" इत्येवं नाम्ना निर्दिश्यते।

प्राचीने तु शिलाफलके उक्त एव पर्वतः "चित्रकूटे"ति अभिधीयते। नगरस्य पूर्वस्यां द्विक्रोशदीर्घे विशालशैलशिखरे विश्वविलक्षणं विख्यातं "चितोरदुर्ग"मवतिष्ठते। दैर्घ्येनेदं दुर्गं प्रायः सार्द्धक्रोशः, विस्तारे च प्रायः क्रोशपादात् परतः सम्भवति। शिखरदेशस्त्वतिदुरारोहः। नातिक्षुद्रात् शिखरदेशात् प्रवणीभूय पर्वतः समायां भूमौ मिलितः। दुर्गाभ्यन्तरे प्रभूतजलानि सागरानुकारीणि सरोवराणि विराजन्ति। उत्तरेण दुर्गं प्राचीरमुच्चैः ११७४ हस्तपरिमितं, दक्षिणतस्तु १२१२ हस्तपरिमितम्। प्रवेशमार्गन्तु तिसृषु दिक्षु उच्चैस्तोरणेन मण्डितम्। तेषु द्वारेषु आरोहणाय त्रयः क्रमोच्चपथाः सन्ति। पश्चिमाया दिशः पन्था एव पथां प्रशस्ततरः। पन्था अयं प्रायः क्रोशार्द्धं व्याप्य नगरस्याग्निकोणमारभ्य तोरणद्वयतः प्रथमतः उत्तरस्यां दिशि १०८० बाहुपर्य्यन्तं गतः, अनन्तरं वक्रीभूय त्रीणि चत्वारि वा तोरणानि समतिक्रम्य ५०० बाहुपर्य्यन्तं गत्वा रामोपलनामके दुर्गद्वारे मिलितः। समग्रमेव क्रमोच्चः प्रतिस्थानं प्रस्तरनिर्मितश्च। द्वितीयद्वारमुत्तरतोऽवस्थितम्, तत्रारोहणपथोऽतीव दुर्गमः सुतरां प्रायो न व्यवह्रियते। "सूर्य्योपल"नामकन्तु तृतीयद्वारं पूर्वतोऽवस्थितम्। द्वारमेतदारोढुं यः

पन्था वर्त्तते प्रायोऽसौ १५०० सार्द्धसहस्रहस्तपरिमितः। अस्य तु पथः उपरार्द्धांशः प्रस्तरनिबद्धः। दुर्गाभ्यन्तरे द्वात्रिंशत्सरोवराणि विमलजलानि शोभन्ते। पर्वतनिम्नभागे नगरोपरिभागे च एका निर्झरिणी वर्त्तते, तेन हि सदैव सुस्वादु स्वास्थ्यकरञ्च जलं लभ्यते। मध्ये तु अल्पमिते स्थाने गोधूमक्षेत्रं वर्त्तते किन्तु गवादिचारणयोग्यानि तृणानि नात्र सुलभानि।

युद्धविधौ चित्तहरदुर्गावस्थानं सर्वतो निरुपद्रवम्। आधुनिकशतघ्नी सुमहती अपि दुर्गस्य तस्योर्द्धं वेद्धुं न शक्नोति। फलतस्तु यदा चित्तहरे सौभाग्यभानुरुदगात् तदानीं समग्रेऽपि भारतवर्षे एकमपि दुर्गं तथाविधमासीदिति न प्रतीयते।

क्षत्रियतनयास्तु अधुनातना ब्रुवते एवं क्षत्रकुलतिलकरामचन्द्रवंशधरस्य श्रीमतो लवस्य पवित्रे वंशे श्रीमान् "वाप्पाराओ" जन्म-जग्राह। स एव १७२ खृष्टाब्दे प्रायः ९४ शकाब्दे चितोरदुर्गं निर्म्माय राजधानीं प्रतिष्ठापितवान्। १५६८ खृष्टाब्दं यावत् तद्वंशीयास्तत्र राजत्वं कृतवन्तः। तदनन्तरं तस्मिन्नेवाब्दे सम्राट् "अक्‌वर्" चित्तहरदुर्गं अधिकृतवान्। तेन हि तदानीन्तनः राणाश्रीउदयसिंहः उदयपुरे राजधानीं स्थापयामास।

चित्तहरे प्राचीनमन्दिरकीर्त्तिस्तम्भादिषु कुम्भराणाकृतकीर्त्तिस्तम्भ-मोकलजीमन्दिर-शिङ्गारचौरीप्रभृतय एव कीर्त्तयः अद्युसा-विराजन्ते। एतदन्ये च बहवो बहुस्थाने भग्नावस्थया कीर्त्तिकलापाः शोकमुद्दीपयन्ति। एवं बहुषु स्थानेषु जैनानामपि उत्कीर्णशिलालिपिः प्राप्यते। तासु च शिलालिपिषु प्राचीनतमा लिपिः ७५५ अब्दे समुत्कीर्णा उपलभ्यते।

पराजित्य मालवदेशं सुलतानाधीनं गुर्जरञ्च तज्जयघोषणाय कुम्भराणाप्रतिष्ठितकीर्त्तिस्तम्भ एव आर्य्यगौरवं प्राधान्येन परिसूचयति। अस्य तु प्रथमतश्चिनितस्य जयस्तम्भस्य उच्चता १२२ फिट् अर्थात् प्रायः

८१ हस्तमिता एवं विस्तारः १७ $\frac{१}{२}$ फिट् । प्रायः १२ हस्तपरिमितः नवतलेन सुविपुलेनायं विभक्तः, अभ्रंकष इव उत्तिष्ठते । प्रतितलं चतुर्दिक्षु वातायनं राजते । आ पाददेशात् स्तम्भस्य चूडापर्य्यन्तं समग्रमेव चुस्प्रस्तरनिर्मितम् । तस्मिंस्तु प्रस्तरखण्डे हिन्दुदेव-देवीप्रतिकृतयः सुसमुत्कीर्णा दृश्यन्ते ।

एवं "कुम्भराणाकीर्त्तयः स्वपूर्वपुरुषाणाञ्च कीर्त्तिधाराः श्लोक-निबद्धा मानसमानन्दयन्ति द्रष्टॄणाम्" ।

राजपुत्रस्थानैतिहासिकः श्रीमान् "टड्साहेवः" उपरिचित्रिते कीर्त्तिस्तम्भे विलोक्य शिलालिपीः निश्चिकाय १५१५ विक्रमसंवति अर्थात् १४५८ खृष्टीयाब्दे सोऽयं विजयस्तम्भो निर्मित इति ।

विश्रुतनामा शिल्पशास्त्रवित् "फर्गुसन" साहेवस्तु १४३९ खृष्टाब्दे सोऽयं स्तम्भो निर्मित इति निश्चिन्वानः परस्परमते-ऽप्रामाण्यमवास्थापयत् ।

स्वभाव एवैषः केषाञ्चित् तेषां यत् कर्त्तव्य एव साधुरसाधुर्वा स्वकपोलकल्पितैर्हेतुभिः प्रत्नकालनिर्णय इति । नात्र किञ्चिद्व-क्तव्यमस्माभिः ।

"जानन्तु ते किमपि तान् प्रति नैष यत्नः" ।

किन्तु विजयस्तम्भगात्रे स्पष्टोत्कीर्णात् शिलाफलकादेतत् प्रतीयते १५०५ संवति अर्थात् खृष्टीय १४४८ अब्दे स निर्मित इति ।

तस्मिन् विजयस्तम्भे शिलाफलके १८४—१८७ शीतिश्लोके एवं परिबुध्यते तद्द्रष्टव्यं तत्र । तथाहि—　　( क्रमशः । )

---

## व्याघ्रीविवाहार्थी शृगालः ।

( दुराशा दुःखकारणम् । )

कस्मिंश्चित् नदीकच्छे दुराशो नाम शृगालः प्रतिवसति । अथ

तत्र यदृच्छया विचरन्ती काचित् व्याघ्री तेन शृगालेनावलोकिता संभाषिता च, अयि व्याघ्रि ! कथमस्मिन् विजने वने किमपि दुःखमनुभवन्तीव विचरसि ? ततो व्याघ्री कथयति, सत्यमनुमितं भवता, केनचिद्दुर्द्दान्तेन बलीयसा सिंहेन निपातिते जीवनवल्लभे भर्त्तरि तच्छोकनिष्पीड़िता शून्यहृदयेन यथेच्छं भ्रमामि। शृगालः कथयति दैवं खलु दुरतिक्रमणीयं यद्भवितव्यं तद्भूतं दुश्चिन्तयालम्। एवं दिनानि तयोः कतिचिदतिक्रान्तानि। अपरेद्युः शृगालः बद्धाञ्जलिः सविनयमुवाच, अयि व्याघ्रि ! प्रबलया दुराशया प्रणोदितः प्रत्यहमिच्छन्नपि किमपि मनोगतं विवक्षुः पुनर्भयात् निवर्त्ते। व्याघ्री-कथयति किमत्र भयेन ब्रूहि तावत् मनोगतम्। शृगालो ब्रूते भद्रे ! किं ब्रवीमि, हृदयं स्फुटदपि नो मुखं स्फुटति वक्तुम्।

अहं शृगालकुले महर्षिर्जितेन्द्रिय एव व्याख्यातः सर्वैर्वनचरैः, फलतोऽपि अहं कति कति वा देशान् न पर्य्यटम् कियतीर्वा सुन्दरीर्नयनातिथीर्नाकार्षम्, किन्तु क्वापि कदापि अपि न मे चित्तविकृतिरजनि। श्रीमती भवती पुनः मृतमपि पतिमनुशोचति पतिव्रता, विलोक्य च तव पतिशोकमहं नितरां दुःखितोऽस्मि। अहमपि भार्य्याविरहितः सञ्जातवैराग्यः परिव्राजकः सञ्जातः। किन्तु वेदे विदितमस्ति प्रव्रज्याश्रमे यावत् फलं क्लेशसाध्यं तावत्फलं धर्मपत्नीसनाथस्य गृहिणो गार्हस्थ्याश्रमेऽपि विनायासं सिद्ध्यति। अतो यदि न कुप्यसि मह्यं तदा परिणीय भवत्याः पतिशोकमपनोदितुमिच्छामि। पुनर्गार्हस्थमपि धर्मं समाश्रयिष्ये यदि मन्यसे त्वम्। तदाकर्ण्य व्याघ्री कथमपि निगृह्य भावम् ईषद्धसन्तीव कथयति नास्त्यत्र कोऽपि ते भयहेतुः, पत्यन्तरग्रहणेन पशूनां न भवति पातिव्रत्यहानिः बालिनो बधात् प्रातःस्मरणीयया तारयापि सुग्रीवः पतित्वेनाङ्गीकृतः। किन्तु शुभदिनं विना विवाहो नैव समुचितः इति प्रतीक्षस्व कियन्ति दिनानि। तदा-

कर्ण्यं पुलकिततनुः शृगाल आह विधुमुखि! धन्योऽहं त्वयानुगृह्यमानः शचीसखः शक्रो नन्दनवने इवात्र विहरामि। इत्येवं चिन्तयानः शृगालः रात्रावपि निकामं न स्वपिति व्याघ्रीविवाहप्रमोदाकुलितः।

अथापरेद्युः व्याघ्री ब्रूते भोः भाविवल्लभ! त्वं शृगालोऽपि महावीरोऽसि पश्य तावन्नदीस्रोतसा शवो नीयते, तमुपाहर मह्यम् भोजनाय, तदाकर्ण्य शृगालोऽचिन्तयत् यदि नाहरेयं शवं प्रबलस्रोतसस्तदा व्याघ्री मां कापुरुषोऽयमित्येवम् अवमंस्यते, यद्याहरेयं तदा कथं वा दुर्बलेन मया प्रबलतरात् स्रोतसः शवमुद्धरिष्ये तत्र स्रोतसा नीतमिवात्मानं सम्भावये इति मत्वा यद्भवतु दर्शयामि प्रतापं व्याघ्रैय इति यावत् स्रोतसि उत्पपात तावत् बलवता तेन स्रोतसा शृगालः परिभ्रमन् पुनः पुनरुन्मज्जति निमज्जति, उदरपूरं नासावदनाभ्यां जलं पिबति च। तदवलोक्य व्याघ्री मनसा हसन्ती द्रुतमुत्पत्य स्रोतसस्तं शृगालमुज्जहार। ततः शृगालेनाभिहितम्, अयि भाविप्रिये! किमेतदनुचितं कृतं भवत्या? अहं खलु स्नात्वा पुनः पुनः पितॄन् तर्पयितुं प्रवृत्ते, त्वन्तु तत्रान्तरायो जाता। ततो व्याघ्री कथयति ईदृशेन शक्तिमता त्वयाहं परिणेतुमिष्ये, एहि तावन्मम पाणिं गृहाण इति यावत् शृगाल उपसर्पति तावत् प्रखरनखरैरेकेण चपेटाघातेन तस्य कर्णं चिच्छेद। छिन्नकर्णस्तु शृगालः पलायितः, व्याघ्री अपि यथेच्छं गतवती इति।

---

## कविवरः श्रीभवभूतिः।

( परिशिष्टम्। )

१८१६ शाकाश्विनस्य चन्द्रिकायां मद्विरचिते "कविवरः श्रीभवभूति"रिति शीर्षके प्रबन्धे भवभूतिकथितो गवालम्भो न सम्यगालो-

चित:। तत्रैतावन्मात्रमभिहितं यथा "अत्र तु यावदीया: शास्त्र-युक्तय: सुधीभिरनुसन्धेया इति"। नाधुनापि केनचित् विपश्चिता एतत्सम्बन्धिनी काचन मीमांसा पुरस्कृतेत्यालोक्य यथाशक्ति प्रश्नस्यैतस्यालोचनायां यतामहे।

तथाह भगवान् मनु:।

"मधुपर्के च यज्ञे च पितृदैवतकर्म्मणि।
अत्रैव पशवो हिंसा नान्यत्रेत्यब्रवीन्मनु:॥
एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विज:।
आत्मानञ्च पशूंश्चैव गमयत्युत्तमां गतिम्"॥ ५।४१।४२।

एतस्मान्मनुशासनादेतावदवगम्यते यथा मधुपर्कादौ पशुहिंसा-कर्त्तव्या तथाच एतदर्थे हिंसा न हिंसेति परिकल्पिता, तद्यथा—

यज्ञार्थं पशव: सृष्टा: स्वयमेव स्वयम्भुवा।
यज्ञस्य भूत्यै सर्वस्य तस्माद् यज्ञे बधोऽवध:॥ ५।३९।
औषध्य: पशवो वृचास्तिर्य्यञ्च: पक्षिणस्तथा।
यज्ञार्थं निधनं प्राप्ता प्राप्नुवन्त्युत्सृती: पुन:" ॥ ५।४०।

अधुनालोचनीयं कस्य पशोर्मांसं मधुपर्के प्रशस्तमिति। तत्राह भगवान् वशिष्ठ: संहितायाश्चतुर्थाध्याये—

"ब्राह्मणाय राजन्यायाभ्यागताय वा महोक्षं वा महाजं वा पचेत्। एवमप्यातिथ्यं कुर्वन्ति।" तथा चतुर्दशाध्याये "धेन्वनड्वाहौ मेध्यौ वाजसनेयके" इति। तथाच मनु: स्नातकपुत्रग्रहणे मधुपर्के—

"तं प्रतीतं स्वधर्मेण ब्रह्मदायहरं पितु:।
स्रग्विनं तल्प आसीनमर्हयेत् प्रथमं गवा" ॥ ३।३।

तत्र कुल्लुक: "तं ब्रह्मचारिधर्म्मानुष्ठानेन ख्यातं स्रग्विनं मालयालङ्कृतम् उत्कृष्टशयनोपविष्टं गोसाधनमधुपर्केण पिता आचार्य्यो वा विवाहात् प्रथमं पूजयेत्॥" (Manusunhita Bombay Edition)

अतएव स्मृतिकाराणां मते मधुपर्कादौ गोवध: न दोषाय।

अधुना गृह्यसूत्रालोचनेन दर्शयाम: मधुपर्कलक्षणं कदा वा गवालम्भ: कर्त्तव्य इति।

आश्वलायनगृह्यसूत्रे मधुपर्कलक्षणं तथा—

"दधनि मध्वानीय ।१।२४।५।

तत्र भाष्यकारो नारायण:—आनयतिरत्र सेचनकर्म्मा। आसिच्येत्यर्थ: ॥

सर्पिर्वा मध्वलाभि । १२४।६।

मध्वभावे अयमेव प्रतिनिधि: नान्यस्तैलादि: अल्पत्वाद् दातु: कर्म्म पूर्वमाह।

विष्टर: पाद्यमर्घ्यमाचमनीयं मधुपर्कौ वा गौरित्येतेषां त्रिस्त्रिरेकैकं वेदयन्ते ।१।२४।७।

विष्टर: आसनम्। पाद्यार्थमर्घ्यार्थमाचमनार्थञ्च उदकम्। यथोक्तम्। एतेषामिति वचनम् एतेषामेव त्रिर्निवेदनं यथा—स्यात् भोजनस्य माभूदिति। भोजनञ्च देयमिति वक्ष्याम:। ऋत्विजां मधुपर्कदाने द्वे गतौ सम्भवत:। पदार्थानुसमय: काण्डानुसमय इति। तत्र पदार्थानुसमयो नाम सर्वेषां वरणक्रमेण विष्टरं दत्वा तत: पाद्यन्ततोऽर्घ्यमिति। काण्डानुसमयो नाम एकस्यैव विष्टरादिगोनिवेदनान्तं समाप्य ततोऽन्यस्य सर्वं ततोऽन्यस्येति।

आचान्तोदकाय गां वेदयन्ते। १।२४।२३।

आचान्तग्रहणं शौचार्थम् आचमनं कृत्वा कर्म्माङ्गमप्याचमनं कुर्य्याद् इत्येवमर्थम् उदकवचनम् आचमनीयनिवृत्त्यर्थम्। तेनाचमनम् उदकान्तं भवति।

हतो मे पाप्मा पाप्मा मे हत इति जपित्वोङ्कुरुतेति कारयिष्यन् ।१।२४।२४।

इमं मन्त्रं जपित्वा तं कुरुत इति ब्रूयात् यदि कारयिष्यन् मारयिष्यन् भवति, तदा च दाता आलभेत। तत्र देवता: प्रागुक्ता:।

माता रुद्राणां दुहिता वसूनामिति जपित्वोमुत्सृजतेत्युत्स्रक्ष्यन् ।१।२४।२५।

यद्युत्स्रक्ष्यन् भवति तदा एतां जपित्वा तमुत्सृज्यतेति ब्रूयात्।

नामांसो मधुपर्को भवति भवति ।१।२४।२६।

मधुपर्काङ्गं भोजनम् अमांसं न भवतीत्यर्थः। कुतः मांसस्य भोजनाङ्गत्वेन लोके प्रसिद्धत्वात्। अनेनाभ्युपायेन भोजनमप्यत्र विहितं भवति। पशुकरणपक्षे तन्मांसेन भोजनम् उत्सर्जनपक्षे मांसान्तरेण। अध्ययनान्तलक्षणार्थं द्विवचनं मङ्गलार्थञ्च।

पूर्वोक्तगृह्यकारवचनाकलनेन मधुपर्कविधिः सम्यक् परिज्ञातः। गवालम्भस्तत्र विहित इत्यपि ज्ञायते। तथाचालम्भनमन्त्रविधिरपि प्रदत्तः। अपरगृह्यसूत्राण्यपि अत्र न विसंवदन्ति।

पुराणादौ गोमेधादीनां प्रसङ्गोऽपि समासाद्यते। तथाच विष्णु-पुराणान्तर्गतसंकृतिनन्दनरन्तिदेवगोमेधवृत्तान्तः सर्वत्र सुपरिज्ञातः।

तैत्तीरिये ब्राह्मणे किं विधः वृषः कस्मै देवतायै दातव्य इति निर्दिष्टम्। तथाच पञ्चशारदीयोत्सवे सप्तदशतरुणगवालम्भविधिः समासाद्यते। गोपथब्राह्मणे कृतमेधस्य पशोरवयवस्य कस्य ब्राह्म-णस्य कस्यांश इति निर्द्धारितम्।

अनेन समासतः श्रुतिस्मृतिमतं परिदर्शितमिति मन्यामहे। अतएव कविवरेण भवभूतिना मधुपर्के वत्सतरीहननं संयोज्य न नास्तिकपदता लेभे। रामचन्द्रराजत्वसमये मधुपर्के गवालम्भः कृतोऽभूदिति ज्ञात्वा कविः तदीये नाटकद्वये रामसमयवर्णनावरे जनकादीनां मधुपर्कप्रदानमधिकृत्य वत्सतरीविशसनं संयोजित-वान्। यत् कविकृतविधानं सम्यक् शास्त्रसङ्गतमेतत् पक्षे परम-पूजनीयाः विद्यासागरपादाः प्रमाणं, तेन उत्तरचरितव्याख्यानकाले कविमतस्याङ्गीकृतत्वात्। तथाच तर्कवाचस्पतिपादाः वीरचरित-व्याख्याने—"समांसमधुपर्क" इत्याम्नायानुसारेण गृहागतश्रोत्रियाय अतिथये सत्कारार्थं तत्सतरीहननस्य शास्त्रीयत्वं प्रतिपादितवन्तः।

किन्तु नायं विधिः कलौ आचरितव्यः। तथाह रघुनन्दनकृते उद्वाहतत्त्वे वृहन्नारदीयकारः।

समुद्रयात्रा (तुः) स्वीकारः कमण्डलुविधारणम्।
द्विजानामसवर्णासु कन्यासूपयमस्तथा॥
देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः।
दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च॥
दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ।
महाप्रस्थानगमनं गोमेधश्च तथा मखम्॥
इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः॥

अतएव वाचस्पत्ये मधुपर्कलक्षणं सम्यक् कलियुगसङ्गतम्—

"मधुनः पर्कः योगो यत्र"। मधुयुक्तं कांस्यपात्रस्थे कांस्यपात्रान्तरेण कृते—

दधिसर्पिर्जलं क्षौद्रं सिता चैतैश्च पञ्चभिः।
प्रोच्यते मधुपर्कस्तु" इत्युक्तं दध्यादिपञ्चके॥

( Vide P. 4732. Vachaspatyam. )

श्रीमद् उपेन्द्रनाथरायस्य।
( रायेरकाठीनिवासिनः )

---

## कुन्दमाला।

( पूर्वानुवृत्ता )

ततस्तदाकर्ण्य परमरोषकषायितलोचनः तच्छासनार्थी द्वितीय इवान्तककिङ्करः म्लेच्छपुरुषो धर्म्माधिकरणाय सावेगं प्रस्थितः।

ततोऽपसर्पति म्लेच्छपुरुषे भैरवरुद्रवेशे वैष्णवचूडामणिः हरिहरः संसारस्य मोहाविष्टतामाकलय्य परमाधिक्लिष्टः भगवदेकाभिरतिर्बद्धाञ्जलिः स्तोत्रमवाचयत्।

"नमामः सर्वं सर्वेशमनन्तमजमव्ययम्।
लोकधामधराधारमप्रकाशमभेदिनम्॥

नारायणमणीयांसमशेषाणामणीयसाम्।
समस्तानां गरिष्ठं यद्‌ भूरादीनां गरीयसाम्॥
यच्च सर्वं यतः सर्वमुत्पन्नं सत्पुरःसरम्।
सर्वभूतश्च यो देवः पराणामपि यः परः॥
परः परस्मात् पुरुषात् परमात्मस्वरूपधृक्।
योगिभिश्चिन्त्यते योऽसौ मुक्तिहेतुर्मुमुक्षुभिः॥
सत्त्वादयो न सन्तीशे यत्र च प्राकृता गुणाः।
स शुद्धः सर्वशुद्धेभ्यः पुमान् आद्यः प्रसीदतु॥
कलाकाष्ठा निमेषादि कालसूत्रस्य गोचरे।
यस्य शक्तिर्न शुद्धस्य प्रसीदतु स नो हरिः॥
प्रोच्यते परमेशो हि यः शुद्धोऽप्युपचारतः।
प्रसीदतु स नो विष्णुरात्मा यः सर्वदेहिनाम्॥
यः कारणञ्च कार्य्यञ्च कारणस्यापि कारणम्।
कार्य्यस्यापि च यः कार्य्यं प्रसीदतु स नो हरिः॥
कार्य्याकार्य्यस्य यः कार्य्यं तत्कार्य्यस्यापि यः स्वयम्।
तत्कार्य्याकार्य्यभूतो यस्तस्य प्रणताः स्म तम्॥
कारणं कारणस्यापि तस्य कारणकारणम्।
तत्कारणानां हेतुं त्वां प्रणताः स्म सुरेश्वरम्॥
भोक्तारं भोज्यभूतञ्च स्रष्टारं सृज्यमेव च।
कार्य्यं कर्मस्वरूपं तं प्रणताः स्म परं पदम्॥
विशुद्धं बोधनं नित्यमजमक्षयमव्ययम्।
अव्यक्तमविकारं यत् तद्विष्णोः परमं पदम्॥
न स्थूलं न च सूक्ष्मं यत् न विशेषणगोचरम्।
तत्पदं परमं विष्णोः प्रणमामः सदामलम्॥
नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च।
जगद्धिताय कृष्णाय गोविन्दाय नमो नमः॥"

अथ स्तोत्रमिदमुच्चारयतस्तस्य नेत्रयुगलात् अनवरतं वाष्पलहरी पतन्ती अभिनवं दर्शनीयमुत्पादयामास। ततः स्तोत्रवाचनेन शान्तिपारावारे निमज्जमान इव भक्तिगद्गदः पुनरेवावादीत्

"तदधुना किं कर्त्तव्यम् । भगवन् ! निखिलोऽयं संसारः त्वदधीनः । सर्व्व एव निमित्तनैमित्तिकयोः क्रमस्त्वदेकवशः । अहन्तु

"जानामि धर्म्मं न च मे प्रवृत्तिः
जानाम्यधर्म्मं नच मे निवृत्तिः ।
त्वया हृषीकेश ! हृदि स्थितेन
यथा नियुक्तोऽस्मि तथा करोमि ॥"

---

## तृतीयोच्छ्वासः ।

### कुसुमनिर्म्मिता ।

"अथ गन्तव्यमेकान्ततत्सद्मयापाद्य निष्कृप ! मां त्वत्पादतलमनुजीवन्तीमेनां तपस्विनीमनन्यशरणां गन्तुमर्हसीत्यभिहितवती काचन भरविगलित-मुक्ताफलधवललोचनजललवा कुसुमनिर्म्मिता सर्वमनोमोहने यौवने विहितपदक्रमा यमुनासन्निहिते कस्याश्चित् वाप्याः सैकतशीतले शीलातले कस्मिन्नपि कृतोपवेशनस्य तन्मुखमिवाभिध्यायतः कस्यच नयूनः चरणतल एवोत्तमाङ्गं स्थापितवती । अस्तं गतोऽधुना भगवान् वासरनायको भास्करः । आगता भुवनरञ्जिनी रजनी पूर्णशशाङ्कलेखाधारिणी । अभुवन् तस्मिन् जनान्तरपरिशून्ये प्रदेशे गाढ़ं विन्यस्तलतास्रग्विशोभिनो विशाला विटपिनः, तस्य निर्ज्जनतायाः प्रधानं साधनम् । आसीत् पुरतो वितता भूतलपयोधरप्रतिमा दीर्घिका शैवालकुमुदकह्लारविमण्डिता । ऊर्द्धमम्बरतलं जलदतारकाशशाङ्कसमन्वितं हसदिव स्थितम् । अहो सर्वैव प्रकृतिः तरुशिरःसु व्रततीकिसलयेषु वापीसोपानावलीसु च शुधांशुकिरणपातनव्याजेन हसन्ती स्पन्दपरिशून्या शान्तिमयी ।

एवंविधे प्रकृतेः शान्तिप्रसादे प्रेमिनी निमेषविरहितौ अन्योन्यमालोकयन्तौ स्थितवन्तौ ।

नायं तरुणः पाठकेषु असंस्तुतः। यमुनापुलिनात् निर्गत्य म्लेच्छपुरुषनिवासं गतः। ततस्तमात्मनिवेदनं विज्ञाप्य गृहीतवृत्तिः स्वावासं प्रत्यागतः। उत्तरेद्युः कामपालान्तिकमागत्य सर्वं तस्मै निवेदितवान्। गमनाय च तदादेशमगृह्णात् श्रुत्वैतत् कामपालनन्दिनी अनङ्गमञ्जरी सहसा दयितविरहार्त्ता सखीमुखेन तं प्रियतमं परिणतयामे दिवसस्य तस्मिन्नेव जनपरिशून्ये प्रदेशे दयिता सङ्केतमनुसरन् युवा यथावधारितमागतः कान्तयामिलितः। येयं कुसुममयीमूर्त्तिर्यूनः चरणतलमधिशयाना पूर्वमभिहिता सेयं हेमचन्द्रस्य उच्छसितमिवानङ्गमञ्जरी कामपालदुहिता।

दूरादायान्तं हृदयेशमालोक्य मृणालिनीपेलवा सरला बाला वियतेवापसर्यन्ती कान्तान्तिकमागत्य तनुलतां नाथहृदये निहितवती।

( क्रमशः। )

## श्रीमद् उपेन्द्रनाथरायचतुर्धुरीणस्य

रायेरकाठी—वाखरगञ्ज।

---

## तत्त्वप्रपञ्चः।

प्राचीनास्तु वेदान्तिनो न केवलं चित्तशुद्ध्यर्थं कर्म कर्त्तव्यत्वेन प्रतिपेदिरे संशोधितचित्तानामपि ज्ञानाङ्गत्वेन कर्मकर्त्तव्यमित्युपदिशन्ति स्म। तथाच स्मृतिः—

"ज्ञानिना ज्ञानिना वापि यावद्देहस्य धारणम्।
तावद्वर्णाश्रमप्रोक्तं कर्त्तव्यं कर्ममुक्तये॥"

श्रुतिश्च—( ईशावास्ये।११। )

"विद्याञ्चाविद्याञ्च यस्तद्वेदोभयं सह।
अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते॥"

श्रुतावत्र अविद्यया यज्ञादिकर्मरूपया स्वाभाविकं कर्मज्ञानञ्च अतिक्रम्य तत्रैव विद्यया ज्ञानरूपया मोक्षं लभते इत्येवमर्थं कल्पयन्ति।

बुद्धं प्रकृतिपुरुषविवेकज्ञानात् प्रकृतिर्जड़ापुरुषस्तु चेतनः प्रकृतिस्त्रिगुणमयी पुरुषस्तु निर्गुणः, प्रकृतिः सुखदुःखमोहमयी, पुरुषस्तु अखण्डनित्यानन्दमयः, प्रकृतिर्निरन्तरं परिणमते, पुरुषस्तु अनादिकालं कूटस्थ इत्येवंरूपात् पुरुषस्य मोक्षः इति। एवं प्रकृतेःसंयोगात् पुरुषस्य बन्ध इत्यपि बुद्धम्।

अत्रेदानीमियमाशङ्का जागर्त्ति—अथ अधुनापि गुरुशास्त्रोपदेशात् जानीमः प्रकृतिः अस्मभ्यः पुरुषेभ्यः भिन्ना, बुद्धिरूपेण परिणताया एव प्रकृतेः सुखदुःखादिकः स्वर्गनरकादिकश्च बन्धः, न तु अस्माकं पुरुषाणाम्, इत्येवं, तर्हि अधुनैव न कथं अस्माकं देहाद्यभिमानिनां पुरुषाणां प्रकृतिविवेकिनां मोक्षः, जानीमश्च वयं पुरुषाः नित्यशुद्धाः नित्यबुद्धाः नित्यमुक्ताश्च नास्ति दुःखलेशोऽपि अस्माकं, दुःखादिकन्तु प्राकृतम् इत्यादि, किन्तु तथापि सन्ति मे धनपुत्रकलत्रक्षेत्राणि इत्यहं सुखी, न सन्ति मे धनपुत्रक्षेत्रकलत्राणि इत्यहं दुःखी रोगेण शीर्णं मे शरीरम् इत्यहं दुःखी, एवम् अहं स्थूलः अहं कृशः अहं गौरः अहं कृष्णश्च इत्येवं शोकाशोककारणम् अविवेक इति। सति प्रकृतिविवेके कथं नाभिमानो न निवर्त्तते अपि च—विवेकान्मुक्तिरिति प्रतिपादितं, चेदेवमस्ति घटादीनामप्यस्माकं विवेकः, तदा न कथं मुक्तिरिति? सत्यं—यावत् प्रकृत्यविवेको वर्त्तते तावत् प्रकृत्यविवेकजातबुद्ध्यादिदेहाद्यविवेकोऽपि दुष्परिहरः स्यात्। यदा पुनः प्रकृत्यविवेकोऽपगच्छति तदा प्रकृत्यविवेकादुत्पन्नो देहाद्यभिमानोऽपि तिरो भवति। यथा यावच्छरीरे अभिमानो वर्त्तते तावच्छरीरकार्य्येषु रूपादिष्वपि "अहं गौरः अहं स्थूलः" इत्येवमभिमानो भवत्येव। तन्निवृत्तौ च तन्निवृत्तिरिति तुल्ययुक्तिः तथा च विज्ञानधृतस्मृतिः।

"चित्राधारपटत्यागे त्यक्तं तत्र हि चित्रकम्।
प्रकृतेर्विरमे चैवं ध्यायिनां के स्मरादयः॥"

अतएव प्रकृत्यविवेकनाश एव बुद्ध्यादिदेहाद्यविवेको नश्यति कारणनाशे कार्य्यनाशस्य नियतत्वात् एतदेव सूत्रकारोऽप्याह—

प्रधानाविवेकादन्याविवेकस्य तद्धाने हानम् ॥ १ ॥ ५७ ॥

इति तत्त्वप्रपञ्चे दुःखादिप्रकारो नाम चतुर्थाध्यायः ॥ * ॥

---

## तत्त्वप्रपञ्चः ।

### ( प्रकीर्णः )

प्रतिपादितं दुःखम् दुःखहेतुः दुःखनिवृत्त्युपायः दुःखनिवृत्तिश्चेति चतुः समूहात्मकं सांख्यशास्त्रम्—

आध्यात्मिकमाधिभौतिकमाधिदैविकञ्च त्रिविधं दुःखम्,
प्रकृतिपुरुषसंयोगाज्जातोऽविवेको दुःखहेतुः।
प्रकृतिपुरुषविवेकसाक्षात्कारो दुःखनिवृत्त्युपायः,
दुःखत्रयाणां चिरायानुत्पादो दुःखनिवृत्तिर्मोक्ष इति ॥

अधुना तत्रेदमाशङ्क्यते—ननु यदि प्रकृतिपुरुषसंयोगजातोऽविवेक एव दुःखहेतुः, तयोर्वियोगजातेन विवेकेन तु मोक्षः, तौ च विवेकाविवेकौ अवश्यं पुरुषे एव विद्येते इत्येवं स्वीकर्त्तव्यम्। तर्हि पुरुषो "नित्यशुद्धबुद्धमुक्तस्वभाव" इत्यत्र तस्य नित्यशुद्धत्वे नित्यबुद्धत्वे नित्यमुक्तत्वे च व्याघात आपद्यते। श्रुतिः पुनः कथयति—

न विरोधी न चोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वैमुक्त इत्येषा परमार्थता ॥ इति

मैवम्। तथा विवेकाविवेकौ बुद्धेरेव धर्मौ न तु पुरुषस्य, किन्तु बुद्धिवृत्तिप्रतिविम्बपातात् पुरुषो विवेकाविवेकवानिव मन्यते। यथा शुद्धगौरोऽप्यहं सायन्तनसौरकरच्छुरितजलधररश्मिसम्बन्धाद्रक्तवर्णमात्मानं पश्यामि, यथा वा जवालौहित्यात् स्फाटिके लौहित्यम्। एतत्तु द्वयोः सान्निध्यादुपजायते। न तु तत्त्वतः, अतएव श्रुतिराह—

"स समान: सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव" इति ।

अत्र समान: उभयोर्लोकयोरेकरूप: । इवशब्दाभ्यान्तु उपाधिवशात्तस्य नानारूपत्वमुक्तमिति । तथा चोक्तम् ॥

"बन्धमोचौ सुखं दु:खं मोहापत्तिश्च मायया ।
स्वप्ने यथात्मन: ख्याति: संसृतिर्न तु वास्तवी ॥"

अत्रेदमाशङ्क्यते—अथ केयं व्यवस्था ? यथा बुद्धिगतो विवेकोऽविवेकश्च तदसम्बद्धं पुरुषं मोचयेत् बध्नीयाच्च । तथा देवदत्तो नेत्रहीनो गृहे वसतु चक्षुष्मान् विष्णुमित्र: कूपे पततु । यदि तथा विधेनापि विवेकेनाविवेकेनापि बुद्धिगतेनापराधरूपेण पुरुषो बध्यते तदा रमाया गात्रकण्डूभि: विष्णो: पृष्ठे कण्डूतिर्जायताम् अत: कथं वा तद्दु:खस्य परगतस्य निवृत्ति: पुरुषार्थ: ? । सत्यं प्रागेवैतदुक्तप्रायमपि अत्र किञ्चित् प्रपञ्च्यते । यद्यपि विवेकाविवेकौ बुद्धेरेव गुणदोषौ तथापि तत्सान्निध्यात् प्रतिबिम्बरूपाभ्यां पुरुषे गुणदोषाभ्यां विवेकाविवेकाभ्यां तस्य मुक्तिर्बन्धश्चेति सुव्यवस्थैव । अतएव अवास्तविकत्वेऽपि दु:खस्य प्रतीकार: पुरुषार्थ एव, अविवेकेन अनुरागेणेव बधूरिव बुद्धि:युवानमिव पुरुषं सुसंयोगात् बध्नाति इति स बद्ध: । एवं विवेकेन विरागेणेव वृद्धेव बुद्धि: पुराणमिव पुरुषं वियोगेन त्यजतीति स मुक्त: कथ्यते ।

साधु साधु—बन्धमोक्षादेर्यदि पुरुषे प्रतिबिम्बरूपो भ्रम: तदा भ्रमनाशिन्या श्रुत्या तद्युक्त्या च पुरुषात् बन्धमोक्षादिरपगच्छतु ; किमिति सहस्रजन्मपरम्परार्ज्जितेन विवेकेनात्मसाक्षात्कारेण ? नैवं घटते, यस्य हि पितुर्गुरोर्वचनमेकं विश्वासास्पदं संसारमोचकञ्च विषमप्यमृतमिति अमृतमपि विषमिति व्यवहर्त्तुमुद्यच्छति सोऽपि यदि वदति वत्स ! भ्रान्तिस्ते दिक्षु जाता नेयं दक्षिणा नेयञ्च पूर्वेति युक्त्युपदेशाभ्यां तदा दिङ्मूढस्य कथमपि न विश्वासोऽधिकरोति हृदयम् ।

यस्य वा पित्तदोषेण दूषितनेत्रजिह्वस्य युक्त्युपदेशमतीत्य प्रत्यक्षितमपि श्वेतं पीतायते, मधुरञ्च तिक्तायते। यदि पुनरेकपदे भ्रान्तिरपैति पित्तदोषश्चापगच्छति तदा विनाप्युपदेशं युक्तिञ्च निश्चिनोति इयं दक्षिणा इयञ्च पूर्वा दिक्, रूपञ्चेदं शुक्लमयञ्च रसो मधुर इति। (क्रमशः)

## ब्रह्मचर्य्यम्।

( पूर्वप्रकाशितात्परम्। )

अभिवादनशीलस्य नित्यं वृद्धोपसेविनः।
चत्वारि संप्रवर्द्धन्ते आयुर्विद्या यशो बलम्॥ १२१॥

121. He who haditually salutes and constantly pays reverence to the aged obtains an increase of four (things), (viz.) length of life, knowledge, fame, (and) strength.

अभिवादात् परं विप्रो ज्यायांसमभिवादयन्।
असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत्॥ १२२॥

122. After the (word of) salutation, a Brahmana who greets an elder must pronounce his name, saying, 'I am N N.

नामधेयस्य ये केचिदभिवादं न जानते।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्वास्तथैव च॥ १२३॥

123. To those (persons) who, when a name is pronounced, do not undirstand (the meaning of) the salutation, a wise man should say, 'It is I.,' and (he should address) in the same manner all women.

भोः शब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
नाम्नां स्वरूपभावो हि भो भाव ऋषिभिः स्मृतः॥ १२४॥

124. In saluting he should pronounce after his name the word bho*h*; for the sages have declared that the nature of bho*h* is the same as that of (all proper) names.

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने ।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः ॥ १२५ ॥

125. A Brahmana should thus be saluted in return, May'st thou be long-lived, O gentle one !' and the vowel 'a' must be added at the end of the name ( of the person addressed), the syllable preceding it being drawn out to the length of three moras.

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम् ।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः ॥ १२६ ॥

126. A Brahmana who does not know the form of returning a salutation, must not be saluted by a learned man ; as a Sudra, even so is he.

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम् ।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च ॥ १२७ ॥

127. Let him ask a Brahmana, on meeting him, after (his health, with the word) kusala, a Kshatriya (with the word) anamaya, a Vaisya ( with the word ) kshema, and a Sudra (with the word) anarogya.

अवाच्यो दीक्षितो नाम्ना यवीयानपि यो भवेत् ।
भो भवत् पूर्वकस्त्वेनमभिभाषेत धर्मवित् ॥ १२८ ॥

128. He who has benn initiated ( to perform a Srauta sacrifice ) must not be addressed by his name, even though he be a younger man ; he who knows the socred law must use in speaking to such (a man the particle) bhoh and ( the pro noun ) bhavat ( your worship ).

परपत्नी तु या स्त्री स्यादसम्बन्धा च योनितः ।
तां ब्रूयाद्भवतीत्येवं सुभगे भगिनीति च ॥ १२९ ॥

129. But to a female who is the wife of another man; and not a blood-relation, he must say, 'Lady' ( bhavati ) or ' Beloved sister !'

मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून्।
असावहमिति ब्रूयात् प्रत्युत्थाय यवीयसः ॥ १३० ॥

130. To his maternal and patərnal uncles, fathers-in-law officiating priests, ( and other ) venerable persons, he must say, 'I am N. N.,' and rise (to meet them), even though they be younger (than himself).

मातृष्वसा मातुलानी श्वश्रूरथ पितृष्वसा।
संपूज्या गुरुपत्नीवत् समास्ता गुरुभार्यया ॥ १३१ ॥

131. A maternal aunt, the wife of a maternal uncle, a mother-in-law and a paternal aunt must be honoured like the wife of one's teacher ; they are equal to the wife of one's teacher.

भ्रातुर्भार्योपसंग्राह्या सवर्णाहन्यहन्यपि।
विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धियोषितः ॥ १३२ ॥

132. ( The feet of the ) wife of one's brother, if she be of the same caste (var*n*a), must be clasped every day ; but (the feet of) wives of (other) paternal and maternal relatives need only be embraced on one's return from a joureney.

पितुर्भगिन्यां मातुश्च ज्यायस्यां च स्वसर्यपि।
मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी * ॥ १३३ ॥

133. Towards a sister of one's father and of one's mother and towards one's own elder sister, one must behave as towards one's mother ;( but ) the mother is more venerable than they.

---

* एकदेशमुपाध्याय ऋत्विग्यज्ञकृदुच्यते।
एते मान्या यथा पूर्वमेभ्यो माता गरीयसी ॥
याज्ञवल्क्ये आचाराध्याये ३५ ॥

दशाब्दाख्यं पौरसख्यं पञ्चाब्दाख्यं कला भृताम् ।
त्र्यब्दपूर्वं श्रोत्रियाणां स्वल्पेनापि स्वयोनिषु ॥ १३४ ॥

134. Fellow-citizens are called friends ( and equals though one be ) ten years (older than the other), men practising (the same) fine art (though one be) five years ( older than the other), Srotriyas ( though ) three years ( intervene between their ages), but blood-relations only (if the) difference of age be very small.

ब्राह्मणं दशवर्षन्तु शतवर्षन्तु भूमिपम् ।
पिता पुत्रौ विजानीयात् ब्राह्मणस्तु तयोः पिता ॥ १३५ ॥

135. Know that a Brahma*n*a of ten years and Kshatriya of a hundred years stand to each other in the relation of father and son ; but between those tow the Brahma*n*a is the father.

वित्तं बन्धुर्वयः कर्म्म विद्या भवति पञ्चमी ।
एतानि मान्यस्थानानि गरीयो यद्‌यदुत्तरम् ॥ १३६ ॥

136. Wealth, kinbred, age, ( the due performance of ) rites, and fifthly, sacred learning are titles to respect ; but each later-named (cause) is more weighty (than the preceding ones).

पञ्चानां त्रिषु वर्णेषु भूयांसि गुणवन्ति च ।
यत्र स्युः सोऽत्र मानार्हः शूद्रोऽपि दशमीं गतः ॥ १३७ ॥

137. Whatever man of the three (highest) castes possesses most of those five, both in number and degree, that man is worthy of honour among them ; and (so is) also a Sudra who has entered the tenth ( decade of his life ).

चक्रिणो दशमीस्थस्य रोगिणो भारिणस्त्रियाः।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥ १३८ ॥

138. Way must be made for a man in a carriage, for one who is above ninety years old, for one diseased, for the carrier of a burden, for a woman, for a Snataka, for the king, and for a bridegroom.

तेषान्तु समवेतानां मान्यौ स्नातकपार्थिवौ।
राजस्नातकयोश्चैव स्नातको नृपमानभाक् ॥ १३९ ॥

139. Among all those, if they meet ( at one time ), a Snataka aud the king must be ( most ) honoured ; and if the king and a Snhtaka (meet), the latter receives respect from the king.

उपनीय तु यः शिष्यं वेदमध्यापयेद्द्विजः।
सकल्पं सरहस्यञ्च तमाचार्य्यं प्रचक्षते ॥ १४० ॥

140. They call that Brahma*n*a who initiates a pupil and teaches him the Veda together with the Kalpa and the Rahasyas, the teacher (akarya, of the latter).

एकदेशन्तु वेदस्य वेदाङ्गान्यपि वा पुनः।
योऽध्यापयति वृत्त्यर्थमुपाध्यायः स उच्यते ॥ १४१ ॥

141. But he who for his livelihood teaches a portion only of the Veda, or also the Angas of the Veda, is called the sub-teacher (upadhyaya).

निषेकादीनि कर्माणि यः करोति यथाविधि।
सम्भावयति चान्नेन स विप्रो गुरुरुच्यते ॥ १४२ ॥

142. That Brahma*n*a, who performs in accordance with the rules ( of the Veda ) the rites, the Garbhadhana ( conception - rite ), and so forth, and gives food ( to the child ), is called the Guru ( the venerable one ).

श्रीश्रीदुर्गाशरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
तायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी॥

## भासावतरणिका।

व्याघ्रोऽप्यघर्घररवः परिमुद्रिताक्षः
संयम्य पुच्छ-कर-कन्धरमुर्विंतुण्डः।
अग्रस्थिताय दरवेऽप्यकृतोद्यमस्तन्
नाथः कृतागस इवार्द्दक आगतोऽसौ॥

## उद्भट-श्लोकाः।

"स्त्री रूपापि दिगम्बरी त्रिजगतां मातापि सद्यौवना,
कन्याद्रेरपि कोमला त्रिभुवनं व्याप्ताप्यदृष्टा जनैः।
साध्वी चाक्रमते स्वभर्त्तृहृदयं श्यामा जगन्मोहिनी,
चित्रं रूपमवस्थिता भवतु ते साहर्निशं सम्पदे॥ १०३॥"

"शुकाः फलविदारिणः कुसुमदूषिणः षट्पदाः
पिकाः शिरसि वासिनो जनित कोटराः शारिकाः।
तथापि भवदाश्रयोऽभवदसौ रसालद्रुमः
सहेत रसिकं (सगुणं) विना सगुणदुर्णयं (व्यगुणदुर्णयं) कोऽपरः॥ १०४॥"

"पर्य्याप्तदक्षिणस्यापि अश्वमेधस्य यत् फलम्।
तत् फलं समवाप्नोति रक्षिते शरणागते॥ १०५॥"



एकाम्रकानने ७ भुवनेश्वरमन्दिरम्।

विश्वकोषसम्पादकेन प्रदत्तम्।

# एकाम्रकाननम्।

तीर्थमेतदुत्कलदेशे परमपवित्रं व्यवतिष्ठते, तथा च स्कन्द-पुराणे उत्कलखण्डे।

"स वर्त्तते नीलगिरिर्योजनेऽत्र तृतीयके।
इदन्त्वेकाम्रकवनं चैव गौरीपतेर्विदुः॥" १२ अः।

"चतुर्दशस्थितोऽहं वै यत्र नीलमयो गिरिः।
तस्योत्तरस्यां विख्यातं वनमेकाम्रकाह्वयम्॥" १३ अः।

कपिलसंहितायान्तु तदेतन्नामकारणं निर्दिष्टम्।—

"एकाम्रश्च तत्रासीत् पुरा कल्पे तु मुक्तिदः।
तत्र एको यतस्तस्मात् तस्मादेकाम्रकं वनम्॥" ५५।
महोच्छ्रायः सुशाखी च नवविद्रुमपल्लवः।
धर्मार्थकाममोक्षाश्च यत्र वृक्षे फलानि च॥५६॥
तं वृक्षं गोपनीयञ्च चकार सुरनाशनः।
तस्य मूले महेशस्तु तन्नाम्ना ख्यातिमागतः॥" ५७॥

कपिल संहितायामस्य चतुःसीमानिर्णयः यथा—

"क्षेत्रस्य पूर्वदक्षे च पश्चिमे चोत्तरे तथा।
क्रोशेन मण्डलाकारं कुर्य्यात् क्षेत्रप्रदक्षिणम्॥
क्षेत्रमेतत् समादिष्टं चक्राकारं शुभं मुने!॥"

एकाम्रचन्द्रिकायान्तु अयं विशेषः यथा—

"खण्डाचलं समासाद्य यत्रास्ते कुण्डलेश्वरः।
आसाद्य वाराही देवी! वहिरङ्गेश्वरावधि॥"

अस्यैव नामान्तरं "शाम्भवक्षेत्रम्" यथा—उत्कलखण्डे।

"इत्थमेतत् पुरा क्षेत्रं महादेवेन निर्मितम्।
तत्र साक्षादुमाकान्तः स्थापितः परमेष्ठिना॥
तदेतच्छाम्भवं क्षेत्रं तमसो नाशनं परम्॥" १३ अः।

नानाविधे च पुराणेऽस्य क्षेत्रस्य मतभेदः समाम्नायते। शिव-पुराणे त्वेवम्।—

एकदा "पार्वती शिवमवादीत्—प्रभो ! काशीक्षेत्रसदृशीं क्व वर्त्तते पुण्यक्षेत्रमपरम् ? इति।

शिवोऽचकथत्—आराद्दक्षिणसमुद्रस्य उत्कलदेशे विन्ध्यगिरिपादनिःसृता गन्धवती नाम नदी वर्त्तते,इयमेव शाक्षाद्गङ्गा,तीरे तस्या "एकाम्रकाननं" विराजते, तत्तुकाननं नानाविधैः पादपैः कुसुमैः फलैः पल्लवैः लताभिः पक्षिभिः सरोभिः सविशेषं शोभितम्। सुरासुरैर्दुर्लभं, कोटिलिङ्गसमायुतं निभृतम्। ततः पार्वती न्यवादीत्—नाथ ! चे देवं तदा तत्र मे द्राघीयसी जिगमिषा यद्यनुमता प्रभुना इति।

शिवोऽब्रवीत्—देवि ! अधुना त्वमेकाकिनी व्रज, स्मर्य्यमाणस्त्वयाहं पश्चाद्गमिष्यामि।

ततः सिंहसमारूढ़ा गिरिजा तत्र प्रतस्थे, दृष्ट्वा च एकाम्रकाननं ननन्द, तत्र च लिङ्गं श्रीभुवनेश्वरमपूपुजत् अद्राक्षीच्च ऋदमध्यादागत्य धेनुसहस्रं लिङ्गोपरि पयः प्रस्नौति स्नपयति च इति।

एकदा तत्र गौरीरूपेणाकृष्टौ द्वावसुरौ "कीर्त्तिः" वास"श्च मनोजाभिभूतौ देव्यै स्वर्गमयाचेतां, तौ तु असुरौ विनाशयितुं सा शिवमस्मार्षीत्, उपतस्थे च स शिवः प्रमथपरिवृतः।

शिवोऽवोचत्—देवि ! दुर्मिल राजनेयौ तौ पित्राराधित देववरेण अविनश्वरौ पुरुषेणास्त्रेण च। अतस्त्वमेव तौ जहि।

अथ कदाचित् पुनरपि देवीमालोक्य तौ आलिङ्गनं चकमाते, देवी प्रवीतिस्म दाभ्यामालिङ्गनं किन्तु येनाहं स्कन्धे वोढुं शक्ये तमेव परिणेष्यामि इति मे प्रतिज्ञातं तदा तत् पूरय।

असुरावाहतुः आरोह तदावयोः शिर इति, ततः सा भुवि पातिते तयोः शिरसि आरुरोह, तौ तु गिरि कूटभारेणेवा क्रान्तौ प्राणान् मुमुचतुः।

तत्राप्यद्यापि—"तच्चिह्नो" विन्दुह्रद" इति नाम्ना वर्त्तते। ( शिवपुराणे २६ अध्याये।) ।

अत्रासंख्यानि तीर्थानि वर्त्तन्ते तेषु "विन्दु:" गन्धवती" "शङ्कर वापी" "कपिलतीर्थं" "सोमतीर्थ" मेव प्रधानम्। अन्यानिचा-संख्यातानि लिङ्गानि विराजन्ति ।

तत्र हि भुवनेश्वरमन्दिरमेव प्रधानं दृश्यम्। मन्दिरमेतत् उच्चैः १०० हस्तः। मन्दिरस्यास्य शिल्पनैपुण्यमालोक्य सर्वं एव स्तम्भी भवन्ति। असामान्यशिल्पनैपुण्येन आर्य्यशिल्पाः मन्दिर मेतत् निर्म्मिमिरे।

श्रीक्षेत्रस्य "मादला पञ्जीमते" उत्कलराजेन ययातिकेशरिणा* ३८६ शकाब्दे विश्वविश्रुतं मन्दिरमेत निर्म्मापयामासे।

अहो निर्जनारण्ये इत्यङ्कारमेव निर्म्मितं मन्दिरं तत् दर्शना देव पाषण्डानामपि भक्तिरुद्रिणक्ति। अहो पुण्यशलिलो विन्दु-ह्रदः कथमिव मृदु मृदु परितो मन्दिरमेतत् प्रवहति, नावमारुह्य ह्रदे मन्दिरालोकनात् संव्याप्नोति देहमानन्दरसो घनीभूतः।

अहो अत्रागतवतां विस्मितानामेतदवलोकयतां पुनर्न्न मनः प्रसरति पुत्रकलत्रजुष्टं गृहं प्रवेष्टुमिति, आगमनादेवात्र शोकः पलायते, रागोऽभिभूयते, विषयज्वाला च विस्मर्य्यते। यथैवात्र शान्तिदेवी चिराय गृहीततनुर्विराजते। भुवनेश्वरे अपराण्यपि देवमन्दिराणि प्रस्तरनिर्मितानि सुवृहन्ति देदीप्यन्ते। तेषु रामेश्वरमन्दिरम् उच्चैः (५२ हस्तः) यमेश्वरस्य मन्दिरं (४४ हस्तः) राजमहिष्याः (४२ हस्तः) अनन्तवासुदेवस्य (४० हस्तः)

---

* मादलापञ्जीमते राज्ञो युधिष्ठिरात् २३ विंशः ययातिकेशरी। २६ विंशः पुरुषस्तु अलावुकेशरी इति।

भगवत्याः ( ३६ हस्तः ) नागेश्वरस्य ( ३५ हस्तः ) सिद्धेश्वरस्य ( ३१ हस्तः) कपिलेश्वरस्य (३० हस्तः) केदारेश्वरस्य ( ३० हस्तः ) परशुरामेश्वरस्य ( २५ हस्तः ) युक्तेश्वरस्य ( २५ हस्तः ) कोपारेश ( २५ हस्तः ) एवं सोमेश्वरस्य ( २२ हस्त उच्छ्रायः )।

भुवनेश्वरस्य नाट्यशाला च ययातिकेशरिणो वंशधरेण शालिनी केशरिणा निर्म्मिता। भोगमण्डपस्तु ७८२—८११ खृष्टाब्दमध्ये "कमल केशरिणा" रचितः।

श्रीक्षेत्रस्य पञ्जीमते तु नाट्यशाला ययातिकेशरिणा निर्म्मातुमारब्धा एवं ५५८ शकाब्दे अलावुकेशरिणा तु समाप्तिनीता।

एकाम्रचन्द्रिकायान्तु एवं लिखितमस्ति—यत् भुवनेश्वरमन्दिरं विन्दुसरश्च महादेव एव निर्म्ममे इति, तस्य अलावूमयस्य भिक्षापात्रस्य जलेन जातत्वादस्य तीर्थस्य नाम "अलावुतीर्थं" मित्यपि कथ्यते। यथा—

"अस्मिन् क्षेत्रवने रम्ये भैक्षपात्रस्य नामतः।
कुण्डञ्च उदकाधारं तिर्थीभूतं भविष्यति ॥
अलावुतीर्थं विख्यातं तत् प्रसादादिवास्तु मे।
भूतानां हितमत्यर्थं प्रसादं कर्त्तुमर्हसि ॥
एवमस्त्विति देवेशस्तामलावूं द्विजेरिताम्।
स्पर्शयामास हस्तेनामवद्दिव्यो महाह्रदः ॥
भूयः प्राह हरस्तुष्ट एव मे निर्मितः स्वयम्।
यत्राभवन्मुनि श्रेष्ठ ! परिपूर्णश्च पावनः ॥
अलावूतीर्थं तल्लोके विख्यातं जनपावनम्।
अष्टायतनमध्येऽदो गतिमिष्टां प्रदायकम् ॥"

मादलापञ्जीमते प्रसिद्धमलावूकेश्वरमन्दिरं ५८८ शके अलावुकेशरी पार्थिवेन्द्रः अगणितं धनं व्ययित्वा निर्म्मापयामास। द्राघिम्नि मन्दिरमेतत् प्रायः (५३६ हस्तपरिमितम् )।

तत्र बहुषु तीर्थेषु सरःसु च "विन्दुसागरः" "पापनाशिनी" "गङ्गायमुना" "कोटितीर्थं" "ब्रह्मकुण्ड" "मेघकुण्ड" "अलावुकुण्ड" "कपिलह्रदश्च" प्रधानम्॥ इति शिवम्॥

---

# चित्तहरम्

वा

( चितोर )

( पूर्वप्रकाशितात् परम् )

कीर्त्तिस्तम्भपार्श्वयोः प्रोषमासि मुद्रितानां श्लोकानामिदानीमर्थो विधीयते आलोच्यं न सदसद्विचारणीयम्। तथाहि।

सप्ताधिकपञ्चदशशततवर्षे (१५०७) व्यतीते श्रीमान् कुम्भकर्णो नरपतिः कार्त्तिकमासि शुक्लत्रयोदश्यां तिथौ सुन्दरे चित्रकूटे (१) प्रोन्नततोरणान्वितां शीर्षप्रभया भ्राजमाणां वानरमुखशोभिशिखरदेशां रथ्यां निर्म्मितवान्॥ १८४॥ (२)

विक्रमादित्यात् पञ्चदशाधिकपञ्चदशशततवर्षे व्यतीते (१५१५) चैत्रकृष्णत्रयोदश्यां राज्ञा "कुम्भमेरुः" निर्मितः॥ १८५॥

पञ्चाधिकपञ्चदशशततवर्षे (१५०५) व्यतीते नरपतिः सः माघमासि शुक्लदशम्यां गुरुवारे पुष्यानक्षत्रे, चित्रकूटे (चित्तहरे नगरे) समुत्कीर्णाभिः नानादेवताभिः सुमेरोरपि शोभापहारकं कीर्त्तिस्तम्भमकारयत्॥ १८६॥

नवाधिकपञ्चदशशततवर्षे (१५०९) समतीते माघमासे पूर्णि-

---

(१) चित्राख्याम् आश्चर्याणां कूटो यस्मिन् चित्रकूटे, चित्तहरे, "चितोर" इति यावत्। (२) कश्चिदिशिखा आतुरङ्गहमित्यर्थयति, तदर्थं शब्दोऽयं कोषकारैरपेक्षितः।

मायां सुप्राचीरावृतं देवमन्दिरोपेतं बह्वुद्यानशोभितं सुदृढ़ं दुर्गं व्यरचयत् ॥ १८७ ॥

एतेन पूर्वापरपर्य्यालोचनया सम्प्रतीयते १५०५ संवति कीर्त्तिस्तम्भो निर्म्मितः, ततो द्विवर्षात् परं १५०७ संवति अतिसुखसञ्चरणाय प्रशस्तं राजवर्त्म निर्मितम् (*) १५०८ संवति अचलवत् दुर्भेद्यं दुर्गं निर्मितम्। एवं १५१५ संवति तु कुम्भराणा "कुम्भमेरुः" नाम क्रीड़ापर्वतं निर्मितवान्।

उक्तप्रमाणादेतदेव निश्चितं यत् १५०५ संवति कीर्त्तिस्तम्भो निर्मितः। किन्तु महात्मा "टड्साहेबकः" पुनः १५०५ संवति "कुम्भ" नामक-देवमन्दिरनिर्माणवृत्तान्तमेव कथितवान्। परन्तु कीर्त्तिस्तम्भगात्रे समुत्कीर्णशिलाफलके १८५ श्लोके १५१५ संवति कुम्भमेरुनिर्माणवार्त्तैव लभ्यते।

विख्यात "टड्" साहेबमते कीर्त्तिस्तम्भ एष दिल्लीनगर्याः "कुतवमिना" नामकस्तम्भादुत्कृष्टतर इति। किन्तु "क्यानिंहाम" साहेबकः कथयति कुतवमिनास्तम्भस्य यशसि नायं स्तम्भः कथमपि तुलामिति, अस्यचितोरजयस्तम्भस्यापादमस्तकं यावत् सुसूक्ष्मेण भास्करकार्य्येण परिपूर्णत्वात् सौन्दर्य्यं व्याहतं, अन्तरान्तरा यदि अकृतशिल्पं प्रस्तरमस्थास्यत् तदा अधिकतरं सौन्दर्य्यमवर्द्धिष्यत इति। अत्रारोहणे अति प्रशस्ता सोपानमाला, द्वाराणि तु क्षुद्राणीति।

एव मपरेऽपि कीर्त्तिस्तम्भाः पिपतिषन्ति भग्नग्रीवाः स्खलित प्रावृतयः प्ररूढ़शष्पतरवश्च इत्यलम् ॥ शिवमस्तु ॥

---

* कीर्त्तिस्तम्भशिलालिपेर्बङ्गलायाः तत्तच्छ्लोकानां पाठं नानुसन्धाय एव पूर्ववर्त्ती ऐतिहासिकः भ्रान्तिं गतः। कीर्त्तिस्तम्भशिलाफलके कुम्भकर्णस्य राज्ञः पूर्वेषामपि पुरुषाणां कीर्त्तयो विवृताः। तास्तु समुद्धर्त्तुं नावसरः।

# कुमारबन्धुः ।

( काव्यतीर्थपरीक्षार्थिनाम् )

दशकुमाराणां वंशावली ।




* तस्मिन्नेवकाले सुमति-सुमन्त्र-सुमित्र-सुश्रुतानां नन्दनाः प्रमति-मित्रगुप्त-मन्त्रगुप्त विश्रुताख्या महदभिख्याः सूनवः । इति पुस्तकस्थ पाठेन क्रमपाठात् सुमन्त्रस्य सुमित्रः पुत्रः सुमित्रस्य सुमन्त्रः पुत्रः इत्येव सगच्छते । अपि तु सुमतेः प्रमतिः सुश्रुतस्य विश्रुतः—

कुमाराणां स्त्री वंशपरिचयः

| कुमारः | स्त्री | पिता | माता | राज्यं |
|---|---|---|---|---|
| सोमदत्तः | वामलोचना | वीरकेतुः | ० | पाटली |
| पुष्पोद्भवः | बालचन्द्रिका | वणिक् | ० | उज्जयिनी |
| राजवाहनः | अवन्तिसुन्दरी | मानसारः | ० | मालवः |
| अपहारवर्म्मा | अम्बालिका | सिंहवर्म्मा | ० | अङ्गः |
| उपहारवर्म्मा | कल्पसुन्दरी | कलिङ्गवर्म्मा | मानवती | कामरूपं |
| अर्थपालः | मणिकर्णिका | चण्डघोषः | आचारवती, | काशीपुरी |
| प्रमतिः | नवमालिका | धर्म्मवर्द्धनः | ० | श्रावस्ती |
| मित्रगुप्तः | कन्दुकावती | तुङ्गधन्वा | मेदिनी | सुह्मः |
| मन्त्रगुप्तः | कनकलेखा | कर्द्दनः | ० | कलिङ्गः |
| विश्रुतः | मञ्जुवादिनी | अनन्तकीर्त्तिः, | वसुन्धरा | विदर्भः |

अन्यद्भुतानां जनानां नामानि संक्षिप्तपरिचयाश्च।

राजहंसः—पुष्पपुरीश्वरः।

वसुमती—राजहंसपत्नी।

धर्म्मपालः—राजहंसस्य मन्त्री।

पद्मोद्भवः, सितवर्म्मा } राजहंसस्य द्वौ मन्त्रिणौ।

सुमतिः—मृते पितरि सितवर्म्मणि तत्पदमधिष्ठितवान्।

सत्यवर्म्मा—जीविते पितरि सितवर्म्मणि पूर्वं विरक्तोऽपि पश्चात् ब्राह्मणस्य कस्यचित् द्वे कन्ये काली गौरी क्रमेण उदुवाह।

सुमन्त्रः, सुमित्रः } द्वौ भ्रातरौ मृते पितरि धर्म्मपाले तदासनमधिष्ठितवन्तौ।

कामपालः—जीविते पितरि

---

प्रहारवर्म्मणोऽपहारवर्म्मा उपहारवर्म्मा च कामपालस्य अर्थपालः, रत्नोद्भवस्य पुष्पोद्भव इत्येव नामवर्णसादृश्यदर्शनात् सुमन्त्रस्य मन्त्रगुप्तः सुमित्रस्य मित्रगुप्तः पुत्र इत्येव सङ्गच्छते अतोऽधिकं सुधीभिर्भाव्यम्।

धर्मपाले काममत्तः सन् गृहं त्यक्त्वा काशीश्वरस्य चण्डसिंहस्य कन्यां कान्तिमतीमुपयेमे ।

सुश्रुतः—मृते पितरि पद्मोद्भवे तत्पदमधिचक्रे ।

रत्नोद्भवः—पितरि पद्मोद्भवे जीविते सति वाणिज्यव्यापारेण कालयवनद्वीपवासिनः कालगुप्तस्य कन्यां सुवृत्तामुपयेमे,

मानसारः—मालवाधीशः कदाचित् युद्धे विजित्य राजहंसं सपरिवारवर्गं राज्यात् विताड़ितवान् । अस्य कन्याम् अवन्तिसुन्दरीं राजवाहनोव्युवाह ।

वामदेवः—भविष्यद्वक्ता महातापसः मानसारपराजयाय यज्ञं चिकीर्षुं राजहंसं गर्भस्थितस्य पुत्रस्य वृत्तान्तमुक्त्वा ततो न्यवर्त्तयत् ।

राजवाहनः—राजहंसस्य पुत्रः *

प्रमतिः—सुमतेः पुत्रः ।

मित्रगुप्तः—सुमित्रस्य पुत्रः ।

मन्त्रगुप्तः—सुमन्त्रस्य पुत्रः ।

विश्रुतः—सुश्रुतस्य पुत्रः ।

तापसः—दासीमुखात् श्रुतप्रहारवर्म्मवृत्तान्तः शवरैरनेकधा हन्यमानम् स्वपुत्रकल्पनया परिरक्षितं प्रहारवर्म्मसुतमुपहारवर्म्माणं राज्ञे राजहंसाय दत्तवान् ।

दासी—उपहारवर्म्मणः पालयित्री

प्रहारवर्म्मा—मिथिलेश्वरः, मित्रस्य राजहंसस्य प्रियाया वसुमत्याः सीमन्तोत्सवे गत्वा मानसारभयात् पलायितः पथि शवरैराक्रान्तस्ततः पलायितः स्वाधिकारं गत्वा भ्रातुः पुत्रैः सस्त्रीको निबद्धः । कालेन उपहारवर्म्मणा प्रमुक्तश्च ।

उपारवर्म्मा—प्रहारवर्मणः पुत्रः, शिवस्यांशजः ।

शवरी—स्वनाथेनापहृतस्य अर्भकस्यापहारवर्मणः पालयित्री ; धनविनिमयेन च तं तस्मै राजहंसाय दत्तवती ।

अपहारवर्म्मा—प्रहारवर्मणः पुत्रः, शवरैरपहृतः ।

सोमदेवः—वामदेवस्यान्तेवासी

* कुमाराणां परिचयस्तेषां चरितेषु द्रष्टव्यः ।

कयाचित् दास्या सयत्नलालितं वानरगजसिंहवदनादपि अविनष्टं रत्नोद्भवपुत्रं पुष्पोद्भवं राजहंसाय दत्तवान्।

कालगुप्तः—कालयवनद्वीपवासी रत्नोद्भवस्य श्वशुरः।

सुवृत्ता—काल यवनद्वीपवासिनः कालगुप्तस्य कन्या, रत्नोद्भवस्य सहधर्म्मिणी, पुष्पोद्भवस्य जननी।

दासी—सुवृत्तायाः परिचर्य्यार्थमागता धात्री। यानभग्नेन निपतितां सुवृत्तां ररक्ष। पुष्पोद्भवस्य रक्षयित्री च।

पुष्पोद्भवः—रत्नोद्भवपुत्रः।

मणिभद्रः—कामपालस्य श्वशुरः यक्षः, तारावलीपिता।

तारावली—कामपालस्य सहधर्म्मिणी अर्थपालस्य जननी अस्याः परजन्मान्तरं—

| | | |
|---|---|---|
| वसुमती (वन्धुमती) वेदीमती च हंसावल्यपि नन्दिनी च | } | स्वामी शौनकः |

| | | |
|---|---|---|
| विनयवती आर्य्यदासी शूरसेना वङ्गपताका च | } | स्वामी शूद्रकः |

| | | |
|---|---|---|
| कान्तिमती सोमदेवी सुलोचना इन्द्रसेना च | } | स्वामी कामपाल |

अर्थपालं वसुमत्यै पालनाय ददौ तारावली।

अर्थपालः—कामपाल-पुत्रः।

ब्राह्मणः—अग्रहारवासी, सत्यवर्म्मणः श्वशुरः, काली—गौर्य्योः पिता।

काली—सत्यवर्म्मणः प्रथमा पत्नी-हिंसया स्वपत्नीपुत्रं दास्या-सह नद्यां निःक्षिप्तवती।

गौरी—सत्यवर्म्मणो द्वितीया पत्नी सोमदत्तस्य गर्भधारिणी। काल्याः कनिष्ठाभगिनी सपत्नी च।

दासी—अनया सह सोमदत्तो निःक्षिप्तो नद्यां काल्या विमात्रा। सोमदत्तस्य रक्षयित्री सर्पाघातेन मृता सोमदेवाय दत्तवती सोमदत्तम्।

सोमदत्तः—सत्यवर्म्मणः पुत्रः।

मातङ्गः—पुलिन्द ब्राह्मणः किराताचारी। ब्राह्मणस्य प्राणरक्षकः। शिवादेशेन राजवाहन-साहाय्येन पातालाधीश्वरत्वं प्राप्तवान्। पाताले शकन्यकां कालिन्दीमुपयेमे।

ब्राह्मणः—किरातलाञ्छितः.मातङ्गेन रक्षितश्च मातङ्गमन्त्रगुरुः।

यमकिङ्करगुप्तौ—मातङ्गजीवनदातारौ।

कालिन्दी—पातालेश्वरकन्या मातङ्ग स्त्री राजवाहनाय क्षुत्-पिपासादि-क्लेशहरं मणिं ददौ।

मत्तकालः—लाटेश्वरः वीरकेतुकन्यापहारी। सोमदत्तेन पराजितः राज्यात् विताड़ितश्च वीरकेतुः—पाटलीश्वरः सोमदत्तश्वशुरः। वामलोचनायाः पिता। मत्तकालेनाक्रान्तः सोमदत्तेन रक्षितः।

वामलोचना—सोमदत्तपत्नी वीरकेतुकन्या। मत्तकालेनापहृता सोमदत्तेन रक्षिता। च।

मानपालः—वीरकेतु मन्त्री वामलोचनाया अपहृताया रक्षार्थं नियुक्तो राज्ञा वीरकेतुना।

चन्द्रपालः—वणिक्कटक पतिः। बन्धुपाल पुत्त्रः पुष्पोद्भव बन्धुः।

बन्धुपालः चन्द्रपाल-पिता, उज्जयिनीवासी वणिक्। रत्नोद्भवं सुवृत्ताञ्च ररक्ष। स्वालये। अयमेव शाकुनिकविद्यावलेन राजवाहनदर्शनसमयं कथयामास।

वालचन्द्रिका—वणिक्कन्या पुष्पोद्भवपत्नी। अवन्ति सुन्दरीसखी।

दर्पसारः—मानसार-नन्दनः। यदा राजराज पर्वते तपश्चचार तदा स्वराज्यभारं चण्ड वर्म्मणे दत्तवान्। अयमेव राजवाहनं हन्तुं अवन्तिसुन्दरीं कारागारे च निक्षेप्तुमादिष्टवान् चन्द्रवर्म्माणम्, अयमेव अवन्तिसुन्दरी सहोदरः उज्जयिनीराजः।

चण्डवर्म्मा—दर्पसारस्य पितृव्य-

स्रीयो भ्राता। गते तपसे दर्पसारेऽयमेव राज्याधीशोऽभूत्। चम्पायाम् अपहारवर्म्मणा च हतः।

दारुवर्म्मा—दर्पसारस्य पितृष्वस्रीयभ्राता। वालचन्द्रिकाकामुको भूताविशच्छलेन पुष्पोद्भवेन हतः।

अवन्तिसुन्दरी—मानसारनन्दिनी राजवाहनधर्म्मपत्नी दर्पसार भगिनी।

यज्ञवती—अवन्तिसुन्दर्य्या जन्मान्तरीणं नाम, शाम्बस्य पत्नी,

शाम्बः—राजवाहनस्य जन्मान्तरीणं नाम। कश्चिद्राजा।

विद्येश्वरः—कश्चित् ऐन्द्रजालिकब्राह्मणः। अस्य इन्द्रजालबलेन अवन्तिसुन्दरीमुपयेमे राजवाहनोऽन्तःपुरञ्च गतवान्।

सिंहवर्म्मा—चम्पेश्वरः। अम्बालिकाजनकः अपहारवर्म्मणः श्वशुरः। अस्यैव कन्यामभिलष्यापि अकृतकृत्यः चण्डवर्म्मा आक्रान्तवान् तद्राज्यम्। अनेन सह पूर्वबन्धुत्वं संस्मृत्यान्ये कुमारा राजवाहनं विना साहाय्यार्थमागताः। विच्छेदात् परं तत्रैव तेषां प्रथमं कुमाराणां परस्परालापोऽभूत्।

अम्बालिका—सिंहवर्म्मणो दुहिता अपहारवर्म्मणः पत्नी। इममेव संप्रार्थ्य चम्पामागत्य चण्डवर्म्मा हतः अपहारवर्म्मणा।

एनजङ्घः—चण्डवर्म्मणो दूतः। दर्पसारस्य आज्ञावहः। राजवाहनबधवार्त्तावाही।

कीर्त्तिसारः—कारावद्धो दर्पसारस्य कनिष्ठभ्राता।

चण्डपोतः—मातङ्गपतिः राजवाहनस्य हननार्थमभिप्रेतश्चण्डवर्म्मणा।

सुरत-मञ्जरी—चन्द्ररश्मिसम्भवा सुरसुन्दरी राजवाहनस्य पदस्पृङ्खला भूता। मारीचशापेन रौप्यत्वं प्राप्ता।

वेगवान्—ऐक्ष्वाकराजः। वीरेश्वरस्य पितामहः।

मानसवेगः—वीरेश्वरपिता ।

वीरेश्वरः—पितृश्वशुं नरवाहन-दत्तं पराजित्य अवन्ति-सुन्दरीं-प्राप्तुकामः । अनेन शृङ्खलीभूतया सुरतमञ्जर्या-निबद्धोऽवन्तिसुन्दरी पार्श्व-शायी राजवाहनः ।

नरवाहनदत्तः—विद्याधरेश्वरः वीरेश्वरस्य पितृश्वशुः ।

मारीचः—सुरतमञ्जरीं शशाप व्यभिचारसन्ततः ।

धनमित्रः—अपहार—वर्म्मणो बन्धुः । अविरतदानेन धनहीनः सञ्जातः । कुल-पालितायाः स्वामी । कुवेर दत्तस्य जामाता ।

मारीचः—तापसः—काम मञ्ज-र्यां विविधछलेन स्वधर्मात् च्यावितः । अपहार वर्म्मणा पुनः सधर्म्मे निवेशितश्च ।

काममञ्जरी—गणिका अनया ऋषिः मरीचिः स्वधर्म्मात् च्यावितः । वसुपालितश्च निर्द्धनीभूतः । चर्म्मभस्त्रिका छलेनापहारवर्म्मणा विशे-षेण हृतसर्वस्वा जाता ।

माधवसेना—काममञ्जरीराग मञ्जर्योः जननी ।

निधिपालितः—वसुपालित पिता । धनीवणिक् ।

वसुपालितः—निधि पालितस्य पुत्रः । काममञ्जर्या हृत सर्वस्वः । दैन्यात् क्षपणक वेशधारी ।

विरूपकः—वैरूप्याद्वसुपालितस्य नामान्तरम् ।

सुन्दरकः—चम्पावासी वणिक् । रूपधनाभ्यां वसुपालितस्य प्रतिपक्षः ।

विमर्द्दकः—पाशक्रीड़ासभाध्य-क्षः । अपहारवर्म्मणःपर-ममित्रम् । राजवाहन-स्यान्वेषणार्थम् उज्जयिनीं गतः ।

कुवेरदत्तः—वैश्यपतिः, कुल-पालितायाः पिता । धन-मित्रस्य श्वशुरः ।

कुलपालिता—कुवेरदत्तकन्या धनमित्रपत्नी ।

उदारकः औदार्य्याद् धनमित्रस्य नामान्तरम् ।

अर्थपति:—धनी वणिक्। कुबेर दत्तोऽमुष्मै स्वकन्यां दातु-मिच्छुः कुलपालिता पित्रा पूर्वनिर्द्दिष्टं धनमित्र-मभिलषितवती। अपहार वर्म्मणा विविधच्छलेन कारा-गारे निबद्धो धनहीनश्च जात:।

वसुमित्र:—धनमित्रपिता। राग-मञ्जरी-गणिका अपहार-वर्म्मण: प्रेयसी।

धर्म्मरक्षिता—शाक्यभिक्षुकी का-ममञ्जरीदूती। अपहार वर्म्मणा कार्य्यसिद्धैर धनेन वशीकृता।

लोभमञ्जरी—काममञ्जर्य्या ना-मान्तरम्।

शृगालिका—रागमञ्जर्य्या धात्री।

कान्तक:—काराध्यक्ष:। अप-हारवर्म्मणा हतश्च।

माङ्गलिकी—अम्बालिकाया धात्री

प्रियंवदा—प्रहारवर्म्मण: स्त्री सख्या वसुमत्या: सीमन्तो-त्सवे गत्वा मानसारभयात् पलायिता पथि पुत्री जहार। उपहारापहारवर्म्मणोर्ज्ज-ननी।

संहारवर्म्मा—प्रहारवर्म्मणो ज्येष्ठ भ्राता।

विकटवर्म्मा—संहारवर्म्मण: पुत्र: गते वसुमत्या: सीमन्तोत्सवे प्रहारवर्म्मणि तद्राज्यम् अराजकतया अधिकृतवान्, अनेन कारागारे निबद्ध: प्रहारवर्म्मा। यश्छलेनापहार वर्म्मणा हत:। हरस्यांशज:।

कल्पसुन्दरी—गणेश शापतश्नायाः गङ्गाया: रूपान्तरम्। क-लिन्द वर्म्मण: कन्या। प्रथमं विकटवर्म्मण: पत्नी आसीत्। तत उपहारवर्म्मण: पत्नी सञ्जाता।

पुष्परिका—कल्पसुन्दर्य्या धात्री। प्रथममपहारवर्म्मण:रक्षयित्री आसीत्। असुस्या: क्रोड़ात् जहारोपहारवर्म्मानं शवर:।

कलिन्दवर्म्मा—कल्पसुन्दर्य्या: पिता।

मानवती—कल्पसुन्दर्य्या जननी।

रमयन्तिका—विकटवर्म्मण: नर्त्तकी

(क्रमश:)

वैद्यवल्लभान्वयजेन श्रीमता दुर्गानारायण सेन गुप्तेन प्रणीत:।

# आत्मनिवेदनम् ।

यतो निवृत्ता मनसा च वाणी पुराणवादा अपि यत्र मूकाः ।
श्रुतिश्च साङ्गा न विभर्त्ति बुद्धिस्तं स्वप्रकाशं पुरुषं नमामि ॥ १ ॥
संसारपाथोधिममुं दुरन्तं शक्नोति सन्तारयितुं न कोऽपि ।
ऋते भवेशात् भवकर्णधारात् पुनः पुनस्तं स्मर सानुरागम् ॥ २ ॥
रे चित्त ! तस्याखिललोकभर्त्तुः पादं शरण्यं शरणं निधेहि ।
जगत्प्रभोस्तत्र कटाक्षदृष्ट्या पलायते दूरमहो विपाकः ॥ ३ ॥
विश्वैकबीजस्य न शत्रुरत्र मित्रं न वा शान्तसमानदृष्टेः ।
तस्मै गतं यस्य निजस्वरूपं सोऽस्य प्रियोऽजायत एव नित्यम् ॥ ४ ॥
आवर्त्तगर्त्ते भवसागरस्य पतस्यधस्तात् क्रमशोऽविवेकिन् ! ।
तथापि सर्वज्ञममुं महेशं स्मर्त्तुं क्षणं किं न मनः ! प्रवृत्तम् ॥ ५ ॥
"जातस्य मृत्युर्न विलङ्घनीयः" एतद्वचोऽपि स्मरसि क्षणं किम् ? ।
किमौषधं मानस ! संगृहीतं कराल-कालाक्षयरोगहन्तृ ? ६ ॥
माया पिशाची तव गम्य-वर्त्मभ्रान्तिं सदोत्पादयितुं प्रवृत्ता ।
समाहितं सत् निजगम्य मार्गं समीक्ष्य रे चित्त ! चिरं प्रयाहि ॥७॥
रम्यावभासा विषवल्लरीव माया समाकर्षति नित्यमेव ।
रक्तं जनं किन्तु न सा कदापि कस्मैचिदानन्दमहो ददाति ॥ ८ ॥
तुच्छार्थ-चिन्ताशिखिनो ज्वलन्तः मुख्यार्थचिन्ता कुसुमं दहन्ति ।
अद्याप्यसद्वर्त्मनि वर्त्तमान ! श्रेयस्करं सत्पथमागृहाण ॥ ९ ॥
स्रोतांसि रे चित्त ! यथा तृणानि नयन्ति दूरं स्खलमालघूनि ।
संसारचिन्ता सबलं तथा त्वां ; निजप्रभुः सत्वरमेधि तिष्ठ ॥ १० ॥
आपाततुच्छार्थसुखाय नित्यमनन्तयत्नं भजतस्तवापि ।
समन्तिकानन्तरदुःखराशिरुच्चैः स्थिरश्चित्त ! यथा सुमेरुः ॥ ११ ॥
संसारकौटल्यमवाप्यमूढ़ ! बहून् प्रयत्नान् सततं दधानम् ।
अभ्येतुमालम्बनहीनमार्गं गृह्णासि पाथेयलवं किमल्पम् ? ॥ १२ ॥

औदास्यमेतद्विषयेषु नित्यं दोलायमानस्थिरभाव चित्त ! ।
गृहाण, संसारसमुद्रवीचिः सन्तारयन्तञ्च भजेश्वरन्तम् ॥ १३ ॥
अश्नासि यत् जिघ्रसि यत् सुखेन शृणोषि यत् पश्यसि यत् सदैव ।
न तेषु वाह्येषु च किञ्चनापि प्रमत्त रे चित्त ! तवानुयायि ॥ १४ ॥
रे मूढ़ ! यद्गर्भभरेण नित्यं विश्वं परं पश्यसि तुच्छदृष्ट्या ।
देहोऽपि स त्वत्सुकृताकृताभ्यां ग्रहीष्यते वा शिखिभिः शिवाभिः॥१५
पूर्वाणि जन्मानि विचिन्त्य चित्त ! श्रेयस्करं यत्, तदलं विधे हि ।
स्वकर्म्मणाहं परिचिन्तयामि श्वत्वं शृगालत्वमथाभिलषन्ये ॥ १६ ॥
दिनान्यनेकान्यभिलष्य चित्त ! समत्यजः प्रेतनृपस्य राज्यम् ।
स्थानादितस्तत्र पुनर्गमिष्यत् प्रदाय किं तोषयितासि तं त्वम् ?॥१७
उत्पत्ति-संहारजदुःखकाले यां यां प्रतिज्ञामकरोः समुच्चैः ।
परापकारिष्वनुरक्त चित्त ! समस्मरः किं ननु तां मुहूर्त्तम् ? ॥ १८ ॥
विश्वस्य कार्य्याय निजं नियुज्य मनोऽतिरिक्तं सुखमालभस्व ।
पापानुबन्धिन्यहितेऽपकार्य्ये औदास्यभागेधि मनश्चिराय ॥ १९ ॥
या वासना दुःखसहस्रहेतुराशक्त्यविद्या अपि पातयेत ।
अनर्थसंघान्, हतचित्त ! तान्तां समूलमुन्मूलयितुं यतस्व ॥ २० ॥
सत्यप्रियत्वं करुणां क्षमाञ्च भजस्व सारल्यमलं तितिक्षाम् ।
यद्भूषण-ज्योतिरपान्धकारा स्वर्गायते साधु वसुन्धरापि ॥ २१ ॥
स्तवेन निन्दावचसा च तोषं रोषञ्च नो वाप्नुहि, मङ्गलाय ।
गन्तव्यमार्गं परिवीक्ष्य चित्त ! हरिं परेशं स्मर विश्वसारम् ॥ २२ ॥
अयुक्तकार्य्याश्रयणं जिगीषां कामं प्रकोपं प्रमदञ्च चित्त ! ।
परित्यजेर्निर्दयदुष्टसङ्गमगर्ह्य-गर्हाकथनं विषादम् ॥ २३ ॥
गुरूपदेशं सततं भजेथाः धर्म्याणि शास्त्राणि पठेश्च चित्त ! ।
पवित्रसंसर्गमवाप्नुयास्त्वं वसेः पवित्रे विजने प्रदेशे ॥ २४ ॥
स्वप्नावसाने गमने सुषुप्तौ स्वप्ने रजन्यां दिवसे क्षणेऽपि ।
अन्तं दिनं भोगगृहं कृतान्तं तीव्रं स्मरेः पापज-यातनाञ्च ॥ २५ ॥

सर्वास्ववस्थासु सुखेषु चेतो ! रोगेषु शोकेषु च तद्विपत्सु।
विचिन्त्य विश्वेश-पवित्र-चित्र-ज्योतिः क्षिपेस्तत्र च कर्म्मजातम् ॥२६॥
श्रीविष्णुनामस्मरणासिना त्वं संसारलिप्सा-दृढ़शाखिमूलम्।
छित्वा पवित्राश्रममाविविश्य चिराय तच्छान्तिसुखं लभेथाः ॥ २७ ॥
दुःखैककारणमिमं सततान्तरायं संसारमाशु परिहृत्य वनं श्रयन् सत्।
कल्याणमूलममलं जगदेकहेतुं भक्त्या स्मरेः स्थिति-हृति-प्रभवैक-बीजम् ॥ २८ ॥

श्रीअन्नदाचरणतर्कचूड़ामणिप्रणीते
आत्मनिवेदने उपदेशो नाम
प्रथमः सर्गः ॥

(क्रमशः)

अन्नदाचरणतर्कचूड़ामणिः—
नोयाखाली पूर्वसोमपाड़ा।

---

## तत्त्वप्रपञ्चः।

(पूर्वप्रकाशितात्परम्)

एवं विवेकेनात्मसाक्षात्कारे सति विनापि युक्त्युपदेशं स्वतएव बोधात्मा पुरुषः निश्चिनोति "अहं नित्यशुद्धो नित्यबुद्धो नित्यमुक्तः स्वप्रकाशः स्वानन्दश्च" इति। सूत्रकारोऽप्येतदेवाह—

"युक्तितोऽपि न बाध्यते दिङ्मूढवदपरोक्षादृते ॥
तथा च अष्टावक्रसंहितायाम्।
"अहो निरञ्जनः शान्तः बोधोऽहं प्रकृतेः परः।
एतावन्तमहङ्कालं मोहेनैव विडम्बितः॥" २। १॥
"यथा प्रकाशयाम्येको देहमेनं तथा जगत्।
अतो मम जगत्सर्वमथवा न च किञ्चन॥" २। २।

"अहो विकल्पितं विश्वमज्ञानान्मयिभासते।
रूप्यं शुक्तौ फणी रज्जौ वारि सूर्य्यकरे यथा॥" २। ८॥
"अहो अहं नमो मह्य" मेकोऽहं देहवानपि।
क्वचिन्नगन्ता नागन्ता व्याप्य विश्वमवस्थितः॥" २। १२॥
"अहो अहं नमो मह्यं दक्षो नास्तीह मत्समः।
असं स्पृश्य शरीरेण येन विश्वं चिरं धृतम्॥ २२॥
"न मे बन्धोऽस्ति मोक्षो वा भ्रान्तिः शान्ता निराश्रया।
"अहो मयि स्थितं विश्वं वस्तुतो न मयि स्थितम्॥ ३७॥
"नाहं देहो न मे देहो जीवो नाहमहं हि चित्।"
अयमेव हि मे बन्ध आसीद् या जीविते स्पृहा॥ ४१॥"
"मय्यनन्तमहाम्भोधौ जगद्वीचिः स्वभावतः।
उदेतु वास्तमायातु न मे वृद्धिर्नचक्षतिः॥" ३४॥
"तदा बन्धो यदा चित्तं किञ्चिद्वाञ्छति शोचति।
किञ्चिन्मुञ्चति गृह्णाति किञ्चिद्धृष्यति कुप्यति॥ ७८॥"
तदा मुक्तिर्यदा चित्तं न वाञ्छति न शोचति।
न मुञ्चति न गृह्णाति न हृष्यति न कुप्यति॥ ७९॥"
इति तत्त्वप्रपञ्चे प्रकीर्णप्रकरणे पञ्चमाध्यायः समाप्तः॥ *॥

---

## तत्त्वप्रपञ्चः।

### ( विवेकप्रतिपत्तिः )

प्रतिपादितं विवेकान्मुक्तिरिति। कोऽसौ विवेकः? किं प्रकारः? कथं वा समर्ज्जनीयः? तत्र विविच्यते—विवेको नाम विचारः तत्त्वज्ञानमिति यावत्। तत्र जड़रूपात् प्रकृत्यादिचतुर्विंशति-तत्त्वात् पुरुषो विविच्यते नाहं जड़ः परन्तु प्रकृतेः पर इति।

ननु के ते प्रकृत्यादयस्तत्त्वानि? कथ्यन्ते—

प्रकृतिः (१) महान् (२) अहङ्कारः (३) शब्दतन्मात्रं (४) स्पर्श-तन्मात्रं (५) रूपतन्मात्रं (६) रसतन्मात्रं (७) गन्धतन्मात्रं (८)

मनः (९) श्रोत्रं (१०) त्वक् (११) नयनं (१२) रसना (१३) नासिका (१४) वाक् (१५) पाणिः (१६) पादः (१७) पायुः (१८) उपस्थः (१९) आकाशः (२०) वायुः (२१) तेजः (२२) जलं (२३) पृथिवी (२४) इति चतुर्विंशतितत्त्वानि। पुरुषश्च चेतन एकन्तत्त्वम् (२५) मिलित्वा पञ्चविंशतिः॥ अतएव सांख्यप्रवचने उक्तम्।

"संख्यां प्रकुर्वते यस्मात् प्रकृतिञ्च प्रचक्षते।

तत्त्वानि च चतुर्विंशत्तेन सांख्यं प्रकीर्त्तितम्॥"

अतएव संख्याकरणात् सांख्यमित्युच्यते दर्शनम्। अत्र संख्या-शब्दस्यार्थद्वयमभिप्रेतम्। आत्मज्ञानरूपा संख्या। (१) एकत्वादिरूपा च संख्या तेन प्रकृतिपुरुषज्ञानरूपसंख्यायाः प्रतिपादनात् प्रकृतिमहदहङ्कारादिचतुर्विंशतितत्त्वरूपायाश्च प्रतिपादनात् दर्शनमिदं "सांख्यं" नाम कथ्यते।

इह जगति चतुर्विधाः पदार्थाः केचित् प्रकृतयः केचिद्विकृतयः। केचित्प्रकृतिविकृतयः। केचित् अप्रकृतिविकृतयश्च।

(क्रमशः)

---

# धर्म्मविवेकः।

(पूर्वप्रकाशितात्परः।)

शिव। वत्स! वामापद! श्रुतानि द्विमासं यावज्जल्पितानि धर्म्मशक्तिविषयकमुनिवचनानि। अधुनापि तव किं संशयमनुधावसि?

---

(१) सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनया इति संख्या सम्यग्ज्ञानम्। इति भगवद्गीता २। ३९ श्लोके श्रीधरस्वामी।

वामा। न खलु गुरवः! नात्र सन्देहलेशोऽपि लब्धुमवकाशं शक्नोति। एकतःश्रीमद्भिर्गुरुभिरुच्यन्ते तत्रापि मुनिवचनानि योगजृम्भितानि, तत् कथमत्र सन्देहावसरः सच्चरदार्थ्यशोणितदेहस्य मे। न हि मिहिरमरीचिनिचयचुम्बिते द्युमणिमणौ चक्षुष्मतोऽविश्वासः।

शिव। साधु साधु, वत्स वामापद! न वेद्मि इंरेजधर्मशास्त्रं न वा यवनधर्मशास्त्रमहं, तथापि विश्वसिमि निश्चितं तत्र तत्र धर्मोऽपि लक्षितः तच्छक्तिरपि तथैव प्रतिपादिता इति।

वामा। गुरवः! सत्यमेव ब्रुवन्ति, तेषामपि धर्मग्रन्थे प्रायो भवदुक्तैव धर्मशक्तिरुक्ता। मया खलु जिसुख्रीष्टकथितं "वाइबल" नामक इंरेजधर्मग्रन्थः पठितः तत्र एवं धर्मशक्तिर्वर्णिता, तथाहि—वाइवेल ५ अध्याय २० श्लोके। धर्म एवैकईश्वरलब्धुसुपायः।

Matthew. V. 20.

"For I say unto you, That except your righteousness shall exceed the righteousness of the Scribes and Pharisees, ye shall in no case enter into the kingdom of heaven."

एवं १३ अध्याये ४३ श्लोके। धार्मिकास्तु जगति सूर्यवत् प्रकाशन्ते।

Matthew. XIII. 43.

"Then shall the righteous shine forth as the sun in the kingdom of their Father. Who hath ears to hear, let him hear."

एवं मदीयस्य कस्यचित् यवनमित्रस्य सकाशात् महम्मदीयधर्मग्रन्थात् "कोराण" नामकात् तथैव धर्मः धर्मशक्तिश्च श्रुतः।

तथाहि धर्मश्चक्री कोराणमतम्। कोराण २६ सेपारा, अह्-काफ्सुरा, २ रुकु, १ आयत्।

"एक एव त्रिलोकीपालको वर्त्तते न तदन्य: कश्चिदस्ति"—

इत्येवमन्तरात्मनि चिरस्थायी य: प्रगाढ़विश्वास: चणमपि केनापि संशयेन न विचलति स एव (धर्म:) "इमान्" "दीन" "इस्लाम" वा कथ्यते। स खलु तथाविधविश्वासरूपो धर्म: संसारेषु सर्वं दौर्मनस्यं सर्वशङ्कामपनुदति, परलोके च दु:खमपहरति, एवं ईश्वरसान्निध्यं (ब्रह्मसंस्पर्शं) स्वर्गीयं सुखं प्रयच्छति। इत्येवं मूलविश्वासस्तज्जनिततावत्साधुवृत्तिसमुदायोऽपि (धर्म:)= इमान्, दीन्, इस्लाम्, वा उच्यते।

अपि च कोराणे ८ सेपारा, आन्फालसुरा, १ रुकु; १ आयत्। अशंसयचेतसो धर्मवन्त: नामश्रवणादेव ईश्वरस्य सचकितं स विस्मयञ्च तस्य विभूतिध्याने निमज्जन्ति, ज्ञानचक्षुषा सर्वत्रैव तं विलोकयन्ति, न तदन्यत् किञ्चिदपि पश्यन्ति, ईश्वरोद्देशग्रहे च सततमुत्तरोत्तरञ्च आत्मानमुन्नेतुं प्रभवति, ईश्वर एव तेषामेक आश्रय: उपास्यश्च, तेन हि सततविगतभीर्विराजति, न कोऽपि भीषण: प्राणी तस्य चेतसि भयमुत्पादयितुं शक्नोति। सर्व एव जन्तव: तस्मिन् मैत्रीं विदधति, ते एव स्वल्पं बहु वा प्राप्तमपि द्रव्यं वितरन्ति, न मन्यन्ते किञ्चिदपि रक्षणीयमिति। एवंविधा एव पुरुषा: धार्मिका: "मोमेन" "ओलि" "प्रिया"श्च भाष्यन्ते। (१)

एवं सुरा हज्ज, रकु ५, आयत् ५। (३८)

न खलु धर्मद्रोहिण: प्रीणाति ईश्वर:।

एवं सुरा हज्ज, रकु ६। आयत् १० (४१) सर्वशक्तिमान्

---

(१) धर्मलक्षणं धार्मिकलक्षणञ्च कोराणे तक्सिर, वयजावि, होसयनी, मदारकादिभागेषु सविस्तरं वर्णितमस्ति।

ईश्वरः पराक्रान्तश्च तस्य साहाय्य मालम्बते, यः खलु धर्म्माय यतते इति। एवं सुरा हाम् सज्वदा, रकु ४, आयत् ७। यः धर्म्माय द्रुह्यति तं निष्ठुरं शास्मि, अशुभञ्च भोगमनुभावयामि इति।

शिव। भद्रं भद्रं, वाइवले कोराणे पुराणादौ च निशम्य समालोक्य च समां धर्मशक्तिं नितरां प्रमुदे।

वामा। गुरवः! अवगता विश्वस्ता च धर्मशक्तिः। यस्य खलु धर्मस्य शक्तिस्तादृशी महीयसी नरमप्यमरी करोति कोऽसौ धर्मः? किम्प्रकारः? किंलक्षणः? किं वेद्यः कथं कार्य्यः? केन कार्य्यः? क्व वर्त्तते? कथं वर्त्तते? इति सर्वं स्तोकशः प्रकाशञ्च विवरितु मनुगृह्णीत मां वचनकरम्।

शिव। वत्स वामापद! शृणु तावत् प्रथमतो धर्मशब्दनिरुक्तिं—वस्तुमात्रं ध्रियते येन (करणे), धरति वा यः (कर्त्तरि)मन् प्रत्ययः (धृ+मन।) स धर्मः। स च सर्ववस्तुगतशक्तिविशेषः। यथा क्षितौ गन्धो रसादिश्च। जले शैत्यद्रवादिः। तेजसि उत्तापः विश्लिष्टीकरणादिश्च। समीरे स्पर्शादिः। व्योम्नि अवकाशादिः। पाषाणे काठिन्यं इति। यदि क्षित्यादौ गन्धरसादिर्नस्यात् स्थूलरूपेण सूक्ष्मरूपेण वा, तदा क्षित्यादीनामात्मलाभ एव सुदूर-पराहतः स्यात्। नहि भूयस्या अल्पीयस्या वा प्रभया विहीनस्य प्रदीपस्य क्वापि सम्भावना प्रमाणैरवधार्य्यते।

तथा अत्रापि देहं जन्म मरण सुख दुःखादयः साक्षात् परम्परया च बिभ्रति इति ते देहधर्म्माः अत्र तु यथैव सत्यदयादयः धर्मत्वेनाभिप्रेतास्तथोपरिष्टात् वक्ष्यते। अत्र धर्म्मपर्य्यायः। न्यायः। स्वभावः। आचारः। उपमा। क्रतुः। अहिंसा। उपनिषत्। इति मेदिनी। धर्मलक्षणम् धर्मं व्याख्यातुकामस्य कणादस्य महर्षेर्दार्शनिकप्रवरस्य ज्ञानप्रसूतम् शृणु यथा—

"यतोऽभ्युदयनिःश्रेयसाधिगमः स धर्मः।"

(क्रमशः)

श्रीश्रीदुर्गाशरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## भासावतरणिका ।

शीतं जराजीर्णमिदं स्खलद्गति
प्रत्यूषसि प्रैति हिमाद्रिमारुतैः ।
उष्मार्कजाशात इवाश्रितो बलम्
नृणाञ्च भुक्त्यै द्विगुणस्य फाल्गुने ॥

## उद्भट-श्लोकाः ।

"काली वः सदयं करोतु कुशलं तारा तनोतु श्रियं
दीर्घायुर्भुवनेश्वरी वितनुतां विघ्नं हरतात् षोड़शी ।
भैरव्यास भयापहा रिपुगणान् सा छिन्नमस्ता हतात्
मातङ्गी वगलामुखी च कमला धूमावती पातु वः ॥"
"अस्य दग्धोदरस्यार्थे किं किं न हि कृतं मया ।
वानरीमिव वाग्देवीं नर्त्तयामि गृहे गृहे ॥"
"चिन्ताचक्रे भ्रमति नियतं मन्मनो मृत्तिकेयं
आर्द्रीभूता नयनसलिलैर्भ्रामिता दैन्यदण्डैः ।
आशाकुम्भाः कति कति कृताश्छेदिताः कर्म्मसूत्रैः
जात्या विप्रः पुनरहमहो कुम्भकारोऽस्मि वृत्त्या ॥"

श्रीविधुभूषणदेवः । (राँचि)

## बहूपचिकीर्षा।

येन परेषां जीवनरक्षणं जातिरक्षणं मानादिरक्षणं भवति सैव परोपकारिता। परोपकारिता हि रत्नादपि "महार्घा"। रत्नं तावत् परिमितं भवेत्, सा रत्नसहस्रेणापि न परिमाणमेति। यत्र रत्नराजिर्विराजते, तदनतिदूरे कान्तिराशिः प्रचीयते, परं तस्या अप्रतिहतगतिः सूर्य्यकान्तिरिव दिग्दिगन्तं गत्वापि न विरमति। रत्ननिचयस्तावत् धनिनो गृहशोभेव "शोभते," सा च विश्ववासिनां गृहलक्ष्मीरिव प्रतिगृहम्। रत्नं तावत् प्रलोभनेन सुजनविनिन्दिते बहुलपङ्के वर्त्मनि पदं कारयति लोकं, सा पुनः सज्जनसेविते विमले सत्पथे। क्षणविध्वंसिना रत्ननिवहेनापि अपरिमिता चिरस्थिरा परोपकारिता यदि भवेत्, केन करगतं धनमिव परिह्रीयते धनाभिमानेन वदान्येन च। हस्तगतमपि रत्नं यदि नाम विधेरमोघशासनेन अनले जले अरण्ये अगम्ये पतितं स्यात् न च तेन कापि उपकृतिर्भवेत्, अतोऽचिरविनाशिना रत्नेन जीवितेनापि परोपकारमाचरेत्।

अपरैरवज्ञातस्य अनादृतस्य पराभूतस्य कृते यस्तावत् चिन्तयति, दुःखीभवति, आत्मानं पराभूतमिवमन्यते, उत्पीड़ितं निजोरसारक्षति, निराश्रय-माश्रयेण वीतभयं करोति, क्लिष्टस्य क्लेशं निरस्यति, शोकविकलं सान्त्वयति, नयनजलमपहरति च चेलाञ्चलेन, पतन्तमुन्नमयति हस्तावलम्बनेन, दुर्बलं निजबलेन सबलं करोति, पददलितस्य दीनस्य सर्वथा पक्षपाती भवति, रोगिण-मगदेन चिकित्सति, स एव महात्मा परोप कारी।

तत्रापि यद्येकमपि जीवनमगणितानामुपकरोति तदपि नीतिमार्गे समाद्रियते, अत्र तदेवादर्श्यते।

परेषामुपकाराय साधूनां खलु जीवनम्।
जलदानां जलं दातुमुत्पत्तिर्भुवि केवलम्॥
महास्वार्थं परित्यज्य परार्थं साधयेत् सुधीः।
मृत्युत्सृष्टसुता मात्रा राजपुत्रमजीजिवत्॥ यथा—

## बङ्गपत्रिकीर्षायां

पान्नाचरितम्।

आसीत् पुरा चित्तहरपुरे ( चितोरे ) राणावंशधरः सूर्य्यवंशावतंसो महाराजः संग्रामसिंहो नाम नरपतिः। स च जगति द्वितीयं जीवनमिव उदयसिंहाभिधानं एकमात्रं तनयं अशेषसम्पदामुपभोगार्थं संरक्ष्य असमये कथामात्रशेषो बभूव। षड्वर्षीयमलब्धतातसुखमुदयसिंहं आ जन्मनो लालनपालनकारिणी हितैषिणी च "पान्ना" नाम उपमाता (धात्री) प्रतिनियतमेव जीवयितुं शुश्रूषातत्परा समजायत।

तस्मिंश्च राजनि अकाल एव कालेन कवलीकृते उदयसिंहस्य राज्यरक्षणाय पितृव्यपृथ्वीराजस्य सुतो "वनवीरो" वृतो मन्त्रिमुख्यैरापातमात्रम्। किन्तु हतभाग्या वनवीरो राज्यलोभोपहतचेता उदयसिंहं कण्टकमिव शिशुमपि अविदितसंसारव्यतिकरमपि मन्यमान, उपांशु तस्य अवैधेन वधेन आत्मानं सफलकामं परिचिकीर्षुश्चेष्टे।

अथ कदाचित्कश्चित् "दिवार्त्तिः" पान्नासमीपमभ्युपेत्य वनवीरस्य रहस्यमिदमुद्घाटितवान्। तत्तु सम्यक् निशम्य "अप्रतीकारोऽयं दुरभिसन्धिः, बलीयः खलु दैवम्" इति निश्चित्य, सा भृशदुःखितातिबुद्धिशालिनी परोपकारक्रीतजीविता पान्ना न चकमे तत् विपुलराज्यं, न वा वैरिविनाशम्। कामयते स्म केवलं उदयसिंहस्य जीवनम्।

अथ गते च कियति दिवसे तेनैव नापितेनोक्तं "धात्रि! सावहिता भव अद्यैव तेन पापकर्म्मणा राक्षसापसदेन वनवीरेण रहसि शयनागारे शयने सुप्तस्य राणावंशधरस्य उदयसिंहस्य जीवनदीपो निर्वाप्यते" इदानीं त्वमेव प्रमाणम्।

अथ सा तदश्राव्यश्रवणेन क्षणमस्थिरा, क्षणं स्थिरा क्षणं

चिन्तिता, चणं वीतचिन्ता, "अयमसामयिकबन्धुः" इति निश्चिन्वाना फलकखण्डिकायां निद्रितमुदयसिंहं सयत्नं संस्थाप्य, प्रचुरतरेण पत्रेणाच्छाद्य तस्यैव नुरिणो हस्ते समर्पितवती। स तु तं निरापदं प्रदेशं निनाय। ततश्च सा यत्र शयितपूर्वं कुमारोपमेण कुमारेण, तत्र स्वगर्भजातं जीवनाधिकमपि निजसूतमशीशयत्।

इतश्च महत्या राज्यलालसयाभिभूतः अगणितपूर्वापरीभावः कृतान्तसहोदरः अथवा साक्षात् कृतान्त उदयसिंहस्य शोनिताशने कृतसङ्कल्पो वनवीरः सुतीक्ष्णमसिमादाय प्रविवेश शयनागारं, राजकुमारस्य भूतपूर्वम्।

प्रविश्य च गृहान्तराले धात्रीं पप्रच्छ "कुत्र शेते उदयसिंहः इति। सा पुनः किमप्यनुक्त्वैव अवनतमुखी हृदयानन्दकरं स्वजठरजातं शिशुसुतं प्रति अङ्गुलिं प्रतिससार।

स तु मुर्खः, यत्र निद्रामवाप्तः धात्रीनन्दनः, तत्र प्रकोष्ठे यावत् गतस्तावदेवासिना चकर्त्त कोमलाङ्गं धात्रीजीवनसर्वस्वम् अज्ञातशत्रुमित्रभावम् उदयसिंहीभूतं धात्रीसुतम्। सम्पाद्य च निशाचराचारं निभृतं प्रतस्थे। स्वयमात्मनैव आत्मनो धन्यवादं प्रचक्रे, "धन्योऽहं कृतकार्य्योऽहम्" दूरीकृतमद्यावधि राज्यकण्टकीभूतं मम विघ्नं, लब्धं निःसपत्नं राज्यमिदम्, तृणाय मन्ये निखिलं राजलोकम्, अथवा का कथा मानवानां नश्वरदेहानां, नाहं सुरासुरेभ्योऽपि बिभेमि" एवं विधं बहुविधं प्रजल्पितवान् चिरमवत्।

इतश्च धात्री, मर्माविधमपि, भयङ्करमपि, अमानुषिकमपि, लुप्तपिण्डोदकमपि अदृष्टमपि तदात्मजनिधनं नीरवं निरीक्ष्य, स्तम्भितेव, लिखितेव, संयतेव, मूर्च्छितेव, विघ्नतेव वाष्पवारिणा धारावाहिना शोकक्षुब्धहृदयकालुष्यं मृतपुत्रस्य अन्त्येष्टिक्रियां समाप्य, यत्र नापितद्वितीय उदयसिंहस्तत्र प्रतस्थे नीवरम्। गत्वा च तेन मुण्डिना अटवीतोऽटवीं बंभ्रम्यतेस्म।

पान्ने ! त्वं धन्या, या त्वं संग्रामसिंहजीवनस्य हिन्दुकुलविकर्त्तनस्य उदयसिंहस्य जीविताय अकुण्ठितेन अम्लानमुखेन च वात्सल्यस्याद्वितीयमाधारं स्नेहस्यैकमात्रावलम्बनं प्रीतेः परमपात्रं स्वपुत्रं मृत्यवे ददाथ। स्वहृदयरञ्जिकां कुसुमकलिकां वृन्तच्युतां दृष्ट्वापि कर्त्तव्यान्न खलु विमुखी जज्ञिषे, अपि तु स्वदेशहितैषितायां अशेषजनोपचिकीर्षायां वद्धमुष्टिः महान्तं स्वार्थत्यागमपि चकर्थ।

श्रीद्वारिकानाथविद्यालङ्कारः

ढाका—मालखानगर विद्यालयशिक्षकः।

---

# आशा।

"आशा हि परमं दुःखम्, नैराश्यं परमं सुखम्।"

आशा हि मानवानां दुःखस्य निदानम्। नैराश्यं हि तेषां सुखमुत्पादयति। आशा खलु जनानां जीवनम्। तां विना कैरपि प्राणा धारायितुं न शक्यन्ते। यावत् नरा आशा परतन्त्राः तावत् तेषां कुतः सुखम्। अतः आशावशत्वमेव विहातव्या। ताञ्चेत् नराः न परित्यजन्ति तर्हि ते आजीवनं दुःखानि अनुभूय कालं नेष्यन्ति तत्र नास्ति संशयः। यथा शतपतिः सहस्रमिच्छति, सहस्रपतिः लक्षमिच्छति, लक्षपतिः राज्यं काङ्क्षति, राजा इन्द्रत्वं तथैवाशा प्रतिदिनं तरुणायते। दुःखान्यपि तया सह वृद्धिं गच्छन्ति।

आशात्यागेन नराः निर्म्मलं सुखं लब्धुं शक्नुवन्ति न तु उपायान्तरेण। स्थविराणां दन्ताः केशाश्च जीर्य्यन्ति तथापि तेषामाशा-

क्षयो न जायते किमाश्चर्य्यम्। को हि यथार्थं सुखी ? यो नैराश्य-माश्रित्य पार्थिव सुखं पराजयते ? "जितं जगत् केन ? मनो हि येन" ? तथैव ब्रह्मपदं लभ्यते केन ? आशा पराजीयते येन ? यो नरः आशामामूलं च्छेत्तुं न क्षमः तस्य हि वृथा जीवनम्।

यथा विहङ्गमाः पादपशाखासु कुलायानि निर्म्माय वसन्ति, वयमपि तथैवाशाद्रुममाश्रित्य वसामः। अत आशातरोः पतनं विना सुखस्य सम्भावना नास्ति ? केनोपायेन आशापादपः सम्यक् छिद्यते ? केवलं नैराश्येन। नैराश्यमेव कृपाणमेकम् न तु अन्यत्।

उत्तिष्ठमानः परश्च आशाद्रुमस्य तुल्यो आम्नातौ बुधैः। प्रथमस्य अस्त्रमेव भेषज्यम्, नैराश्यञ्च द्वितीयस्य इति ज्ञानिनां भारती। अतएव भो मानवाः! आशातरुः विषवृक्ष इव। यदि तं भूमौ न पातयथ तदा स खलु विषफलैः युष्मान् हनिष्यति न संशयः।

अतएव केनाभ्युपायेन स आशापादपः विनाशयितव्यः ? केवलं नारायणपदभक्तिजातज्ञानेन। अतो भो आशामरीचिका मुग्धाः! जनाः! तदेव ज्ञानं लब्धुं यत्नो हि सततं कार्य्यः। तदेव ज्ञानं मुक्तिमार्गः। वसुमत्यां सर्वकालेषु तदेव ज्ञानम् एकमेव द्रव्यं न तु अन्यत्। तदेव जनैः अन्वेष्टव्यम्। यस्तदिदामूल्य-निधिम् विहाय आशापाशबद्धः भूत्वा पार्थिवसुखमन्विष्यति स मूर्खानामपि मूर्खः पार्थिवसुखमिच्छता जनेन परमार्गतिर्लब्धुम् न शक्यते यतस्तस्या-शाकेवलम् अलीके पार्थिवसुखे वर्त्तते।

सुखानि च दुःखानि च आशायाः ह्रासं वृद्धिञ्च अनुसरन्ति बुधाः ह्रासम् सुखम् वृद्धिञ्च दुःखमामनन्ति। मानवनाम् निखिलाः आशाः फलं नोत्पादयन्ति। याः निस्फलाः जायन्ते ताः एव दुःखानि जनयन्ति, यथा केन चित् जनेन कश्चिदर्थं ईप्सते, यदि स तत् न लभते तदा खलु तस्य दुःखं जायते। स चेत् आशाविहीनः

तदा तस्य कुतो दुःखम्। अतएव आशां परित्यज्य विशुद्धं सुखं लब्धुं यत्नो हि कार्य्यः। अनन्तं सुखं विहाय जनाः क्षणभङ्गुरे सुखे विमुग्धाः न भवेयुः। लोकोऽयं परीक्षास्थानम्। भगवता हि परीक्षार्थं वयमिह प्रेषिताः? यः पुण्यकर्म्माणि करोति स एव विष्णुलोकं याति, यस्तु पापमाचरति सः खलु नरकं गच्छति। अतएव आत्महितमिच्छता जनेनाशा परित्यज्यत? आशां विनाभ्युदया नास्ति इति कैश्चित् कथ्यते। आशा तु पार्थिव-सुखस्य कारणं न तु स्वर्गसुखस्य। सा हि ब्रह्मलोकस्य मार्गे कण्टकायते? अत आशायाः पापं जायते, पापाच्च नरकगमनं जायते। आशां त्यक्त्वा पुण्यकर्म्माणि क्रियेरन्। आशाविहीनः जनः केवलं निर्म्मलं सुखं प्राप्नोति, आशामुग्धः जनस्तु केवलं कष्टेन कालं यापयति। यस्य हि आशा स्वल्पा तस्य दुःखमपि स्वल्पम्, यस्य तु आशा बहुला तस्य दुःखमधिकम् न संशयः। एतानि सर्वाणि दृष्ट्वापि मानवाः ज्ञानं न लभन्ते पश्य कौतूकम्। अतएव भोजनाः! भवबन्धनात् त्राणार्थम् यत्नः सततं कार्य्यः। इति

श्रीशशिभूषण शर्म्मा

८५ नं० कासारिपाड़ा रोड, भवानीपुर, कलिकाता।

---

## कुमारबन्धुः।

( पूर्वप्रकाशितात्परः। )

विशालवर्मा—विकटवर्मणः कनिष्ठभ्राता। इममेव पुण्ड्राय प्रेरयितुं यत्नवान् विकटवर्मा।

स्वर्गतिः—मणिविक्रेता यवनः।

शतह्लिः—मिथ्यापवादेन अनन्तसौरनिहननेच्छुः।

अनन्तसीरः—प्रहारवर्मणः पक्षस्थितो विकटवर्मराज्यकामी।

पूर्णभद्रः—कामपालबन्धुः।

अर्थपालं कामपालव्यसनमश्रावयत्।

चण्डसिंहः—चण्डघोष सिंहघोषयोः पिता। कामपालस्य श्वशुरः। क्षयरोगेण मृतः।

चण्डघोषः—चण्डसिंहस्य ज्येष्ठपुत्रः। मणिकर्णिकायाः पिता। अर्थपालस्य श्वशुरः। स्त्रीषु अतिप्रसङ्गात् मध्यमे वयसि मृतः।

सिंहघोषः—कनिष्ठपुत्रश्चण्डसिंहस्य। मृते चण्डघोषे राज्येऽभिषिक्तः। कामपालं कारागारे-बबन्ध। पितृवैरिनिधनाभिलाषिणा अर्थपालेन लौहशृङ्खलेन निबद्धः।

आचारवती — चण्डघोषस्त्री। अर्थपालस्वश्रू-माता। मणिकर्णिकाया जननी। गर्भे स्थितायां तस्यां मृताम्।

मणिकर्णिका—चण्डसिंहेन परिरक्षिता चण्डघोषस्य कन्या। आचारवत्या गर्भजा। अर्थपालस्य भार्य्या।

दासी—मणिकर्णिकायाः काचित् रक्षयित्री वृद्धा।

धर्म्मवर्द्धनः—नवमालिकायाः पिता श्रावस्तीश्वरः, प्रमतिश्वशुरः।

नव मालिका—धर्म्मवर्द्धनस्य दुहिता प्रमतिभार्य्या।

पञ्चालशर्म्मा—प्रमतिबन्धुः। विविधेनच्छलेन प्रमतिं राजान्तःपुरं प्रावेशयत्।

कोशदासः—मित्रगुप्ताय कन्दुकावती-वृत्तान्तमवादीत्। चन्द्रसेनायाः प्राणेश्वरः।

तुङ्गधन्वा—सुह्मपतिः। कन्दुकावतीपिता। श्वशुरो मित्रगुप्तस्य। भीमधन्वापि अस्य पुत्रः। प्रपूज्य देवीं सुतौ प्राप्तवान्।

मेदिनी—तुङ्गधन्वनः पत्नी। जननी कन्दुकावत्याः।

कन्दुकावती—तुङ्गधन्वनः कन्या। कन्दुकक्रीड़या देवीं सन्तोष्य पतिं मित्रगुप्तं प्राप्तवती।

चन्द्रसेना — कन्दुकावतीसखी। कोशदासस्य भार्य्या। अस्याः

कार्मुकी भीमधन्वा बद्धः कारागारे मित्रगुप्तेन ।

भीमधन्वा — तुङ्गधन्वनः पुत्रः । मित्रगुप्तं समुद्रे निक्षिप्तवान् । यवन-रक्षितेन मित्रगुप्तेन शृङ्खलैराबद्धः ।

ब्रह्मराक्षसः—मित्रगुप्तप्रश्नकारी । कन्दुकावतीहारिणा राक्षसेन हतः ।

धनकः—त्रिगर्त्तवासी । दुर्भिक्षपीड़ितः सन् अत्तिस्म स्वभार्य्यां ।

धान्यकः—धनकभ्राता । दुर्भिक्षपीड़ितः सन् अत्तिस्म स्वभार्य्यां ।

धन्यकः—स्त्रिया सह देशान्तरं गतः दुर्भिक्षभयेन धनकभ्राता ।

धूमिनी—धन्यकपत्नी । स्वपतिं कूपे निक्षिप्य विकलाङ्गिना सह देशान्तरं ययौ ।

विकलाङ्गी—धन्यकेन रक्षितः ।

शक्तिकुमारः—काञ्चीवासी । सुलक्षणवतीभार्य्याभिलाषी ।

गोमिनी—शक्तिकुमारस्य लक्षणवतीभार्य्या ।

दासी—गोमिन्याः धात्री ।

गृहगुप्तः — वलभीनगरीवासी । नाविकपतिः । रत्नवतीपिता । बलभद्रस्य श्वशुरः ।

रत्नवती—गृहगुप्तस्य कन्या बलभद्रस्य भार्य्या ।

बलभद्रः—मधुमतीवासीवणिक् । रत्नवती-पतिः । कनकावती भ्रमेण रत्नवतीमेव जहार ।

निम्बवती—रत्नवत्याः नामान्तरं

कनकवती — वलभीवासिवणि कन्या ।

प्रव्रजिका—धूर्त्ता । रत्नवत्याः पत्यनुरागं प्रापयित्री ।

अनन्तकीर्त्तिः—नितम्बवतीपतिः अवन्तिवासी वणिक् ।

नितम्बवती—अनन्तकीर्त्तेः स्त्री । स्वयमासीत् युवती—अतएव पत्युरनन्तकीर्त्तेर्वृद्धत्वहेतोर्मनोभव दुःखार्त्ता कलहकण्टकेन हृता ।

कलहकण्टकः—किं दुष्कर साधनं ? प्रश्न इत्युत्तरस्य समर्थकोपन्यासस्य नायकः । नितम्बवतीसौन्दर्य्यमुग्धो मथुरावासी । अयं खलु नितम्बवतीं जहार ।

राक्षसः—कन्दुकावतीहारी ।

आरब्धे च तयोर्युद्धे मानसारेण महादेवप्रसादात् प्राप्तेन एक जननाशकगदायन्त्रेण हतो राजहंसस्य सारथिः। राजहंसश्च मुमूर्च्छ रथोपरि। सारथिविहीना भयविह्वला अश्वा राजानं रथोपरि कृत्वा पलायामासुः। वसुमतीसपत्नीभ्यो राज्ञोऽदर्शनवार्त्तां श्रुत्वा प्राणांस्त्यक्तुं निशीथे वनं गत्वा तत्रैव अश्वैर्नीतं राजानं राजहंसं ददर्श। तत्र च राजा मन्त्रिभिः समरसंमिलित आसीत्। पूर्वमेव जीवितेषु तातपादेषु धर्म्मपालस्य कामपालः सितवर्म्मणः सत्यवर्म्मा पद्मोद्भवस्य रत्नोद्भव इति एतौ पुत्रौ देशान्तरं जग्मतुः। ततश्च राजा महर्षिवामदेवात् श्रुतवान् वसुमतीगर्भे दिग्विजयिनः पुत्रस्य सम्भववृत्तान्तम्। वसुमती च तत्रैव चक्रवर्त्तिलक्षणोपेतं सुतमसूत। तेन हृष्टश्च राजा पुत्रस्य राजवाहन इति नाम अभिहितवान्। तस्मिंश्च समये सुमतिसुमन्त्रसुमित्रसुश्रुतानां प्रमतिमन्त्रगुप्तमित्रगुप्तविश्रुताख्याः सूनवोऽभवन्।

अथ उपहारवर्म्मोत्पत्तिकथा। तापसः कश्चिदेकदा राजहंसाय राजलक्षणोपेतं तनयमेकं दत्त्वा प्राह—"महाराज! वनं गतेन मया कस्याश्चिद् वनितायाः श्रुतं—"मानसारेण पराजितस्य राजहंसस्य बन्धोर्मिथिलेश्वरस्य प्रहारवर्म्मणः पुष्पपुर्य्याः पलायितस्य च पुत्रयो रक्षणे नियुक्ताहमासम्। पथि शवरभयेन पलायिताहं ज्वरताडिता प्रहारवर्म्मणा समं गन्तुं समर्था। अपिच पथि शवरभयेन पलायिता मम कन्या पुत्रान्तरं गृहीत्वा कुत्र गता न जाने। अनागत्य व्याघ्रभयाकुलाया मत्तो भ्रष्टः स शिशुः केनचित् शवरेण कुत्र नीतो नाहं जाने" इति। ततश्चाहं बालकमिमं हनिष्यमानान् शवरान् प्रयाच्य प्राप्तवान्। भवद्बन्धुपुत्रोऽयम्। भवानेवास्य पालक इति। एतत् श्रुत्वा राजहंसस्तम् उपहारवर्म्मा इति नाम कृत्वा पालनाय वसुमत्यै दत्तवान्।

अथ अपहारवर्म्मोत्पत्तिकथा। एकदा राजहंसस्तीर्थस्नानाय शवरा-

लयनिकटमार्गेन गच्छन् कस्याश्चित् शवर्य्याः क्रोड़े उपहारवर्म्मा-कृतिं तनयमेकं दृष्ट्वा "कोऽयं सुलक्षणाकृतिर्वालकस्तव हस्ते" इति तामपृच्छत्। सा चाह राजन्नात्मपल्लीसमीपे प्रहारवर्म्मणः सर्वमपहरति शवरसैन्ये मद्दयितेनैष तस्य कुमारोऽपहृत्य पालनाय मह्यमर्पित इति, श्रुत्वैतत् तामर्थैर्वशीकृत्य राजा बालकं नीत्वा अपहारवर्म्मा इति नाम कृत्वा च तं पालनाय वसुमत्यै ददौ।

अथ पुष्पोद्भवोत्पत्तिकथा। एकदा कश्चिद्वामदेवान्तेवासी राजहंसाय वालकमेकं दत्त्वा प्राह—राजन्! वनं गतेन मया वालकमेनं क्रोड़े कृत्वा रोरुद्यमाना काचित् स्थविरा दृष्टा पृष्टा च कात्वमिति, सा ब्रवीत् "रत्नोद्भवो वाणिज्याय कालयवनद्वीपे गत्वा तद्द्वीपवासिनः कालगुप्तस्य कन्यां सुवृत्तामुपयेमे। आसन्नगर्भां तां नीत्वा स्वदेशं प्रति गते रत्नोद्भवे समुद्रमध्ये जानभङ्गात् परं निमग्नः स कुत्र गतो नाहं जाने। अहञ्च तैः सह आगत्य समुद्रे निपतितां सुवृत्ताञ्च गृहीत्वा काष्ठफलकसाहाय्येन तीरमेत्य तामर्द्धमूर्च्छितां दृष्टवानस्मि। सा च तत्रैव तीरे सुतमेनं प्रसूय मृता। अहमपि एनमचीरप्रसूतं शिशुं गृहीत्वा अत्रागता इति। सा तु वानरभयेन शिशुं भूमौ निक्षिप्य पलायिता। स च बालकः क्रमात् वानरव्याघ्रमुखाज्जीवनं प्राप। अहमपि प्राप्तजीवनं त्वां गृहीत्वा इह गुरोरादेशादुपनयामि इति श्रुत्वैतत् राजा तं शिशुं पुष्पोद्भव इति नाम कृत्वा पालनाय सुश्रुताय दत्तवान्।

अथ अर्थपालोत्पत्तिकथा। एकदा वसुमती निद्रावस्थायां प्राप्तमेकं बालकं राज्ञे दत्त्वा प्राह देव! विगते निशीथे गन्धर्वेश्वरः मणिभद्र-कन्या तारावली मह्यमर्भकमेनं दत्त्वा आह कामपालस्य पुत्रोऽयम्। राजवाहनस्य परिचर्य्यार्थमिदानीं भवत्याय पालयितव्य इति। देव! भवानेव एनं पालय इति। राजहंसश्च तमर्थपाल इति नाम कृत्वा रक्षणार्थं सुमित्राय दत्तवान्।

अथ सोमदत्तोत्पत्तिकथा । कदाचित् सोमदेवस्तनयमेकं दत्त्वा राज्ञे प्राह राजन् ! वनं गतं काचिद्दासी, देव ! सत्यवर्म्मा गृहं परित्यज्य गत्वा कुत्रापि देशे कस्यचिद्ब्राह्मणस्य द्वे कन्ये उपयेमे। प्रथमा स्त्री काली सपत्न्या गौर्य्याः पुत्रं मया सह समुद्रे निक्षिप्तवती। अहञ्च इमं नीत्वा उत्थानकामा केनचित् सर्पेण दष्टा, भवानेव एनं रक्षतु इति उक्ती तन्मृता सा अहमपि तं शिशुं भवत्सकाशमनयम् । राजहंसश्च तं शिशुं सोमदत्त इति नाम कृत्वा पालनार्थं सुमतये ददौ।

द्विजोपकृतिनामद्वितीयोच्छ्वासः ।

अथ यो वनं प्राप्ते सबन्धौ राजवाहने एकदा वामदेवस्तं सबन्धुं दिग्विजयाय गन्तुं आदिष्टतवान् । राजवाहनश्च बन्धुभिः समं दिग्विजयाय वहिर्जगाम ।

एकदा वनभूमौ राजवाहनो मातङ्ग नाम्नो ब्राह्मणस्य—भ्रातृभिर्निहतस्य पुनरपि चित्रगुप्तकृपया प्राप्तजीवनस्य पातालगमनरूपमुपकर्त्तुं स्वीकृत्य निशीथे निद्रितेषु कुमारेषु राजवाहनो ब्राह्मणेन सह पातालं गतवान् । कृतहोमो ब्राह्मणश्च प्राप्तदिव्यशरीरो रसातलेशकन्यां कालिन्दीं व्युवाह। प्रभाते प्रबुद्धा राजवाहनेतरे कुमाराः राजवाहनमनवेक्ष्य तस्यान्वेषणाय ते इतस्ततो जग्मुः। राजवाहनश्च कालिन्दीप्रदत्तं क्षुत्पिपासादिक्लेशहरं रत्नं गृहीत्वा तत्रैव वने आगत्य बन्धूननवेक्ष्य कुत्रचिद्देशे गत्वा सस्त्रीकं सोमदत्तं ददर्श। अपि च सोमदत्तं स्वचरितं कथयितुमादिदेश। सोमदत्तः स्वचरितं कथयितुमारब्धवान् । सोमदत्त आचचक्षे ।

सोमदत्तचरितनामतृतीयोच्छ्वासः ।

राजनन्दन ! भवदन्वेषणार्थिना मया सरसि लब्धं रत्नं दीनाय ब्राह्मणाय दत्तम् । कोऽयं देशः कश्चास्य पालक इति पृष्टश्च स आह—देशस्यास्य पालको वीरकेतुः । एतस्य कन्यां वामलोचना-

सुपनेतुं देशमिममाक्रान्तवान् लाटेश्वरो मत्तकालः । वीरकेतुश्च भयाकुलः सन् तस्मै एव कन्यां ददौ । वीरकेतुमन्त्रिमानपालश्च मत्तकालशिविरसन्निकटे शिविरञ्चकार । इति । ततश्च प्रातः सुप्तोत्थितं ब्राह्मणेन "चौरोऽयमयमेव सद्मसिदं दत्तवान्" इति निर्दिश्यमानं मां ववन्धुर्मत्तकालनियुक्तपुरुषाः । अपि चाहं कारागारे गत्वा वीरकेतुसैन्यैः समं तत्रैव एकत्रीभूतस्तैः सह निर्गत्य मानपालेन सह एकत्रीभूय युद्धेनारिं मत्तकालं निपात्य कन्यां ततो वामलोचनां वीरकेतवे दत्तवान् । राजा च मद्गुणराशिं श्रुत्वा मह्यमेव तां दत्तवान् । अहञ्च अधुना सिद्धादेशेन महाकाल-पूजनार्थी सदारोऽद्य भवतां दर्शनं प्राप्तवानस्मि । इति वदति सोम-दत्ते प्रार्थितव्रतफलमिव पुष्पोद्भव आगत्य कुमारादेशेन निज-वृत्तान्तमकथयत् ।

पुष्पोद्भवचरितनामचतुर्थोच्छ्वासः ॥

श्रीमन् ! अहमपि भवदन्वेषणार्थी कदाचित् कुत्रचित् वने विलपन्तीं मातरमूर्द्धात् पतितं पितरञ्च प्राप्तवानस्मि । तौ पितरौ तापसाश्रमेऽभिरक्ष्याहं धनार्थी कपटवेशेन वणिजा चन्द्रपालेन सह मैत्रीं संस्थाप्य तेन सह सपितृमातृकोऽवन्तिं गच्छामि स्म । तत्र च चन्द्रपालपितुर्बन्धुपालस्य वाक्येनाश्वस्तोऽहं कदाचित् बालचन्द्रिकामवन्तीसुन्दरी-सखीसुपनेतुं मानसारभागिनेयं चण्ड-वर्म्मानुजं दारुवर्म्माणं यक्षच्छलेन निपात्य उपनीय तां शुभशकुन-दर्शनादेव भवतः सुखदर्शनं लब्धवानस्मि । इति श्रुत्वा च राजवाहनो जातहर्षो बन्धुपालस्य गृहमेव तस्थौ सह बन्धुना सजननीजनकेन पुष्पोद्भवेन ।

राजवाहनचरितनामपञ्चमोच्छ्वासः ।

अवन्तिपुर्य्यां राजवाहनो दर्शनकामार्त्तो मानसारनन्दिनी-मवन्तिसुन्दरीं विद्येश्वरस्य ऐन्द्रजालिकस्य मन्त्रगुणेन उपयम्य—

पूर्वजन्मफलभोगार्थं हंसशापेन निबद्ध आसीत् रात्रौ रौप्यशृङ्खलेन मानसारस्यान्तःपुरे दर्पसार सैन्येन। दर्पसारश्च चण्डवर्म्मणि राजत्वं दत्त्वा तपश्चरणार्थं राजराजपर्वतं गत्वा श्रुत्वा च तत्र एनजङ्घात् सर्वसुदन्तं राजवाहनं हन्तुमादिदेश। चण्डवर्म्मापि सिंहवर्म्मणः कन्याम्बालिकालाभार्थं चम्पागमनार्थी राजवाहननिधनार्थं सहसानीतवान्। तत्र च चम्पायां दस्युवेशधारिणापहारवर्म्मणा हतश्चण्डवर्म्मा, मुक्तश्च तेन राजवाहनः। तत्रैव सिंहवर्म्मणः साहाय्यार्थमागतैरितरैः कुमारैः सह एकत्रीभूतौ अपहारवर्म्मराजवाहनौ सोमदत्तपुष्पोद्भवाभ्यां विना राजवाहनस्य आत्मवृत्तान्तं कथयितुमादिदेश अपहारवर्माणम्।

स च आचचक्षे—

## अपहारवर्म्मचरितनामद्वितीयोच्छ्वासः।

राजकुलप्रदीप! अहमपि भवदन्वेषणाय अङ्गेषु गत्वा माधवसेना कन्या काममञ्जर्य्या भ्रष्टतेजसो मुनेर्मरीचेः वृत्तान्तं ज्ञातवान्। कदाचित्तयैव हृतसर्वस्वं चपणकलिङ्गधारिनमपुष्टधनेन सुन्दरकेन समं जातवैरं वसुपालितमाश्वास्य पाशकक्रीड़या तत्सदस्यान् जित्वा तदध्यक्षेन विमर्दकेन सह मैत्रमस्थापयम्। एकदा निशि निराश्रितां पतिधनमित्रसकाशं गन्तुकामां कुलपालिकां नीत्वा धनमित्रालयं श्रुत्वा च तत्पितुरर्थपतये तस्याः प्रदानाभिलाषं प्राक् च धर्नामत्राय एव कन्यादानस्वीकारण इदानीं अतएव विपद्यत्र निपतितं धनमित्रं देशान्तरं गमनाभिलाषिनं निवार्य्य आश्वास्य च ताभ्यां सह मैत्रमस्थापयम्। ततश्च धनदायिनी चर्म्मभर्त्तृकाच्छलेन चौरोऽपि धनमित्रो राजविश्वस्त आसीत्। ततः स चापहृत्य अर्थपतिधनं तामपूरयत्। गुणग्राहिणी वारवनीता रागमञ्जरी मामरञ्जयत्। मत्प्रणोदिता दूती धर्म्मरचिता काममञ्जरीं राग-

मञ्जरीपणरूपचर्म्मभस्त्रिकायाः प्रदानकथां कथयित्वा वशीचकार ।
तथापि सा भस्त्रिका तस्मै प्रदत्ता ।

( क्रमशः )

काव्यविनोद श्रीदुर्गानारायणसेनगुप्तः ।

---

## आत्मनिवेदनम् ।

( द्वितीयः सर्गः )

निरुपाधिसुखं यदीच्छसि विषसारं विषयं परित्यज ।
कलहाङ्कितगर्वदीनतामदमात्सर्य्यविधायकं मनः ॥ १ ॥
फलतो न सुखं न वा यशो न च शान्तिर्नजगद्गुरौ मतिः ।
इह कारणवर्ज्जिता दया न तितिक्षा न न शौचमार्जवम् ॥२॥
परमन्त्रविचिन्तनं श्रुतिर्जपमन्त्रः परगर्हणोन्नयः ।
परपीड़न मीश्वरव्रतमिह धर्म्मध्वजितैव साधुता ॥३॥
विषयस्य विभावनादिभिः सह शान्तिर्न कदापि वर्त्तते ।
शिखिमुक्तवाबलौ कदा विपदस्पृष्टकलेवरौ भवेत् ॥४॥
धनिनां मणिरत्नमण्डिते भवने दीनतमस्य मन्दिरे ।
तरुपत्र विनिर्म्मितेऽपि नो फलतः शान्तिरसौ विराजते ॥५॥
भवनं बहुभूतिभूषितं ननु पश्य प्रमदाभिजृम्भितम् ।
रुचिरैर्युवभिर्वृतान्तरं रमणीभिश्च विलोलदृष्टिभिः ॥६॥
क्वचिदत्र पवित्र-विग्रहौ पितरावप्युसुखौ बभूवतुः ।
युवकस्य सुतस्य धीमतो विरहेणाशु निरस्तचेतनौ ॥ ७॥
क्वचि दत्र धनागमस्पृहोच्छ्वसितैः सञ्चितरत्नसम्पदाम् ।
परिरक्षण-चिन्तनैरपि चलचित्ता विहिता जनाः सदा ॥ ८ ॥
क्वचनाशु चिकित्सितेतरा दत केचित् विपत्तैरुपद्रवैः ।

अतिमुक्तगलं विरुध्य तान् स्वजनान् चित्त ! नयन्ति दुःखिताम् ॥९॥
मरणेन च जन्मना सदा मनसोऽगोचर जन्मना रुजा।
अविनाशि सुखं कथं जना अधिभूताः परिलब्धुमीश्वराः ॥१०॥
पतनोन्मुखमेतमालयं ननु जीर्णं सततं विलोकय।
इह सम्भवति प्रमूढ़ ! किं चिरशान्तिः शमकाम मानस ! ॥११॥
स्मरतः क्वचि दत्र दम्पती निजभाग्यानि दशामुपस्थिताम्।
सततं कृतकर्म्म दारुणं बलवद्दुःखनिदानमादिमम् ॥१२॥
जठरानलपीड़ितोऽभवं मम बुद्धिः समलं विनश्यति।
परमस्मि किमेतदुक्तिभिर्युवभिः क्षीयत एव साश्रुभिः ॥१३॥
शिशुभिर्वत ! भोजनार्थिभिः करुणं चित्त ! रुदद्भिरेकतः।
जननी किल चिन्तिता सती नयनाम्बूणि सदैव मुञ्चति ॥१४॥
क्वचिदत्र बुभुक्षितान् शिशून् जननी धूलिविमिश्रितान् वत।
परिगृह्य विचुम्ब्य सादरम् किमिदं देयमितीह चञ्चला ॥१५॥
परिणामधरावनं मनो ! गतशङ्कं बहुशो विलोकय।
नरशोणितमांसकर्दमैर्वसयापि प्रथितं भयावहम् ॥१६॥
स्तिमितं ननु विस्मयप्रदमतिगम्भीरतमं दुरासदम्।
परिवीक्ष्य न कस्य मानसं वत तद्दृश्यमिदं विकम्पते ॥१७॥
मनसो वचसोऽप्यगोचरं स्थलमेतद्वहुसम्पदामपि।
किमिवाशु विवेकदर्शनं नवमुत्पादयति क्षणं क्षणम् ॥१८॥
प्रतिपादयति ध्रुवं मनो ! जगतां नश्वरता मही स्थिराम्।
इदमेव मनःसु निश्चितं परिसञ्चारयति क्षणं भयम् ॥१९॥
न कुलस्य, महत्सम्पदो न, न जातेर्न च देहसन्निधेः।
विदुषां न, सुखस्य नो इह विमलं वर्त्तत एव गौरवम् ॥२०॥
अतिमूर्ख मनो ! विलोक्यतां वसुधा ह्या ननु यस्य कम्पिता।
चरणाम्बुज चारणैरयमधुनैतद्गमितः स्वबन्धुभिः ॥२१॥
अधिशाय्य हि वंशदोलिकां क्वचिदेहं गतजीवनं नरम्।

सलिलानि विमुच्य नेत्रतो विलपन्तोऽत्र चरन्ति बान्धवाः ॥ २२ ॥
शतपत्रप्रभोऽत्र सेवितो शतभृत्यैरनुगैः पुरा तु यः ।
वत ! सोऽपि विभूतिभूषितो ननु शेते कठिने धरातले ॥ २३ ॥
कुसुमास्तरणेऽपि ताम्यति रुचिराङ्गः पुरुषः पुरा तु यः ।
सुरसालरसालदारुणि शयने स स्वपिति त्वणेतरम् ॥ २४ ॥
शयितोऽत्र गृहाणि सम्पदः पितरौ भ्रातरमात्मजञ्च न ।
स्मरति प्रियबान्धवर्षभं प्रियपत्नीं शयनं सुकोमलम् ॥ २५ ॥
क्वचिदत्र शृगालसंहतिः शवमुन्मीलितलोचनं वत ! ।
चिरनिद्रितमुत्सुकेतरं सममाकर्षति मूढ़ मानस ! ॥ २६ ॥
कृशानुरेषोऽत्र रसालदारु निरन्तरं मानस ! भस्मराशिम् ।
करोत्यपि श्रीयुतलोलनेत्रं कामच्छविं रम्यगिरं पुमांसम् ॥ २७ ॥
न स्मर्य्यतेऽस्मिन् प्रखरोऽभिमानो न जप्यते हिंसनमूलमन्त्रः ।
न चिन्त्यते प्रीतिविकाशिनेत्रं प्रियामुखं मुद्रितखिन्नदृग्भिः ॥ २८ ॥
राजप्रजात्वं धनिदीनतापि न विद्यते पण्डितमूर्खता वा ।
श्मशानभूमौ लयकारणेऽत्र यशोऽप्यकीर्त्तिः सुखमिश्रदुःखम् ॥२९॥
यस्य प्रसादलवतो भुवनं विचित्रं सम्पद्यते भवपयोधि तटञ्च याति ।
सम्मूढ़ मानस ! नु चेत् परिणामभूमिमत्येतु मिच्छसि तदास्मर
तं परेशम् ॥ ३० ॥

श्रीअन्नदाचरणतर्कचूड़ामणिप्रणीते आत्मनिवेदने
परिणामभूमिदर्शनं नाम द्वितीयः सर्गः ।

( क्रमशः )

श्रीअन्नदाचरणतर्कचुड़ामणिः

नोयाखाली—सोमपाड़ा ।

# भक्तमाहात्म्यम् ।

आसीदशेषगुणवशीकृतजनमानसः विष्णुभक्तिपरायणः अम्बरीशो नाम कश्चिन्नृपतिः ।

विद्यया शीलेन विश्वजनीनप्रेम्णा च तस्मिन्ननुरक्ताः प्रकृतयः सुखमूषुः । निरन्तरमसौ तद्गतेन चेतसा भगवन्नाम कीर्त्तयन् कृतार्थमात्मानं मन्यते स्म ।

स हि भगवच्चरणयोर्मनः तद्गुणवर्णने वाचं, तत्कथाश्रवणे कर्णौ, तन्मूर्त्तिदर्शने दृशौ, तद्गृहमार्जने करौ, तत्पुण्यालयगमने च पादौ, नियुज्य परां प्रीतिमवाप ।

कालेन परिणते भगवदनुरागे तेनैवासौ महतीं तृप्तिमनुभवन् विरसविषयेषु वीतरागोऽयं समजनि ।

अपास्तसकलराजकर्म्मणस्तदेकतानचेतसस्तस्य रक्षणाय भक्तवत्सलेन भगवता चक्रास्त्रं नियोजितम् ।

ततोऽयं भगवत् प्रीतये भार्य्यासमेतः संवत्सरसाध्यं द्वादशीव्रतमनुतस्थौ । समाप्ते च तस्मिन् यदासौ पारणाय मनश्चक्रे, तदैव सुलभकोपो मुनिर्दुर्वासाः अतिथिधर्म्मेण समायातः ।

तश्चायं "धन्योऽस्मि यद्भवनमार्य्यस्य पादरजसा पवित्रीकृतम्" इत्यभिदधत् प्रत्युत्थानादिभिः सम्मानितवान् ।

स च महर्षिर्माध्याह्निकोपासनायै कालिन्दीजलमुपेतश्चिरयति स्म ।

नृपतिस्तु निःशेषितप्रायायां द्वादश्याम् एकतो मुनेरतिक्रमणमपरतः पारणञ्च, इत्युभयसङ्कटस्थः, कर्त्तव्यविमूढो विदुषामुपदेशमाचकाङ्क्ष, 'पारणानुरोधान्मुनिमतिक्रम्य जलपानमविरुद्ध'मिति तैरुपदिष्टः कुशाग्रेण च जलं पपौ ।

अथ समापितमाध्याह्निकोपासनो दुर्वासा राजसमीपमागतस्तपोबलेन राज्ञश्चेष्टितमवगम्य, ज्वलन्निवामर्षानलेन, निर्गमयन्निव चक्षुषः जगद्दाहकं तेजः, उन्मूलयन्निव सृष्टिप्रपञ्चमलौकिक्या शक्त्या, विधूनयन्नखिलजटामण्डलम् इदमुवाच।—

आः पाप धर्माभिमानिन्! इत्थं मामतिथिमवमन्यसे, न वेत्सि मामुदग्रतेजसं दुर्वाससं, तिष्ठ रे नरापसद! अपनयामि ते धर्माभिमानम्, अनुभूयतामद्य स्वदुष्कृतफलम्, एवमभिधाय तेजसा ज्वलन्तीं रूपिणीमिव विभीषिकां, स्वकीयां जटामेकामुच्छिद्य राज्ञः अभिचाराय निचिक्षेप।

सा तु गृहीतभीषणरूपा कालानलसन्निभा राजाभिमुखं प्रतस्थे।

अस्मिन्नन्तरे विष्णुचक्रं कृतघोरगर्जनं सहसा स्वयं तत्राविर्भूय राजाभिमुखमापतन्तीं तां शतधा विदार्य्य दुर्वाससमभिदुद्राव। स च भीतिविह्वलः प्राणरक्षार्थं यत्र यत्र धावितस्तत्र तत्रैव स्वमनुधावत् विष्णुचक्रमपश्यत्।

ततः "हा हतोऽस्मि क्व गच्छामि" एवमभिदधत् यथाक्रमं स भूतलमन्तरीक्षं पातालं दुर्गकान्तारं पर्वतगह्वरं पर्य्यटन्नपि निष्कृतिमलभमानः ब्रह्माणं शरणमाप, "का शक्तिरस्माकं विष्णुचक्रमवरोद्धुम्" इति तेनोपेक्षितश्च शङ्करम्। सोऽपि "नाहमत्र प्रभवामि" इति तमुपेक्षितवान्।

तस्मादनन्यशरणोऽसौ सकलजगदेकशरणं भगवन्तमधोक्षजमाशिश्राय। भगवानपि तमित्थमनुशशास।

ब्रह्मन्! अहमस्मि भक्तग्रस्तमानसः परतन्त्रः तन्नालमहं कृत-भक्तावमानं त्वामुद्धर्त्तुम्। ये खलु सकलविषयोपभोगमपहाय मामेवाश्रयन्तिस्म, नाहमुत्सहे कथमपि तानवहातुम्। वरमेकान्तप्रियतमां लक्ष्मीमपि त्यज्येयं, नपुनर्मयि न्यस्तसर्वस्वं भक्तजनम्।

हृन्मर्मनिहितं शल्यमिव पीडयति मां भक्तजनावमानम्। कृतं त्वया अम्बरीषं प्रति विसदृशं कर्म्म, येनेयन्ते दुर्गतिः। दुर्विनीतानान्तपः प्रभावः इत्थमेव क्लेशायकल्पते।

तदस्य प्रतीकाराय नापरः कश्चित् प्रभवति तस्मादन्यः। तत्तमेव सर्वात्मना प्रसादयाम्बरीषम्। स हि कृतागसमपि त्वामचिरादुद्धरिष्यति, अतिकोमलं नाम भक्तहृदयं न जातु काठिन्यं भजते।

एवमनुशिष्टोऽसौ पुरुषोत्तमेन अनुतापानलदग्धमानसः, अम्बरीषमुपसृत्य तत्पादाववलम्बितवान्।

स तुपादस्पर्शविलज्जितो दुर्वाससमुत्थाप्य विष्णुचक्रमित्थं प्रसादयामास। यथा भागवते ।९।५। १०–११ ॥

"यद्यस्तिदत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः।
कुलं नो विप्रदैवञ्चेत् द्विजो भवतु विज्वरः॥
यदि नो भगवान् प्रीतः एकः सर्वगुणाश्रयः।
सर्वभूतात्मभावेन द्विजो भवतु विज्वरः" ॥

ततः प्रशान्ते विष्णुचक्रे, प्रत्यावृत्तजीवनइव दुर्वासा इदमवोचत्—

अहो! महाप्राणता भगवद्भक्तानां ये किल, विनाशोद्यतानामपि कल्याणं साधयितुं यतन्ते। पुण्यसलिला भागीरथीव पावयति जनगणं यत्सन्धितिः। आज्ञावहः किङ्कर इव यदादेशमनुवर्त्तते भगवानपि। धन्योऽस्मि, फलितं मे चिरसञ्चितं तपः, यदस्मि भक्तसङ्गतः। नाशितं मे हृदयनिहितं मोहान्धतमसं भक्तगुणालोकेन।

भूपते! क्षमस्व मामसमीक्ष्यकारिणं मामवेहि मुनिवेशधारिणं श्वपचाधमम्। अयोग्यः किलायं सर्वथा मुनिनामधेयस्य। तापसजनोचितां क्षमामपहाय रोषकलुषितेन्द्रियः पतितोऽहं कृतार्थमिवात्मानं मन्ये त्वत्संसर्गात्।

इयन्ते शाश्वती कीर्त्तिश्चिरमुद्घोषयतु जगति भक्तजनमहिमानम्। एवमाभाष्य राजानमसावन्तर्दधे।

वरिशाल
व्रजमोहनविद्यालय } श्रीकामिनीकान्त विद्यारत्नः।

---

## ब्रह्मचर्य्यम्।

( पूर्वप्रकाशितात्परम् )

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान् मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते॥ १४३॥

143. He who, being ( duly ) chosen ( for the purpose ), performs the Agnyadheya, the Pakaya*gn*as, (and) the (Srauta) sacrifices, such as the Agnish*t*oma (for another man), is called (his) officiating priest.

य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ।
स माता स पिता ज्ञेयस्तन्न द्रुह्येत्कदाचन॥ १४४॥

144. That (man) who truthfully fills both his ears with the Veda, (the pupil) shall consider as his father and mother; he must never offend him.

उपाध्यायान् दशाचार्य्य आचार्य्याणां शतं पिता।
सहस्रन्तु पितॄन् माता गौरवेणातिरिच्यते॥ १४५॥

145. The teacher (a*k*arya) is ten times more venerable than a sub-teacher (upadhyaya), the father a hundred times more than the teacher, but the mother a thousand times more than the father.

उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।
ब्रह्मजन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्॥ १४६॥

146. Of him who gives natural birth and him who gives (the knowledge of) the Veda, the giver of the Veda is the

more venerable father; for the birth for the sake of the Veda (ensures) eternal (rewards) both in this (life) and after death.

कामान्माता पिता चैनं यदुत्पादयतो मिथः।
सम्भूतिं तस्य तां विद्यात् यद्योनावभिजायते ॥ १४७ ॥

147. Let him consider that (he received) a (mere animal) existence, when his parents begat him through mutual affection, and when he was born from the womb (of his mother).

आचार्य्यस्त्वस्य यां जातिं विधिवद्वेदपारगः।
उत्पादयति सावित्र्या सा सत्या सा जरामरा ॥ १४८ ॥

148. But that birth which a teacher acquainted with the whole Veda, in accordance with the law, procures for him through the Savitri, is real, exempt from age and death.

अल्पं वा बहुवा यस्य श्रुतस्योपकरोति यः।
तमपीह गुरूं विद्यात् श्रुतोपक्रियया तया ॥ १४९ ॥

149. (The pupil) must know that that man also who benefits him by (instruction in) the Veda, be it little or much, is called in these (Institutes) his Guru, in consequence of that benefit (conferred by instruction in) the Veda.

ब्राह्मस्य जन्मनः कर्त्ता स्वधर्म्मस्य च शासिता।
बालोऽपि विप्रवृद्धस्य पिता भवति धर्म्मतः ॥ १५० ॥

150. That Brahma*n*a who is the giver of the birth for the sake of the Veda and the teacher of the prescribed duties becomes by law the father of an aged man, even though he himself be a child.

अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः।
पुत्रका इति हो वाच ज्ञानेन परिगृह्य तान् ॥ १५१ ॥

151. Young Kavi, the son of Angiras, taught his (relatives who were old enough to be) fathers, and, as he excelled them in (sacred) knowledge, he called them 'Little sons.'

(क्रमशः)

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## मासावतरणिका ।

सन्ती वसन्तोद्गतपुष्पपल्लवाः हृद्या मरुन्नर्त्तितवल्लयो मृदु ।
शीतप्रदिग्धा अपि नैतदार्त्तवी चैतेऽद्य चित्रं हि विचित्रिता गतिः ॥

## उद्भट-श्लोकाः ।

आयुस्ते नरवीर ! व्रजतु सदा हेमन्तरात्रिर्यथा
लोकानां प्रियदर्शनो भव सदा हेमन्तसूर्यो यथा ।
शत्रूणां रणदुःसहो भव सदा हेमन्ततोयं यथा
नाशं यान्तु तवारयो हिमहतं हेमन्तपद्मं यथा ॥ १०९ ॥

मा याहीत्यपमङ्गलं व्रजपते स्नेहेन शून्यं वचः
तिष्ठेति प्रभुता यथारुचि कुरु प्रोक्त्याप्युदासीनता ।
इत्यालोच्य मृगीदृगञ्चलपुटेनाच्छाद्य किञ्चिन्मुखम्
व्रीडानमतया कदम्बमुकुले दृष्टिं समारोपयत् ॥ ११० ॥

श्रुतिवचनदृष्टिहरणं लक्ष्मीः कुरुते जनस्य को दोषः ।
गरलसहोदरजाता तच्चित्रं यन्न मारयति ॥ १११ ॥

श्रीविधुभूषण देवः । ( राँचि )

# शिवहास्यम् ।

(A maiden effort)

शिवः शिवया सार्द्धमर्द्धासनमध्यासीनः विहितविविधशास्त्रसंलापः सुरम्ये कैलासहर्म्ये स्थितवत्या सविनयमावेद्यतेस्म ।—नाथ ! दीर्घतरं कालं त्वया परिणीता महता सुखेनातिक्रामयम् । ऐहिकेनामुष्मिकेण च तपःसञ्चितसौभाग्येन तव प्रसादात् स्थावरजङ्गमानामधीश्वरी सर्वथैव सुखमेव सर्वदैवानुभवामि । किन्त्विदमेकमेव दुःखमापुङ्खनिखातं शूलमिव हृदयं विदारयति । इत्येवं दीर्घोष्णेन निश्वासेन भगवत्या भगवानपि दुःखमनुभवन् वदति ।

देवि ! किमिदमद्य आवितं भवत्या, यस्मै प्राणाधिकाया अपि ते दुःखम् ? तत् सत्वरमावेदय मया किमसम्पादितन्ते वर्त्तते ? तदस्मिन्नेव मुहूर्त्ते सम्पादयामि, अहं खलु शिवः भवत्या शक्त्या संयुक्त एव जगत् सृजामि पालयामि विसृजामि च । नो किं भवत्या अभिलषितमायत्तीकर्त्तुमीशे ? किमिन्द्रं शचीं लक्ष्मीं सरस्वतीं वा दासीकर्त्तुं वाञ्छसि, ? किं वा सुमेरु शृङ्गं समुत्पाटितमत्र क्रीड़ोद्यानं वाञ्छसि ? अथवा सप्तसागरान् पल्वलीकृत्य स्नातुं तव चेतो वहसि ? अहो इदमतीव दुनोति मां यत् प्रेयसीमपि भवतीं दुःखं न जहाति । इत्येवं क्रोधप्रज्वलल्ललाटकृशानोः कपर्द्दिनः समाकर्ण्य वाक्यं पीयूषमभिषिञ्चतीव हैमवती वचनमिदमब्रूत नाथ ! न तावदुक्तमसुखम्, तत्तु सर्वमेव सम्पन्नं, किन्तु भुवनसुन्दरस्य भवतो मुखे कदापि हास्यं नापश्यम्, अनयैव चिन्तया व्याकुलीकृताहं दुःखमेकमनुभवामि । इत्याकर्ण्य शिवो ब्रूते प्रिये ! दिनमेकं हसामि, भगवती ब्रूते कस्मिन् समये कथं हससि ? शिवो ब्रूते देवि ! अस्मिन् संसारचक्रे यदा यं कञ्चित् पापिनं पातालाप्यधस्तात् दुःखादपि

दुःखतरे पातयितुमिच्छामि, कञ्चिद्व्याधिमुखे कञ्चित्कारागारे कञ्चिद्वा कृपाणधारायां, कञ्चिद्वा द्वीपान्तरे, क्षिपामि, तदा तस्य बान्धवाः सम्भूय तमुद्धर्त्तुं चेष्टन्ते, केचिदौषधैः केचिद्धनैः केचिद्वा मिथ्यासाक्ष्यादिभिस्तमुपकर्त्तुं धावन्ति, आलोक्य तदा तेषां विचेष्टितमेकदा हसामि अहो मूढानां प्रागल्भ्यम् ? ।

अपि च यं पुनः पुण्यकर्म्माणं मत्सेवकम् उच्चादप्युच्चतरे सुखादपि सुखान्तरे किं बहुना ? यं शिरसा चन्द्रमण्डलस्पृशमपि नेतुं कर्त्तुं वा इच्छामि, तदा तस्योन्नतिमसहमानाः शत्रवस्तं निर्यातयितुं विचेष्टन्ते केचित्तं विषं भक्षयन्ति केचित्तमभिचारेण जिघांसन्ति केचिद्वा राजद्वारि विद्रोहमुद्भावयन्ति, इति तेषां तात्कालिकं कार्य्यकलापमवलोक्य एकधा हसामि इति ।

तदाकर्ण्य भगवती ब्रूते देव ! हासस्यैवायमवसरः, साम्प्रतम् यदीश्वरचिकीर्षितेऽपि कर्म्मणि तत् प्रतिरोद्धुं मूढा उत्तिष्ठन्ते । इति ।

श्रीमनुजेन्द्रदत्तः ।
सहकारिसम्पादकः ।

---

## ( सतां सङ्गः स्वर्गवासः )

आसीत् पुरा सर्वभूतानन्दवर्द्धनो च्यवनो नाम कश्चित् मुनिः । स च संसारमसारं मन्यमानः हिंस्रजलचरसङ्कुले गङ्गासलिले, तपस्यार्थं द्वादशवर्षं वासमकरोत् । तत्र अपास्तकामादिरिपुनिचयस्य तस्य शीलेन हिंसापरायणाः भीषणा नक्रादयोऽपि स्ववृत्तिं परिजह्रुः । भयविधुरा मत्स्या अपि भीतिमपनीय इतस्ततः परिभ्रमन्तः मुनेर्वदनसुधां पपुः । इत्थं स सर्वेषां जलजन्तूनां प्रियदर्शनः समजनि । एवं गते कतिपये काले कदाचित् करकलितपाशाः केचित् मत्स्यजीविनो निषादास्तत्रागताः । मत्स्यधारणे कृतनिश्चयाश्च तत्र अतिदीर्घं नवसूत्रविनिर्म्मितं जालं विस्तारया-

मासुः। ते च बद्धकच्छाः पयसि अवतरन्तः पाशमाकर्षन्तिस्म च। तेन नियतिवशात् बन्धनं गतेषु जलचरमत्स्येषु समासन्नविपत्पात-मवधारयन्तः केचित् शक्त्यतिशयेन जालं छित्वा ययुः।

केचित् स्वल्पायतनया छिद्रात् निर्गम्य पलायिताः। केचित् पलायितुं कृतोद्यमाः दृढ़तरं निबद्धाः। केचित् उत्पतन्तिस्म। केचिदुत्पत्य यातुमसमर्थाः पुनर्धीवरैर्धृताः। केचित् मृताः केचित् मृतप्रायाः बभूवुः। अपरे तु अनन्योपायाः तत्र पयसि विराज-मानं महर्षिं च्यवनं शरणं ययुः। एवम्भूतेषु जलचरगणेषु जालमाकृष्य धीवराः तत्रावस्थितं त्रासविकम्पितमत्स्यराजि वेष्टितं पाशसंयतं च्यवनं तटमानिन्युः। अथ ते मत्स्यजीविनः जलचरनखरैर्विदार्य्य-माणं तथाभूतं मुनिं पाशैरुद्धृतमवलोक्य सातिशयं विस्मयं प्रपेदिरे। किमयं मानवो देवो वा इति विनिश्चेतुमशक्नुवन्तः समधिकभय-विह्वला जाताः। किंकर्त्तव्यविमूढाश्च बद्धाञ्जलयः तस्यैव चरणतले निपेतुः।

जालाघातखेदजर्जरिताः मत्स्यास्तु, महता भयेन स्थलस्पर्श-मात्रेणैव छट्‌फटायमानाः बभूवुः। "दयापरा हि मुनिवृत्तयः" तस्मात्कारुण्य-रत्नाकरः स महामुनिः तान् तदवस्थानवलोक्य आत्मनः अकृतार्थतां मन्यमानः परं विषादमुपागमत्। अचिन्तयच्च अहो! परिणतः खलु महान् दैवदुर्विपाकः! क्व मे निरागसो मुनिवृत्तयः क्व चेयं समासन्ना समीपतो मे महती जीवजिघांसा! क्व मे शान्त्या निभृतमवस्थानम् क्व चायं महानुत्पातः सञ्जातः। सर्वथाहं मन्ये नियति-पराश्चि संसारभावाः, नो चेत् कथमेते युगपद्विपन्नाः सञ्जाताः। अहो! वृथैव मलमूत्राधारं देहभारं वहामि! यत् समीपतो मे दृष्टशोमिते गतिमापन्नाः सर्वथाहं पाप्मना स्पृश्ये यद्ये-तान् रक्षितुमसमर्थः। किंवा जीवितेन यद्येतान् परित्रातुं न शक्नुयाम्।

अधन्यः खल्वहं जातः यत् पाषाणवदतिनिष्ठुरं मे हृदयं नाद्यापि विदीर्य्यति, वा प्रयान्ति खल्वमी कष्टाः प्राणाः, एवं चिन्तयति तस्मिन् समवेताः मत्स्यजीविनः सत्वरमुपागम्य साश्रु-नयनाः सविनयमूचुः भगवन्! चन्तव्योऽस्माकमपराधः अज्ञाना-दस्माभिः कृतमेतत् अतिदुष्कृतं कर्म्म, साम्प्रतं अनुग्रयेन नितरां दह्यामहे। दयाधारा हि मुनयः तन्नो दयस्व, तैरेवम् अभिहितः जीवितस्य निष्फलतां दर्शयन्नुवाच "शृणुत यूयं समाहिताः अवसितं मे जीवित-प्रयोजनम्। सलिलाभ्यन्तरे एभिः सहवासेन दीर्घकाल-मत्यवाहयम्। तेन परं बन्धुत्वमजनि। तत एतान् विहाय न चण-मपि प्राणितुं शक्नोमि। एभिः सह प्राणान् हास्यामि एतान् वा आत्मविनिमयेन जीवयिष्यामि।

अथ धीवराः तस्य तद्वचः समाकर्ण्य भयातिशयेन वेपमानाः, राजानं नहुषमुपसृत्य वृत्तान्तजातं न्यवेदयन्। विदितवार्त्तस्तु स राजा सामात्यपुरोहितः सत्वरन्तत्रागत्य यथाविधि कृतसत्कारः, मुनेस्तादृशीमवस्थां पर्य्यालोच्य चिन्तितवान् अहो! महीयसी संसारपरिणतिः! अयं किल परित्यक्तसंसारभारोऽपि विश्व-जनीनेन प्रेम्णा परिभूयते! वशीकृतेन्द्रियग्रामो मुनिरपि परदुःखेन नितरां पीड्यते। निर्म्ममोऽपि ममतया समधिकमाकृष्यते! न ह्यणीयसा कारणेन विषीदन्ति एवम्विधा मूर्त्तयः। किमणीयसा वातेन टलति अटलाचलः? प्रकाशमब्रवीत् देव! किमेतत्? कुत्र ते मुनिजनोचिता निखिलसुखदुःखसंवृत्तिः क्व चेयं महीयसी विष-ण्णता? क्व च तपश्चरणेन सततमसह्यपीड़ासम्बरणम्। क्व चेयं भूयसी परदुःखकातरता, सर्वमेतन्मे विपरीतं प्रतिभाति! धीरोऽसि धैर्य्यं धत्स्व दैन्यं मागाः अयन्ते आज्ञावहो भृत्यः समायातः येन त्वं तुष्यसि यद्वा अभिलषसि सर्वस्वेन राज्येन वा सर्वथा तदहं सम्पा-दयामि, ब्रूहि ते मनोरथम्, आज्ञावहे मयि भृत्यभूते न किञ्चिद्-

दृश्यमतिदुष्करं वा विद्यते, एवं भाषमाणे तस्मिन् राजनि, महानुभावो मुनिः किञ्चिदाश्वस्य, प्रकाशमब्रवीत् राजन्! न कोऽपि नियतिलेखामतिक्रमितुं समर्थः निरस्तसंसारोऽप्यहं चिरमेभिः सह वासैः पुनः संसारी संवृत्तः साम्प्रतं मत्स्यानां विपत्तिं परिगणयन् समधिकां पीड़ामापन्नः। कैवर्त्ताश्च मत्स्यधारणव्यापारैः अत्यर्थं परिश्रान्ता जाताः। यदि मयि ते भूयसी श्रद्धा, तर्हि एभ्यो मत्स्यानां मूल्यैः सार्द्धं मन्मूल्यं प्रदीयताम्। न चेत् सर्वथाहमेतान् म्रियमाणान् मत्स्याननुयास्यामि।

अथ गृहीतोपदेशश्च राजा अस्य निष्क्रयार्थं सहस्रं मुद्राः मूल्यमकल्पयत्। च्यवन उवाच नैतन्मे समीचीनं प्रतिभाति। तदाकर्ण्य पुनरस्य लक्षं मुद्राः मूल्यत्वेनावधारिताः। महर्षिः पुनरप्युवाच एतदपि मे नोपयुक्तम्। मन्त्रिभिः संमन्त्र्य मूल्यमवधारय। अनन्तरं राजा मन्त्रिभिः संमन्त्र्य अस्य कोटिं मुद्राः मूल्यमवाधारयत्। तदाकर्ण्य मुनिरुवाच नैतदपि मे सदृशं मूल्यम्, ऋषिभिः सार्द्धं पर्य्यालोच्य मूल्यमेभ्यः प्रदीयताम्। अतः परं श्रुततद्वाक्यस्तु राजा नितरां विषादमुपगच्छन् अमात्यगणपरिवेष्टितः भूयसीं चिन्तामापेदे। एतस्मिन्नन्तरे कश्चित् गवीगर्भजातः फलमूलाशी मुनिः समायातः एनमुवाच च, "राजन्! सर्वभूतेषु गोब्राह्मणौ साधुभिर्निरन्तरं पूज्येते नास्त्यनयोः काचित् मूल्यकल्पना अतोऽस्य मूल्यं गामिकामवधारय।

तेन गवीजमुनिना तथादिष्टः स राजा स्वामात्यपुरोहितैः सार्द्धं परं परितोषमेत्य महर्षेर्मूल्यं धेनुमेकां संधार्य्य तेभ्यो ददौ। महर्षिश्च्यवनस्तु स्वमूल्यं यथायोग्यम् अवगच्छन् विविधगुणकीर्त्तनैः गोमाहात्म्यं वर्णयमास।

अथ बद्धाञ्जलयो निषादाः सविनयं महर्षिमूचुः भगवन्! धन्या वयं यदत्रभवता अकिञ्चनानामस्माकं शिवाय अनुष्ठितमेतदलि-

कठोरं कर्म्म, का कथा धनस्य ? जीवितविनिमयेनापि नास्यस्य काचित् प्रतिक्रिया, काचः किं काञ्चनेन समं सादृश्यं भजते ? चन्द्रालोके वा शोभते किं खद्योतिका ? देव ! सप्तपदगमनेनैव बन्धुतां कीर्त्तयन्ति साधवः तदस्माभिः सह संवासात्, सह भाषणात् सहगमनाच्च दृढ़तरं बन्धुत्वं जातम्। तदत्रभवता क्षन्तव्या वयं कृतागसः। अस्मान् प्रति कृतप्रसादेन धेनुरियं प्रतिगृह्यताम्। तैरित्थ-मभिहितः स महानुभावः, प्रतिग्रहं वः स्वीकरोमि यूयमिदा-नीमशेषपापराशिनिर्मुक्ताः शाश्वतसुखनिवासं स्वर्गवासं प्रयात इत्युक्त्वा विरराम। अथ तस्य महर्षेः प्रभावात् पवि-त्रात्मानः मत्स्याः निषादाश्च परया मुदा स्वशरीरैः स्वर्गं गताः। तादृशमलौकिकं वृत्तमवलोक्य राजा नहुषः सातिशयं विस्मयं प्राप। अथ च्यवनगवीजौ नृपतेर्नहुषस्य परार्थं महदनुष्ठानं विदित्वा, सदा ते धर्मे मतिर्भूयादिति आशीर्विधाय स्वं स्वं स्थानं जग्मतुः। भूपतिरपि निजनिकेतनम् आजगाम।

श्रीकालीशचन्द्रभट्टाचार्य्यः
शिक्षक व्रजमोहन विद्यालय।

---

## कुमारबन्धुः।

पूर्वप्रकाशितात्परम्।

काममञ्जरी च तद्दोहनार्थं वसुपालिताय तस्य हृतानि धनानि दत्तवती। अपि च अवशिष्टानि सर्वाणि धनानि दत्त्वा दरिद्रेभ्यः स्वयं रिक्तहस्ता आसीत्। ततश्च "मम भक्ताका काम-मञ्जर्य्या हृतादि" इति धनमित्रेन विज्ञातेन राज्ञा सा दण्डिता आसीत्। अर्थपतिश्च मिथ्याकृत चौर्य्यापराधेन हृतसर्वस्वः सन् राजादेशेन निरवास्यत। धनमित्रश्च ततः कुलपालिकामुपयेमे। सिद्धसङ्कल्पश्चाहं रागमञ्जरीगृहं हेमरत्नपूर्णमकरवम्।

एकदाहं पथि राजपुरुषैः निशि चौर इति ज्ञात्वा निबद्ध आसम् कारागारे। मया सह गता शृगालिका गृहीतसङ्केता गतवती। ममैव सङ्केतेन सिंहवर्म्मकन्याम्बालिकापाणिग्रहणेच्छुः काराध्यक्षः कान्तकः हतो मया अवटकारकेण। ततश्च कारागारात् पलायितोऽहं नागरिक पुरुषैः पुनर्बद्धः शृगालिकावाक्यफलेन प्रमुक्तश्च आसम्। ततश्च रागमञ्जरीगृहं गत्वा तामाश्वास्य निशाशेषमनयम्। सिंहघोषश्च कान्तकपदे प्रतिष्ठित आसीत्। तेन च पूर्वखनितेन गर्त्तेनाहमम्बालिका समीप आगतवानस्मि। इदानीञ्च चण्डवर्म्मा-वरुद्धं सिंहवर्म्माणं प्रमुच्य निहत्य च तं चण्डवर्म्माणं सिंहवर्म्म साहाय्यार्थमागतैर्भवद्भिः सम्मिलितोऽहम्। इति श्रुत्वा राजवाहनो हृष्टः सन् उपहारवर्म्माणं स्वचरितं कथयितुमादिदेश। सोऽपि आचचक्षे।

उपहार वर्म्म चरितनामस्तृतीयोच्छ्वासः।

नृपतिनन्दन! अहमपि भवदन्वेषणार्थी विदेहेषु गत्वा कुत्रापि मठिकायां मम रक्षयित्रीं धात्रीमपश्यम्। तत एव विकटवर्म्मा-दिभिः स्वराज्यलुब्धकैर्निबद्धौ पितरौ प्रियंवदाप्रहारवर्म्मणौ। पितृ-मातृबन्धनमुक्तिकामोऽहं विकटवर्म्मपत्नीं मत्तकाशिनीं कल्प-सुन्दरीमुपरन्तुञ्च यन्त्रच्छलेन विकटवर्म्माणं निपात्य ज्ञात्वा तदभि-प्रायं विकटवर्म्मा इति नाम्नैव राज्येश्वरोऽभवम्। खुन्नतातच्छ-लेन पितरौ अमोचयम्। भ्राता च विशालवर्म्मा पुण्ड्रदेशगमना-न्निवारितः। क्रीतञ्च वणिजः उपयुक्तमूल्येनैव महार्घं रत्नम्। उक्तञ्च मया शतहलिर्नायं मे व्यापाद्यस्तातपादः प्रहारवर्म्मा अतएव इदानीं नैव घातव्योऽनन्तसीरः। इति ततश्च पितृबन्धोः सिंह-वर्म्मणो व्यसनं श्रुत्वा भवता शुभदर्शनं लब्धमिदानीम्। इति श्रुत्वा राजवाहनोऽर्थपालं प्रति नयननिःक्षेपमकरोत्। सोऽपि आचचक्षे।

अर्थपालचरितनाम चतुर्थोच्छ्वासः।

अहमपि वाराणसीं गत्वा श्रुत्वा च पूर्णभद्रात् पितृव्यसनं सिंह-मातुरपि काशीराजकन्यायाः कान्तिमत्यास्तद्दूरीकरणार्थमिहा-सम्। मया निक्षिप्तेन सर्पेण वध्यस्थाने नीतः पिता दष्टो मृतश्च। पुनश्च तस्य शरीरं मातृगृहं नीत्वा तमजीवयम्। सिंह-घोषनिपातनार्थं अवट-कारकेण मया अवटमार्गे चण्डसिंहज्येष्ठ-पुत्रचण्डघोष कन्या मणिकर्णिका दृष्टा आसीत्। मम भार्य्या भवि-ष्यति इति ज्ञात्वा सा तत्र तत्पितामहेन रक्षिताभूत्। ततश्च सिंह-घोषं निबद्ध्य शृङ्खलेन मत्पितुः समीपमनयम्। पिता च मे तत-स्तत्र राजा अभूत्। मया परिणीता च मणिकर्णिका। इदानीं सिंहवर्म्मसाहाय्यार्थमेत्य भवतां सुखमेलनं लब्धवानस्मि। इति श्रुत्वा राजवाहनं सिंहघोषं मोचयितुमादिश्य प्रमतये स्वचरितं कथयितुमादिदेश। स च आह।

प्रमतिचरितनाम-पञ्चमोच्छ्वासः।

राजनन्दन! गतोऽहं भवदन्वेषणार्थं कुत्रचिद्वने। सुप्तोत्थितेन मया कुत्रचित् राज-वासोपयुक्ते गृहे कांचित् बाला दृष्टा। पुनरपि निद्रोत्थितेन मया तद्बालाविहीनं तदेव वनं दृष्टमासीत्। तत एव जातखेदश्चाहं तारावल्याः श्रावस्तीश्वरधर्म्मवर्द्धनकन्या नव मालिका सा इति श्रुत्वा च मदनुरक्ता नवमालिका इति तस्यैव मित्रब्राह्मणस्य कन्याछलेन राजान्तः पुरं गत्वा कार्त्तिकपूर्णिमा स्नानच्छलेन ततः पलायित्वा पुनरपि अमुष्यैव जामातृछलेन ब्राह्मणशापभयाकुलस्य धर्म्मवर्द्धनस्य अनुमत्यैव नवमालिकामुप-यम्य इदानीं सिंहवर्म्मसाहाय्यार्थमागत्य भवतां शुभदर्शनं लब्ध-वानस्मि। इति श्रुत्वा राजवाहनो मित्र-गुप्ताय तच्चरितं कथयि-तुमादिदेश—सोऽपि आरब्धवान्।

मित्रगुप्तचरितनाम-षष्ठोच्छ्वासः।

देव! भवदन्वेषणार्थी अहं दामलिप्तं गत्वा श्रुतवान् कोशदासात्

"सुह्मपतिस्तुङ्गधन्वा भगवतीमाराध्य पुत्रं भीमधन्वानं कन्याञ्च कन्दुकावतीं प्राप्तवान्। कन्दुकावती कन्दुकोत्सवे स्वस्य अनुरूपं पतिं प्राप्स्यति। भीमधन्वना च तस्याधीनेन स्थातव्यमिति दैवतादेश इति। कोशदासश्च चन्द्रसेनामुपनेतुमभिलाषुकोऽभूत्। भीमधन्वापि चन्द्रसेनां चकमे। ततश्च तस्मिन्नेव समये कन्दुकावती कन्दुकोत्सवे मां दृष्ट्वा मामेव पतित्वे स्थापयितुमभीष्टवती। तेन क्रुद्धो भीमधन्वा मां समुद्रे चिक्षेप। तत्र च यवनसैन्यगणेन रक्षितोऽहं दैवदुर्विपाकादागतं भीमधन्वानं विजित्य निबद्ध्य च समुद्रतीरमेत्य प्रश्नकारिणो राक्षसस्य प्रसादात् कन्दुकावतीं लब्धवानस्मि। तत स्तौ नीत्वा दामलिप्ते आगतवानस्मि। तुङ्गधन्वा एतद्दृष्ट्वा जातहर्षो मह्यमेव कन्दुकावतीं दत्तवान्। कोशदासश्च चन्द्रसेनामुपयेमे। भीमधन्वा च ममाधीनत्वं स्वीकृतवान्। इदानीं सिंहवर्म्मसाहाय्यार्थमेत्य भवतां दर्शनं लब्धवानस्मि इति। ततश्च राजवाहनादिष्टो मन्त्रगुप्तोऽवदत्।

### मन्त्रगुप्तचरितनामसप्तमोच्छ्वासः।

राजाधिराजनन्दन! अहमपि भवदन्वेषणार्थी कलिङ्गान् गत्वा निपात्य सिद्धतापसं किङ्करसाहाय्यात् कर्द्दनकन्यया कनकलेखया सह गतवांश्च कलिङ्गान्तः पुरम्। ततश्च कनकलेखार्थिनान्ध्रनाथेन जयसिंहेन नीतः सपरिजनो बद्धश्च कर्द्दनः तत्र च गत्वा कनकलेखा उन्मादरोगग्रस्ता आसीत्। अहमपि तत् श्रुत्वा संन्यासिवेशेन गत्वा अन्ध्रं गर्त्तपथेन सरसि जयसिंहं निपात्य देहान्तरच्छलेन तन्नाम्ना च प्रशंस्य सन्न्यासिनो गुणान् तद्राज्याधीशो भूत्वा कनकलेखां परिणीतवानस्मि। ततश्च श्वशुरराज्यमपि लब्ध्वा अधुना सिंहवर्म्मसाहाय्यार्थमेत्य भवतां सुखदर्शनं लब्धवानस्मि। इति श्रुत्वा सहर्षस्य राजवाहनस्यादेशात् विश्रुतश्च स्वचरितम कथयत्।

विश्रुत चरितनामाष्टमोच्छ्वासः।

राजेन्द्रनन्दन! अहमपि—भवदन्वेषणार्थी कुत्रचिद्वने गत्वा भास्कर वर्म्मरचितारं नालोजङ्घं कूपादुद्धृत्य तत्र एव श्रुत्वा विदर्भेश्वरपुण्यवर्म्मपुत्रानन्तवर्म्मणो मरणकुटिलस्य सहचरस्य विहारभद्रस्य कुबुद्धया,छिद्रज्ञस्य चन्द्रपालितस्य छलेन अश्मकेन्द्रस्यमित्राद् भानुवर्म्मणश्च। ततश्च पलायितायाः खभ्रातृभिरुत्पीड़िताया भास्करवर्म्मजननीवसुन्धराया आदेशाद् भास्करवर्म्माणं नीत्वा तस्य इहा गमनं इति। ततश्च विदर्भादागतस्य व्याधस्य सुखात्भास्करवर्म्मभग्नीमञ्जुवादिनीमुपनेष्यति इति श्रुत्वा जातक्रोधोऽहं माल्यदानछलेन मञ्जुवादिन्या हत्वा तं कस्मादपि मठात् भास्करवर्म्माणं क्रोड़े कृत्वा देवप्रसादादयं मया रचित इति उक्त्वा च सञ्जातप्रत्यय स्तामिव मालां धृत्वा मञ्जुवादिनीमुपानयम्। ततश्च अनुकूलैः प्रजाकुलैः सह अश्मकेन्द्रं निपात्य भास्करवर्म्माणं तत्पित्रासनेऽस्थापयम्। ततः सिंहवर्म्मसाहाय्यार्थमेत्यात्र भवतां दर्शनं लब्धवानस्मि इति।

## उत्तरपीठिका।

ततश्च तत्रस्थाः कुमारा अष्टौ पुष्पोद्भवसोमदत्तेतरे सर्वे वामलोचनया समं सोमदत्तमानाय्य मानसारं जित्वा पुष्पोद्भवं प्रमुच्य पुष्पपुरीं गतवान्। वामदेवादेशाद् राजवाहनः पित्रासनमाश्रितवान्। इतरे च नव कुमारा राजवाहनाज्ञां शिरसि कृत्वा स्वेन स्वेन विजितानि राज्यानि अधिकृतवन्तः। सर्वे च सयत्नं प्रजाः पालयामासुः।

काव्यविनोदेन वैद्यवल्लभान्वयजेन च
श्रीदुर्गानारायणसेन गुप्तेन विरचितः।

## आत्मनिवेदनम् ।

( तृतीयः सर्गः )

यस्याङ्गतानल्पसमुत्थनार्चिःकणोऽपि वाङ्मानसयोरतीतः ।
न शारदे पार्वणयामिनीशे द्रुतं सखे ! मानस ! तत्र गच्छ ॥ १ ॥
तमः स्वयं यत्र तमोमयं सत् चिरात् प्रयत्नैरपि कालमाप ।
नैव प्रवेष्टुं रुचिरे कथञ्चित् ( तमः सजातेः सुतरां कथा का ) ॥ २ ॥
पवित्रसौन्दर्य्यविधानबीजे यस्मिन् सदा मूर्त्तिमतीव शान्तिः ।
विराजते तद्गतमानसेभ्यो ददाति चानन्दमनन्तधाम्नि ॥ ३ ॥
क्षमागुणेनैव विनिर्म्मिता या सृष्टिर्विरुद्धैरपि वस्तुसंघैः ।
अध्युष्यमानापि, विरोधनामलेशैस्तो नो दृहशे कदापि ॥ ४ ॥
सत्कर्म्ममालार्ज्जितदिव्यभासां तेजस्विनां यत्र किल प्रयाताम् ।
अनन्तसन्तापकराः समन्तात् कर्णेषु संसार-वरा न यान्ति ॥ ५ ॥
सच्चिन्मये सान्द्रपवित्रधाम्नि न विद्यते भस्मलवोऽपि कश्चित् ।
असत्य-हिंसाक्लम-शत्रुतानां कामस्य लोभस्य मदस्य चात्र ॥ ६ ॥
यदाश्रितानां विषमाखिलतापा आध्यात्मिको वा ननु भौतिको वा ।
न दैविको वा खर-घातिनोऽपि समन्ततो वर्त्तितु मुत्सहन्ते ॥ ७ ॥
यदाश्रितेभ्यः पितृ-मातृ-पुत्र-परिग्रह-भ्रातृ-सुतस्य नित्यम् ।
वित्तस्य वन्धोर्यशसश्च चिन्ता विभेति भास्वत्त इवान्धकारम् ॥ ८ ॥
यत्र प्रयाता बहु शोचतुष्टिक्रदे निमज्जन्ति निरन्तरं नु ! ।
न यान्त्यसंख्या वयशः पिपासाः गच्छन्ति नो दुःख कणावभासम् ॥९
यदाश्रिता दावहुताशदग्ध-कुरङ्गवच्चञ्चलतां भजन्तः ।
समन्ततो नैव चरन्ति, किन्तु दिव्यं मनोऽतीतसुखं प्रयान्ति ॥ १० ॥
न यत्र वित्तस्य वृथाभिमानो न रूपमाहात्म्यसमादरो वा ।
न वक्रवाक्यस्फुरणाद् यशांसि न बुद्धिमत्त्वं परपीड़नेन ॥ ११ ॥
नैयायिकानाञ्च महान् वितर्को वैज्ञानिकानाञ्च सुतीक्ष्णदृष्टिः ।

पौराणिकानाञ्च पुराणवार्त्ता न दर्शनस्यापतति प्रसङ्गः ॥ १२ ॥
संसारचिन्तानलराशयो नो यदाश्रितान् दग्धुमहो समर्थाः ।
न शत्रु-वक्रोक्त्यवलेपसंघो हिंसाकुठारोऽपि परं निहन्ति ॥ १३ ॥
वृथाभिमानो मद-लोभ-मोहाः क्रोधो जिगीषामितवासना च ।
न मत्सरत्वञ्चनु शक्नुवन्ति यदाश्रितान् स्प्रष्टमहो कथञ्चित् ॥ १४ ॥
यदाश्रितस्यामितकामनापि विशालशय्यामधिशय्य चारु ।
निद्रास्यति प्राणगता चिराय प्रजागरिष्यत्यथ नो कदापि ॥ १५ ॥
परापकारक्षमवीरभावः परोन्नतौ कातरता सुतीव्रा ।
यस्यां भुवि स्वार्थपरत्वचिन्ता विपक्षदुःखप्रियतापि नैव ॥ १६ ॥
सपत्नभीतिर्धरणीश्वराणां दण्डोऽथवा हिंस्रजसाध्वसानि ।
प्रभुप्रहारान्नभयं कदाचित् संसारं निष्पेषणमत्र किञ्चित् ॥ १७ ॥
न यत्र दातुर्नयने सुखस्य वक्रोत्तरं नाम विलोकयन्ति ।
भिक्षाजुषः कोपपरीत मूर्त्तेः परानन प्रेरितलोलनेत्राः ॥ १८ ॥
राजा प्रजा नो, न धनी दरिद्रः, साधुर्नदुष्टो, गुणवान् न मूढः ।
प्रभुर्नभृत्यो युगपत् पवित्रे नो उत्तमर्णः खलुनाधमर्णः ॥ १९ ॥
पादप्रहाराद् भयतः प्रभूणां न यत्र चिन्ता-शिखिनो दहन्ति ।
भृत्यस्य चेतोऽपि समाहितस्य प्रभूपकारव्रतदीक्षितस्य ॥ २० ॥
यस्मिन् महानास्तिकतर्कवादैः सतां सुबुद्धीरपि मोहयद्भिः ।
न गृह्यतेऽभद्रकरैः कदाऽपि जन्तुः सदा शान्तिमयस्वभावः ॥ २१ ॥
कापट्यमन्त्राक्षरदीक्षितानां स्वं धार्म्मिकं बोधयितुं रतानाम् ।
वाचस्पतीनां परदोषघोषे संसारिणां यत्र गतिर्निषिद्धा ॥ २२ ॥
न जन्मिनां नापि समाहृतीनां सम्बन्धलेशोऽस्ति कियानपीह ।
हा अम्ब ! हा तात ! हताशचित्त ! हामित्र ! हापुत्र ! इति स्वनो न २३
पवित्रपुण्याम्बुधिवारिधौत-तमोमलानां चरतां न यत्र ।
ऐश्वर्य्य-विद्या-कुल-मान-रूपैर्युवत्वगर्वैश्च पृथक्त्वबुद्धिः ॥ २४ ॥
सुखास्पदे यत्र सपत्नजातच्छिद्रानुसन्धानविवादविद्या ।

नाधीयते बालकमण्डलीभिरध्याप्यतेऽध्यापकपुङ्गवैर्न ॥ २५ ॥
अहं भवानेष स यत्र शत्रुर्मित्रं प्रजा भूपतिरस्य मे ते ।
एतस्य तस्येति विचित्रबुद्धिर्नवर्त्तते दुःखसहस्रदात्री ॥ २६ ॥
कल्पान्तकालोदिततीव्रवात-सन्ताड़िताम्भोधि-तरङ्गमालाः ।
यथा, तथानल्पसुखानि यत्र धारासहस्रेण भवन्ति नित्यम् ॥ २७ ॥
आशा तरूणां सुदृढ़ः कुठारस्तृष्णातृणानां विषमो दवाग्निः ।
दुःखाद्रिपक्षस्य सुतीक्ष्णवज्रं शान्तेः परंधाम यदद्वितीयम् ॥ २८ ॥
गिरामतीतस्य सदा पवित्रोपादानबीजेन विनिर्म्मितस्य ।
कीटाणुकीटोऽपि विभासिनोऽस्य स्वर्गस्थितेभ्योऽपि महान् सुरेभ्यः २
पुण्यात्मनो विश्वविधातृपादसरोजपीयूष-पिपासुचित्ताः ।
संसारसिन्धोः प्रखरं तरङ्गं यन्नाम संस्मृत्य सन्तरन्ति ॥ ३० ॥
शुभांशुराशिर्दिननाथराजिर्नक्षत्रमालानलसंहतिश्च ।
सुरेन्द्रपङ्क्तिर्मुनिसिद्धसंघो विराजते यत्र सुखैकधाम्नि ॥ ३१ ॥
निर्वासनस्यैव विवेशनाय सुवर्णसौधो रुचिरो विभाति ।
आत्मायनस्यापि समाहितस्य मनः सदा विस्मयतां प्रयाति ॥ ३२ ॥
समो दमो यत्र शुभा तितिक्षा श्रद्धा ज्वलन्ती रमणीयदीप्तिः ।
क्षमा दया भूतहितानुरागो देदीप्यते मूर्त्तिमतीव भक्तिः ॥ ३३ ॥
रे मूर्ख चञ्चलमनोऽखिलविश्वबन्धोस्तद्दुर्लभं परमधाम गिरामतीतम्
गत्वा सुखेन सततं जगदेकसत्यं ध्यात्वात्मजीवनमहो सफलीकुरुष्व ३४

श्रीभवदाचरण तर्कचूड़ामणिप्रणीते
आत्मनिवेदने गन्तव्यस्थाननिर्द्देशस्तृतीयः सर्गः ॥

( शिवमस्तु )

श्रीभवदाचरण तर्कचूड़ामणिः—
नोयाखाली—सोमपाड़ा—

# FOR ENTRANCE STUDENTS.

## AS GIVEN BY THE HEAD PUNDIT,

OF

*Hare School.*

☞ Questions with answers on Sanskrit Entrance course for 1896,

Explain the Samasa in हितोपदेश:।

Ans:—हितानामुपदेशो यत्र स:। हितोपदेशमधिकृत्य कृतो ग्रन्थ: स हितोपदेश: "अधिकृत्य कृतं ग्रन्थे" इति अण्। अथवा हित: हितकर: उपदेशो यत्र ग्रन्थे स:। इति बहुब्रीहि:।

Explain in Sanskrit :—

सिद्धि: साध्ये सतामस्तु प्रसादात्तस्य धूर्जटे:।
जाह्नवीफेनलेखेव यन्मूर्द्धि शशिन: कला॥

Ans :— यत् यस्य मूर्द्धि शिरसि शशिन: चन्द्रस्य कला षोड़श भाग: जाह्नवीफेनलेखा गङ्गाया: (शिर:स्थिताया:) फेन राजीव वर्त्तते तस्य धूर्जटे: शिवस्य प्रसादात् अनुग्रहात् सतां साधूनां साध्ये (विषये) सिद्धिरस्तु इति।

Derive—धूर्जटे:, पाटवं, प्राज्ञ:,

Ans—धूरिव जटा अस्येति पृषोदरादित्वात् इ:। पटोर्भाव: पटु+अण्। प्र, प्रकृष्टम् आ सम्यक् जानाति, प्र+आ+ज्ञा+क:। अथवा प्र+ज्ञा+क: स्वार्थे अण्।

Expound the Samasa in—जाह्नवीफेनलेखा & अजरामरवत्।

Ans— जाह्नवी फेनलेखा-फेनस्य लेखा, ६तत्, जाह्नव्या: फेन-

लेखा, इतत्। अजरामरवत्—नास्ति जरा यस्य स अजरः, न मरः अमरः, अजरश्च अमरश्च "तेनतुल्यम्" अजरामर+वत्।

Parse :—केशेषु & मृत्युना।

Ans—अवच्छेदे सप्तमी। गृहीतइत्यस्य कर्त्तरि तृतीया।

Explain in Sanskrit :—

( a ) अजरामरवत् प्राज्ञो विद्यामर्थञ्च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्म्ममाचरेत्॥

Ans—प्राज्ञः पण्डितो जनः अजरामरवत् सुस्थकायवत् चिरजीविवच्च विद्याम् अर्थं धनञ्च चिन्तयेत् उपार्जयेत्। मृत्युना कालेन केशेषु गृहीत इव धर्मं सदाचारादिकम् आचरेत् कुर्य्यात्। विद्याधनं धर्मश्च सदा समर्जितव्यमिति भावः।

( b ) यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्।
कथाच्छलेन वालानां नीतिस्तदिह कथ्यते॥

Ans—यत् यतः नवे नूतने भाजने पात्रे लग्नः संयोजितः मुद्रितः संस्कारः चित्रशिल्पादिः न अन्यथा न विकृतो भवेत्, न प्रोञ्छ्यते। तत् तस्मात् इह ग्रन्थे वालानां कोमलहृदयानां सम्बन्धे, कथाच्छलेन प्रस्तावप्रसङ्गेन नीतिः कथ्यते,उच्यते मया इति शेषः।

Where is Pataliputra and what is its Modern name?

Ans :— Name of the capital of Magadha, near the confluence of the Sone and the Ganges, supposed tobe the ancient Palibothra, and the modern Patna –

Translate into English :— (M. W.)

अनेक संशयच्छेदि परोक्षार्थस्य दर्शकम्।
सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः॥
यौवनं धनसम्पत्तिः प्रभुत्वमविवेकता।
एकैकमप्यनर्थाय किमु तत्र चतुष्टयम्॥

Ans :— Surely he is blind, who is without the knowledge of the Shastras, which being the destroy·er of manifold doubts, and the pioneer ( as it were ) of probable truths (as opposed to selfevident truths), are, as eyes unto everybody.

(6) Youth, riches, power and neophytism ( Want of experience ) each of them separately are enough for (leading one to) evil, what might not happen (i. e. utter ruin will follow) when these four combine ?

Give the substance of the following in simple Sanskrit :—

(a) कोऽर्थः पुत्रेण जातेन यो न विद्वान्नधार्म्मिकः ।
काणेन चक्षुषा किम्वा चक्षुः पीड़ैव केवलम् ॥

(b) अजातमृतमूर्खाणां वरमाद्यौ न चान्तिमः ।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥

Ans :—(a) अतः सर्वं एव विद्वान् धार्म्मिकश्च भवितुं यतेत, तेनैव पिता सन्तुष्यति पितरि च सन्तुष्टे सुखी स्यात् ।

(b)मूर्खः पुत्रः सर्वथा अप्रार्थनीयः ।

Explain in Sanskrit :—

स जातो येन जातेन याति वंशःसमुन्नतिम् ।
परिवर्त्तिनि संसारे मृतः को वा न जायते ॥

Ans :—येन जातेन उत्पन्नेन वंशः कुलं समुन्नतिं याति प्राप्नोति स एव जातः स सफलजन्मा इत्यर्थः ( अन्यथा ) परिवर्त्तिनि आवर्त्तनशीले संसारे जगति को जनः मृतः सन् न पुनरुत्पद्यते अपि तु सर्वं एव जायते इत्यर्थः ।

Give the Vocative singular of अम्बा in ते नाम्बा यदि स्तुतिनी।

Ans :— अम्ब ! ( note here – it is not अम्बे )।

What are the 6 सुखानि referred to in Page 3–

Ans :—अर्थागम ( 1 )

नित्यमरोगिता ( 2 )

प्रिया, प्रियवादिनी भार्य्या ( 3 ), ( 4 )

वश्यः पुत्रः ( 5 )

अर्थकरी विद्या ( 6 )

Explain fully :—

यदभावि न तद्भावि भावि चेन्न तदन्यथा।

इति चिन्ताविषघ्नोऽयमगदः किन्न पीयते ? ॥

Ans :—भवितीति भू+णिन्। भावी। न भावि अभावि, यत् किञ्चित् कार्य्यादिकम् अभावि न भवन योग्यं, तत्कार्य्यादिकं न भावि न भविष्यति, असम्भाव्यं नोत्पद्यते। ( तत् ) कार्य्यादिकं चेत् पक्षान्तरे यदि भावि भवनयोग्यं अवश्यम्भावि स्यात् ( तदा ) तस्य अन्यथा असम्भवो न भवतीतिशेषः—इति एवं या चिन्ता सैव विषं तत् हन्ति, चिन्ताविष+हन+टक्। चिन्ताविषघ्नः चिन्तारूपविषनाशकः अगदः औषधं किं कथं न पीयते न सेव्यते ? लोकेन इति शेषः। यन्नभवितव्यं तन्नैव भवेत्, यच्च भवितव्यं तदवश्यमेव भविष्यतीत्येवं दुश्चिन्तानिवृत्तिः सर्वैः कर्त्तव्या।

(क्रमशः)

---

# FOR ENTRANCE STUDENTS.

———— × ————

AS GIVEN BY THE HEAD PUNDIT

OF

HINDU SCHOOL

☞ Questions with Answers on Sanskrit Grammar and Composition.

Q 1 :— Write an essay on 'Learning' in sanskrit, of about 10 lines.

Ans:— निखिले जगति विद्यैवैका जयति। विद्यया नरोऽप्यमरायते, दीनोऽपि राजायते, कुरूपोऽपि सुश्रीयते, किमधिकं विद्वान् राजभिरपि पूज्यते, शत्रुभिरपि आद्रियते। एकत्र स्थितोऽपि दश दिशो भाषयते। विद्या चक्षुष्मतोऽपि नेत्रमधिकम्। धनिनोऽपि अविनश्वरं धनम्। का कथा अन्यस्य दरिद्रस्य वा? ये खलु आलस्यपरतन्त्रा वा अतिक्रान्तगुरुशासना वा वाल्ये विद्यां नार्जयन्ति ते निरन्तरमात्मानम् अनुशोचिष्यन्ति दुःखेनैव जीवनं यापयिष्यन्ति च। किमधिकं विद्यया विहीनानां सम्यक् मनुष्यत्वमपि नोपजायते, अतः विद्यार्ज्जने आलस्यं नैव कर्त्तव्यम् अहोरात्रं विद्यानुशीलनमेव वालानां परमं तपः।

Q 2. :— Write out the *Etymological meanings* of the following words.

चन्द्रः, संसारः, सूर्य्यः, राजा, पुत्रः, शास्त्रं, पण्डितः।

Ans 2 :—चन्दयति चन्द + रक्, आह्लादकर्त्ता। संसरति—संसृ +

घञ्, जगत्, शरीरधारणम्। सरतीति सृ+क्यप्, सदागमनशील:। सूयते इति वा सू+क्यप् (निपात:) जगदुत्पत्तिकारणम्। राजते इति राज+कन्, दीप्तिमान्। पुत्र: (नरकविशेषात्) पुत्+त्रै+ड:। पुन्नामकनरकत्राणकर्त्ता। शास्तीति – शास्+इन्। शासनकर्त्ता। पण्डा अस्यास्तीति पण्डा+इत। सदसद्विवेकी।

Q 3 :—Give the historical allusions of the 2 names भागीरथी and जाह्नवी।

Ans 3 :—पुरा कपिलऋषिशापात् सगरसुता: भस्मीभूता:, तेषामुद्धरणाय क्षितौ गङ्गामानेतुं भगीरथस्तपस्तेपे, तामानिनाय च, अतएव सा "भागीरथी" हिमालयादवतरणकाले च गङ्गा जह्नुमुनिना पीता, तेन च पुन: जानुन: वहिष्कृता अतएव तदपत्यरूपत्वात् "जाह्नवी"।

Q 4 :— what do you understand by अवच्छेदे ७मी and निर्द्धारे ७मी।

Ans4:-यत्किञ्चित् देशादिकं लक्षयित्वा गुणादिकम्प्रतीयते तत्रावच्छेदे सप्तमी यथा गुरुं चरणयोर्गृह्णाति। अयमुदरे स्थूल: इत्यादि। यत्र बहूनां मध्यात् क्रियागुणद्रव्यै: केचित् पृथक् क्रियन्ते तत्र निर्द्धारे सप्तमी। यथा गोषु कृष्णा बहुक्षीरा, गच्छत्सु रामो दुर्बल:।

Q 5:—Explain in simple sanskrit the following sloka, and expound the Samases of the underlined words, showing their connection with विद्या & द्रव्य in the firstline of the sloka.

सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्।<br>
अहार्य्यत्वात् अनर्घत्वात् अक्षयत्वाच्च सर्वदा॥

Ans 5:-सर्वद्रव्येषु सकलवस्तुषु मध्ये विद्यैव अनुत्तमम् अत्युत्तमं द्रव्यं धनम् आहु: पण्डिता इति शेष:। (कथमिति) अहार्य्य-

त्वात् अपहरणायोग्यत्वात्, अनर्घत्वात् अमूल्यत्वात्, सर्वदा अक्षय-त्वात् व्ययेऽपि परिपूर्णस्थितत्वात् ( विद्याया: ) इत्यर्थ: ।

न हार्योऽहार्य्य: अहार्य्यस्य भाव: तस्मात्। नास्ति अर्घ: मूल्यं यस्य तस्य भावस्तस्मात्। नास्ति क्षयो यस्य तस्य भावस्तस्मात्। विद्या अत्युत्तमं द्रव्यं हिरण्यादिकन्तु तदपेक्षया निकृष्टं, यत: हिरण्यादीनामस्तिमूल्यनिर्णय: न तु विद्याया:। व्ययेन हिरण्यादि क्षीयते न तु विद्या सापुनर्व्ययेऽपि प्रचीयते।

Q 6.:—Change the voice of the following.

के वदन्ति धार्म्मिकं त्वाम्। सा मामाह कृपापरा।

अपिते चरणौ मूर्द्ध्ना स्पृशाम्येष प्रसीद मे।

कौशल्यां वा सुमित्रां वा त्यजेयमपि वा श्रियम्॥ वीरमाह्वयते वीर:। विश्वात्मा विश्वमसृजत।

Ans 6:—कैरुच्यसे धार्म्मिकस्त्वम्। तया अहमूचे कृपापरया। अपि ते चरणौ मूर्द्ध्ना स्पृश्येते अनेन मया।

कौशल्या वा सुमित्रा वा त्यज्येतापि वा श्री:॥ वीर आहूयते वीरेण। विश्वात्मना विश्वमसृज्यत।

Q 7. Correct the following :—

कस्तेजानन्ति महिमाम्। देहि विप्रान् शतान् अश्वान्। सो देवो भवता सेव्यम्। यो नो त्राता भवार्णवात्। विरमस्वासत: कर्म्मात्। सत्पथ्यानं प्रतिष्ठ त्वम्। गङ्गास्नातुं व्रजत्येषा। न वार्य्यो भवत: प्रभो:।

मातर्य्युपरते वन्यो गच्छेर्भागीरथीतटम्।

मे वाक्यं श्रवणं कृत्वा विदधेत् तव चेन्मतम्।

नमस्त्वां पुण्डरीकाक्ष दीनमां रक्ष केशव।

मरिष्ये पतिना सार्द्धं न वियोगं सहाम्यहम्।

सवितां गगणे प्रेक्ष अर्जस्व विमलं यशम्।

Ans 7 :—के ते जानन्ति महिमानम्। देहि विप्राय शतमश्वान्। स देवो भवता सेव्यः। यो नस्त्राता भवार्णवात्। विरम असतः कर्म्मणः। सति पथि प्रतिष्ठस्व। गङ्गायां स्नातुं अनुजानीहि मां। न वार्य्यो भवता (भवतः वा) प्रभुः, मातर्य्युपरतायां वन्यो गच्छेयं भागीरथीतटम्। मम वाक्यश्रवणं कृत्वा विद्ध्यास्तव चेन्मतम्। नमस्तुभ्यं पुण्डरीकाक्ष! दीनं मां रक्ष केशव!! मरिष्यामि पत्या सार्द्धं न वियोगं सहेऽहम्। सवितारं गगणे प्रेक्षस्व। अर्ज विमलं यशः।

Q 8 :—Make simple sentences with these verbs, separately :—

धावन्ति, हसति, रोदिति, आह, आरभते, मन्त्रयते, नृत्यति, चिन्तयति।

Ans 8:—शीघ्रं धावन्ति तुरगाः। असाधुं हसति साधुः। लब्धप्रहारश्छात्रः रोदिति। स मामाह। प्रातरारभतेऽध्येतुम्। लक्ष्मणेन रामो मन्त्रयते। मयूर उद्ग्रीवं नृत्यति। शास्त्रं चिन्तयति शिक्षकः॥

(क्रमशः)

---

# FOR F. A. STUDENTS.

☞ Questions with Answers on Raghuvansam as given by Pundit Haris Chandra kaviratna - professor of Sanskrit Literature, Presidency college, Calcutta.

Canto 1

Q 1. In what class of Sanskrit Literature is the Raghuvansam included ? State some of the principal characteristics of that class. Account for the neuter gender in the title of this book.

Ans :— "रघुवंशम्" साहित्य मेतत् महाकाव्ये अन्तर्भवितुमर्हति। तथा हि स्वर्गबन्धो महाकाव्यमुच्यते तस्य लक्षणम्। आशीर्नमस्क्रिया वस्तुनिर्द्देशो वापितन्मुखम्।

रघूणां वंशः रघुवंशः रघुवंशम् अधिकृत्य कृतम् पुस्तकम् इति रघुवंशम् ( रघुवंश÷अधिकृत्य कृतं ग्रन्थे" इति अण् ) यद्वा रघूणां वंशविषयो यस्मिन् पुस्तके तत् रघुवंशम्।

Q 2 :— Expound the samasa in and explain the meaning of वागर्थ प्रतिपत्तये, सूर्य्यप्रभवः, प्रांशुलभ्ये, & कृतवाग्द्वारे। in the first four slokas.

Ans 2 :—वाक्च अर्थश्च तौ तयोः प्रतिपत्तिस्तस्यै। शब्दार्थज्ञानाय इत्यर्थः। प्रभवत्यस्मादिति प्र+भू×अल् (अपादाने) सूर्य्यः प्रभवे यस्य सः सूर्य्यादुत्पन्न इत्यर्थः। प्रांशुना लभ्यं तस्मिन्, दीर्घपुरुषग्राह्ये इत्यर्थः। वागेवद्वारं वाग्द्वारम्। कृतं वाग्द्वारं यस्मिन् विरचितवाक्प्रबन्धद्वारे इत्यर्थः।

Q 3 :— Give the Etymology of सम्पृक्तौ, तितीर्षुः & उडुप and Mention the derivative meaning of the last word.

Ans 3 :—सं+पृच्+क्तः। तॄ+सन्+उः। उडु जलं तत्र पाति उडु+पा+डः। उडुपेन प्लवेन "भेला इति ख्यातवस्तुना इत्यर्थः"।

Q 4 :— Explain in Sanskrit the 9th sloka.

रघूनामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्।

तद्गुणैः कर्णमागत्य चापलाय प्रणोदितः॥

Ans4:—तनुवाग्विभवः तन्वो वागेव विभवः सम्पत्तिर्यस्य सः, अल्पवाक् सस्खलः अपि सन् भवन् अहं रघूणां अन्वयं गोत्रं वच्ये कथयिष्यामि, रघुवंशविवरणोचितविद्याहीनोऽपि इत्यर्थः, तत्कथं प्रवर्त्तसे ? अत आह तद्गुणैरिति। तेषां रघूणां गुणा स्तै रघूणां शौर्य्यादिभिः कर्णं श्रुतिमागत्य उपस्थाय चापलाय सौखर्य्याय किञ्चिदपि कथयितुं प्रणोदितः प्रयुक्त इत्यर्थः॥

Q 5 :— Describe in your own words the general career of the Raghus, as stated in your text book.

Ans 5 :—रघुवंशीया गर्भस्था एव पित्रा गर्भाधानादि संस्कारेणात्मानः संस्क्रियन्ते। यावन्न फलमुत्पद्यते तावन्नारब्धकर्म्मणो निवर्त्तन्ते। चतुरब्धि वेष्टितां महीं ते शासति। ते देवलोकेऽपि रथेन विचरन्ति। याचकाय स्वाभीष्टं ददति। अपराधानुरूपं प्रजा दण्डयन्ति। रात्रेः शेषप्रहरे एव ते जाग्रति। वितरितुमेवार्थिभ्यो धनं सञ्चिन्वन्ति। ते न बहु जल्पन्ति सुतरां सत्यवादिनः। शौर्य्यादिप्रभवं यशो विस्तारयितुमेव ते शत्रून् विजेतुमिच्छन्ति। पुत्रोत्पादनायैव ते स्वभार्य्यामुपयन्ति। बाल्य एव ते विद्यामभ्यस्यन्ति। यौवने ते विषयमुपभुञ्जन्ति। चरमे वयसि ते मुनिवृत्तयो वनमाश्रयन्ति। ध्यानधारणासमाधिमाश्रित्यैव परात्मनि मनः समाधाय शरीरं जहति ते रघवः।

(क्रमशः)

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावशन्नयते सेयमम्बा श्रीशिवसुन्दरी ॥

## वर्षावतरणिका ।

श्रीश्रीमती संस्कृतचन्द्रिकेयं वर्षे तृतीये पदमर्पयन्ती ।
पीयूषधारां गिरमुत्किरन्ती संलिप्सतामभ्युदयं करन्ती ॥

## नववर्षोच्छ्वासः ।

एषोऽद्य कालविपुलार्णवजस्तरङ्गः धौत्वा मनांस्यपसृतः खलु दृढतो नः ।
आनन्दशोकजनिताश्रुभिराप्लुतानि लीलास्थलानि सुखदुःखमयस्मृतीनाम् ॥ १ ॥
छन्ने मनांसि तमसाऽप्यधुना पुरस्तात् दृष्टिं क्षिपन्ति हि मुहुर्वितथप्रयत्नाम् ।
सम्भावतीतविषयस्य भविष्यतोऽस्मिन् प्राप्तानि चीत्वरगतैः विविधैश्च भावैः ॥ २ ॥
चिन्ताधुना नयति नो नवमत्तवाहान् आदाय रश्मिसकलैरिव धर्म्ममार्गम् ।
त्यक्त्वा विशुष्कहृदयाग्निकठोरदाहं गाढं निमज्जितुमहो हरिचिन्तनाम्भौ ॥ ३ ॥
आत्माधुना त्यजति तां विषमां सुषुप्तिं जिज्ञासते च सभयः सहसा प्रबुद्धः ।
कोऽहं कुतश्च कथमत्र समागतोऽस्मि किं नाम नूनमिह वा भुवनेऽस्ति कार्य्यम् ॥ ४ ॥

कस्याज्ञया भ्रमयति भ्रममूढ़जीवान् संसारचक्रमतुलं नियतं विघूर्णत् ?।
कस्येच्छयातिमलिना नलिनी दिनान्ते प्रातःपुनर्हसति साऽरुणरागयोगात् ? ॥ ५ ॥
कस्याज्ञया नियमितो चरतीह वायुः लोकांश्च नन्दयति गन्धसुशैत्यमान्द्यैः ?।
संस्पृश्य सर्वहृदयस्य मुहुर्मुहुर्वै गूढ़ं प्रदेशमथवा ह स कस्य वार्त्ता ? ॥ ६ ॥
कस्याज्ञयाऽखिलजनान् धरते धरित्री सिञ्चन्त्यपश्च सुखदाः खलु वारिवाहाः।
आकाशमार्गगतयो नियमेन नित्यं चैतन्यदस्य हि रवेः पथदर्शकः कः ? ॥ ७ ॥
गत्वा हि कस्य महतः परमाणुसाम्यं आप्नोति मानवमतेरवधिं समुद्रः ?।
खं द्वादशार्कयुतपुष्करकम्पितान्तं रौद्रं विडम्बयति कस्य तथा प्रयत्नैः ? ॥ ८ ॥
सौगन्ध्यं कुतो विशति पूर्णशशाङ्ककान्तौ शीतामलोः परिमलो मलयानिले च।
रूपस्य कस्य कमलं परमाणुमात्रं शक्तं न धारणविधौ स्फुटति प्रभाते ? ॥ ९ ॥
संसारवह्निगरलैर्ज्ज्वलितान् प्रदग्धान् को वा नरान् जगति सान्त्वयतीह नित्यम् ?।
सर्वत्र मानसहरीं प्रविकीर्य्य शोभां मातेव खिन्नगणैस्तनय रुदन्तम् ॥ १० ॥
सिंहासनाच्च भुवनस्य यदा तमिस्रं दृष्ट्वा क्रमादपगत ह्यरुणप्रभावात्।
दिग्बालिकाः समुपयान्ति सहर्षरागाः धृत्वा करेषु विजयध्वजमङ्करम्यम् ॥ ११ ॥
कोऽसौ तदा हि लतिकां लतिकां प्रगच्छन् तत्प्रेमभोगिजनमानसनेत्रहृष्टः।
ऐश्वर्य्यदैर्निजकरैः कुसुमान्यसंख्यैः स्पृष्ट्वा विकाशयति तेषु निजास्यहास्यम् ? ॥१२॥
कोऽसौ तदा निभृतमेत्य वनान्तरालं प्रातः प्रबोधयति वा खचरानशेषान् ?।
निःसाध्य ये विभुगुणं कुशशीर्णकण्ठात् दिग्व्यापिनं जनगणं खलु लज्जयन्ति ॥१३॥
श्वासेन कस्य च तदा विमलाम्बुराशिः सन्ताड़ितो भवति हैममयस्तड़ागः ?।
हंसो हि यद्वपुषि सम्मदचारुनृत्यैः भक्तिं प्रमाति हि निजां विहगादनूनाम् ॥१४॥
म्लानेऽपि चेतसि ममाखिलचण्डतेजः स्थानात् कुतो निपतितं भवति ह्यसह्यम् ?।
छाया रवेर्मनिलपल्वलपङ्कमध्ये नूनं यथातिचकितां कुरुते हि दृष्टिम् ॥१५॥
पृष्टस्य सर्वविषयस्य निदानमेकं सूक्ष्मं हि कारणतया विपुलञ्च कार्य्ये।
विश्वस्वरूपममलं तमचिन्त्यकीर्त्तिं वन्दे विनीत शिरसाद्य नवीनवर्षे ॥१६॥
तस्मात् परं सुगुरुणा हि कृतज्ञतायाः भारेण नम्रहृदयैरभिवादनीयाः।
संसारकार्य्यभवने समरेषु विघ्नैः अस्माकमार्य्यतनुजाः खलु ये सहायाः ॥१७॥
नेत्रे त एव नन्त ये परदुःखसिक्ते जिह्वा च सैव विमलाऽमृतभाषिणी या।
श्लाघ्यौ करौ च नितरां भवतोऽत्र लोके यौ जन्मभूमि-शुभदं कुरुतः सुकार्य्यम् ॥१८॥
इत्थं विचिन्त्य हृदि देशजदेवभाषामुन्नेतुकाममनसोऽद्य वयं विमूढाः।
विस्मर्य्यते निजबलं खलु यैश्चकोरैः लक्ष्यीकृतेन्दुभिरहो ! न हि तेषु दोषः ॥ १९॥

कालस्य चञ्चलगतिर्विपुला च शक्तिः सर्वैः सदाऽप्रतिहताप्यनिरूपणीया ! ।
अस्मद्ध्रुवं स परिवर्त्तयति प्रभावात् क्रीड़ागृहं खलु यथा कुरुते हि बालः ॥२०॥
योऽयं शनैर्विनशनाभिमुखं नयन्नः सर्वान् हि जीवनधरान् विगतोऽद्य वर्षः।
को वेत्त्यवाहयदसौ कति वा शुधाराः हृष्टाह्निकाश्च कति हर्षमयास्तरङ्गान् ॥२१॥
वर्षो नवोऽपि पुरतश्च पटान्तराले कस्यापि नः सृजति पुष्पमयीं सुशय्याम्।
कस्यापि वातिहतभाग्यजनस्य चार्थे चिन्ताचितां ज्वलयितुं यतते ह्यदृष्टैः ॥२२॥
पक्षी स्वभावचपलस्तनुपञ्जरस्थः को वेत्ति नाम सहसोड्डयिता कदाऽसौ ?।
को वेत्ति रक्तवहने धमनी विरक्ता कोपाद्धरिष्यति कदा खलु सर्वशक्तिम् ॥ २३ ॥
विद्यादनिश्चयमहो ! नरजीवितानां प्राप्तञ्च तद्व्यवहरेत् शुभसाधनेषु।
नूनं पतिष्यति धराभिमुखं यदश्मं श्रेयो न किं पतनमस्य हि शस्यभूमौ ? ॥२४॥
तस्मात् समाहृतबलान् हृदयान् स्वकीयान् उत्सृष्टमङ्घ्रियुगले निजजन्मभूमेः।
अस्माभिरिन्दुविमला ननु चन्द्रिकैषा सृष्टाद्य या विशति साम्प्रतं तृतीयवर्षे ॥२५॥
'क्षुद्रा कृशाऽबलवतीत्यनुपेक्षणीया युष्माभिरार्य्यतनुजाः ! ननु साश्रिता वः।
ज्ञातं न किं तनुतनूर्बहिरेति शैलात् स्रातस्विनी सुविपुलार्णवसन्निधौ या ॥२६॥
मेघा यथा ददति नित्यमपःसरिद्भ्यः कुर्वन्ति ताश्च सुखदा मनुजेन्द्रियाणाम्।
यूयं तथाप्यनुदिनं ह्यभिषिञ्चमानाः स्नेहामृतं तनुत भो ! तनुकान्तिमस्याः ॥ २७ ॥
स्नेहादिमां यदि च पोषय, भारतीयाः ! वर्द्धिष्यते तनुरियं विमला हि काले।
पूर्णायतं नवसुयौवनमाश्रिता च कान्ता यथा मनसि वप्स्यति सूपदेशान् ॥ २८ ॥
धृत्वा तदोज्ज्वलतमां कमनीयतां साऽलङ्कारभूषिततनूरनुभावयुक्ता।
भातेह वेद शिरसा स्मृति वचसा च ज्योतिर्दृशा विविधकाव्यमयस्तनाभ्याम् ॥२९॥
अस्या वचो यदधुना प्रियतां समेति बालस्य भाषितमिवास्फुटशब्दमात्रम्।
काले ह्यवाप्य वनिताजनगानसाम्यं मुग्धं करिष्यति ध्रुवं कलकण्ठरागैः ॥३०॥
तत् साधवोऽद्य परिपोषितचन्द्रिकां वः सञ्चार्य्य जीवनवहां खलु शक्तिमस्याम्।
या भिन्न देशज-वचो-विष मूर्च्छितां नः शुश्रूषते हि जननीं रुधिरैः स्वकीयैः ॥३१॥

श्रीज्ञानशरणशर्म्मचक्रवर्त्तिनः।

# गर्वपरिणतिः ।

नाट्योल्लिखितजनाः । *

| | |
|---|---|
| रामचन्द्रः । | कश्चित् धनी पुरुषः । |
| सुरेशः । | रामचन्द्रस्य पुत्रः । |
| नीलाम्बरः । | रामचन्द्रस्य कश्चित् बन्धुः । |
| कृष्णदासः । | पल्लिस्थः कश्चित् बालकः । |
| कमला । | रामचन्द्रस्य पत्नी । |
| शान्तिः । | कमलायाः प्रियसखी । |
| तुलसीदासप्रभृतयः । | रामचन्द्रस्य भृत्याः । |

## प्रथमोऽङ्कः ।

रामचन्द्रस्य उद्यानसमीपस्थगृहम् ।

कमला—रामचन्द्रवासीनौ ॥

रामचन्द्रः । प्रिये ! लक्षयतु तावत् सुरेशस्याचरणम् । असौ हि पुस्तकहस्तः पाठशीलमिवात्मानं दर्शयन् सगर्वं उद्यानमध्ये इतस्ततो विचरति । [ इति तर्ज्जन्या निर्दिशति ] । सुन्दरि ! सत्यं भणामि, एतादृशीमस्याकृतिं प्रकृतिञ्चालोच्य बिभेमि । पाण्डित्याभिमानि-गर्वितपुत्रेभ्यो विनयी मूर्खोऽपि वरम् । न जानेऽसौ अतःपरं किमनभिमतं दर्शयिष्यति ।

कमला । बहुभिः स्तुतोऽसौ श्रुतो दृष्टश्च । कथमेवं ज्ञातमार्य्यपुत्रस्य ।

रामः । न खलु लक्षयसि, कश्चिदमुं पाठशीलं पश्यति नवेति दिदृक्षुरीषदाभुग्नग्रीव इतस्ततः सकटाक्षमवलोकयतीति ।

---

* आधुनिकरीत्या रचिततयात्र न दर्शिताः प्राचीनालङ्कतयः । अतः प्रार्थयामहेऽलङ्कारकोविदान् कृपयया स्वगुणेनैवालङ्कुर्वन्तु सर्वत्र इति ।

कमला । नहि नहि स हि बुद्धिमत्तरः, प्राप्तवयस्कः प्राड्-विवाकोऽपि भवितुमर्हतीति सदा तस्य शिक्षकः कथयति ।

रामः । [ ईषद्विहस्य ] वृथादर्शिनि ! बहुशोऽसौ परीक्षितः, अत एवं कथ्यते । स किमपि न वेत्तीति दृढ़मवगच्छ । पण्डिताभि-मानि-विकृत-मस्तिष्क-पाठशीलेभ्यः कार्य्यपटुः श्रमसहिष्णुरपि वरम् ; स एव समाजोपकृतये प्रभवतीति मन्ये । [अवलोक्य] असौ इत एव आगच्छति, वयमपि स्वकार्य्यं साधयामः । [इति निष्क्रान्तौ] ।

ततः प्रविशति पुस्तकहस्तः सुरेशः ।

सुरेशः । [ सभ्रूविक्षेपम् ] शिक्षककृतस्तुतिवादतोऽपि प्रशंसार्ह-मिवात्मानं विभावयामि । अपि नाम कश्चित् मम मतेरियत्ता-मवगन्तुं समर्थोऽस्ति ? न ;—सम्यक्प्रणिहितचित्तेनापि तादृशः कश्चित् वैज्ञानिको दार्शनिको वा न लक्ष्यते, यो ममापि परीक्षको भवितु मर्हतीति । [विमृश्य] यदा लोका मां पश्यन्ति पाठनिरतम्, न जाने तदा मनसि किमपि विभावयन्ति । अहं हि वृहस्पति-शुक्राचार्य्ययोरन्यतरो भविष्यामीति मन्ये । [ पादशब्दमभिनीय ] कश्चिदागच्छतीव । भवतु, पाठनिमग्नो भवामि । [ इति काष्ठा-सनोपरि उपविश्य पाठे गाढ़निमग्न इव स्थितः ] ।

प्रविश्य कृष्णदासः । अपि कुशलमार्य्यस्य ? महोदय ! न जाने कथं ममान्तरात्मा भवत्संसर्गलाभाय प्रस्फुरति । अधुनानुगृहाण मां सदालापेनेति ।

सुरेशः । [ क्षणं तुष्णीं स्थित्वा ग्रीवाभङ्गेन कृष्णदासमवलोक्य च] । कस्त्वम् ? ;—कृष्णः । नाहं द्वितीयमिच्छामि । यदैवाहं पाठ-निमग्नो भवेयं तदैव त्वं विघ्नकरः । निर्बोधोऽसि । दूरमपसर । [ इति कृष्णदासं निःसारयितुमुद्यतः ] ।

प्रविश्यापटीक्षेपेण—

रामचन्द्रः । कथममुं निर्बोधं जल्पसि ?

सुरेशः। यतोऽयं किमपि न जानाति।

रामः। किमिति पदेन किं मन्त्रयसे? तवाविदितं बहुशोऽसौ विजानाति। किं बहुना बहुवत्सरान् त्वां शिक्षयितुं समर्थोऽस्ति।

कृष्णदासः। महामहिमानमभिवादये। अस्ति मे कश्चित् तातनियोगः। तमशून्यं विधाय पुनरागन्तुमिच्छामि। [ इति निष्क्रान्तः। ]

सुरेशः। [ साश्चर्यं सगर्वञ्च ] किमयं मामपि शिक्षयितुं समर्थः?—अहमेवास्य शिक्षको भवितुमर्हामीति कथयतु भवान्। न जानेऽसौ मत्तः किमधिकतरं वेत्तीति। भवदुक्तोऽसौ चन्द्रं जिघृक्षोर्वामनस्यावस्थां प्राप्स्यतीति मन्यामहे।

रामः। वत्स! नासौ शाब्दिको वैज्ञानिको दार्शनिको वा; परं स्थिरबुद्ध्यालोच्यताम्, यदि त्वमद्य कृषिकार्य्यं वाणिज्यम् अन्यत् किमपि वा सांसारिकं कर्म्म कर्त्तुमादिष्टोऽसि, तदा निश्चितमेव तादृशज्ञानलाभार्थं यंकमपि शरणमापन्नो भविष्यसि। यत उक्तम्,—

"सर्वः सर्वं न जानाति सर्वज्ञो नास्ति कश्चन।
नैकत्र परिनिष्ठास्ति ज्ञानस्य पुरुषे क्वचित्"॥

परन्तु पश्य, कृष्ण इतः पूर्वात् तत् समग्रं वेद। अतः कथयामि कृष्णोऽपि त्वां शिक्षयितुं समर्थोऽस्तीति।

सुरेशः। पितः! सत्यमेतत्; परमालोड़िततर्कादिशास्त्रस्य बुद्धिरप्रतिहतेति दृढ़मवगच्छतु। अपरतश्च दृश्यतां यदा मे तादृशी दशा सम्भवेत्, तदा नाहमेतादृशसामान्यजनेन शिक्षितः स्यामिति मे दृढ़ा मतिः।

रामः। वत्स! कथं नेच्छसि समर्थादस्मादवगन्तुम्। किं नाधीतं त्वया,—

"नीचादप्युत्तमां विद्यां गृह्णीयात् कुशली नरः" ॥

इति महाजनवाक्यम् । वत्स ! नैनमपरमिव द्रष्टुमर्हसि, भ्रातृबुद्धिमस्मिन् स्थापय । असौ चतुरः सच्चरित्रस्त्वत्समवयस्कश्च । यथास्य पिता मे प्रजा तथास्य पूर्वपूर्वपुरुषा अपि मे पूर्वेषां प्रजा आसन् । वत्स ! किं बहुना अतःपरममुं स्नेहचक्षुषा सदा पश्येति ममाभिप्रायः ।　　[ इति निष्क्रान्तः । ]

सुरेशः । [ सशिरःकम्पम् । ] पितुर्मे बुद्धिर्लुप्तप्रायेति तर्कयामि । निरक्षरोऽसौ मामप्युपदेष्टुमर्हतीति तस्य सिद्धान्तः । तेजो विहीनानामनुगतेषु भ्रातृबुद्धिरनुग्रता च प्रभुशक्तिं नाशयतीति न स वेद इत्येव मे मतिः । [ अवलोक्य ] कोऽयम् ? [ निरूप्य ] स एव कृष्णः अत्र पुनरायाति । भवतु, अद्य तं विद्याबलेन तादृशं मुग्धं करिष्यामि, यदतःपरं कदापि स मया सहालापमात्रमपि कर्त्तुं न साहसी भविष्यतीति ।

प्रविश्य पुष्पस्तवकहस्तः ।

कृष्णः । महोदय ! अनुगृहाणैतानि करतलस्पर्शनेन ।

सुरेशः । नहि नहि ; न सन्त्येतेषु मालतीप्रभृतीनि मनोहरपुष्पाणि ।

कृष्णः । सत्यम् ; परमेतानि वन्यपुष्पाण्यपि सुदृश्यानि । ज्ञायन्ते किमेतेषां नामानि तत्रभवता ।

सुरेशः । किं प्रयोजनमेतेषां नामपरिज्ञानेन । ज्ञायन्तां भवादृशैर्वन्यैर्वन्यनामानि ।

कृष्णः । उदिते भगवति मरीचिमालिनि चन्द्रे अधित्यकाया दृश्यमतीव मनोहरं भवति । अद्य पूर्णिमातिथिः । इच्छामि भवता सह तत्र गन्तुम् ।

सुरेशः । [ साधिक्षेपम् । ] अस्तु तावत् अधित्यकादृश्यम् ।

कृष्ण ! त्वया चन्द्रस्य नाम कथितम् ; जानासि किम्परिमाणोऽसौ चन्द्र इति ?।

कृष्णः। [ ससंभ्रमम्। ] कथं न जानामि ; कस्यचित्तैजसपात्रस्येवास्य परिमाणम्।

सुरेशः। [ विहस्य स्वगतम्। ] निर्बुद्धेरस्य सादृश्यमपि नास्ति। [ गम्भीरवदनात्मानं दर्शयन् च्चणं विचरति प्रकाशम] कृष्ण ! पश्येदं सांख्यसूत्रम्। किमधीतं भवता ? [ इति पुस्तकं प्रदर्शयति। ]

कृष्णः। आस्तां तावदध्ययनकथा, न श्रुतमपि मया। अवलोकयामि तावत्। [ इति ग्रहीतुमिच्छति। ]

सुरेशः। मा, मा स्पृश। [ इति कृष्णस्य हस्तं धृत्वा काठिन्यञ्च तस्याभिनीय। ] किं लौहनिर्म्मितस्ते हस्तः ?

कृष्णः। कथं हस्तस्य लौहनिर्म्मितत्वमनुभवसि ? आर्य्य ! यत् तुभ्यं रोचते तद्वद ; परं दृढ़मवगच्छ, एतादृशभुजः कदापि अलसतां न सूचयतीति। क्षेमन्ते भूयात्, अधुना गन्तुमिच्छामि।

[ इति निष्क्रान्तः। ]

सुरेशः। कथं गत एव ?। यादृशं कर्म्म तादृशं फलमेव। अतःपरमयं कदापि मत्समीपमागन्तुं न प्रभवेत्। [विचिन्त्य] गच्छामि द्रष्टुं पितरौ मां पाठनिमग्नमवलोक्य किं जल्पयत इति। [निष्क्रान्तः]।

प्रथमोऽङ्कः।

श्रीनन्दलालविद्याविनोदस्य।

---

## प्रणतिः।

सहस्रशीर्षाय सहस्रचक्षुषे सहस्रपादाय सहस्रवर्चसे।
सहस्रपृष्ठाय सहस्रजानवे नमोनमः सर्गलयैकहेतवे॥ १॥
सहस्रविश्वस्य निदानतां जुषे सहस्रवक्त्राय सहस्रपाणये।
सहस्रवर्ण-श्रुति-वर्म्मपायवे सहस्रदृष्टाय समन्ततो नमः॥ २॥

दिवौकसामादितमाय भास्वते सदातनाय प्रभवेऽति रोचिषे ।
विशालसंसारतरङ्गवायवे मनोरमायेशतमाय ते नमः ॥ ३ ॥
द्वितीयहीनाय सहस्रमूर्त्तये वियत्स्वरूपाय दिगन्तसाक्षिणे ।
चिते जगत् स्थावरजङ्गमात्मने नमः सदा सेवकभव्यहेतवे ॥ ४ ॥
समक्रियाय त्रिगुणात्मने सते गुणैर्विहीनाय सदा सुखात्मने ।
महत्त्व-सूक्ष्मत्व-जुषे परात्मने नमो मनोऽगोचरदिव्यमूर्तये ॥ ५ ॥
पयो-धरा-वायु-कृशानुमूर्त्तये विवद्दिवानाथ-निशीश्वरात्मने ;
अट्टप्रभासे यजमानकान्तये नमो वचोऽतीतगुणैक सद्मने ॥ ६ ॥
भवाख्य दावानल वारिराशये विशालसंसारसमुद्रसेतवे ।
कृपाश्रयायाश्रित शान्ति हेतवे नमो नमः सेवककल्पशाखिने ॥ ७ ॥
निपात्य संसार नये महाम्बुधावपुण्यदुष्टाशयकर्म्मणो जनान् ।
समीक्षमाणाय चिरं विलासिने नमो नमो निर्ज्जरनित्यसेवित ! ॥ ८ ॥
अगोचराय श्रुतिधर्म्मशास्त्रयोर्मङ्गविबुद्धैः कविकल्पनागिराम् ।
अतत्त्वदृष्टाय महादिमूर्त्तये नमो नमोऽशाहतविश्ववेश्मने ॥ ९ ॥
अनल्पविद्यार्त्तिहराय वेधसे उपाधिमुक्ताय विमुक्तिहेतवे ।
शुद्धाय दिव्याय दिवौकसाश्रये नमो नमो दुष्कृतधूमकेतवे ॥ १० ॥
दयामयायाश्रितदुःखहानितः, शिवाय कल्याणविधानतो, हरे ! ।
प्रवेशनाद्विश्वजनस्य विष्णवे, नमः प्रपन्नार्त्ति विनाशकृद्गुरो ! ॥ ११ ॥
वसुन्धरोपद्रवकारिजीविनां जनार्दनाय प्रचुरं प्रमर्दनात् ।
प्रजा कुलोत्पादनसाधनात्तु ते पितामहायागणितं नमो नमः ॥ १२ ॥
अणीयसेऽणोर्महतां महीयसे स्थवीयसे स्थूलतमाद्दवीयसे ।
विदूरतश्चिन्मयमूर्त्तये गुरोर्गरीयसे विश्वमयाय ते नमः ॥ १३ ॥
नवीयसे यून उरोर्वरीयसे पटीयसे यौवति साधने पटोः ।
विकल्पराहित्यजुषे सवर्च्चसे नमो नमो दीपितविश्वतेजसे ॥ १४ ॥
प्रियात् प्रियायान्तिकसम्पदेऽन्तिकात् प्रमोदरूपाय समान दृष्टये ।
अवीणधायाश्रितजीवनाय ते सुखाय नित्याय जगद्भृते नमः ॥ १५ ॥
अहेतुकायाऽपि च विश्वयोनये प्रमाणगायाऽप्यविदृष्टमूर्त्तये ।
अमूर्त्तये मूर्त्तिमते च हे गुरो ! गुणाश्रयायाऽप्यगुणात्मने नमः ॥ १६ ॥
अमाधिकायादि सुरेश ! साधिकप्रधानदेवाय समान दृष्टये ।
निराश्रयायापि चराचरात्मकजगच्छ्रयाय त्रिगुणात्मने नमः ॥ १७ ॥

अनीहमानाय जगत्स्थितेर्हते: समीहमानाय सुखाय साक्षिणे ।
सुपूर्णकामाय भवाब्धिसेतवे जगन्नियन्त्रे गुरवे नमो नमः ॥ १८ ॥
सुखस्वरूपाय सुखैकवेश्मने महानुभावाय विशालनीतये ।
सदा शरण्याय वरेण्यताजुषे चिरस्थिताय प्रभवे नमो नमः ॥ १९ ॥
वसुन्धरायां सलिले प्रभञ्जने वियत् कृशान्वो: सकले कलानिधौ ।
विराजते हे हर ! वासवेश्वरे महत्सशम्भुस्तुभ्यमहो नमो नमः ॥ २० ॥
लतासु पुष्पेषु फलेषु शाखिषु रसेषु गन्धेषु गुणेषु तिष्ठते ।
जनेषु चित्तेषु सुखेषु हे गुरो ! नमो नमो भक्तमनो विहङ्गम ! ॥ २१ ॥
गृहेषु हर्म्येषु सरःसु पक्षिषु नदीषु जीवेषु तटेषु जीविषु ।
खगेषु सत्त्वेषु महीधरेष्वपि स्थिताय तुभ्यं हरये नमो नमः ॥ २४ ॥
सुमेरुशृङ्गेषु समुद्रवीचिषु सुरेषु पुण्येषु महामहर्षिषु ।
नृपेषु रत्नेषु कलासु मानुषे स्थिताय हे विश्वगुरो नमो नमः ॥ २३ ॥
विपाककर्माशय वर्जितो भवानसंवृत: क्लेशसुखेन शक्तिमान् ।
गुणैरतीत: प्रणवेन बोधितो जगद्विधात्रे गुरवे नमो नमः ॥ २४ ॥

( क्रमश: । )

श्रीअन्नदाचरण तर्कचूड़ामणि: ।

---

## पल्लिच्छवि: ।

"महाभाग ! ब्रवीषि किं कतमेन मार्गेण * * * पुरं गन्तव्यम्" इति काचन मधुरवाणी कदाचित् रजनीयामे राजवर्त्मनि परिभ्राम्यतो नानाचिन्तापर्य्याकुलचेतसो मम श्रुतिविवरं प्रवेशमलभत । अथै-तावत्यामपि विभावर्य्यां कुतोऽयमबलाजनोचित-वाङ्निष्यन्द इति कुतूहलाक्षिप्तहृदयेन मया यावल्लोचने तद्दिशि प्रेषिते तावदेव काचन तरुणे वयसि वर्त्तमाना जीर्णे वसने वसानापि स्वभावसौन्द-र्य्येण तद्देशमशेषमुद्भासयन्तीव कन्यका मन्नयनयो: प्रत्यक्षं गता । तान्तु तस्मिन्नेव समये तदवस्थामालोक्य स्वत एव मन्मनस्यजायत "नूनमियं कस्यचन दीनतापीड़ितस्य अङ्गन-लतिका" इति ।

ततस्तत् सकाशमागत्यापृच्छम् "भद्रे, कुत आयातासि? किमिति सुदूरमुपगते भगवति कुमुदिनीवल्लभे त्वमशरणा स्वभवनाद् बहिर्भवसि? त्वदभिहितमार्गो हि इतः सुदूरमवस्थितः। तत् कथय यदि न रहस्यं कथं वा तत्र गमनानुबन्धासि?" ततो मद्वचनमाकर्ण्य सा त्रासगद्गदमवादीत् "महानुभव! सुदूरदेशादागतास्मि। अधुना स्वावासो गन्तव्यः। सहसा मार्गभ्रान्त्या भीतास्मि, तत् पृच्छामि भवन्तं तदवगत्यर्थमिति। ततो विरतायां कन्यकायां तदाकृतिमालोकयन्नहं कृपापरवशस्तामपृच्छम् "वत्से! अपि ध्रियेते ते पितरौ?" "न स्तः महानुभव!" इति प्रत्यवादीत् वाष्पलवमण्डितवदना बाला। "तत् केन त्वम् इयत्यामपि रजन्यां दूरदेशं प्रेषितासि? नूनं स त्वां न स्निह्यति।" इति मया पृष्टम्। तयोक्तम् "आर्य्य! मदीयेन पितामहेन मदेकशरणभूतेन प्रेषितास्मि। स तु मां स्वस्मादपि जीविताद् अधिकतरं स्निह्यति।"

मयोक्तम्। "अथाहं त्वया पृष्टं पन्थानं न कथयामि?" ततस्तया मदाननसंमुखीनया अपाङ्गलोचनयोक्तं—"भवतैव वर्षीयसा अनृतवाचा न भूयेत।" मया सोल्लासेनोक्तं "वत्से! कुत इयती ते वर्षीयसि भक्तिः?" सरलोवाच "यतो मदीयो पितृतातोऽपि वर्षीयान्"। इत्यभिदधानायास्तस्याः सरलतया परिमुग्धहृदयस्तया सह * * * पुराभिमुखमहं प्रस्थितवान्। सा च सरला चिरसंस्तुतजनवत् मदीयं पाणिं गृहीत्वा गच्छन्ती नानाकथाप्रसङ्गेन अपनीताध्वखेदा अचिरेण स्वावासं प्राप्तवती। ततः स्वनिकेतनालोकनेन परमप्रीता उत्प्लुत्येव स्वं प्रकोष्टं प्रविश्य पितामहं प्रणतवती। अचिरेणैव प्रत्यागत्य पितामहानुगता मामध्वखेदापनयनार्थं तां रजनीं तत्र यापयितुमनुरुद्धवती। अथाहं तदीयां विचित्रां कथां जिज्ञासुः तद्गृहं प्रविष्टः तत्र तद्विषयि-नानाकथाप्रसङ्गेन कालञ्च कियन्तं क्षपितवान्।

तयोः कुटीरकं बालिकावस्त्रमिव जीर्णमपश्यम्। तदालोकनेनैव एव मनसि जायते यथासौ महता कष्टेन जीविकां यापयति। तद्विलोकयतो मे अतर्कितमेव लोचनयुगलं वाष्पपरिगतमभूत्। किन्तु तस्य पश्चिमे वयसि वर्त्तमानस्य शैवलिन्या वृद्धपितृतातस्य वक्त्रे क्वापि मलिनता नादृश्यत। लोकोत्तररमणीया सुशीला शैवलिनी एव तस्य सर्वसम्पत्। तदाननविलोकनादजायत सर्वेषामस्य क्लेशानामुपशान्तिः। न च शैवलिनी मनसि विशालेऽस्मिन् संसारे पितृतातं विना किमप्यन्यत् पदं लेभे। ततो बाला कालेन कियता पाद्यार्घ्यादिना मामर्चितवती। अहन्तु कार्य्यगौरवाद् अकामोऽपि बालाञ्च वृद्धञ्चामन्त्र्य स्वगृहं प्रस्थितः पथि तद्विषयमेवाकलयन् सुचिरेण गन्तव्यं प्राप्तः। ततो मन्यसि अजायत "अहो विधेर्नियोगः। दरिद्रावास एव शान्तिनिकेतनम्। धन्योऽयं स्थविरो य एवं विधेन कन्यारत्नेनालङ्कृतः। धन्या दरिद्रता या एवं भूता शान्तिपरिपूरिता।

ततो विषयिजनसङ्गभव विविधनियोगवशात् अतिदवीयस्तया च तस्य प्रदेशस्य उत्सुकतापरवशोऽपि कियच्चिरमहं तदालोकनवञ्चित आसम्। अथ संवत्सरादूर्द्ध्वमेकदा तदावासं प्रविष्टः "भद्रमुख! अलं कलकलेन। मदेकजीवितभूता वत्सा शैवलिनी नितरां मदर्थं परिश्रान्ता अधुना निद्रावशं गता। मा अस्याः शान्तिमपनैषीः" इति स्थविरेण तेन उन्मत्तप्रलापिनाभिहितः किमपि निर्णेतुमशक्नुवन् परमकुतूहलाविष्टः ततो निर्गत्य कस्यचनतत्पल्लिनिवासिनो मुखात् यदश्रृणवम् तेनैव दीर्य्यमाणहृदयो गृहं प्रत्यगच्छम्।

एतद्दरिद्रजनेतिवृत्तं साधुजनश्रवणार्हमिति मत्वा पाठकेभ्य उपहारीक्रियते। नावगच्छामि जगती विश्रुतपुरुषेतिवृत्तपरिलुप्तस्य पाठकस्य एतत् निभृतपल्लिवासिनो जनस्य चरितं समयिष्यति न वेति।

## २। वृद्धेतिवृत्तम्।

अस्ति वङ्गेषु * * नाम नगरम्। तत्र * * नाम्नी पल्लिरस्ति। आसीत्तत्र अष्टादशशताब्द्याः पश्चिमे भागे कश्चन वर्षीयान् विपुलधनवान् अतीववदान्यः शास्त्रानुशीलनप्रेमी कायस्थवंशप्रभवः * * अभिधानः। स च सततं शास्त्रकुशलैः सुधीजनैः परिवृतो दानरतः पल्लिवासिनां परां स्नेहास्पदतां लेभे। अथ कालेन कियता विगुणतया ग्रहस्य तस्य धर्म्मात्मनो आकाण्ड एव विभवक्षयः सञ्जातः। क्रमेण च पुत्रपौत्रैरपि विरहतामलभत। परिशेषम् एकैव शैवलिनी आत्मजनन्दिनी वृद्धस्य दैवविडम्बितस्य करयष्टिरिवासीत्। ततः क्षयावशिष्टेन धनेन प्राणाधिका शैवलिनीपरिगतो वृद्धः पल्लिप्रान्ते कस्मिंश्चित् पतनोन्मुखे कुटीरे वासं जग्राह।

अहो ग्रहविगुणतायाः प्रकारः। अत्रापि स केनचन विप्रलब्धहृतसर्वस्वो वञ्चकेन बभूव। तद्गृहमपि तस्मिन् निक्षेपवद्दमासीत्। एतावतापि दुराचरणेन स पापो न विरराम। सहि सततमतिनिष्ठुरया गिरा तमाधिक्रशं क्षतेक्षारमिवादहत्। अनन्योपायो वृद्धः कदाचित् तं प्रीणयितुं स्वलिखितया विनयपत्रिकया शैवलिनीं तत्सकाशं प्रेषितवान्।

धूर्त्तोऽसौ कामपालो वामनः कदाकारश्च आसीत्। तदवयवः आस्यबालानां भीतिकारणतां गतः। नासीत् विशाले अस्मिन् संसारे एवं किमपि कदनुष्ठितं यत्कामपालसकाशे अकार्य्यमभूत्। भार्य्यायां पुत्रवत्यां जीवन्त्यामपि सुन्दरीं शैवलिनीं परिणेतुमियेष धूर्त्तः। पितामहसन्देशं गृह्णन्तीमेनां पाणिग्रहणप्रस्तावेन निरन्तरमदहत्। सा तु नीरवा तद्वाग्वाणमशेषमसहत।

(क्रमशः।)

श्रीउपेन्द्रनाथरायः।

# धर्म्मविवेकः ।

( १८१६ शाकीय माघपत्रिकायाः २४० पृष्ठतः )

आगत्य वामापदः । गुरुचरणकमलेभ्यो नमः । इति साष्टाङ्गं प्रणम्य स्थितः ।

शिवः । वत्स ! वामापद ! इतो निषीद । कुशासनमेतत् जीर्णं स्खलितप्रायं, नास्ति चापरं सन्निहितम् ।

वामा । (गलवस्त्रेण कृताञ्जलिः) गुरवः ! भगवच्चरणरेणुपूतं पदोपान्तभूतलमपि विड़म्बयति महेन्द्रासनमिति का कथा जीर्ण-कुशासनस्य । इति विनयमधुरमुक्त्वा हृदि किञ्चिदास्तीर्य्य उत्तरी-यैकदेशं तत्रैव चितितलर्निहितजानुयुगलः भक्तिनम्रश्चोपाविशत् ।

शिवः । वत्स ! विविधेन प्रत्यूहेन धर्म्मविवेकं व्याख्यातुं नाश-क्नुवम् माघमासः परतः । श्रूयतामद्य कथञ्चिद्वक्ष्यामि । कियन्तं व्याख्यातं धर्म्मविवेकम् आ एवं किं मन्यसे ?

वामा । आ एवं नु तत् स्मरामि । महर्षिकणादेन सूत्रितं "यतोऽभ्युदयनिःश्रेयससिद्धिः सधर्म्मः" इत्येवं धर्म्मलक्षणमात्रमुक्तम् ।

शिव । अधुना तदर्थो व्याख्यायते श्रूयताम् । "यतोऽभ्युदय-निःश्रेयससिद्धिः स धर्म्मः"—अस्यार्थः—यतः यस्मात् । अभि—सम्यक् सर्वतो भावेन । उत् ऊर्द्ध्वम्, अयः गमनम्, अभ्युदयः ऊर्द्ध्व-गतिः उन्नतिः इति यावत् । निर्नास्ति श्रेयो मङ्गलं यस्मात् तत् निःश्रेयसं यत् परं नास्ति मङ्गलं निर्वाणः । तयोः सिद्धिर्निष्पत्तिः स धर्म्मः धर्म्मपदवाच्यः ।

यत इत्यनेन निर्दिष्टः कश्चिदप्यर्थो नाभिप्रेतः । यतः यस्मात्, कस्मात् ? परपीड़नादेः पररक्षणादेर्वा नैवं विवक्षितम् । तत्तु विचार-सापेक्षम् । यदि परपीड़नादेव अभ्युदयनिःश्रेयससिद्धिर्युक्त्या उपपद्यते तदा स एव धर्म्मः । यदि वा तद्विपरीतात् पररक्षणादेवा-भ्युन्नति निःश्रेयससिद्धिर्युक्त्या युज्यते तदा स एव धर्म्मो भविष्यति ।

किन्तु परहिंसादिना आत्मोन्नतिर्मोक्षश्च सिध्यति इति तु शास्त्र-युक्तिविरुद्धम् । परन्तु पररक्षणादिनैव तत् सिध्यति इति शास्त्र-युक्तिरुच्चैरुच्चरति । तत्तु अग्रे वक्ष्यते ।

वामा । गुरवो ब्रुवन्ति अभ्युदयो नाम उन्नतिः अत्र आत्मन एवेति तात्पर्य्यम् । यद्यात्मोन्नतिरेवात्राभिमता तदा पशुपक्ष्यादीना-मप्युन्नतिः किमनेन शास्त्रेण विचार्य्यते ?

शिवः । नैवम्, शास्त्रन्तु लोकाधिकृतम् अतः मानवमुद्दिश्य शास्त्रं प्रवर्त्तते तस्यैव मानवस्य उन्नतिरत्रावधार्य्यताम् न तु पशु-पक्ष्यादेः ।

आत्मन उन्नतिस्तु सत्त्वोद्रेकीभावः ज्ञानोत्कर्षश्च । सति ज्ञानोत्-कर्षे श्रेष्ठो भवति सर्व इति लोकः प्रमाणम् । तथाहि निरक्षरेभ्य पांशुलपादेभ्यः साक्षरा जना श्रेष्ठाः । साक्षरेभ्यो विद्वांसः विद्वद्भ्यः पण्डिताः, पण्डितेभ्यः ऋषयः ऋषिभ्यो देवाः देवानामपि हरि-हरविरिञ्चयः श्रेष्ठाः केवलं ज्ञानोत्कर्षादेव ।

तस्या एव ज्ञानोन्नतिरूपाया आत्मोन्नत्या यतः सिद्धिः स धर्म्म इति । तमेवाभ्युदयं खल्वाभिमुख्येनाप्तुं यतते पुरुषः यतमान-श्चाप्नोति । निःश्रेयसं नाम निर्वाणः । तस्मात् श्रेयोऽन्यत् नास्ति । निर्वाणे खल्वधिगते सर्वमन्यत् श्रेयः परिसमाप्यते । कृतकृत्यश्च पुरुषो भवति । न तस्य किञ्चित् कर्त्तव्यमवशिष्यते वा लब्धव्य-मिति । कणादेन यतोऽभ्युदयनिःश्रेयससिद्धिरित्यनेन सर्वलोकेषु साधारणधर्मो लक्षितः । न तु विशेषः ।

( क्रमशः । )

---

## तत्त्वप्रपञ्चः ।

( १८१६ शाकीय माघपत्रिकायाः २३६ पृष्ठतः )

तथाहि निखिलब्रह्माण्डोपादानभूतमव्यक्तं प्रकृतिरेव ॥ १ ॥ नास्य प्रकृत्यन्तरमस्ति यथा घटस्य मृदिति । अतएव सा मूल-

प्रकृतिरुच्यते। महान् अहङ्कारः शब्दतन्मात्रं स्पर्शतन्मात्रं रस-तन्मात्रं गन्धतन्मात्रमिति सप्त केषाञ्चित् प्रकृतयः केषाञ्चित् विकृतयश्च भवन्ति। तथाहि महत्तत्त्वमहङ्कारस्य प्रकृतिः विकृतिश्च मूलप्रकृतेः। एवमहङ्कारः तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतिश्च महतः। एवं शब्दतन्मात्रादीनि पञ्च तन्मात्राणि महाभूतानामाकाश-पवन-दहन-सलिलपृथिवीनां पञ्चानां प्रकृतयः विकृतयश्च अहङ्कारस्य॥ २॥ पञ्चमहाभूतानि एकादशेन्द्रियाणि च केवलं विकृतय एव न केषाञ्चित् प्रकृतयः॥ ३॥

अथ किमित्युक्तं "पञ्चमहाभूतानि एकादशेन्द्रियाणि च केवलं विकृतय एव न तु केषाञ्चित् प्रकृतय" इति। यतः आकाशात् शब्द उत्पद्यते इत्याकाशः शब्दस्य प्रकृतिर्भवतु। वायोः स्पर्शो जायत इति वायुः स्पर्शस्य प्रकृतिर्भवतु। वह्नेः स्वर्णादयो धातवो जायन्त इति वह्निः स्वर्णादीनां प्रकृतिर्भवतु। एवं वीजरूपायाः पृथिव्या वृक्ष उत्पद्यते वृक्षात् काष्ठफलकः फलकात् नौकाप्रभृतय इत्येवं प्रत्येकमपेक्षया पञ्चमहाभूतानि इन्द्रियाणि च प्रकृतयो भवन्तु। नैवम्, कथमिति? अत्र तत्त्वान्तरोपादानत्वमेव प्रकृतित्वमित्येवं स्वीकारात्।

आकाशात् शब्द उत्पद्यते परन्तु नायमाकाशात् तत्त्वान्तरम् अत आकाशः शब्दस्य न प्रकृतिरूपेण व्यवह्रियते। अत्र सर्वेषामाकाशादीनां स्थूलत्वादिन्द्रियग्राह्यता च समा इति न तत्त्वान्तरत्वम्।

अप्रकृतिविकृतिस्तु पुरुष एव। नास्मात् किञ्चिदुत्पद्यते इति न प्रकृतिः। नायं वा कस्माच्चिदुत्पद्यत इति न विकृतिः इति पुरुषोऽनुभयरूप इति। एतच्च सर्वमुपरिष्टादुपपादयिष्यते इति।

(क्रमशः)

---

# FOR F. A. STUDENTS.

☞ A Paper, on Sanskrit Grammar, given by Baboo Upendra Nath Ray B. A, professor of Sanskrit Literature, Century college, Calcutta.

## SAMASA.

When two or more words of different significations are united together to form a single word, the union is called a समास: or compound. समास: lit. means an aggregation i. e. the aggregation of two or more words to form one compound word. Thus the two words राज्ञ: and पुरुष: become राजपुरुष: ( a single word) when we compound them. ( समसनं समास:। भावे घञ्। अनेकस्य पदस्य एकपदीभवनमित्यर्थ: इत्येके। )

In a compound, the first and all the intermediate words drop their case-affixes ; as राज्ञ: पुरुष: becomes राजपुरुष: सिंहाश्च व्याघ्राश्च हरिणाश्च becomes सिंहव्याघ्रहरिणा:।

## CLASSIFICATION OF COMPOUND WORDS.

Samasas are at first divided into two main classes viz (A) केवल: समास: i e. सुप्सुपेति समास: ; as पूर्वं भूत: =(भूतपूर्वं चरतीति निर्देशात् भूतपूर्व: भूतशब्दस्य पूर्वनिपात: ),

जीमूतस्य इव = जीमूतस्येव (इवेन सह समासो विभक्त्यलोपश्च),* न एकधा = नैकधा ( नैकधेत्यादौ तु नशब्देन सह सुप्सुपेति समासः )। (B) विशेषः समासः। It is again divided into four classes viz (1) अव्ययीभावः (2) तत्पुरुषः (3) बहुव्रीहिः and (4) द्वन्द्वः।

## (१) अव्ययीभावः समासः।

An indeclinable ( अव्ययं ) is compounded with declinable words, with which it may be compounded. ( अव्ययं समर्थेन सुबन्तेन सह समस्यते। ) This form of compound is called an indeclinable compound. In the indeclinable compound the अव्यय precedes the declinable; as दिशोर्मध्ये = अपदिशम्। अव्ययीभाव a compound may be both नित्य ( अस्वपदविग्रहः ) and अनित्य ( स्वपदविग्रहः), as कृष्णस्य समीपं = उपकृष्णम्; मद्राणां समृद्धिः = सुमद्रम्; हिमस्य अत्ययः = अतिहिमम्। रूपस्य योग्यं = अनुरूपम्; हरौ इति अधिहरि; तटे इति अधितटं; तृणमपि अपरित्यज्य = सतृणम् ( नित्याः ) गङ्गाया: अनु = अनुगङ्गं (As long as the ganges); गङ्गाया: पारः = पारे गङ्गम्; तिष्ठन्ति गावो यस्मिन् सः = तिष्ठद्गु ( the time of milking ); अर्थं अर्थं प्रति = प्रत्यर्थम्; वनात् वहिः = वहिर्वनम्; बालेभ्यः आ = आबालं (अनित्याः)।

Words formed by the अव्ययीभाव compound, become अव्यय (indeclinable) अव्ययीभावश्च इति सूत्रात्)। But words of the compound ending in अ have, not their

* "निपातातिरिक्तनामार्थद्वयस्य साक्षाद्भेदान्वयोऽव्युत्पन्नः" इति जगदीशः। इवादिनिपातयोगे तु भेदान्वयस्य व्युत्पन्नत्वात् षष्ठी नापेक्ष्यते यथा घटो न। अभावास्यार्थं नञः प्रयोगेनाच घटस्य न इत्येवं साधुः। ( इति सम्पादकः )

case-affixes elided. They have अम् added to the end in all the case-affixes except in the पञ्चमी ; and in the तृतीया and सप्तमी both the forms are allowed to take place optionally. ( नाव्ययीभावादतोऽम् त्वपञ्चम्याः ।२।४।८३। अदन्तात् अव्ययीभावात् सुपो न लुक्, तस्य पञ्चमीं विना अमादेशश्च स्यात् । तृतीयासप्तम्योर्बहुलम् ।२।४।८४) ; as अपदिशम् (1st), अपदिशम् (2nd), अपदिशेन or अपदिशम् (3rd), अपदिशम् (4th), अपदिशात् (5th), अपदिशम् (6th) अपदिशे or अपदिशम् (7th).

## (२) तत्पुरुषः समासः ।

The तत्पुरुष compound may be both (1) व्यधिकरण and (2) समानाधिकरण । When the former word of the compound is of different विभक्ति from that of the latter, it is called व्यधिकरण as opposed to समानाधिकरण in which both the words are of the same विभक्ति ( तत्र भिन्नविभक्तिकपदघटितो व्यधिकरणः) This व्यधिकरणतत्पुरुष is again of two kinds viz ( a ) नित्यव्यधिकरणतत्पुरुष and ( b ) अनित्यव्यधिकरणतत्पुरुषः ।

### 1. (a) नित्यव्यधिकरणतत्पुरुषः ।

1. सुबन्तः नित्यसमासः ( अस्वपदविग्रहोऽविग्रहो वा नित्यसमासः ) ; as द्विजाय अयं = द्विजार्थः ; अतिक्रान्तो मालां = अतिमालः ; अवक्रुष्टं कोकिलया = अवकोकिलं वनम् ।

2. कृदन्तनित्यसमासः ; as प्रकर्षेण नीतः = प्रणीतः ; दुःखेन जेयः = दुर्जेयः ; कुरुषु चरति = कुरुचरः ; द्वाभ्यां पिबति = द्विपः ; दूरं पश्यति = दूरदर्शी ।

1. (b) अनित्यव्यधिकरणतत्पुरुषः।

1. प्रथमातत्पुरुषः—पूर्वं कायस्य = पूर्वकायः ; अर्द्धं पिप्पल्याः अर्द्धपिप्पली ; * ( They are also called एकदेशिसमास, as they denote some member (अवयव) of the whole body).

2. द्वितीयातत्पुरुषः—कृष्णं श्रितः = कृष्णश्रितः ; दुःख-मतीतः = दुःखातीतः ; अन्नं बुभुक्षुः = अन्नबुभुक्षुः, मुहूर्तं सुखम् = मुहूर्त्तसुखम्।

3. तृतीयातत्पुरुषः—मासेन पूर्वः = मासपूर्वः ; मात्रा सदृशः = मातृसदृशः ; धान्येन अर्थः = धान्यार्थः (तृतीयातत्कृतार्थेन गुण-वचनेन इति सूत्रात्) नखैः भिन्नः = नखभिन्नः (कर्त्तृकरणे कृता बहुलम्)।

4. चतुर्थीतत्पुरुषः—यूपाय दारु = यूपदारु ( तदर्थेन प्रकृति-विकृतिभाव एव बोध्यः—अतः अश्वघासादिवत् रन्धनस्य स्थाली and not रन्धनाय स्थाली ), भूतेभ्यो बलिः = भूतबलिः ; गोभ्यो-हितम् = गोहितम्।

5. पञ्चमीतत्पुरुषः—चौरात् भयं = चौरभयम् ; पापेभ्यः अपेतः = पापापेतः।

6. षष्ठीतत्पुरुषः—राज्ञः पुरुषः = राजपुरुषः ; नराणां पतिः = नरपतिः। सर्वेषां श्वेततमः = सर्वश्वेतः ; सर्वेषां महत्तरः = सर्वमहान् ( न निर्द्धारणे इति पूरणगुणेति च निषेधस्य प्रतिप्रसवो-ऽयम् ) ; भुवनस्य धरः = भुवनधरः (and not भुवनं धरतियः सः)।

7. सप्तमीतत्पुरुषः—कर्म्मणि कुशलः = कर्म्मकुशलः, अक्षेषु शौण्डः = अक्षे शौण्डः वा अक्षशौण्डः, त्वयि अधीनं = त्वय्यधीनं वा त्वदधीनं (अधिशब्दस्य शौण्डादिकत्वात् सप्तमीशौण्डैः इति समासः) कपालयोः सिद्धः = कपालसिद्धः।

---

* कातन्त्रमते प्रथमातत्पुरुषो नास्ति। तत्र कायादेः पूर्वनिपातात् षष्ठीतत्पुरुषः। पूर्वश्चासौ कायश्चेति वा कर्म्मधारयः। ( इति सम्पादकः )

2. समानाधिकरणतत्पुरुषः ।

समानाधिकरणतत्पुरुष may be both (a) नित्य and (b) अनित्य ।

2. (a) नित्यसमानाधिकरणतत्पुरुषः ।

1 कृदन्तनित्यः—as उत्तानः शेते = उत्तानशयः ; पूर्वः सरति = पूर्वसरः ।

2. सुबन्तनित्यः—कुत्सितः पुरुषः = कुपुरुषः ; कुत्सितः अश्वः = कदश्वः ; कुत्सितः सखा = किंसखा ; अपगतः धर्म्मः = अपधर्म्मः । चिदेव = चिन्मात्रम् ।

3. संख्यापूर्वनित्यः—सप्तऋषिसंज्ञकाः = सप्तर्षयः ( दिक्संख्ये संज्ञायामिति सूत्रात् ) ।

2. (b) अनित्यसमानाधिकरणतत्पुरुषः ।

It is of two kinds viz (x) नञ् तत्पुरुषः and (y) कर्म्मधारयः तत्पुरुषः ।

(X) नञ् तत्पुरुषः—न ब्राह्मणः अब्राह्मणः ; न अश्वः = अनश्वः (न लोपो नञः ।६।३।७३ and तस्मान्नुचि । ६ । ३ । ७४ । अपि तु अर्थाभावे ( i. e. अभावे अर्थे द्योत्ये ) अव्ययीभावेन सह अयं (नञ् तत्पुरुषः विकल्प्यते । ) तथाच निन्दायां नञो नस्य लोपः स्यात् तिङन्ते परे ; यथा, अपचसि त्वं जाल्म । नक्र, नाक, नग, नकुल, नख, नपुंसक, नक्षत्र, नम, नासत्य, नमुचि &c are formed by निपात in the नञ् तत्पुरुष compound.

(y) कर्म्मधारयसमासः ।

(I) केवलकर्म्मधारयः—(a) The compound that is formed between a noun and an adjective ; as नीलम् उत्पलं = नीलोत्पलम् ; sometimes there is no विग्रहः वा व्यासवाक्य and it is then called नित्यकर्म्मधारयः as कृष्णसर्पः (विशेषणं विशेष्येण बहुलम् ।२।१।५७। बहुलग्रहणात् क्वचिन्नित्यम् ।

कृष्णसर्पः )। (b) There are certain cases in which the adjective follows the substantive it qualifies; as मयरव्यंसकः (धूर्त्तमयूरः)।

( 2 ) उपमानकर्म्मधारयः—शङ्ख इव पाण्डुः = शङ्खपाण्डुः ; घन इव श्यामः = घनश्यामः ( उपमानानि सामान्यवचनैः। २।१।५५ )।

( 3 ) उपमितकर्म्मधारयः—पुरुषः व्याघ्र इव = पुरुषव्याघ्रः ( उपमितं व्याघ्रादिभिः सामान्याप्रयोगे। २। १। ४६। सामान्याप्रयोगे किम्। पुरुषो व्याघ्र इव शूरः। )

( 4 ) विषयपूर्वपदः—घट इति शब्दः = घटशब्दः ( घटविषय वा शब्द इत्यर्थः ); देवा इति बुद्धिः = देवबुद्धिः ( देवविषयिणी बुद्धिरित्यर्थः। )

( 5 ) रूपितकर्म्मधारयः—विद्या तव धनं = विद्याधनम्।

( 6 ) क्रमिकोभयपदः—पूर्वं स्नातः पश्चात् अनुलिप्तः = स्नातानुलिप्तः ( पूर्वकालैकसर्वज्वरतपुराणनवकेवलाः समानाधिकरणेन। २। १। ४८ ) आदौ पीतः पश्चात् प्रतिबद्धः = पीतप्रतिबद्धः।

( 7 ) मध्यपदलोपी कर्म्मधारयः—शाकप्रियः पार्थिवः = शाकपार्थिवः; देवपूजकः ब्राह्मणः = देवब्राह्मणः ( शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम् इति शासनात्। ) त्रयवयवः लोकः = त्रिलोकः; त्रिलोकस्य नाथः = त्रिलोकनाथः। ( See तत्त्वबोधिनी page 558; षट्संख्यका मासाः = षण्मासाः; तेषां अभ्यन्तरे = षण्मासाभ्यन्तरे।

( 8 ) Words derived by क्तः are compounded with words of the same derivation when the latter are preceded by नञ्; as कृतञ्च तत् अकृतञ्च = कृताकृतम्।

(क्रमशः)

U. N. R.

# FOR B. A. STUDENTS.

AS GIVEN BY BABOO NILMONY NAYALANKAR. M. A. B. L.

Principal ; Sanskrit College, Late Senior professor of Sanskrit literature Presidency College, Calcutta.

☞ Questions with answers on अभिज्ञानशकुन्तलम् or "The token Ring" (Vidyasagar's Edition).

The Prologue :

Q :—What is a नान्दी ?

Ans. :—आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥
इति साहित्यदर्पणे ॥ ६ ॥

Q :—Distinguish between सूत्रधारः and सूत्रधरः, first grammatically, then Ethnologically ?

Ans :—नटानां यः प्रधानः स सूत्रधारः कथ्यते। सूत्रधारस्य स्पष्टलक्षणं न क्वापि दृश्यते किन्तु तात्पर्य्यतो लक्ष्यते यथा साहित्य-दर्पणे ॥ ६ ॥

"यन्नाट्यवस्तुनः पूर्वं रङ्गविघ्नोपशान्तये ।
कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते ॥" एवं
"सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः ।"

इत्यादिषु "रङ्गविघ्नोपहन्तृनान्दीवाचकत्वं सूत्रधारत्वम् इति सूत्रधारलक्षणम् ।

सूत्रधरोऽपि सूत्रधार एव इति शब्दकल्पद्रुमः। सूत्रं सङ्गीतस्य व्यवस्थां सूचनां धरति धारयति वा कर्म्मण्यनि सूत्रधारः प्रधानो नट उच्यते। धरतीति पचाद्यचि सूत्रस्य धरः सूत्रधर इति सूत्रधरणकर्त्ता उच्यते। कार्य्यंञ्च तयोरनेनैव सूचितम् इति।

A सूत्रधारः, is a stage-manager ; whereas सूत्रधरः means a carpenter.

Q:—What is a प्रस्तावना ? give its synomym ?

Ans :—प्रकृतसूचकैः पात्रप्रवेशाद्युपयुक्तैः विचित्रवाग्विन्यासैः नटीप्रभृतयो यत्र मिथो भाषणं कुर्वते सा प्रस्तावना, यथा साहित्यदर्पणे ॥ ६ ॥

"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रवाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनाऽपि वा ॥"

Prologue. प्रस्तावना or सूचना ।

(क्रमशः)

---

# FOR ENTRANCE STUDENTS.

☞ PAPER SET BY THE HEAD PUNDIT OF HARE SCHOOL.

On Translation.

Q :—Translate into Sanskrit.

A certain king once called his servants, but receiving no answer, opened the door of his chamber and saw his page fast asleep. He went to the boy to wake him but as he drew near, he observed a paper partly out of his pocket, upon which something was written. The king was curious to know what was written upon the paper. He pulled it quite out and found that it was a letter from the boy's mother to the following effect.

Ans :—एकदा कश्चिद्राजा स्वं भृत्यवर्गमाजुहाव। किन्तु किमपि प्रत्युत्तरमलभमानः स्वगृहस्य द्वारमुन्मोच्य विलोकयामास स्वं बालकभृत्यं गाढं प्रसुप्तम् । ततस्तु तं प्रबोधयितुं यावदुपसर्पति तावत् तस्य अङ्गरक्षकस्य पुटकादर्द्धनिर्गतं किमपि लेखमद्राक्षीत् । ततस्तु किमत्र लिखितमस्तीति विज्ञातुं कौतूहलाधीनः तत्पत्रं तुर्णों वहिरानीय पठितवान्, ज्ञातवांश्च निम्नोक्तेनाभिप्रायेण तस्य मातुः समीपादागतं पत्रमेतदिति ।

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जगन्निव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भासावतरणिका ।

पक्वाम्र ! गन्धेन मुखस्य तस्याः त्वचाङ्गवर्णैर्हृदयान्तरस्थाः ।
श्लेषे नरेष्टेऽनुकरोषि दूये मोदे च तन्मानमहो भजन्त्याः ॥

## उद्भटश्लोकाः ।

निवसतु तव गेहे निश्चला सिन्धुपुत्री प्रविशतु भुजदण्डे चण्डिका वैरिहन्त्री ।
मुखसरसिजमध्ये भारती भातु नित्यं न चलतु तव चित्तं पादपद्मान्मुरारेः ॥११२॥

जातः क्षीरपयोनिधौ हरजटाजूटे प्रसिद्धोऽसि यत्
सर्वस्योपरि दीपकोऽसि विधिना सृष्टोऽसि यत्नात्ततः ।
भातः शीतमयूख ! सर्वमधुना म्लानीकृतं यत्त्वया
राजीवं परिहृत्य कैरवकुलं नीतं विकासास्पदम् ॥११३॥

देवाः केवलविल्वपत्रतुलसीदुर्वाङ्कुरैरर्चिताः
सन्तुष्टाः पितरस्तु तर्पणजलैरभ्यागताः काकुभिः ।
किञ्च प्रातरमन्दमन्दजठरज्वालावलीड़ात्मजः
व्यग्रात्मदन्दहिषी निवेशितौ शिरो हस्ते पिधाय स्थितः ॥ ११४ ॥

श्रीविधुभूषणदेवः । ( राँचि )

# प्रणतिः ।

( पूर्वप्रकाशितात्परम् )

पिता च पुत्रश्च सुहृच्च हे गुरो ! स्वसा च पुत्री जननी च बान्धवः !
सहोदरश्च प्रकृतिश्च भूपतिर्न किं त्वमेषां जगतीऽनुजीविनाम् ॥ २५ ॥
निरिन्द्रियोऽपीन्द्रियवान् कृतक्रियो गुणार्विवर्जितोऽपि गुणैकमन्दिरम् ।
प्रकाशितान्योऽपि भवान् विलोकितो नमोनमस्तुभ्यमसंख्यमूर्त्तये ॥ २६ ॥
विधातृदेवोऽपि विधेयतायुतो सुयाजकोऽपीश्वर ! याज्यतां गतः ।
उपास्य मुख्योऽपि भवानुपासको जगद्गुरो ! तुभ्यमहो नमोनमः ॥ २७ ॥
अविक्रियो विश्वगुरो ! सविक्रियो जगन्निदानं स्वयमप्यकारणः ।
शरीरमुक्तोऽपि सदा स विग्रही नमोऽस्तु विश्वेश्वर ! विश्वमूर्त्तये ॥ २८ ॥
जगत्तनो त्वं समवायि कारणं निमित्तबीजासमवायिकारणे ।
क्रिया च दाता हर ! सम्प्रदानकः प्रदेयमस्मै गुरुदेव ते नमः ॥ २९ ॥
भवान् जगन्मङ्गल-नीतिमन्दिरं जगच्च देवस्य विलासकाननम् ।
हरेऽथवा विग्रविधातृविग्रयोरभेद एव त्रिगुणात्मने नमः ॥ ३० ॥
पुमान् कलत्रं युवतिर्दृढव्रतो युवा प्रवृद्धो धनवान् बुधाग्रगः ।
गुणी दरिद्रोऽल्पबला च भिक्षुको भवान् न किंस्याज्जगतीतले नमः ॥ ३१ ॥
दिवौकसो देवगुरुश्च हेगुरो ! प्रजाविधातैतददस्तदप्यहम् ।
त्वमेव, विश्वेश्वर ! देव ! सर्वथा नमोनमस्तुभ्यमलौकिकात्मने ॥ ३२ ॥
अनादिमध्याय निरन्तभूतये स्वतः प्रकाशाय गृहीतजन्मभिः ।
अवेद्यतत्त्वाय सकर्तृकात्वतो भुवो वरायानुमिताय ते नमः ॥ ३३ ॥
श्रुतेः पदात् प्रत्ययतश्च वाक्यतो धृतेस्तथायोजनतो विनाशतः ।
विशेष संख्यावशतः कृपावते सदानुमेयाय स ते नमो नमः ॥ ३४ ॥
करालकालग्रसनेषु लीयते जगज्जनै र्दुःखत एव गम्यते ।
इतीव विश्वाश्रय ! तात ! कालिका भवांश्च दुर्गा हरणाद्धरिः प्रभुः ॥ ३५ ॥
ससर्जवेधःप्रभृतीन् सुरान् भवान् नियोजयामास च युक्तकर्म्मणि ।
शरण्य वाञ्छाविधिकल्पपादप ! स ते जगत्पावकमूर्त्तये नमः ॥ ३६ ॥
कदाचन त्वं कमला नृपालये कदा कवीणां वदने सरस्वती ।
कदापि शान्ति र्हृदयेषु योगिनां कदा सुखं जीविमनःसु ते नमः ॥ ३७ ॥
त्वमद्वितीयो ननु बोधरूपः केश्चिच्छिवः केश्चिदनन्तशक्तिः ।
रामेति केश्चित् पुरुषोत्तमेति केश्चिच्चिदानन्दमयेति केश्चित् ॥ ३८ ॥

निर्मूर्त्तिकः केश्चिदथो समूर्त्तिः केश्चिन्नृपः केश्चन सिद्धमन्त्रः ।
पितामहः केश्चन सर्वविज्ञः केश्चित् सुखी क्वापि सुखस्वरूपः ॥ ३९ ॥
अष्टप्रकारेश्वर भावशाली केश्चिद्गुरुः केश्चिदनाहतश्च ।
जगद्विधातेति समुच्यसे कैः यथा तथास्था भव, ते नमोऽस्तु ॥ ४० ॥
न गाणपत्योऽस्ति न शाक्तशैवौ न वैष्णवो दार्शनिकोऽपि नैव ।
मीमांसको नो न च जैनसंघः स्वतन्त्रताभाक् तव दिव्यशक्तौ ॥ ४१ ॥
न भूत-यक्षौ न पिशाचपङ्क्तिः गन्धर्व-विद्याधर-किन्नरौघाः ।
न सिद्धराजी त्रिदिवेश्वरा नो त्वच्छक्तिहस्तं परमं त्यजन्ति ॥ ४२ ॥
सहस्रभानू रजनीश्वरोऽपि प्रभञ्जनो भूमिजले विहायः ।
तेजः पुराणा ऋषयः सुरेशास्त्वच्छक्तितः स्युः किल शक्तिमन्तः ॥ ४३ ॥
त्वमेव वेधाः खलु विश्वकर्त्ता त्वमेव विष्णुर्जगतोऽस्य पाता ।
त्वमेव शम्भुर्जगतोऽन्तकारी त्वमेव विश्वस्य किलान्तरात्मा ॥ ४ ॥
पिता माता धाता जनकजनकस्त्वं परगतिः सखा हर्त्ता कर्त्ता सकलजगतः पालकतमः ।
किमेतैर्वाक्यौघैरखिलभुवनं त्वन्मयमिदं त्वदेकांशेनानुप्रहितममलं शासिति सदा ॥४५॥
सत्यात्मकाय महते जगदाश्रयाय भक्तात्मगेहनिरताय दयामयाय ।
कृष्णाय वेदसकलीलनकारणाय तुभ्यं नमः सकलशक्तिमते शिवाय ॥ ४५ ॥

( श्रीकृष्णासमर्पणमस्तु )

श्रीअन्नदाचरण तर्कचूडामणिः ।

( नोयाखाली,—सोमपाड़ा ।

---

# द्वितीयोऽङ्कः ।

१म गर्भाङ्कः ।

## रामचन्द्रस्य गृहम् ।

कमलया सहासीनो रामचन्द्रः ।

---

कमला । आर्य्यपुत्र ! इच्छामि ज्ञातुं भवतो म्लानमुखतायाः कारणम् । सुनियोजितेनापि चित्तेन भवतः कश्चिदभावो न दृश्यते,

न च ज्ञायते कमभावमङ्गीकृत्येदृशी दशा ते सञ्जाता। इच्छामि कथनेन लघूक्रियतां मनोवेदना इति।

रामचन्द्रः। प्रिये! नार्हामि नवमालिकासुखोदकेन परिषेक्तुम्, न च शक्नोमि तवाग्रहातिशयमवलोक्य वा तुष्णीमवस्थातुम्। सत्यमेव नास्ति मे कश्चिदपि अभावलेशः। वश्या स्त्री, अनुगतो भृत्यजनः, प्रीतिप्रदा बान्धवाः, समयानुगता च प्रभुशक्तिः। अस्त्येव सर्वम्, परमविनयता तनयस्य मां पीड़यतीत्यवगम्यताम्।

कमला। नास्ति कश्चित् सुखी देहीति जनवादः श्लाघ्यतर एव; अन्यथा असति दुःखकारणे कथमार्य्यपुत्रेण दुःखमनुभूयते। विज्ञवर! वृथात्मानं शोचितुं नार्हसि। प्रथमतः पुत्रस्य परिणयार्थं सयत्नो भव। सम्पादितेऽस्य परिणये कदापि पुनरुद्धतवत् नाचरिष्यतीति मे दृढ़विश्वासः।

रामः। ( स्वगतम् ) ईदृश्येव रमणीमतिः। ( प्रकाशम् ) प्रिये! तादृशौद्धत्यनाशे नववधूर्न क्षमा भविष्यति। ( क्षणं तुष्णीं स्थित्वा ) सुरेशोऽधुना तृणवत् मन्यते सर्वम्। स प्रतिदिनं किंविधो भवतीति मदीयेन चक्षुषा चेत् द्रष्टुं समर्थासि तदावगन्तुमपि शक्ष्यसि।

कमला। मत्तः सुष्ठु जानाति भवानतः सर्वं विविच्य क्रियताम्। भवादृशे, विज्ञे मादृशां नास्ति वचनावसरः। सर्वथा कुलदेवता नः कुशलं विधास्यन्ति।

प्रविश्य तुलसीदासः। देव! तत्रभवतः प्रियबन्धुः समायातो भवद्दर्शनाकाङ्क्षी वहिर्द्देश एव तिष्ठति। एतदाकर्ण्य देवः प्रमाणम्।

रामः। कथं प्रियसुहृन्मे नीलाम्बरः समागतः। प्रिये! गन्तुमिच्छामि, त्वमपि स्वकार्य्यं साधय तावत्।

(इति निष्क्रान्ताः)

२य गर्भाङ्कः।

## रामचन्द्रस्य वहिर्गृहम्।



नीलाम्बरः। प्रियसुहृदो मे रामचन्द्रस्य सर्वाङ्गीनप्रमदतामालोक्य नन्दति मे हृदयम्। विमलचित्तस्य कुशलं विदधाति विधातेति लोकवादः सर्वोत्कर्षेण शोभते। कदापि न दृष्टः श्रुतो वा रामचन्द्रसदृशः सर्वगुणालङ्कृतो जनः। (विविच्य) किं स मे प्रिय इति मां प्रति तादृशः प्रतिभाति? नहि नहि; सर्वत्रैव तस्य सुख्यातिराकर्षिता। सर्वजीवेषु यः समः; दया दाक्षिण्यादयो गुणाः सदा यस्मिन् प्रस्फुरन्ति; स एव सार्थकजन्मा धन्यतरश्च। (निरूप्य) अहो! सौम्यमूर्त्तिरयम् इत एव आगच्छति।

प्रविश्य रामचन्द्रः। अहो! प्रियसुहृन्मे नीलाम्बरः। अपि कुशली भवान्?

नीलाम्बरः। अथ किम्। भवन्तमपि कुशलिनं ज्ञातुमिच्छामि।

रामः। भवदागमनेनैव सर्वत्र नः कुशलम्। मित्र! किमर्थमत्रात्मा पदं नीतः। अथवा, सन्तोषाय नो भवदागनमिति मन्ये।

नीलाम्बरः। सर्वं खलु शोभते भवादृशे विमले। मित्र! अधित्यकातः पुष्पवन्तास्तोदयदृश्यमतीवमनोहरमिति श्रुतम्। अत इच्छामो भवद्भिर्दर्शनीयं तद्द्रष्टुम्। न चेदन्यकार्य्यातिपातस्तदाद्य तत्र गमनेन सुखिनो भवाम इति मे मनोऽभिलाषः।

रामः। किं मेऽन्यदस्ति मित्रप्रसादनतः, भवदभिमतमेव रोचतेऽस्मभ्यम्। साधयाम स्तावत्।

नीलाम्बरः। मित्र! कथमेतावन्तं समयं नावलोकयामि सुरेशम्।

रामः। स तु निर्ज्जने पुस्तकमन्दिरे निभृतोऽवतिष्ठते।

नीलाम्बरः। आकलयतु तं द्रष्टुमिच्छामः।

रामः। यदभिरोचते भवते। ( पार्श्वमवलोक्य ) कः कोऽत्र भोः।

प्रविश्य तुलसीदासः। आज्ञापयतु स्वामी।

रामः। मित्रागमनं विज्ञाप्यात्रानीयतां सुरेशः।

तुलसीदासः। यत् देव आज्ञापयति। ( इति निष्क्रान्तः। )

रामः। मित्र! क्षणं तावत् विश्राम्यतां यावदहमधित्यकागमनार्थं सज्जीभवामीति। ( निष्क्रान्तः। )

प्रविश्य पुस्तकहस्तः सुरेशः। प्रणतोऽस्मि। तातसखाय।

नीलाम्बरः। वत्स! चीरं जीव।

सुरेशः। किमर्थमत्र भवताकारितोऽस्मि।

नीलाम्बरः। वत्स! अद्य पूर्णिमा तिथिः। अतोऽभिलषितमस्माभिरधित्यका प्रदेशात् सूर्य्यास्तगमनं चन्द्रोदयञ्चावलोक्याकानमानन्दपदं नेष्याम इति। तव तातोऽपि तत्र गमिष्यति। त्वमप्यधुनास्माभिर्मिलितो भवेति मे मानसो भावः।

सुरेशः। गच्छन्तु भवन्तः। नाहं गन्तुमिच्छामि। अध्ययनादृते न किमपि मे प्रमोदप्रदमिति मन्ये। भारतीकृपया पुस्तकाभ्यन्तरादेव सर्वं विलोकयिष्यामः।

प्रविश्य यथोपयुक्तपरिजनो रामचन्द्रः। मित्र! आगच्छतु, कालविलम्बेनालम्।

नीलाम्बरः। ( जनान्तिकम् ) वत्स सुरेश! नास्माभिर्दृष्टः श्रुतो वा कश्चिदपरस्त्वादृशः पाठशीलः। साक्षात् सरस्वतीवरपुत्रमिव त्वां मन्ये। क्षेमं ते भूयात्। अधुनानुमोदस्व नो गमनायेति।

( इति निष्क्रान्ताः। )

सुरेशः। गता एव वृद्धपादाः। [ पुस्तकं कञ्चुककोषाभ्यन्तरे संरक्ष्य काष्ठासनोपरि उपविशन्। ] इदानीं किं मे प्रियं भवतु।

नास्त्यत्र कोऽपि श्रोता दर्शको वा यमालपामि दर्शयामि वा स्व पाण्डित्यम्। (इतस्ततो विचरन्।) अतीवाध्ययनासक्तं मामवलोक्य जीर्णकूर्चास्ते पितृसखाः तातपादैः सह किं विचारयन्तीति श्रोतुं ममान्तरात्मा प्रस्फुरति। विहगश्चेदभविष्यं तदाकाशमार्गेण तत्र गत्वा तेषां वाग्जालमाकर्ण्यात्मानं सुखिनमकरिष्यम्। किं करोमि; स्थानमिदमिदानीं निर्जनतया कष्टप्रदं जातम्। [ विमृश्य ] तातपादाः खलु शीघ्रमेवात्र प्रतिनिवर्त्तिष्यन्ते। यद्यहमस्मिन्नन्तरेऽरण्यमध्ये गोपायिष्यामि, तदा ते खलु मामनवलोक्य विस्मिता भविष्यन्ति। केऽपि कथयिष्यन्ति, दार्शनिकोऽसौ कमपि पदार्थं विभावयन् कुत्रास्ते; केऽपि वक्ष्यन्ति; शास्त्रतत्त्वज्ञोऽसौ संसारस्यानित्यतामवगम्यारण्यं गत इति। यज्जाव्यं भविष्यति। पिता मेऽवश्यमन्वेषणार्थं दासानितस्ततः प्रेरयिष्यन्ति; तेऽपि मामन्विष्य पुनरत्रानेष्यन्ति। अतोऽहं गच्छामि। ( इति निष्क्रान्तः। )

इति द्वितीयोऽङ्कः।

---

## पल्लिच्छविः।

( पूर्वप्रकाशितात्परम् )

तत्किञ्चिदपि पितामह कर्णगोचरं न ज्ञातवती, परन्तु अनिच्छन्त्यपि तत्सन्देशं गृहीत्वा धूर्त्तसकाशं यथाविधि गतवती। शैवलिनी इदानीम् एकादशवर्षदेशीया। नेदानीं सा तस्य पापवाक्यजातं सोढुं शक्नोति। तथापि पितामहसन्देशं यथाविधि तत्सकाशं हरति। अहर्दिवं बाला पितामहशुश्रूषणपरा—यथा यथा अस्य सुखं भवेत् तथा सा आचरणपरा च।

अथ तस्या वयो वृद्ध्या सह कामपालस्य पापलालसा क्रमशः वृद्धिं गता। वृद्धस्य कष्टनाश्याहितं विना न स्वीकार्य्या मया शैवलिनीत्याकलय्य अहर्निशमेनं देयमधिकृत्य ज्वालयन् शेषं सर्वमस्य वास-

भूमिं स्वीचकार। वृद्धस्तु पौत्र्या सह तस्य निकृष्टतमं प्रकोष्ठमधिकृत्य आधिव्याप्तो निवसतिस्म।

नाशक्नोत् अतःपरं सोढुम्। अजस्रं चिन्तादह्यमानमस्य शरीरं क्रमेण महादाहज्वरवशतां गतम्। दैननिन्दं सन्तापे प्रवृद्धे वृद्धोऽचिरेण निःसंज्ञतामभजत। क्षुद्रे कस्मिंश्चित् प्रकोष्ठे पितामहो निसंज्ञः शय्यामधिशयाणः—तस्य पुरतः प्रियतनुजनन्दिनी शैवलिनी तस्य शुश्रूषणपरा। बाला सर्वमेव आत्मसुखं विहाय पितामहशुश्रूषणे रता। पुरतः अजस्रं कामपालस्य वागग्निदाहः अग्रतः तदेकशरणभूतः स्वल्पशय्याशयितः पितामहः। सा कथमपि चिन्तयितुं न शक्नोति तस्या भाविनीमवस्थाम्। अहर्निशं देवता सकाशं केवलं पितामहजीवितं प्रार्थयते।

क्रमेण अनाथजनैकबान्धवो जगदीशः तस्या उपासनां श्रुतवान्। वृद्ध उपशान्तज्वरतापो जातः बलञ्च प्रत्यागतं तस्मिन्।

उपशान्तज्वरोऽपि वृद्धः शान्तिं न जानाति। अहर्निशं कामपालः ऋणशोधनार्थं तं पीड़यति। किं बहुना यस्मिन्नेव गृहे वसति तदेव परायत्तम्। परिशेषं किंकर्त्तव्यपराङ्मुखः स्वदेशान्तरगमनमानसः विद्याधरः प्राणाधिकां शैवलिनीमुवाच "जाते,अतःपरं सोढुं न शक्नोमि। अधुना देशान्तरगमनं विना नास्त्यपरजीवितसन्धारणोपायः। वरं तत्र भिक्षया जीवामि। न क्षणमप्यत्र स्थातव्यमिति। शैवलिनी तु बहूनि दिवसानि यावत् कामपालसंसर्गविहापनार्थं प्रार्थितवती, अधुना सा पितामहगिरमाकर्ण्य परं हृष्टा तमुवाच "आर्य्य कदा गन्तव्यम्" अधुनैव किम् ?" "तेनोक्तं "वत्से ! आगामिन्यां रजन्याम् अस्तं गते भगवति कुमुदिनीनायके तमसाभिभूते संसारे सर्वैरलक्षितमेव गन्तव्यम्, अन्यथा स दुरात्मा प्रतिकूलयिष्यति।"

अथागामिन्यां रजन्यां गमनमानसौ तौ महता कष्टेण दिवस-

तमशेषं क्षपितवन्तौ। ततः संप्राप्तायां निशीथिन्याम् अस्तमुपगते च श्वेतभानौ वृद्धः पौत्रीहितयः स्वर्गादपि गरीयांसं स्ववासं विहाय नीरवं निष्क्रान्तः। न जानाति कुतो गन्तव्यमिति, तथापि कामपालग्राममतिक्रमितुं यथाशक्ति ग्रामात् ग्रामान्तरं जगाम। सुदूरं गतोऽपि कामपालग्रासभीतः पुनरपि अविश्रान्तं गमनरतः रजन्यामवसन्नायाम् अध्वगमनखिन्नः कस्यचन तरोर्मूलदेशे स्थितिञ्चकार। सुमतिर्बाला वस्त्रान्तारक्षितेन मोदकेन वृद्धस्य आत्मनश्च क्षुधामुपशमितवती।

ततः क्षणं विश्रान्तः पुनर्गमनप्रवृत्तः परिणते दिवसे काञ्चनपान्थशालामवाप। तत्र च निशां निनाय। पुरा समृद्धिसमये पितामहो यत्किञ्चिदस्यै स्वव्यवहारार्थं निभृतमर्पितवान्। सा तु धीमती ततो लवमपि न क्षयितवती, अधुना तद् विनिमयेन सा आहार्यादिकमानीय वृद्धस्योदरतृप्तिमनयत्।

अथ क्षयं गते तदीये अर्थलवे वृद्धस्य क्षुधातृप्तिं भिक्षावृत्त्या चकार। क्रमेण भिक्षापि दुष्प्राप्यतां गता। ततः यत्किञ्चित् समासादितवती तेनैव वृद्धस्य क्षुधां निवर्त्तयामास, आत्मनस्तु उदरे किञ्चिदपि न प्रददौ।

अथ कदाचित् भिक्षार्थं बहिर्गता बाला न किञ्चित् समासादितवती। अशेषं तद्दिवसं प्रखरदिवाकरकरसन्तप्ता ग्रामाद् ग्रामान्तरं भिक्षार्थं अटन्ती शेषं निराशा आश्रमं प्रत्यागता प्राणाधिकं पितामहं क्षुधापीड़ितं प्रायो मृत्युकवलगतञ्चाद्राक्षीत्। ततस्तं "वत्से नालं त्वम्।आत्मजीवितपातेनापि क्षुत्क्षाममेनं रक्षयितुं ते तात तातं करालकालपाशादिति ब्रुवन्तं तातातं मूर्च्छितमालोक्य सा आत्मानं स्थिरीकर्त्तुं न शशाक। यदर्थं जीवितमपि परित्यक्तुमर्हति स एव पितामहः क्षुधापीड़ितः संज्ञारहितः मृतकल्पः पुरतस्तिष्ठति। दृश्यमेतत् सा दर्शनाक्षमा सात्तस्वरा भूमितलं पतिता विलुप्तसंज्ञा

च सञ्जाता। अथ तदार्त्तस्वरेण लब्धसंज्ञः पितामहः प्राणाधिकां शैवलिनीं तदवस्थामालोक्य पुनरपि विगतसंज्ञो भूवि निपपात। ततो ग्रामवासिभिः महत्या शुश्रूषया वृद्धस्य चैतन्यं पुनरापादितम्। शैवलिनी तु तच्छयनात् न पुनरुत्थिता। पापसंसारयन्त्रणा न पुनरेनां तपति। सच्चिदानन्दनिकेतने अनन्तशान्तिवक्षसि सा विराजिता। वृद्धस्तु क्रमेण उन्मत्ततां भेजे। तस्य प्राणाधिका शैवलिनी तं चिराय परित्यक्तवतीति वृद्धः कथमपि न विश्वसिति। ततः प्रभृति तदा वासं प्रविशन्तं यं कमपि स ब्रवीति "मच्छैवलिनीमालोकयितुमागतोऽसि। शृणु, भद्र! कृतं कलकलेन। एतावन्तं कालं मदर्थम् अजस्रं खेदिता अधुना परिश्रान्ता सा विश्राम्यति। नैनां प्रबोधयितुमलमिति।

अस्मिन्नेवावसरे दुरात्मनस्तस्य कामपलस्य सर्वमेव दुष्कृतं व्यक्तिं गतम्। ततो धर्माधिकरणकैः पीड्यमानः उपायान्तरमनवलोक्य आत्मानं सरिति प्रक्षिप्य जीवितेन परिमुक्तो बभूव।

अनेन च वृद्धस्तस्यापहृतं वित्तं पुनरापत्। किन्तु न कोऽपि तस्यावासमवगच्छति। ततस्तत्पक्षीयैः पुरुषैः स तस्मादेव निभृतात् प्रदेशादाविष्कृतः स्वपदं स्थापितः। सर्वमेव वृथा। स तु उन्मत्तप्रलापी। सततं हि यं कञ्चित् तद्गृह मायान्तमभिधत्ते भद्रमुख! मच्छैवलिनी नितान्तं परिश्रान्ता निद्राति, नालमेनां प्रतिरोधयितुं कलकलेनेति।

इति श्रीमद् उपेन्द्रनाथराय-विरचिता पल्लिच्छविः सम्पूर्णा।

---

## मातृभक्तिः।

सहृदयाः! कियन्तो नाम मन्दमतिभिरस्माभिर्वाचामगोचरा वक्तव्याः मातृदेव्या गुणाः कियच्च प्रतिपादनीयं गौरवं तद्भक्तयाः।

ययैव स्वजीवननिर्विशेषमुपाजीविता वयम्, ये ये वैतासुपलंभिताः सुखैकविषयां दशाम्, ययैव प्रीतिपुरःसरमुपलालिताः पोषिताः संवर्द्धिताश्च तस्याः श्रीमातृदेव्याः कियतो वा गुणान् कियत्कालं वदत्वियं रसना ? नूनं यल्लेखने कल्पपादपशाखाया अप्यपर्याप्ता लेखनी, आकाशनिर्विशेष-विस्तारमप्यपरिपूर्णमेव पत्रम्, सिन्धुसमधिकापि नालम्भविष्यति मसी, वाक्पतिरपि न प्रभविष्यति वर्णयितुम्, न वा वैतत्खण्डतुखण्डोऽपि लिखितुम्। तस्यैव महीयसो विषयस्य मादृशैः क्षुद्रधिषणैः प्रतिपादनं नाम सुचक्षुष्कैरप्यप्रत्यक्षीक्रियमाणे वस्तुनि विलोकनायासो नयनविधुरस्य किन्तु "नभः पतन्त्यात्मसमम्पतत्रिणः" इत्यस्ति अस्माकमप्यधिकारो लिखितुम्।

भो महाशयाः! निपुणं तावद्विचारयत चेतसि नैसर्गिकस्नेहबहुलेषु सकलेष्वपि जगति जायमानेषु वस्तुषु कस्य वा प्रथमतो निर्देष्टव्यं नाम ? किं राज्ञः ? उत बान्धवस्य ? आहोस्वित् सुहृदः ? उताहो आचार्यस्य ? उत पितुः ? अथवा श्रीमातृदेव्याः ? नूनं प्रतिपन्नविचाराः सर्वेऽपि यूयमङ्गीकरिष्यथ यन्न श्रीमातरमन्तरा कस्यापीति। अहो! कियन्तो नाम उपकृतयोऽस्मासु श्रीजनन्याः। पश्य तावच्छैशवम्। यानवलोक्यापि बान्धवा अपि पिदधीरन्नयनयुगलम् हन्त! तेष्वेव विलुठतः पुरीषादिषु शिशून् का वा मातरमन्तरा प्रीतिपुरःसरं प्रमोदमाना विमलीकरिष्यति ? का वा कदाचिदपि दुःसहगदविह्वलीक्रियमाणे बालके स्वयं सुदुष्करमपि पथ्यमाचरन्ती निराकरिष्यति व्याधिम् ? का वाऽसह्यवेदनाजर्जरीकृतमवलोकमाना तनयं दन्दह्यमानजठरानलोपशमपर्याप्तमपि विस्मरिष्यति अन्नम् ? का वा स्वप्राणपणैरपि कामयेत शिशोर्जीवनम् ? का वा अनुपहतेनापि स्वचेलाञ्चलेनापनेष्यति वदनसंलग्नं धूलीपटलं डिम्भस्य ? ब्रूत भोः ब्रूत महाशयाः! कश्चित् क्वचिद्दृग्विषयो भवतां पदार्थः यः सदृशो मातुः।

''स्तन्यं प्रपाययति शाययते निजाङ्के मोदादिहलोकयति पालयति स्वजीवात्।
सत्कर्म कारयति वारयते तदन्यत् का वा परा वद जनेषु विना सविचीम्?''

चिरायापि अन्विष्यन्तो वयं न किल विलोकयामो मातृनिर्विशेषं वस्तु। वंहीयसापि कालेन सुप्रसादितोऽपि देवो देवी वा न मनागपि मर्षयति स्ववैरूप्यम्। हन्त! श्रीमातृदेवी तु शिशुनाऽपभाष्यमाणा वा, क्रोधादाहन्यमाना वा, गेहान्निराक्रियमाणा वा असम्भाष्यमाणा वा दुरवस्थामापादिता वा न किञ्चिदपि कदाचिदपि विरुद्धमनुध्यायति पुत्रस्य। प्रत्युत सन्ततं मङ्गलमेवाशास्ते अतएव श्रीशङ्कराचार्याः "कुपुत्रो जायेत क्वचिदपि कुमाता न भवति" इत्याहुः। मातैव सहते पुत्रप्रदत्तान् परः सहस्रान् क्लेशान्। यथा धरणिरपक्रियमाणापि न प्रत्यपकरोति। मलीमसमपि निन्द्यमपि प्राणिशिशुभिः समुत्सृष्टं स्वशरीरे सुखं धारयति पदार्थम्, तेन च न मनागपि क्लिश्यति, तथैव मातापि स्वशिशुसमुत्सृष्टं निषिद्धमपि पुरीषादिकं विमलेऽप्यङ्के धारयति न मनागपि त्रस्यति प्रत्युत प्रमोदते अतएव धर्मिप्रवरो मनुः श्रीमातृदेव्याः सर्वसहास्वरूपत्वं प्राह यथा,—"माता पृथिव्या मूर्त्तिस्तु" इति २।२२५। तथा श्रीमहाभागवतेऽपि "माता साक्षात्क्षितेस्तनुः" इति।

मन्ये सर्वसहामप्यतिशेते गुणैः श्रीमातृदेवी, तथाहि,—सहते क्षितिः सर्वदा सर्वेषामपि दुश्चेष्टितानि किन्तु नैवं विधेयम् अनेनेयतीवो हानिरिति न कदाचिदुपदिशति। श्रीमातृदेवी तु सन्ततमुपदिशन्ती प्रतिनिवारयति दुष्कर्मणः सकाशात्तनयान्।

अयि भोः महाशयाः! सकृदपि निक्षिप्यतां चक्षुर्धर्मग्रन्थेषु मन्दं मन्दं मनागपि समास्वाद्यतां माहात्म्यं श्रीमातृदेव्याः। अवश्यकर्त्तव्यविषयेष्वेवैकतमा मातृभक्तिरित्यप्यवधार्यताम्। अस्मिँ ल्लोके सुखं निर्विवक्षोर्मनुजस्य मातैव परमवलम्बनम्, तदङ्कमेव हि समश्नुत इमं लोकम् आबाल्यात् प्रतिदिनमुपचीयमानेनैव हि

मातृप्रदत्तशिक्षणेन कर्त्तव्याकर्त्तव्यविभावनप्रवीणो भवति मानुषः ततश्च सुखमेव सेवमानो भूमौ निरन्तरं निवसति। अतएव मनुः २। २३३।

"इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम्।
गुरुशुश्रूषया त्वेवं ब्रह्मलोकं समश्नुते॥" इत्याह

विष्णुरपि ३१ अध्यायस्यावसाने एवमेवाह।

महाभारते शान्तिमोक्षपर्वणि १६६ अध्याये चिरकारिकेणोक्तं मातृमाहात्म्यम् यथा,—

"योऽह्ययं मयि सङ्घातो मर्त्यत्वे पाञ्चभौतिकः।
अस्य मे जननी हेतुः पावकस्य यथारणिः॥ २५॥
माता देहारणिः पुंसां सर्वस्यार्तस्य निर्वृतिः।
मातृलाभे सनाथत्वमनाथत्वं विपर्यये॥ २६॥
न च शोचति नाप्येनं स्थाविर्य्यमपकर्षति।
श्रियाहीनोऽपि यो गेहमम्बेति प्रतिपद्यते॥ २८
पुत्रपौत्रोपपन्नोऽपि जननीं यः समाश्रितः।
अपि वर्षशतस्यान्ते स द्विहायनवच्चरेत्॥ २८॥
समर्थं वाऽसमर्थं वा कृशं वाऽप्यकृशं तथा।
रक्षत्येव सुतं माता नान्यः पोष्टा विधानतः॥ २९॥
तदा स वृद्धो भवति तदा भवति दुःखितः।
तदा शून्यं जगत्तस्य यदा मात्रा वियुज्यते॥ ३०॥
नास्ति मातृसमा च्छाया नास्ति मातृसमा गतिः।
नास्ति मातृसमं त्राणं नास्ति मातृसमा प्रिया॥ ३१॥
कुक्षिसन्धारणाद्धात्री जननाज्जननी स्मृता।
अङ्गानां वर्धनादम्बा वीरसूत्वेन वीरसूः॥ ३२
शिशोः शुश्रूषणाच्छुश्रूर्माता देहमनन्तरम्॥" इति

किञ्च मातृमाहात्म्यं प्रतिपन्नास्तत्प्रचिख्यापयिषयैवास्मत्-पूर्वाचार्य्याः प्रायेण मातरं तत्सम्बन्धिनीमेव च क्रियां प्रथमतोऽनुष्ठेयां निरदिक्षन्। उपदिष्टञ्च प्रथमं मातृसम्मान एवापस्तम्बोप-

निषदि "मातृदेवो भव। पितृदेवो भव आचार्यदेवो भवेति" अतएव च वृद्धि श्राद्धादिषु मातृश्राद्धमेव प्रथमतोऽनुष्ठीयते तदुक्तं लिखितेन,—

"मातुः श्राद्धन्तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं मतम्॥ ११॥" इति।

यथा चोपदिशति सत्कर्माणि श्रीमाता न तथा गुरुरपि यथा च तयोपदिश्यमानः शिशुर्दुरध्यवसायाद्विरमेत् आकलयेच्च साध्वसाधुभावम्, न तथा चिरायाप्यनु-शास्यमानो गुरुणा अतएव अत्रिः "नास्ति वेदात्परं शास्त्रं नास्ति मातृसमो गुरुरित्याह" माता पित्रोराचार्यस्य च गौरवं प्राह मनुः २ अध्याये।

आचार्य्यश्च पिता चैव माता भ्राता च पूर्वजः।
नार्त्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः॥ २२६॥
यं माता पितरौ क्लेशं सहेते सम्भवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि॥ २२७॥
तयोर्नित्यं प्रियं कुर्य्यादाचार्य्यस्य च सर्वदा।
तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते॥ २८॥
तेषां त्रयाणां शुश्रूषा परमन्तप उच्यते।
न तैरनभ्यनुज्ञातो धर्ममन्यं समाचरेत्॥ २९॥"

(क्रमशः)

राशिवडेकरोपाह्वः श्रीअप्पाशास्त्री।
कोल्हापुर।

---

## धर्म्मविवेकः।

आगत्य वामापदः। "गुरुचरणकमलेभ्यो नमः" इति साष्टाङ्गं प्रणम्य स्थितः।

शिवरामः। वत्स ! वामापद ! इत उपविश, अहो प्रचण्डोऽयमातपः। न वाति समीरणोऽपि अन्तरान्तरावाति चेत् प्रतप्तः। दहतीव नासापुटं प्राणवायुः प्रविशति निर्विशति च।

वामा। धूलिमयेषु च क्षेत्रेषु रुक्षमिता अपि शालयः उत्तप्ता इव कृशानुना शोकमुत्पादयन्ति पश्यताम्। पङ्किलास्तु धान्यभूमयः शुष्यति वारिणि सुहृच्छोकेनेव हृदि विदीर्यन्ति। न जाने भगवत्यन्नपूर्णा वर्षेऽस्मिन् कीदृशीं शस्यसिष्पत्तिं जनयिष्यति।

शिवः। वत्स ! आ एवं स्मरामि विगतकार्त्तिकमासः सप्तदशदिवसात् परमद्ययावत् न सम्यक् ववर्ष देवः। तेनैव विविधैः रोगैरुपद्रुताः प्राणिनः।

वामा। किं वक्ष्यामि, अद्यापि विसूचिका मसूरिका च कलिकाता नगरीमुत्सादयितुं न न्यवर्त्तताम्।

शिवः। यद्विधेर्म्मनसि स्थितं तदेव सम्पत्स्यते। तच्चिन्ता तावदास्ताम्। अधुना मनो निधीयतां धर्म्मविवेके।

वामा। वाढं सावहितोऽस्मि।

शिवः। श्रुतं कणादाभिप्रेतं धर्म्मलक्षणम्। अधुना कर्म्मैकपक्षपातस्य जैमिनेर्धर्म्मलक्षणं श्रूयताम्। यथा,—

## चोदना लक्षणोऽर्थो धर्म्मः। २।

अस्यार्थः—चोदना प्रेरणा कर्त्तव्यत्वेन नियोजना, यथा श्राद्धं कुर्य्यात्, पितृभ्यो दद्यात्, राहुदर्शने स्नायात् अर्थात् कर्त्तव्यता बोधकस्य वाक्यस्यैवार्थः प्रेरणा। कर्त्तव्यता बोधकस्तु लिङ् तव्यादिः यथा कुर्य्यात, दद्यात् स्नायात्, कर्त्तव्यं दातव्यं स्नातव्यमित्यादि।

लक्षणं स्वरूपम्। अर्थः अभ्युदयहेतुः—आत्मोन्नतिकारणम्। तथा च भाष्यं "कोऽर्थः योऽभ्युदयाय, कोऽनर्थः योऽनभ्युदयाय" प्रेरणैव लक्षणं स्वरूपं यस्य सः एवंविधोऽर्थः धर्म्मः। अर्थात् यो हि

वेदादिशास्त्रेण कर्त्तव्यत्वेन प्रतिपाद्यते एवम् अभ्युदयहेतुश्च भवति स धर्म्मः यथा "मा हिंस्यात् सर्वा भूतानि" सर्वभूतहिंसानिवृत्ति-र्धर्म्मः। एतेन प्रेरणागम्यत्वे सति अभ्युदयहेतुर्धर्म्म इति सम्पूर्णं धर्म्मलक्षणम्।

अत्र मीमांसको भट्टः कथयति।

विचारविषयो धर्म्मो लक्षणेन विवर्जितः।
मानेन वा'थवोपेतस्ताभ्यामिति विचिन्त्यते ॥
लौकिकाकारहीनस्य तस्य किं नाम लक्षणम्।
मान शङ्का तु दूरेऽच प्रत्यक्षाद्यप्रवर्त्तनात् ॥
चोदनागम्य आकारोऽस्यर्थत्वे सति लक्षणम्।
अतएव प्रमाणञ्च चोदनैवात्र नो कुतः ॥

ननु यस्य वस्तुनः लक्षणप्रमाणे स्तः ताभ्यां तत्सिध्यति, अतएवाहुः "मानाधीना मेयसिद्धिर्मानसिद्धिश्च लक्षणात्।" इति। सजातीय विजातीय व्यवच्छेदकः कश्चिल्लौकिकः हस्तपदादिराकारो लक्षणम्। तेन च लक्षणेन लक्ष्ये वस्तुनि सम्भावना बोधे जाते यथार्थप्रज्ञा विधानाय समुद्यतः पुरुषः प्रमाणेन तदवगच्छति। यथा,—"शृङ्ग-लाङ्गुलगलकम्बलवती गौः" तथाविध प्राणिषु तत्तल्लक्षणमनुसन्धाय "इयं गौरिति" चक्षुषा निश्चिनोति।

एवञ्च सति, धर्म्मो हि अलौकिकः नास्ति तस्य कोऽप्याकारः (*) तं कथं प्रमाणीकर्त्तुमुद्युक्तः। न तावद्धर्म्मे प्रत्यक्षमग्रे शरति, तस्य रूपादिरहितत्वात्। अतएव प्रत्यक्षमूलमनुमानमपि धर्म्मस्य न सम्भवति। एवं प्रत्यक्षानुमानमूलः शब्दस्य सङ्गतिग्रहः तस्मिन् विषये व्युत्पत्त्यभावात् आगमोऽपि धर्म्मं व्युत्पादयितुं नालम् तस्मा-द्धर्म्मो निर्लक्षणः निष्प्रमाणश्च।

---

* विगतं च ज्यैष्ठमासि चतुष्पाचतुर्वक्त्रादिः यद्धर्म्मस्य आकारश्चित्रितः स तु सत्क्रिया-रूपस्य धर्म्मस्याधिष्ठाता देवविशेषः।

सत्यं माभूच्चक्षुरादिविषयो लौकिको हस्तपदाद्याकारः। किन्तु तथापि "अश्वमेधेन स्वर्गकामो यजेत" इत्यादि प्रवर्त्तनागम्यः स्वर्गफलसाधनत्वादिरूपः आकारोऽस्ति। एतेन "प्रेरणागम्यत्वे सति अभ्युदयहेतुर्धर्म्म" इति यदुक्तं धर्म्मलक्षणं तन्निर्दुष्टम्। अभ्युदयहेतुर्धर्म्म इत्युक्ते बौद्धानां चैत्यवन्दनादिर्घटपटादिश्च अस्माकं धर्म्मो भवितुं पार्य्यते तद्व्यावर्त्तनाय प्रेरणागम्यत्वे इति भागो लक्षणे दत्तः। "प्रेरणागम्यो धर्म्म" इत्युक्तेऽपि अथर्ववेदे उक्तया "श्येनेनाभिचरन् यजेत" इत्यनया श्रुत्या प्रेरणागम्योऽपि शत्रुवधसाधकः आभिचारिकः श्येनयागः धर्म्मो भवितुं पार्य्यते तद्वारणाय "अभ्युदयहेतुः" इति धर्म्मलक्षणे निविश्यते।

अभिचारकर्म्मणस्तु अधर्म्मजनकत्वं मनुनोक्तम्। यथा,—मनौ ११।६४।

"सर्वाकरेष्वधीकारो महायन्त्रप्रवर्त्तनम्।
हिंसौषधीनां स्त्र्याजीवोऽभिचारो मूलकर्म च॥"

यद्यपि श्येनस्य शत्रुमारणमेव फलं न तु नरकः तथापि तस्य वधस्य नरकहेतुत्वाद्वधद्वारा श्येनोऽनर्थः।

वामा। गुरवः! यदि वेदोक्तश्येनयागो नरकहेतुस्तर्हि अश्वमेधयज्ञेऽपि अश्वालम्भनरूपं हिंसास्तीति सोऽप्यधर्म्मो भवतु।

शिवः। मैवं, अश्वमेधोऽधर्म्मो नैव भवेत्। कथमिति चेत्, तस्य अश्ववधस्य यज्ञाङ्गत्वेन यज्ञफलं स्वर्गं विना नान्यत् फलं नरकादिकं जायते। अतएव गम्ये धर्म्मे गमकं विधिवाक्यं प्रमाणम्। यद्यपि प्रत्यक्षानुमानाविषयो धर्म्म स्तथापि—

"धर्म्मो विश्वस्य जगतः प्रतिष्ठा धर्म्मिष्ठाः प्रजा उपसर्पन्ति धर्म्मेण पापमपनुदति धर्म्मे सर्वं प्रतिष्ठितं तस्माद्धर्म्मं परं वदन्तीति"।

इत्येवं श्रुत्यादिवाक्ये प्रसिद्धपदसमभिव्याहारेण व्युत्पत्तिः सम्भवति तस्माल्लक्षणप्रमाणाभ्यामुपपन्नो धर्म्म इति। (क्रमशः)

---

## तत्त्वप्रपञ्चः ।

( पूर्वप्रकाशितात्परः )

यदुक्तं पूर्वमासि—"अथ किमित्युक्तं पञ्चमहाभूतानि एकादशे-न्द्रियाणि च केवलं विकृतय एव न तु केषाञ्चित् प्रकृतय इति" तत्रापरोऽपि किञ्चिदकव्यावशेषोऽस्ति, तदुच्यते ।

यद्यपि आकाशात् शब्दः वायोश्च स्पर्श उत्पद्यते तथापि वाय्वा-काशयोः तयोः प्रकृतित्वं नाशङ्कनीयम्, कथमिति चेत्, धर्मिपरिणा-मानामेव प्रकृतित्वस्वीकारात् न धर्म्मपरिणामानां प्रकृतित्वाशङ्का । प्रकृतिमहदहङ्कारादीनां धर्मिपरिणामत्वात् प्रकृतित्वमिति । एते-नापि कारणेन वाय्वाकाशयोः शब्दस्पर्शप्रकृतित्वं निराकर्त्तुं शक्यते ।

वह्नेः स्वर्णादीनां पृथिव्या वृक्षादीनाञ्च धर्मिपरिणामानां तत्त्वा-न्तरोपादानत्वाभावादेव प्रकृतित्वं व्याहतम् । अत्र सर्वेषां वह्नि पृथिव्यादीनां स्थूलत्वादिन्द्रियग्राह्यता च समा इति न तत्त्वान्तर-त्वम् । अत्र स्थूलतामिन्द्रियग्राह्यताञ्च हेतुं कृत्वा स्वर्णे वृक्षे च तत्त्वान्तराभावः साध्यते । तथा चात्रायं प्रयोगः—स्वर्णं न वह्नित-स्तत्त्वान्तरम्, स्थूलतेन्द्रियग्राह्यतासाम्यात् । एवं वृक्षः न पृथिव्या-स्तत्त्वान्तरम्, स्थूलतेन्द्रियग्राह्यतासाम्यात् ।

एवं सति येषां इन्द्रियग्राह्यता न समा तत् तत्त्वान्तरं यथा वह्निजलभूमयः । वह्नेः चटचटाशब्दात् श्रोत्रेण, उष्णस्पर्शात् त्वचा, शुक्लभास्वररूपाच्च चक्षुषा प्रत्यक्षम् । जलस्य तु बुगुबुगु-शब्दात् श्रोत्रेण, शीतलस्पर्शात् त्वचा, शुक्लरूपाच्चक्षुषा, मधुररसाच्च रसनया प्रत्यक्षम् । भूमिस्तु विविधशब्दात् श्रोत्रेण, विविधस्पर्शा-त्त्वचा, नानारूपात् चक्षुषा, षड्रसात् रसनया, गन्धाच्च नासिकया प्रत्यक्षम् । इति प्रत्येकमेकाधिकेन्द्रियग्राह्यत्वात् न समेति भवतु वह्न्यादिस्तत्त्वान्तरम् ।

नन्वेवं अवस्थायां शब्दादीनां तत्त्वान्तरत्वं प्रति का गतिः ?

योगिप्रत्यक्षे महदादीनामपि स्थूलतेन्द्रियग्राह्यता वा सूक्ष्मता च समा इति तत्त्वान्तरं न भवतु । सत्यं समव्याप्तहेतुस्थल एव साध्यसमव्याप्त-हेत्वभावेन साध्याभावो निश्चेतुं शक्यते यथा तद्रूपवान् तद्रसात्, यत्र तद्रसो नास्ति तत्र तद्रूपोऽपि नास्ति इति साध्यसम-व्याप्तस्य तद्रसस्याभावात् तद्रूपाभावः सिध्यति ।

अत्र तु विषमव्याप्तो हेतुः । साध्यविषमव्याप्तहेत्वभावेन साध्या भावो न निश्चीयते । यथा पर्वतो वह्निमान् धूमात्, यत्र धूमो नास्ति तत्र वह्निरपि नास्तीत्येवं साध्याभावो न सिध्यति तप्तायः पिण्डे धूमाभावेऽपि वह्नेर्निश्चितत्वात् । अतएव महदादीनां तत्त्वा-न्तरत्वं प्रति केवलं आगमः प्रमाणम् । न तु हेत्वभावात्, अत्र तु हेतुः स्थूलतेन्द्रियग्राह्यतासाम्यम्, साध्यस्तत्त्वान्तराभावः । हेत्वभावः स्थूलतेन्द्रियग्राह्यत्वासाम्यम् । साध्याभावः तत्त्वान्तराभावाभावः तत्त्वान्तरमिति यावत् ।

इति तत्त्वप्रपञ्चे विवेकप्रतिपत्तिर्नाम पञ्चमाध्यायः समाप्तः ।

(क्रमशः)

---

# सती छाया ।

## प्रथमपरिच्छेदः ।

अहो विकीर्णा बहुपुस्तिका मम, लुठन्ति विश्लिष्टपुटा इतस्ततः ।
अकिञ्चनाया इव बालिकास्त्रियाः मनोऽतिदुन्वन्ति हि धूलिधूसराः ॥

यत्र हि भागीरथी कल्लोलकलमुच्चरन्ती द्रुततरं प्रवहन्ती सागर-मभिधावन्ती च न तृप्तिं लभते । यत्र द्रुततीर्णदृक्पथास्तु अर्णव-पोतास्तीरवर्त्तिनीः क्षुद्रास्तरीर्निजवेगवर्द्धितैः कल्लोलपुञ्जैः प्रकम्प-यन्तः मेघनिर्घोषमनुकुर्वन्त इव इतस्ततो विद्रवन्ति ।

अस्या एव गङ्गायाः पश्चिमे तीरे कलिकातायाः अनुकृतिमिव दधानो विराजति "अम्बलनाम" ग्रामः। तत्र हि एकस्मिन् द्वितले सौधतले विंशतिर्बालिका द्वाभ्यां शिक्षयित्रीभ्यामधीयते सीवनादिकञ्च शिल्पं इंराजरीत्या समभ्यस्यन्ति। प्रायेण सर्वा एव ता बालिका द्वादशवर्षीयाः। वादिते च "टुं टां टुं टामिति" घटिकायन्त्रे चतुःशत्वः पुस्तकादीनादाय बालिकात्रयवर्जं सर्वा विद्यालयात् निर्ययुः।

निर्गतासु बालिकासु प्रधाना गुर्वी सस्मितमाह—अयि सर्वासु बालिकासु "इन्द्रप्रियैव" सम्यक् समुत्तीर्णा परीक्षायाः इति मामतीवाह्लादयति। तदानीमुपविष्टानां तिसृणामिन्द्रप्रियैव श्रीमती। मन्ये च अस्यामेवाधुना कलिकालभीतं पवित्रसौन्दर्य्यमेकीभूतं निवसति।

तदाकर्ण्य सलज्जं सस्मितञ्च इन्द्रप्रिया कथयति—मातः मातृष्वसः! लोका एवं व्याख्यास्यन्ति यन्मां समधिकं स्निह्यसि शिक्षयसि च प्रयतमाना इति।

द्वितीया शिक्षयित्री कथयति तन्नहीति यद्येवमिन्द्रप्रिये! तदा "मिस् मिचेल्" (१) पूर्वेद्युः गीते वाद्ययन्त्रे च कथमेवं भवतीमस्तुवत्—अब्रवीच्च पुनः पुनः—"काष्ठशुषिरवादने (२) बह्व्यो इंरेजसुन्दर्य्योऽपि तव सादृश्यं नैव लब्धुमीशन्ते" इति।

इन्द्रप्रिया स्मित्वा सङ्गिन्यौ द्वे बालिके कथयति—"अयि मते! अयि रजनि! एह्येहि देहं चालयामः वस्तञ्च, सायमागतप्रायम्।

बालिकासु तासु गतासु द्वितीया शिक्षयित्री कथयति—"इन्द्रप्रियेव सरलहृदया बालिका प्रायो नैव लभ्यते, किन्तु ईदृशीं मुग्धां सुन्दरीञ्च बालिकामनुपदमेव विपदनुसरति।

प्रधानाशिक्षयित्री सचिन्तमाह—"विद्यालयस्थापनादारभ्य न कापि विपदस्माकमपतत्, यतः अस्मिन् विद्यालये बालिकानां वास-

(१) बङ्गविद्यालयानां परिदर्शनकारिणी काचित् इंरेजनारी। (२) दारुनिर्म्मितवंशी।

प्रथा नास्ति, विशेषतश्च दौवारिकौ प्राचीनौ, ताभ्यामपरः कोऽपि नास्त्यत्र पुरुषः। सकला एव कर्म्मचारिण्यः स्त्रियः। संप्रति एतदेव चिन्तनीयम्—यत् इन्द्रप्रियामविलम्बमेव तस्या मातुरन्तिकं प्रापयितुं पारयामि चेत् कृतकृत्यमात्मानं मंस्ये। यतः बालिका सा यौवनसोपानमारूढुं पदमादधाति। तत्र भ्रातृकन्यके इतः परमपि द्विचिवर्षमध्येतुं प्रभविष्यतः, यतः ते आकृत्या खर्वे, इन्द्रप्रियामपेक्ष्य वयःकनिष्ठे च"। मिथ एवं संलप्य शिक्षयित्र्यौ स्वस्वकर्म्माण्यनुष्ठातुं गतवत्यौ।

एकदा इन्द्रप्रिया आपराह्णिकं किञ्चिद्भुक्त्वा वातायनादधः खट्टिकामारूढ़ा स्वकक्षे स्थित्वा गलावरणं प्रवयति, किमिव चिन्तयति, किमिव पश्यति, क्षणं निमीलति मुहूर्त्तं वा आकाशं पश्यति, इत्यानि च पाठ्यपुस्तकानि तस्या इतस्ततो व्यत्यस्तानि, औदासीन्यं परिसूचयन्ति। सा च अन्यमनस्केव अन्तरान्तरा तानि विलोकयन्ति। वयनकर्म्मणापि विरागकलीभूयते। एवं दुश्चिन्तयन्त्यास्तस्या हस्ततोऽजानन्त्या इव तन्तुगोलकं गवाक्षविवरेण समीपस्थे उद्याने स्खलितम्। झटिति सुप्तोत्थितेव सा चेतति सूत्रगोलकं करच्युतमिति। ततोऽवाङ्मुखीभूय यावदुद्यानं पश्यति तावत्तत्र विचरन्तं युवकबन्धुद्वयं दृष्टवती। तयोरेकः समुत्तोल्य प्रसारितपाणिं तस्यै प्रापयितुं सूत्रगोलकं नालसासीत्। यद्यपि नाधिकमुच्चतरं वातायनं तथापि तावत् दूरं हस्तेन नासादितम्। तदा वयःकनिष्ठयुवकः सव्यग्रमाह—अतुल! इयं आसन्दी ( Cane-stool ) अत्रोपानीयताम्। द्वितीयस्तदर्थं प्रतस्थे। प्रथमस्तु-युवकः वयसा अष्टादशवर्षदेशीयः कान्त्या गौरः, मुखेन सुन्दरः अङ्गानि चापराणि रूपानुरूपाणि वामहस्तकनिष्ठिकायां हीरकाङ्गुलीयकम्। दक्षिणपाणौ सुवर्णखचिता यष्टिः, अङ्गरक्षकं महार्घवस्त्रनिर्म्मितं, दर्शनेनैव प्रतीयते यदयं महाकुलसम्भूत इति।

द्वितीयस्तु युवकः प्रथमस्य चाटुकारो बन्धुः नासौ प्रियरूपकः श्यामलाङ्गः, आस्यप्ररूढ़ाः श्मश्रवः वृद्धच्छागलमनुचक्रुः। अनेनासन्दी समानीता, इन्द्रप्रियया च सूत्रगोलकं लब्धमिति। किन्तु पुनरपि हस्तस्थितं गलावरणं पतितम् तदपि तेन प्रथमेन युवकेनानुगतभृत्येनेव तस्यै प्रापितम्। जल्पितञ्च मृदु मृदु "अयि निरुपमे! स्मर्त्तव्योऽहं पुरस्कर्त्तव्यश्च इति" युवकवाणी वीणाध्वनिरिव इन्द्रप्रियायाः श्रुतिविवरे ध्वनिता। सरला सा बालिका प्राप्तलज्जेव गवाक्षदेशादपसृता।

अतुलस्तु विदित्वा तत्, सहास्यमाह—कुमार! रमणीमोहनेति नाम्नि कलङ्कः पातितः। मनोनापहर्त्तुमीशसे अस्याः। कुमारस्तु चिन्तामभिनीय व्यक्तमाह—न हि न हि भ्रातः! ईदृशीं रत्नायमानां ललनां न लिम्पामि पापपङ्केन। किन्तु इच्छामि तां परिणेतुम्।

तदाकर्ण्य अतुलः मनसि दूयते। यतः कुमारस्य करच्युतं रत्नम् अतुल एव भोक्ष्यते, किन्तु सति विवाहेऽनयोः सा नैव मे सुलभेति।

स्पष्टमाह सः "कुमार! साधारणबालिकया अनया विवाहः राज्ञा किमभिमन्यते? अहं पूर्वमेवास्याः निखिलं वृत्तमनुसन्दधे—"इयन्तु क्वापि ग्रामटिकायां कायस्थस्य कन्या, नास्याः पिता जीवति, न वा समाजे सम्पत्त्या सम्मानमर्हति, भ्राताऽस्या वर्त्तते एकः। अतिलघीयसी भूमिरस्ति पैत्रिकी, न तया सम्यक् वृत्तिर्निर्वहति। वत्सरद्वयं यावदस्मिन् विद्यालये शिक्षार्थमागतेति, विद्यालयस्यास्य प्रधानशिक्षयित्री अस्या मातुःष्वस्रेति।

कुमारस्तु मन्दमन्दमाह—"त्वया कुतोऽधिगतं वृत्तमेतावत्" अतुल आह "सहानया बालिकया वृद्धा परिवारिका समागता, सार्द्धं तया मम संलापो जातः।" कुमारस्तु स्मित्वा आह "तां वर्षीयसीमत्रानेतुं प्रभवसि?" अतुलः द्रुतपदेन उद्यानतो वहिरभूत्।

राजतनयो रमणीमोहनः प्रकृत्या उदारः सरलश्च, कपटबन्धुस्तु अतुलकरः स्वार्थं साधयितुं तथाविधमपि कुमारं गर्हितं पन्थानमारोहयत्। कपटबन्धोः सहवासेन असत् प्ररोचनया च विद्यामध्येतुं प्रवर्त्तमान एव सः अमितव्ययित्वेन लाम्पट्यदोषेण च कृतायत्तः पितुर्विद्वेषभावमलभत। तथापि पिता तदेकपुत्रतया कथमपि तद्दोषमसहत।

प्रस्थिते च अतुलकरे कुमारः सानन्दं तस्मिन्नुद्याने पादचारणेन परितो विलोकयति। इन्द्रप्रिया बालिकैवानुरागसागरे निरमज्जत्। प्रत्यहमेवमेवाटन्तं कुमारमालोक्य मनस्तस्या प्रणयमभिधावतिस्म। तदा नास्याः पुस्तकेष्वादरः न वा शिल्पकर्म्मणि व्यग्रता, केवलमुन्मनस्का वातायनपथे एवोपाविशत्। रमणीमोहनस्य मनोहरं रूपमेकमवलोक्य स्नेहार्द्रहृदये रागतरङ्गिय्यते।

यद्यपि सूत्रगोलकच्छलेनाल्पति कुमारे सा तत उत्थाय गतवती, किन्तु समयमधिकमन्यतःक्षपयितुं नाशक्नोत्, शनैर्मन्दमुग्धेव पुनर्वातायनतले आविरस्ति। कुमारस्य नयनाभ्यां नयने यावन्मिलिते तावल्लज्जया जडीक्रियमाणेव तत्राधोमुखी उपविशति।

तदा तस्या देहसन्धयो विश्लिष्टा इव, वक्षसो नीचैर्ज्वलितमिव, मस्तकमघूर्णदिव, केनापि हृदयं प्रहृतमिव, फुफ्फुसं धक् धक् कम्पितमिव आपादमस्तकञ्च स्वेदेन प्लावितमिवासीत्।

भूत्वा च कृताञ्जलीरमनीमोहनोऽवदत् "अयि इन्द्रप्रिये! यदि नावजानासि सामान्यधिया वचनकरमिमं जनं तर्हि किञ्चिदावेदितुमिच्छामि, अनर्घमेतत्ते दिव्यं रूपं वरमाल्येन पुरस्कृत्य भिक्षुको दीनोऽयं धनीक्रियताम्" श्रुत्वेदमिन्द्रप्रिया तड़िदिव ततोऽन्तर्दधे। निर्लज्जा कुमाररसना अगत्या तूष्णीं बभूव। अपेक्षत च अतुलकरस्य पुनरागमनम्।

क्षणं व्यतीत्य वृद्धया कयाचित् सह अतुलकरस्तत्रोपतस्थे। कुमारोऽवदत् सेयं किं परिचारिका? या खलु आलापविषया नौ?। अतुलः शिरः कम्पयित्वा तत् स्वीचकार। कुमारः क्रमशः शनैः शनैः सर्वमपृच्छत्।

कुमारः। किन्ते नाम?

वृद्धा। यशोदा इति।

कुमारः। क्व ते वसतिः? कस्य वा गृहे?

यशोदा। कौननगरे। नीरेन्द्रलालविलासिनो * गृहे कर्म्म-कारिणी। तस्य भगिनीं जन्मतः प्रभृति परिपालयामि, संप्रति सा मातृष्वसुर्निकेतनमध्येतुम्, अहमपि तां पर्य्यवेक्षितुं सार्द्धं तया गता। कथमेतावत् विलासिना पृच्छते?

रमणीमोहनस्तु स्मित्वा प्रोवाच—यदीन्दुप्रियां मे चित्तमनुवर्त्त-यितुं शक्नुयास्तर्हि तुभ्यं सहस्ररूपकं दास्यामि। वृद्धा सहस्रेति कियती संख्या तन्न विदितवती। श्रुत्वैव तत् तस्या गात्राणि सीदन्तिस्म। सा अवदत् विलासिन्! तन्न मया साध्यम्। हा हतास्मि अनया अन्तःसत्वैवास्या माता मृतपतिका बभूव। क्षणमपि एनां नालोक्य जीवति जननी, प्राणेभ्योऽपि गरीयसी बालिकेयम्। लेखने पठने चास्या अतीव प्रेमेति अगत्या मातुः ष्वसरि समर्पितवती।

(क्रमशः)

---

* अत्र "बाबु" शब्दस्थाने विलासिशब्दो व्यवहार्य्यते।

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।

मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

अन्तस्तनौ तपति निःश्वसितानुसारी, श्लिष्टा तपः पवन उष्णजलानुकारी ।
आपश्च बाह्यमभिशुष्कसरोवरस्य मासः शुचिः शुचिसमोऽसुखकृन्नराणाम् ॥

## उद्भटश्लोकाः ।

या काली हरिदम्बरा नववनश्यामातिघोरानना
मुक्तालम्बिकचा परात्परतरा मुण्डालिमालाधरा ।
वक्त्रोद्गीर्णसुरारिसङ्गरुधिरश्रेणी विचित्राजिरा
सा काली त्रिगुणात्मिका भगवती कुर्वीत वो मङ्गलम् ॥ ११५ ॥

अर्द्धं दानववैरिणा * गिरिभुवाप्यर्द्धं हरस्याहृतम्
ख्यातीदं जगतीतले स्मरहराभावः समुन्मीलति ।
गङ्गा वारिधिमम्बरं शशिकला नागाधिपः क्ष्मातलम्
सर्वज्ञत्वमधीश्वरत्वमगमत्त्वां मामाश्चभिक्षाश्रितः ॥११६॥

इन्दुं कैरविणीव कोकपटलीवाम्भोजिनी वल्लभं
माकन्दं पिकसुन्दरीव मधुपश्रेणीव पद्माकरम् ।
मेघं चातकमण्डली व युवतिः प्राणेश्वरं प्रोषितं
चेतो वृत्तिरियं मम प्रतिदिनं त्वां द्रष्टुमुत्कण्ठते ॥११७॥

श्रीविधुभूषणदेवः (राँचि)।

---

* दानववैरिणा हरिणा। गिरिभुवा पार्वत्या। आहृतं विभज्य नीतम्। (सुतरां) स्मरहराभावः शिवस्य मृत्युः। समुन्मीलति उपपद्यते। शिवो मृत इत्यर्थः। शिवे मृते तस्य वस्तुजातं क मतं तत्राह गङ्गेत्यादि। धनिसन्निधौ याचकस्य चाटूक्तिरियम्।

# मातृभक्तिः ।

( पूर्वप्रकाशितात्परम् )

स एव हि त्रयो लोकास्त एव त्रय आश्रमाः ।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २३० ॥
पिता वै गार्हपत्योऽग्निर्मातााग्निर्दक्षिणः स्मृतः ।
गुरुराहवनीयस्तु साऽग्नित्रेता गरीयसी ॥ २३१ ॥
त्रिष्वप्रमाद्यन्नेतेषु त्रींल्लोकान् विजयेद् गृही ।
दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ २३२ ॥
सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्या फलाः क्रियाः ॥ २३३ ॥
यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ।
तेष्वेव नित्यं शुश्रूषां कुर्य्यात् प्रियहिते रतः ॥ २३४ ॥
तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत् ।
तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्म्मभिः ॥ २३५ ॥
त्रिष्वेतेष्विति कृत्यं हि पुरुषस्य समाप्यते ।
एषधर्म्मः परः साक्षादुपधर्मोऽन्य उच्यते ॥ २३६ ॥ इति ।

## विष्णुरपि २१ अध्याये—

"त्रयः पुरुषस्यातिगुरवो भवन्ति । माता पिता आचार्य्यश्च । तेषां नित्यमेव शुश्रूषुणा भवितव्यम् । यत्ते ब्रूयुस्तत् कुर्य्यात् । तेषां प्रियहितमाचरेत् । न तैरननुज्ञातः किञ्चिदपि कुर्य्यात् ।

एत एव त्रयो वेदा एत एव त्रयः सुराः ।
एत एव त्रयो लोका एत एव त्रयोऽग्नयः ॥
पितागार्हपत्योऽग्नि, र्दक्षिणाग्निर्माता, गुरुराहवनीयः ।
सर्वे तस्यादृता धर्म्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥" इति ।

## कौर्मे उपविभागे ११ अध्यायेऽपि—

"यावत्पिता च माता च द्वावेतौ निर्विकारिणौ ।
तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥

माता पिता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
स पुत्रः सकलं धर्म्मं प्राप्नुयात्तेन कर्म्मणा ॥
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः ।
तयोः प्रत्युपकारोऽपि न कथञ्चन विद्यते ॥
तयोर्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा ।
न ताभ्यामननुज्ञातो धर्म्ममन्यं समाचरेत् ॥" इति ।

लघुहारीतसंहितायां ३ अध्याये च—

"अभिवाद्यगुरोः पादौ सन्ध्याकर्मावसानतः ।
तथा योगं प्रकुर्वीत मातापित्रोश्च भक्तितः ॥
एतेषु त्रिषु नष्टेषु नष्टाः स्युः सर्वदेवताः ।
एतेषां शासने तिष्ठेद् ब्रह्मचारी विमत्सरः ॥" इति ।

औशनससंहितायां च १ अध्याये—मातृतः पितृतश्च सर्वान् गुरूनभिधाय—

"गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः ।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता ॥
यो हि वासयति दिवा येन सद्योपदिश्यते ।
ज्येष्ठो भ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः ॥
आत्मनः सर्वयत्नेन प्राणत्यागेन वा पुनः ।
पूजनीयाः प्रयत्नेन पञ्चैते भूतिमिच्छता ॥
यावत्पिता च माता च द्वावेतौ निर्विकारिणौ ।
तावत्सर्वं परित्यज्य पुत्रः स्यात्तत्परायणः ॥
मातापिता च सुप्रीतौ स्यातां पुत्रगुणैर्यदि ।
सपुत्रः सकलं धर्म्मं प्राप्नुयात्तेन कर्म्मणा ॥
नास्ति मातृसमं दैवं नास्ति पितृसमो गुरुः ।
तयोः प्रत्युपकारोऽपि न हि कश्चन विद्यते ॥
तयोर्नित्यं प्रियं कुर्य्यात् कर्म्मणा मनसा गिरा ।
न ताभ्यामननुज्ञातो धर्ममन्यं समाचरेत् ॥
वर्जयित्वा मुक्तिफलं नित्यनैमित्तिकं तथा ।
धर्मसारः समुद्दिष्टः प्रेत्यानन्तफलप्रदः ॥" इति ।

**एवं पितृभक्तिसहकृताया मातृभक्त्या अनन्तफलसम्पादकत्वेऽपि पितृपेक्षया मातुरधिकं गौरवमित्याहुः। तथाच मनुः २ अध्याये—**

"उपाध्यायान्दशाचार्य्य आचार्य्याणां शतं पिता।
सहस्रं तु पितॄन् माता गौरवेणातिरिच्यते॥"

**वसिष्ठसंहितायां च १३ अध्याये—**

"उपाध्यायान्दशाचार्य्यं आचार्य्याणां शतं पिता।
पितुर्दशशतं माता गौरवेणातिरिच्यते॥"

**वृद्धगौतमसंहितायां धर्म्मसारसमुच्चयनाम्नि १४ अध्याये च—**

"उपाध्यायाद्दशाचार्य्य आचार्य्याणां शतं पिता।
पितुर्दशगुणं माता गौरवेणातिरिच्यते॥"

**ब्रह्मवैवर्त्ते गणेशखण्डे ४० अध्याये च।**

"जनको जन्मदातृत्वात्पालनाच्च पिता स्मृतः।
गरीयान् जन्मदातुश्च योऽन्नदाता पिता मुने।
"विनान्नान्नश्वरो देही न नित्यः पितुरन्नतः।
तयोः शतगुणे माता पूज्या मान्या च वन्दिता॥
गर्भधारणपोषाभ्यां सा हि ताभ्यां गरीयसी॥" इति।

**गारुड़े १४ अध्याये—**

"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।
उपनीय ददद्वेदमाचार्य्यः स प्रकीर्त्तितः॥
"एकादश उपाध्याया ऋत्विग्यज्ञकृदुच्यते।
एते मान्या यथा पूर्वमेभ्यो माता गरीयसी॥" इति।

**अग्निपुराणेऽपि—**

"दशविप्रादुपाध्यायो गौरवेणातिरिच्यते।
तेभ्यः पितादशभ्यस्तु ततो माता गरीयसी॥" इति।

**कौर्मे उपविभागे ११ अध्याये च—**

"गुरूणामपि सर्वेषां पूज्याः पञ्च विशेषतः।
तेषामाद्यास्त्रयः श्रेष्ठास्तेषां माता सुपूजिता॥" इति।

पितृवचनापेक्षयाऽपि मातृवचनस्याधिक्य मग्निपुराणे—

"न पितुर्वचनं कार्य्यं यथा मातुः सुतेन हि।" इति।

पितुः पातित्ये त्यागो मातुरत्यागश्च तत्रैव—

"पिता तु पतितस्त्याज्यो न माता सत्सुतेन हि।
गर्भधारणपोषाद्धि ततो माता गरीयसी॥" इति।

वसिष्ठसंहितायां १३ अध्याये च—

"पतितः पिता परित्याज्यो माता तु पुत्रे न पतति" इति।

यत्तु वृद्धगौतमसंहितायां दशमाध्याये—

"उपाध्यायं च पितरौ गुरुं च भरतर्षभ।
ये त्यजन्ति सहायांश्च ते वै निरयगामिनः॥" इति।

तत्रैव एकादशाध्याये च—

"मातरं पितरं वापि भृत्यं दत्ताभयं सुतम्।
त्यजेच्च करुणां भार्य्यां तं विद्याद् ब्रह्मघातकम्॥" इति।

साकल्येन दोषातिशयोक्तिः, सा अपतितपित्रादिपरैव उक्तपूर्व-वसिष्ठादिवचनानुरोधात्। एवं च पितृसहकृतमातृशुश्रूषानुष्ठाने-ऽपि फलाधिगमे मातुरत्यधिकोपयुक्ततेति सिद्धं भवति, केवलमातृ-भक्त्या अपि फलमुक्तं वह्निपुराणे—

मातृतोऽन्यो न देवोऽस्ति तस्मात् पूज्या सदा सुतैः।
मातुश्च यद्धितं किञ्चित् कुरुते भक्तितः पुमान्।
तद्धर्मं हि विजानीयादेवं धर्मविदो विदुः॥

मातृसम्मानमन्तरा कृतस्य कर्मणो नैरर्थ्यमप्युक्तं पाद्मे भूमिखण्डे ६२ अध्याये—

माता न पूजिता येन तस्य वेदा निरर्थकाः।
यज्ञैश्च तपसा विप्र! किं दानैः किञ्च पूजनैः॥ १९॥
प्रयाति तस्य वैफल्यं न माता येन पूजिता॥ २०॥" इति।

एतदेव हि सुपुत्रस्य लक्षणं यन्माता पिता च संसेव्यते। अतएव पाद्मे भूमिखण्डे १७ अध्याये सत्पुत्रलक्षणप्रस्तावे "पितृभक्तिपरो

नित्यं सर्वस्वजनवत्सल" इत्यभिहितम्। कियन्नाम वर्ण्यते श्रीमातुर्माहात्म्यं नूनं मातुरेव समधिकगौरवशालितया पूज्यत्वेनाचिन्त्यगुणतया सर्वानन्दमयत्वेन च परे ब्रह्मण्यपि रूढ़स्तन्नामात्तरपरिहृत्यैव "आत्मा इति" शब्दः। महाशयाः! अथावधार्य्यन्तां गुणाः श्रीमातृदेव्याः, माहात्म्यं च तद्भक्तेः, नूनं मातृभक्तस्य सकला अपि वशीभवन्ति लोकाः। कृतप्रणयमिव च स्वयमेवोपसर्पति ज्ञानम्। न तस्य किञ्चिदपि परोक्षम् यो हि सम्यक् समाचरति शुश्रूषां श्रीमातुः।

अत्रैक मैतिह्यमतिसंक्षेपत उपहरामः पाद्मे भूमिखण्डे ६१।६२।६३ अध्यायेषु—

अस्ति कुरुक्षेत्रे ब्राह्मणः कुण्डलो नाम। तस्य च मूर्त्त इव पुञ्जः पुण्यानां सुकर्मा नाम पुत्रो बभूव। स जरन्तौ मातापितरावेवैकान्ततः शुश्रूषते। अधीते च पितुरेव सकलान्यपि शास्त्राणि।

अस्मिन्नेवावसरे पिप्पलो नाम कश्चिन्मुनिः सहस्रत्रयं वर्षाणां घोरं तपः तप्यमानो वरमुपलभ्य सकलमपि जगदात्मनो वशमानिन्ये। तेन च समुत्सिक्तो बभूव। तमेवमात्मनः सदृशमपरमपश्यन्तं नितान्तोत्सेकमवलोक्य उपात्तमरालाकारो भगवान् विरिञ्चिः समुपेत्य सुमधुरया गिरा निजगाद।

"अयि भोः! कुत एवमुदूह्यते गर्वः? न किल भवानेवोपगतः सर्ववशीकरणात्मिकां सिद्धिम्। सहस्रत्रयं वर्षाणां तपश्चरित्वा कियतीं सिद्धिमुपगतस्य कियानयं तेऽवष्टम्भः?। नाद्यापि श्रवणसरणिमुपगतस्ते कुण्डलात्मजः सुकर्मा नाम। य एवमात्मानमेव त्रिभुवनैकगरिष्ठमाशङ्कसे। अहो पुण्यमयता तस्य महाशयस्य। यद्यपि स सुधी न वितताार दानानि। न परिदध्यौ देवान्। न जुहाव यज्ञेषु। नानुतस्थौ कर्माणि। न बभ्राम तीर्थानि। नोपचकार द्विजातीन्। न वा सिषेवे धर्मम्। तथापि मातापितरैकतानमानसस्य शिशोरपि तस्य सुकर्मणो यत् ज्ञानम्, दृढ़तरतपःसम्पादि-

ताङ्कार्श्येऽपि भवति न तल्लेशोऽपि। तत् सर्वथा वृथैवायं ते मद” इति।

इति तदीयमाकर्ण्य वचनं सुकर्मणो वृत्तं जिज्ञासमानः पिप्पलः तस्मादेव हंसात्तस्याधिष्ठानमवगत्य सुकर्मणे दिदृक्षया प्रतस्थे।

कुण्डलस्याश्रममुपगतश्च पितरौ शुश्रूषमाणं तदेकतानमानसं प्रौढ़गम्भीरं महानुभावं व्यलोकिष्ट सुकर्माणम्। ततो यथाविधि-कृतातिथेयसत्कारं तापसपिप्पलं तदा गमनप्रयोजनं स्वयमेव निगदन्तं सुकर्माणं पिप्पल उवाच।

“वत्स ! त्वयि सकलमपि जगद्वशीभूतमित्याकर्णयामः। तदर्हसि सकौतूहलस्य मे मनसो वाञ्छां पूरयितुम्” इति।

तदाकर्ण्य यथा रोचते भगवते इत्यभिदधानेन सुकर्मणा स्मर्यमाणाः सपदि शक्रप्रमुखाः पुरस्तात् प्रादुर्बभूवुः, सन्ध्यायां तारका इवाकाशे। ततो निजानुध्यानप्रयोजनमनवबुभुत्सतो देवाँस्तदुक्तवति सुकर्मणि ते तं वरं वृणीष्वेत्यवोचन्। स तु माता पित्रोर्दृढ़भक्ति-मन्तरा न ववार किञ्चिदप्यन्यत्। एतदवेक्ष्य विस्मयमानः पिप्पलः पप्रच्छ। भोः कुतः सम्पन्नं ज्ञानमेतद्भवतेति। स तु प्रत्यवोचत्।

“भगवन् ! न किलावगच्छामि कुतः सम्पन्नमेतदिति। मया तु न शोषितः कायस्तपोभिः नानुष्ठितो धर्मः, नावलोकितं तीर्थम्, न न सम्पादितं ज्ञानम्, न वान्यदनुष्ठितं पुण्यम्। केवलमनन्यमानसो मातापितरावेवानुदिनमभ्यर्चयामि। तयोरेव प्रक्षालयामि पादौ। संवाहयाम्यङ्गानि। पिबामि चरणसलिलम्। एवमन्यधर्मानवि-भावयन्नपि मातापित्रेकतानः स्वच्छन्दचारी कालं क्षपयामि। आसादयामि च यदेव कष्टानुष्ठेयैः क्रतुभिः साधते फलमन्यैः। मातृशुश्रूषैव हि कन्दलः सन्ततेः पुत्राणाम्, सर्वस्वं धर्मस्य, सारो जगत्त्रयस्य, सोपानपरम्परा मुक्तिसौधस्य। एवमेव पितुरपि शुश्रूषा” इति।

निजगाद माहात्म्यं मातापितरभक्तानाम्। यथा—पाद्मे भूमिखण्डे ६२ अध्याये।

"तत्र गङ्गा गयातीर्थं तत्र पुष्करमेव च।
यत्र माता पिता तिष्ठेत् पुत्रस्यापि न संशयः॥ ६९॥
जीवमानौ गुरू एतौ स्वमातापितरौ तथा।
शुश्रूषते सुतो भक्त्या तस्य पुण्यफलं शृणु॥ ७२॥
देवास्तस्यापि तुष्यन्ति ऋषयः पुण्यवत्सलाः।
त्रयो लोकाश्च तुष्यन्ति पितृशुश्रूषणादिह॥ ७३॥
मातापित्रोस्तु यः पादौ नित्यं प्रक्षालयेत् सुतः।
तस्य भागीरथीस्नानमहन्यहनि जायते॥ ७४॥
पुण्यैर्मिष्टान्नपानैर्यः पितरं मातरं तथा।
भक्त्या भोजयते नित्यं तस्य पुण्यं वदामि ते॥ ७५॥
अश्वमेधस्य यज्ञस्य फलं पुत्रस्य जायते।
ताम्बूलैश्छादनैश्चैव पानैश्चाशनकैस्तथा॥ ७६॥
भक्त्या चान्नेन पुण्येन गुरू येनाभिपूजितौ।
सर्वज्ञानी भवेत्सोऽपि यशःकीर्त्तिमवाप्नुयात्॥ ७७॥
मातरं पितरं दृष्ट्वा हर्षात् संभाषते सुतः।
निधयस्तस्य सन्तुष्टा नित्यं गेहे वसन्ति च॥ ७९॥" इति।

ततः ६२ अध्यायमारभ्य ८३ अध्यायं यावन्मातापितरशुश्रूषामाहात्म्यं सदृष्टान्तं प्रतिपाद्य चतुरशीतितमेऽध्याये "एतत्ते सर्वमाख्यातम्" इत्युपक्रम्य।

"पितृमातृसमं नास्ति अभीष्टफलदायकम्॥ ४॥
साभिलाषेण भावेन पितापुत्रं समाह्वयेत्।
माता च पुत्र पुत्रेति तस्य पुण्यफलं शृणु॥ ५॥
समाहूतो यदा पुत्रः प्रयाति मातरं प्रति।
यो याति मोदसंयुक्तो गङ्गास्नानफलं लभेत्॥ ६॥

(क्रमशः)

# गर्वपरिणतिः ।

( पूर्वप्रकाशितानन्तरम् )

## तृतीयोऽङ्कः ।

रामचन्द्रस्य वहिर्गृहम् ।

रामचन्द्रः । मित्र ! दृष्टमपूर्वंदृश्यम् । एकतः सूर्य्यास्तगमनमपरतश्च निशाकरकरोदयः । अहो ! प्रीतिदायिनी प्राकृतिकसम्पत्तिः ।

नीलाम्बरः । भगवतो महेशस्य सृष्टमिदमखिलवस्तुजातं प्रजारञ्जनायैव प्रतिभाति । विमुग्धा जीवाः, स्वकृतकर्म्मफलेन दुःखिनो वृथा तस्मिन् करुणामये दोषवृन्दमारोपयन्ति । अहह ! अनुपमा रात्रिसुषमा, भगवतो मरीचिमालिनः किरणजालेन शुक्लीकृतान्यखिलानि समवत् विभान्ति । बन्धो ! किं बहुना हृतपुत्रस्यापि शोकोऽस्यां विरमतीति मन्ये ।

रामः । अहो ! विचित्रमिदम् । बन्धो ! दिवाकरनिशाकरयोर्युगपत् व्यसनोदयाभ्यां लोकानामचिरस्थायिनी दशेति भगवता प्रजासृजा विज्ञाप्यते । (स्वगतम्) अहह ! न जाने, विधातुरनिवार्य्ययानया नियमशक्त्या कदा विमले विनयमार्गे उपस्थास्यति मे सुरेश इति ।

प्रविश्य द्वारपालः । देव ! उपस्थितः—

रामः । (सव्यग्रम्) कः पुनरुपस्थितः ।

द्वारपालः । महाननिष्टापातः ।

रामः । अनिष्टापातः ? कीदृशः कथ्यतां सुस्पष्टम् ।

द्वारपालः । प्रदोषसमये भ्रातृकल्पः स सुरेशो वनमुद्दिश्य प्रस्थितः । अधुनापि नायातः । अतः शुद्धान्तमध्ये सपरिजनाम्बापि मृतकल्पा वर्त्तते । एतत् श्रुत्वा देवः प्रमाणम् ।

नीलाम्बरः । सुरेशोऽरण्यं गत इति कथं ज्ञातम् ।

द्वारपालः । प्रस्थानकाले मां निवेद्यासौ प्रयातः ।

नीलाम्बरः। कथं ज्ञात्वापि निशासमयेऽस्य वनप्रयाणं न निषिद्धः।

द्वार। निषिद्धो प्रभुः, परं तादृशो मादृशां नास्ति वचनावसरः।

रामः। मित्र! अलं तावदनयानर्थकवचनपरम्परया। दौवारिक! गच्छ स्वनियोगमशून्यं कुरु।

नीला। बन्धो! कथमनर्थकमेतदिति कथ्यते। बालकः खलु सुवेशः। दैववशतश्चेत् पथभ्रष्टो भवेत् तदा महाननर्थः स्यात्।

रामः। मित्र! न सम्यक् विदितं भवतः, अत एवमुच्यते। तत्-सदृशात्माभिमानी द्वितीयो नास्तीत्यवगम्यताम्। पश्यतु तावदस्य कार्य्यजालम्। यदाधित्यकागमनायानुरुद्धस्तदा न गतः। अधुनास्य वनगमनं किं प्रयोजनकम्। प्रयोजनन्तु दैवकन्यकादत्तोत्साह-वर्द्धनमिति।

नीला। बन्धो! न भवति सम्यक् भवद्वचनानामर्थग्रहः। प्रिय-दर्शनस्यानिष्टशङ्का बलवती जायते। कालव्ययेनालम्। स्वयमेव गच्छामि तदन्वेषणायेति।

रामः। मित्र! धैर्य्यमवलम्ब्यताम् [illegible] शिक्षायामपि यदि स पथभ्रष्टो भवेत्; तदा धिक् तस्यात्माभिमानम्; वृथा शास्त्राध्ययनम्, निरर्थकञ्च जीवनधारणम्।

नीला। नहि नहि; वचनमपेक्ष्यताम्। शीघ्रमागच्छामि। दौवारिक! त्वमपि अस्माभिर्मिलितो भव। (इति तेन निष्क्रान्तः)।

रामः। क्लेशबहुलो हि संसारः। स हि अविदितपथ इत्यत्र सन्देहो नास्ति। किं करोमि, का गतिः। (क्षणं विमृश्य) कृष्ण-दासं तावत् प्रेरयामि। स हि विदितमार्गः कुशलो दृढप्रतिज्ञश्च। एतादृशे कर्म्मणि स एव प्रभवति नान्य इति मे दृढा मतिः। भवतु तत्सकाशं गच्छामि। इति निष्क्रान्तः)।

इति तृतीयोऽङ्कः।

श्रीनन्दलालविद्याविनोदस्य।

## सतीच्छाया ।

( पूर्वप्रकाशितात्परम् )

रमणीमोहनः साग्रहं पुनराह—तुभ्यं दशशतं रूपकं दास्यामि ब्रूहि त्वमिन्द्रप्रियां "रमणीमोहनरायः भवतीं परिणेतुमिच्छति" किन्तु रहसि, यतः पिता मे जीवति, स यदि जानीयात् तर्हि विवाहो व्याहन्यते। इन्द्रप्रिया मामभिजानाति, इदमपि ब्रूयाः यं पार्श्ववर्त्तिनि उद्याने प्रायः पर्य्यटन्तं विलोकयसि, यश्च कदाचित् सूत्रगोलकं भवतीं प्रापयामास सोऽसौ। श्रुत्वैतत् यदि सा अभिलष्यति, तदा कलिकातायां गड़पारे स्थाने कस्यचित् बन्धोरावासे नौ विवाहो निष्पत्स्यते। अवगच्छ धात्रि! यथा वृत्तमेतत् इन्द्रप्रियाया मातुःष्वसापि न कथमपि जानीयात्।

अतुलन्तु सम्यगुत्साहमापाद्य अवगच्छ धात्रि! यदीन्द्रप्रियामस्मै प्रदातुं प्रभवति तर्हि सा राज्ञी भवेत् एवं तवापि तावन्तः सुहृद आमरणमक्लिष्टजीविनो भवेयुः इति।

वृद्धा "शतरूपकः" इत्यस्यार्थवती "दशशतरूपकः" इत्येवमाकर्ण्य शिरसि भ्रमतीव। ततः कुमारं सा सविनयं प्रणम्य "दशशतरूपकः" इत्येवं भूयो भूयो विभाव्य मनसा क्षीबेव भूत्वा उद्यानान्निरगच्छत्। कुमारोऽपि उद्यानभवनं सार्धं बन्धुना प्रविवेश।

विद्यालये कस्मिंश्चित् कक्षे लौहपादिका खट्टिका, तत्र इन्द्रप्रिया दुरत्ययां चिन्तामालिङ्ग्य शयितवती। रात्रिः द्वौ प्रहरौ समतीता, नास्त्यस्या निद्रालेशोऽपि। एकतो मातृस्नेहः लोकलज्जाभयञ्च। अपरतः सम्रूढनवप्रेमा निरुद्दामरङ्गः। वृद्धा सा परिचारिका गृहकर्म्म निर्वहन्ती रात्रे द्विप्रहरादर्वाक् न विश्राम्यति। तदा गृहं प्रविश्य विलोकयामास इन्द्रप्रिया जागर्त्ति इति। वृद्धा सस्नेहमाह मातः! अधुनापि जागर्षि? इन्द्रप्रिया तथैव तस्थौ। वृद्धा शनैरुपगम्य नवनीतपेलवमस्याः अङ्गं मृदु मृदु संवाहयं संवाहय-

मवादीत्—"इन्द्रप्रिये! किमपि विवक्ष्यामि, किं कुप्येः? इन्द्रप्रिया भ्रूविक्षेपमवदत् "किमिति" वृद्धा सुखमानस्य रमणीमोहनसन्देशं तावत्तामनुश्रैवयत्। इन्द्रप्रिया सीदन्तीव सभयमवदत् धात्रि! चेदेवं तर्हि आस्तु जननी मे मुखं नावलोकयिष्यति तत्र का गतिः।

वृद्धा। कथमेवम् ईदृशस्तु वरः सुरवर इव सुखेन लभ्यते। तद् ब्रूहि तर्हि तस्मै विलासिने सम्प्रति वक्ष्यामि।

इन्द्रप्रिया। ( सकम्पं ) न हि धात्रि! भूयो बिभेमि यदि मातुःस्वसा जानीयात्?। कथं वा एकाकिनी परेण पुंसा सह निवसामि।

वृद्धा। तां सान्त्वयित्वा अवदत् किमिति बिभेषि मातुःस्वसुः, सा कथमपि नावगच्छेत्। एवम् एकाकिनी वा कथं स्थास्यसि? त्वया सममहमपि यास्यामि।

आकर्ण्यैतदिन्द्रप्रिया तुष्णीमभूत्।

वृद्धा। कदा गमिष्यसि।

इन्द्र। (अन्यमनस्केव) यदा तुभ्यं रोचते।

श्रुत्वैतत् परिचारिका सानन्दं तां मृदुमृदु करेणामर्षन्ती निद्रापयामास। स्वयञ्च निदद्रौ।

अद्य श्रावणस्य द्वादशं दिनं नीरधरस्तु नीरवः तरुराजमूर्द्धनि नीरं किरति। सर्वा दिशः समावृणोति जलदपटलः। विद्यालये च महान् गोलोयोगः समजनि। सर्वेषामेव वदने शोकस्य दुःखस्य भीतेश्च प्रतिविम्बः स्फुरति। इन्द्रप्रिया सह वृद्धया परिचारिकया पलायिता। न केऽपि किमप्यनुसन्धातुं न शक्नुवन्ति। प्रधाना शिक्षयित्री, वृत्तान्तमेतत् "कोननगरे" प्रापयति।

अतिजुगुप्सितां वार्त्तामाकर्ण्य माता वज्राहतेव मुहूर्त्तमिव स्तम्भिता बभूव। व्यतीत्य च क्षणं चिरमुच्चैरन्वयेऽस्माकमनयैव मन्दभागिन्या कुलाङ्कपयेव कुलसुन्मूलितम्, निष्कलङ्के चास्मिन्नन्वये

कलङ्ककालिमा पातिता, इति दुर्विसहचिन्ता क्रोधरूपेण परिणमते। क्रोधकम्पिता माता मुहुरुच्चैः पुत्रमाह। रे नरेन्द्र! दुश्चारिणी-मेनामलमन्विष्य। अहह, यस्या द्वादशवर्षकल्पाया अङ्करप्रायाया उत्पथे प्रवर्त्तितुमेतावान् साहसः न जाने प्ररूढ़पदा सा किमिव विषमयफलमुत्पादयिष्यति। अतः परं सा मृतेति मनः प्रतिबध्नामि। प्राचीननीतिविगर्हिते विश्वविदिते विद्यालये अधीत्य प्राधान्यं सा अलभतेति मनसि हृष्यामि नन्दिनी मदीया गुणैः स्वरूपमनुकुरुते। किन्तु तद्विपरीतं मदीयमेव दुरदृष्टं भूयो द्रढ़यति। चिराय यशो-दायास्तस्या यत् दयाचक्रे पिशाचीव सा पापीयसी दयाया आनृण्यं गतवती। अतएव "कुलकलङ्किनीमेनामलमन्विष्य"।

नरेन्द्रघोषस्तदाकर्ण्य जननीवचनं धीरं वदति, मातः! नास्ति क्रोधात् परं रिपुः। भूत्वा च क्रोधवशवर्त्ती अनधिगतसंसारभारां सदसद्विचारमूढ़ां बालिकां चिराय दुःखकूपे किमिति निःक्षि-पामि। एवं वदत एव नरेन्द्रस्य निरुद्धामवाष्पप्रसरः कण्ठमरुधत् आबाल्यात् स्नेहलालिताया भगिन्याः शोकेन स तुष्णीं रोरुद्यते। माता च क्रन्दने नन्दनस्य असह्यशोकेनाभिभूयमाना वाताहत-कदलीव भुवमालिङ्गति।

तदानीं तस्मिन्नेव स्थाने अपरापि काचित् प्रतीपदर्शिनी उप-तिष्ठते। या खलु इन्द्रप्रियाया दुर्नयात् न दूयते स्म प्रत्युत हृदि जहर्ष। इयमेव ईर्षापरतन्त्रा नरेन्द्रस्य सधर्मिणी। इन्द्रप्रिया प्रियदर्शनत्वात् सद्गुणवत्त्वाच्च मात्रा भ्रात्रा च समधिकं स्निह्य-मानेति सा चेतसि सन्दह्यते।

नरेन्द्रपत्नी श्वश्रूं समुत्तोल्य सप्रेम वदति "मातः! किमिति पश्चिमे वयसि निष्ठुरायास्तस्याः कृते शीर्णं देहमुत्पीड़यसि।"

नरेन्द्रोऽपि मातुरेषाद्दुर्गति "मातः अहमपि प्रकाशं नानुसन्धा-स्यामि तां परन्तु नियोगेन मे द्वौ गुप्तचरौ समनुसन्धास्यतः। दासी

च सा पिशाची तिरोभावयितुमात्मानं नैव प्रभविष्यति। विदित-वृत्तान्तश्च तत्र यास्यामि। सम्प्रति कलिकातां गच्छामि, द्वित्रीणि दिनान्यतीत्य प्रत्युपवर्त्तिष्ये"। माता तथैव स्थिता नरेन्द्रपत्नी तु सेर्षं कटाक्षेण तमहन्।

प्रस्थिते च तनये नरेन्द्रमाता इन्दुप्रियायाः शयनकक्षद्वारे* कुञ्चिकां निबध्नन्ती स्वयं ब्रवीति "द्वारमेतच्चिराय संरुध्यते"।

एवं वर्षद्वयमतीतं, भ्राता इन्दुप्रियायाः न कामपि वार्त्तां प्रति-पद्यते। प्रारम्भे च तृतीयवत्सरस्य आगत्य कश्चिद् गुप्तचरः सन्दि-शति "यशोदा कलिकातायां चितपुरे संकीर्णे उपपथे २८२ संख्यक एकतले गृहे निवसति इति"।

इति प्रथमः परिच्छेदः।

---

## धर्म्मविवेकः।

( पूर्वप्रकाशितात्परः )

आगत्य वामापदः। "गुरुचरणकमलेभ्यो नमः" इति शिवरामं प्रणम्य एवं तत्रोपविष्ट शिवरामस्य सहोदरमपि करशीर्षाभ्यां "नम-स्कारः" इत्युक्त्वा प्राणमत्।

शिवः। वत्स! वामापद! त्वमसि शास्त्रे श्रद्धालुः तेनानुशास्मि नैवं नियमः प्रणामस्य गुरुसमे। त्वं युवकः, त्वत्तो ज्ञानेन वयसा चायं मे कनीयान् गरीयान् गुरुसमश्च। अतो यस्मै नमस्कर्त्तव्यं यस्माच्चाशीर्ग्रहीतव्या स यथा प्रसीदति तथैव प्रणन्तव्य तेनैवाशी-र्वादः फलति।

वामाः। (कृताञ्जलीभूय) क्षम्यतामजानतो मे दोषः। मह्य-मनुशाधि नतिधर्मं, तच्छिरसा वहामि।

---

* नव्यशिक्षिताया द्वादशवर्षीयाया अपि विधवाया मातुर्निरपेक्षया स्वतन्त्रा एकाकिनी शयितुं शीणातीति न रीतिः।

शिवः । श्रूयतां नतिविधौ मनोरनुशासनम् ।

"व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन च दक्षिणः ॥" २।७२ ॥

अस्यार्थः—गुरोराचार्य्यस्य गुरुमात्रस्य च उपसंग्रहणं पादग्रहणं प्रणाम इति यावत् व्यत्यस्तपाणिना विपरीतहस्तेन—उत्तानवामहस्तोपरि उत्तानदक्षहस्तेन । तदेव विवृणोति सव्येनेति । सव्येन पाणिना सव्यः पादः दक्षिणेन च पाणिना दक्षः पादः गुरोः स्प्रष्टव्यः ग्रहीतव्यः । यदाह पैठीनसिः—

"उत्तानाभ्यां हस्ताभ्यां दक्षिणेन दक्षिणं सव्यं सव्येन पादावभिवादयेत्" इति ।

अपि च । कालिकापुराणे ७० अध्याये—

"पुटीकृत्य करौ शीर्षे दीयते यद् यथा तथा ।
अस्पृष्ट्वा जानुशीर्षाभ्यां क्षितिं सोऽधम उच्यते ॥"

अधमनमस्कारस्तु परित्याज्यः ।

वामा । अद्यप्रभृतितस्त्वथैवाचरिष्यामि नमस्कारम् ।

शिवः । श्रूयतां धर्म्मविवेकः । धर्म्मस्तु लक्षणप्रमाणाभ्यामुपपन्नमित्युक्तम् ।

तत्र मनूक्तधर्म्मलक्षणम् । २।१२—१४ ।

"वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्म्मस्य लक्षणम् ॥
अर्थकामेष्वसक्तानां धर्म्मज्ञानं विधीयते ।
धर्म्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः ॥
श्रुतिद्वैधन्तु यत्र स्यात्तत्र धर्म्मावुभौ स्मृतौ ।
उभावपि हि तौ धर्म्मौ सम्यगुक्तौ मनीषिभिः ॥"

एतदेवानुसृत्य महामहोपाध्यायः शूलपाणिः "वेदैकप्रतिपाद्यो धर्मः" इति धर्मलक्षणमभिहितम् ।

स एव धर्मः पुनः षष्ठाध्याये विवृतः । यथा ६।९१—९२ ।

"चतुर्भिरपि चैवैतैर्नित्यमाश्रमिभिर्द्विजैः ।
दशलक्षणको धर्म्मः सेवितव्यः प्रयत्नतः ॥

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम्॥"

अस्यार्थः। धृतिः धैर्य्यं चेतसोऽविकृतिः प्रसन्नता इति यावत्। धनादिक्षये प्रियवियोगादौ वा सत्त्वाश्रयः एष एव संसारस्वभावः इति चलच्चित्तस्य यथा पूर्व्वमवस्थापनम्।

क्षमा २। शक्तौ सत्यां परापराधसोढृत्वं—परेणापकृते तस्य प्रत्यपकाराकरणम्।

दमः ३। अनौद्धत्यं धनादिजनितप्रागल्भ्यत्यागः। विकारहेतौ सत्यपि अविक्रियत्वं मनसः। शीतोष्णादिद्वन्द्वसहिष्णुता इति गोविन्दराजः।

अस्तेयं ४। अन्यायेन परद्रव्यादिग्रहणम्। स्तेयं तदभावोऽस्तेयम्।

शौचम् ५। आहारादिशुद्धिः।

इन्द्रियनिग्रहः ६। दुष्टाभिप्रायेण योषिद्दर्शनादिभ्यो चक्षुरादिवारणम्।

धीः ७। शास्त्रादिषु सम्यक्ज्ञानम्।

विद्या ८। आत्मानात्मविवेचनम्।

सत्यम् ९। यथार्थे वाङ्मनसौ।

अक्रोधः १०। क्रोधहेतौ सत्यपि क्रोधानुत्पत्तिः।

एते तु धर्म्माः साधारणा अभ्युदयनिःश्रेयससाधनाः। योगियाज्ञवल्क्योऽपि तथैवाह—आचाराध्याये १२२।

"अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः।
दानं दमो दया क्षान्तिः सर्वेषां धर्म्मसाधनम्॥"

अस्यार्थः। "अहिंसा—हिंसा प्राणिपीड़नं तदकरणमहिंसा। सत्यमप्राणिपीड़ाकरं यथार्थवचनम्। दया परदुःखमोचनेच्छा। एते सर्व्वेषां पुरुषाणां ब्राह्मणाद्याचाण्डालान्तं धर्म्मसाधनम्॥

(क्रमशः)

# FOR B. A. STUDENTS.

PAPER SET BY BABOO NILMONY NAYALANKAR.
M. A. B. L.
Principal, Sanskrit College, Late senior professor of Sanskrit literature, Presidency College, Calcutta.

☞Questions with answers on अभिज्ञानशकुन्तलम् or "The token king" (Vidyasagar's Edition).

Q. What do you understand by सूतः। Make some remarks on the caste of a सूतः।

Ans. सूत इत्युक्तौ सारथिः, त्वष्टाः, वन्दिः, पारदः, बुध्यते क्वच्यर्थमहिम्ना योगार्थात्तु सूत इति जातः प्रेरितश्च बुध्यते तथाच मेदिनी।

"सूतस्तु सारथौ तक्ष्णि क्षत्रियाद्ब्राह्मणीसुते।
वन्दिपारदयोः पुंसि प्रसूते प्रेरिते त्रिषु॥" इति।

जातिरियं क्षत्रियाद्ब्राह्मण्यां जाता। कार्य्यमस्य सारथ्यं तथाच मनुः। १०। ११।

"क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः।" तत्रैव १०।४७।
"सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्॥" इति।

सूतः पुराणवक्ता च कथ्यते।

Q. Derive पश्चार्द्धेण, derive and parse भूयसा; and account for the use of the second class case-ending, instead of the third or fifth class case-ending in स्तोकम्।

Ans. "पश्चार्द्धेण" अपरम् अर्द्धं "पश्चात्" ५।३।३२ इति अपर + पश्च + अति पश्चादर्द्धं पृषोदरादित्वात्तलोपः।

"भूयसा" अयमेषामतिशयेन बहुः। बहु+इयसुन्। "बहो-र्लोपो भू च बहोः" ६।४।१५७ इति ईयसुन्, आदिलोपः भूरा-देशश्च। करणकारकमेतत्। "स्तोक"मिति अत्र उर्व्यां प्रयानस्य स्तोकत्वबोधनाय याने स्तोकस्याभेदात् क्रियाविशेषणे द्वितीयैव। पञ्चम्या तृतीयया वा नायमर्थो घटते।

Q. Explain the Samása in and meaning of निरायतपूर्वकायाः; निष्कम्पचामरशिखाः and निभृतोर्द्ध्वकर्णाः।

Ans. "निरायतपूर्वकायाः।"—निर्नास्ति आयतः यस्मात् निरायतः अत्यायतः अतिसरल इति यावत्, निरायतः पूर्वकायो येषाम् ते।

"निष्कम्पचामरशिखाः"—निर्नास्ति कम्पो यासां निष्कम्पाश्चामराणां शिखा येषां ते। अतिवेगगामित्वात् वेगजनितवायुना सरलीकृतत्वाच्च चामरशिखा निष्कम्पा इव प्रतीयन्ते।

"निभृतोर्द्ध्वकर्णाः"।—नि अतिशयेन यथा स्यात् तथा भृतौ धृतौ ऊर्द्ध्वौ कर्णौ यैस्ते।

Q. What is the propriety of वत and क्व in "क्व वत हरिणकाणां etc. etc.

Ans. "वत" शब्देनात्र खेदः अनुकम्पा च बुध्यते। मुनीनां कारुणिकाणां इयमेव समुचितम्।

क्व इयमत्यन्तमन्तरं सूचयति—अत्यन्ततीक्ष्णतरस्य तव बाणस्य सर्वथैवायमनुपयुक्तः हरिणशिशुः।

Q. Quote any rule of grammar to justify निशित, qualifying निपात which is a verbal noun.

Ans. "निशितनिपाताः" निपात्यते विनाश्यते जन्तुरनेन इति करणे अन्प्रत्यये निपातः बाणस्याग्रभागः कथ्यते, ततश्च निशितः शाणितः निपातोऽग्रभागो येषामिति व्युत्पत्त्या सुष्ठु सङ्गच्छते।

अथवा "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् निशितस्य निपातविशेषणे नास्ति दोषः ।

Q. Derive आर्त्त making grammatical comments.

Ans. आ + ऋ + क्तः ।

Q. Explain युक्तरूपं grammatically.

Ans. युक्तं न्याय्यं रूपं स्वभावः यस्य जन्मनः तत् युक्तरूपम् अनुरूपं सुसदृशमित्यर्थः ।

Q. What is the grammatical meaning of चक्रवर्त्तिन् Give 3 synonyms of it.

Ans. चक्रेण चक्रवच्छुभचिह्नेन वर्त्तते यः चक्र + वृत् + णिनिः । यद्वा चक्रं भूचक्रं राष्ट्रं तेन वर्त्तते इति वृत् + णिनिः । चक्रवर्त्ती । सार्वभौमः । सर्वभूमीश्वरः । सम्राट् ।

Q. Mention a few expressions to illustrate the peculiarity of the language in a Nátaka.

Ans. हन्ते । हञ्जे । हला । आवुत्तः । भर्त्तृदारकः । आर्य्यः । भट्टारकः । मारिषः । नेपथ्यम् । आकाशे । जनान्तिकम् । स्वगतम् । प्रकाशम् । साधयामः ।

Q. What is the meaning of शुद्धान्त and why ?

Ans. शुद्धान्तः । अन्तःपुरम् । अथवा नृपस्य सर्वागोचरकक्ष्यान्तरम् (इत्यमरमेदिन्यौ) राजयोषित् । (इत्यजयः)

शुद्धं पवित्रं अन्तं स्वभावो यस्मिन् अवरोधे यस्य वा स्त्रीजनस्य एतदेव कारणं तथाविधार्थे ।

Q. Explain the apparent inconsistency between the the first half and the second half of the stanza beginning with "इदं किलाव्याजमनोहरं etc" in page 6 by simile being implied.

Ans. पूर्वार्द्धे मृदुनोऽपि शरीरस्य कथञ्चित् तपःक्षमत्वं सम्भवति, किन्तु परार्द्धे नीलोपलपत्रधारया शमीलताच्छेदः न कथमपि सम्भवतीति आपाततो दुष्टवद्भाति। किन्तु निदर्शनालङ्कारमहिम्ना उपमायां पर्य्यवसानेन अर्थः सम्यक् सङ्गच्छते।

Q. Explain the phrases कुलपतिः and असवर्णक्षेत्रसम्भवा।

Ans. कुलपतिः। अयुतशिष्यपोषकाध्यापकः।

तथाच—

"मुनीनां दशसाहस्रं योऽन्नदानादिपोषणैः।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥"

असवर्णक्षेत्रसम्भवा—असवर्णं विप्रजातिभिन्नं यत्क्षेत्रं पत्नी, तत्सम्भवा तद्गर्भसम्भवा, "क्षेत्रं पत्नीशरीरयो"रित्यमरः।

Q Account for the Singular number in अप्सरा in the 5th line of Page 31

Ans. (a) "अप्सरा" अमरसिंहमते यद्यपि नित्यबहुवचनान्तोऽयं शब्दस्तथापि क्रमदीश्वरशब्दरत्नावली शब्दार्णवमते एकवचनान्ततापि। तथाच—

"स्त्रियां बहुष्वप्सरसः स्यादेकत्वेऽप्सरा अपि।"
"अप्सु निर्म्मथनादेव रसात्तस्माद्वरस्त्रियः।
उत्पेतुर्मनुजश्रेष्ठ तस्मादप्सरसोऽभवन्॥"

(Professor K. C. B. of Duff college).

Ans. (b) Here it is used in Singular number, because it signifies a particular person, Viz, "Menaka"

(N. M.)

Q. What do you understand by वैखानसं व्रतम्। Give the derivation of वैखानस।

Ans. "वैखानसव्रतं" वैखानसव्रतं वानप्रस्थव्रतनियमः। तथाच

"वानप्रस्थो वैखानसोऽग्रहः" इति त्रिकाण्डशेषः। केचित्तु वैखानसव्रतम् अष्टाङ्गमैथुनाभावरूपं ब्रह्मचर्य्यमाहुः।

वैखानसः वानप्रस्थः तस्येदमिति वैखानस+अण्। वैखानससम्बन्धिव्रतमित्यर्थः।

Q. What is the meaning of the first line of the stanza begining with तीव्राघातप्रतिहततरुः; and what would be its meaning if the whole line were *one compound word.*

Ans. तीव्रेणाघातेन प्रतिहता उत्पाटितास्तरवो येन सः, शुण्डाकर्षणेन शरीरघर्षणे दन्ताघातेन वा तेन हस्तिना तरवो निपातिताः इत्यर्थः। स्कन्धलग्नैकदन्तः स्कन्धे स्वकीयग्रीवैकदेशे लग्नः रथागमनभयेन पश्चादवलोकनात् संयुक्त एकदन्तो यस्य इत्यर्थः।

अनयोरेकपदत्वे तु।—"तीव्रेणाघातेन प्रतिहतस्य तरोः स्कन्धे लग्न एकः दन्तो यस्य" इत्येवमर्थः सम्भवति।

(क्रमशः)

---

# FOR ENTRANCE & F. A. STUDENTS.

☞ A PAPER, ON SANSKRIT GRAMMAR, GIVEN BY BABOO UPENDRA NATH ROY B. A.
Senior Professor of Sanskrit Literature, Century College, Calcutta.

## ON NUMBER.

There are three numbers in Sanskrit viz, the singular (एकवचन), the dual (द्विवचन), and the plural (बहुवचन).

The singular denotes *one* or a single individual; as पुरुषः (a person); गौः (a cow); चटकः (a sparrow). It often represents the *whole class* (जाति); as नराणां नापितो धूर्त्तः ।(The barber is the most cunning amongst men). मृत्युधर्म्मा हि मानवः (Man is mortal). But a class may be represented both by the singular and the plural ("जात्याख्यायाम् एकस्मिन् बहुवचनम् अन्यतरस्याम्" Panini); as, the sentence 'The virtuous are happy, may be translated into Sanskrit by धार्म्मिकः सुखी or धार्म्मिकाः सुखिनः ।

The dual is used to denote two (द्वि); as उभौ (both); द्वौ (two), दम्पती or जम्पती (husband and wife); पितरौ (parents) "उभाभ्यां राजपुत्राभ्यां ततः कृत्वाहमञ्जलिम् । त्वद्गौरवभयाद् राजन्नकामः पुनरागतः ॥" रामायणे। "द्वावेव कथितौ सद्भिः पन्थानौ वदतांवर।" Ibid. दम्पती जग्मतुर्गुरोराश्रमम्" रघौ। जगतः पितरौ वन्दे पार्वती-परमेश्वरौ ॥" Ibid.

But there are certain words which though they indicate a *pair* or a *couple* are always used in the singular, except when several couples or pairs are to be indicated. They are as follows:—द्वय, द्वितय, युगल, युग, युग्म, द्वन्द्व, मिथुन, उभय, *&c*.: as द्वयमेव प्रियं नः। भवभूतिः। "मा निषाद ! प्रतिष्ठान्त्वमगमः शाश्वतीः समाः। यत् क्रौञ्च मिथुनादेकमवधीः काममोहितम्" ॥ रामायणे। "राजपुत्रः किन्नरमिथुनमपश्यत्" कादम्बरी। "पश्योभयं विचार्य्यैतत् तथाप्यनृतवागसि।" रामायणे। "सुकुमारचरणयुगलं ते" भवभूतिः।

Opinions differ as to the use of उभय ; some say उभय has no dual, while others are of opinion that it has. (उभयशब्दो) द्वित्वविशिष्टस्य वाचकः। अतएव नित्यद्विवचनान्तः। उभयशब्दस्य द्विवचनं नास्ति इति कैयटः। अस्ति इति हरदत्तः॥)

There is no uumber in English coresponding to द्विवचन ; and thus we are to make use of the plural in English where the द्विवचन is to be used. As, भ्रुवोर्मध्ये is to be expressed, by 'between the *eye-brows*' ; पादौ वन्दे ( I bow to the *feet*).

Students are invited to pay particular attention to द्वन्द्व compound in the study of number. Amongst the three classes of द्वन्द्व compound, इतरेतर offers no difficulty ; but एकशेष and समाहार must be learned thoroughly. Words formed by the एकशेषद्वन्द्व are always used in the number which they denote ; as माता च पिता च = पितरौ ( parents ) ; श्वश्रूश्च श्वशुरश्च = श्वशुरौ ( father-in-law and mother-in-law ). फलञ्च फलञ्च फलञ्च = फलानि (fruits) भ्राता च स्वसा च = भ्रातरौ (brother and sister) ; पुत्रश्च दुहिता च = पुत्रौ (son and danghter). Words formed by the समाहारद्वन्द्व must be in the neuter gender and singular number, no matter whether they denote a single individual, two, or many. as, पाणी च पादौ च = पाणिपादम् (hands and feet) ; कोकिलाश्च मयूराश्च = कोकिलमयूरं (cuckoos and peacocks) हंसाश्च सारसाश्च = हंससारसं (ducks and cranes) मार्ज्जाराश्च मूषि-

काश्च = मार्जारमूषिकं (cats and rats). सुखञ्च दुःखञ्च = सुख-दुःखम् (happiness and misery).

The plural denotes more than *two* (बहुषु बहुवचनम्) ; as नराः (men) ; गावः (cows) ; कुक्कुटाः (cocks). But there are certain words which though they indicate 'many' 'i. e. more than two' &c. are used in the singular. They are as follows ; वर्ग, गण, परिषत्, कुल, समूह, मिश्र, त्रय, त्रितय, चतुष्टयः, &c. as, "माता मित्रं पिता चेति स्वभावात् त्रितयं हितम्"। हितोपदेशे। "यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता। एकैकमप्यनर्थाय किमु तत्र चतुष्टयम्॥" Ibid. But it must be noticed that these words may also be used in the plural when several such classes are indicated : as ततो हाहाकृतं सर्वं दैत्यसैन्यं ननाश तत्। प्रहर्षञ्च परं जग्मुः सकलाः देवतागणाः॥" मार्कण्डेय चण्डी।

Numerals from विंशति upwards are always used in the singular number (विंशत्याद्याः सदैकत्वे सर्वसंख्येय-संख्ययोः) ; as विंशतिः पुरुषाः।

The following words are always used in the plural number, though they are singular in sense : अप्, दार, वर्षा, सिकता, अक्षता, असु, प्राण, समा, सुमनस् (denotes a flower), &c, as, "आपदर्थे धनं रक्षेद् दारान् रक्षेद् धनैरपि।" हितोपदेशे। प्राणा हि त्वरयन्ति माम्। रामायणे। प्रतिष्ठां त्वमगमः शाश्वती समाः॥ Ibid. वातिगन्धः सुमनसां प्रतिवातं कथञ्चन।" Ibid. "ग्रीष्मे पञ्चाग्निमध्यस्थो वर्षासु स्थण्डिलेशयः।" स्मृतिः।

(क्रमशः)

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

उदेति शोको हृदि वारिवाहवत् विगर्जति स्वान्तमयस्तथैव हा ।
प्रवर्षति प्राज्यमिहाम्बु लोचनं विभेति सच्छ्रावणतो वियोगिनी ॥

## उद्भटश्लोकाः ।

यामासाद्य विधीयते हरिहरब्रह्मादिभिर्दैवतैः
स्वीयं स्वीयमतीव दुष्करतरं कर्म्म यथालीलया ।
सा दुर्गा भवभीतिरीतिशमनी लोकत्रयत्रायिणी
भूयाद्वः प्रतिपक्षपक्षदलनी वाञ्छाफलोल्लासिनी ॥ ११८ ॥
शयाना हस्ताब्जे मृदुलमुपधायाधरयुगं
समन्तादालोलाङ्गुलिभिरनुसंवाहिततनुः ।
सुधां सिक्तां पीत्वाप्यनुभवति शय्यासनसुखं
तथाप्येषा वंशी न हि भजति निद्रालसदृशि ॥ ११९ ॥
पुरो वा पश्चाद्वा क्वचिदुपवसामः क्षितिपते ।
तदा का नो हानिर्व्वनचरवराल्लीलजनतात्
स्मरारे कान्तारे कुचकलसहारे स्तनहृतां,
तथैतुल्यं सूप्यं सहतुलनयास्य क्षुधितः ॥ १२० ॥

## मातृभक्तिः ।

( पूर्वप्रकाशितात्परम् )

पादप्रक्षालनं यस्य कुरुते च महायशाः ।
सर्वतीर्थफलं भुङ्क्ते प्रसादादुभयोः सुतः ॥ ७ ॥
अङ्गसंवाहनाच्चैव अश्वमेधफलं लभेत् ।
भोजनाच्छादनैश्चैव गुरुं च परितोषयेत् ॥ ८ ॥
पृथ्वीदानस्य यत्पुण्यं तत्पुण्यं तस्य जायते ।
सर्वतीर्थमयी गङ्गा तथा माता न संशयः ॥ ९ ॥
बहुपुण्यमयः सिन्धुर्यथा लोके प्रतिष्ठितः ।
अभिन्नेव पिता तद्वत् पुराणाः कवयो विदुः ॥ १० ॥
मातरं पितरं वृद्धौ गृहस्थो यो न पोषयेत् ।
स पुत्रो नरकं याति वेदनां प्राप्नुयात् ध्रुवम् ॥ ११ ॥
कुत्सते पापकर्त्ता यो गुरुं पुत्रः स दुर्मतिः ।
निष्कृतिस्तस्य नोद्दिष्टा पुराणैः कविभिः कदा ॥ १२ ॥
एवं मत्वाहं विप्र ! पूजयामि दिने दिने ।
मातरं पितरं भक्त्या पादसंवाहनादिभिः ॥ १३ ॥
कृत्याकृत्यं वदेच्चैव समाहूय गुरुर्मम ।
तत्करोम्यविचारेण शक्त्या स्वस्य च पिप्पल ! ॥ १४ ॥
तेन मे परमं ज्ञानं सञ्जातं गतिदायकम् ।
एतयोश्च प्रसादेन संसारे परिवर्त्तते ॥ १५ ॥
ये विप्र ! भक्तिं कुर्वन्ति मानवा भुवि संस्थिताः ।
अत्रस्थस्तदहं जाने अधिस्वर्गे प्रवर्त्तते ॥ १६ ॥
नागानां च गृहस्थोऽपि चारं जानामि पिप्पल ! ॥" इति ।

इत्थं सुकर्म्मणा प्रदत्ताभ्यनुज्ञः सञ्जातसन्तोषः परिहृतावष्टम्भः पिप्पलः सुकर्म्माणमभिवाद्य स्वर्गं प्रतस्थे सुकर्म्मा तु पुनर्माता पितराविव शुश्रूषते स्म ।

हे महाशयाः ! हे सखायः ! हे सहृदयाः ! कथं सा विस्मर्यते मातृदेवी, यैव असह्यदुःखैः प्रतिपन्नगर्भा गर्भभरमसहमाना पदात्पदमपि गन्तुमप्रभवन्त्यपि न करोति मनागप्यनुपकारम् । यस्याश्च

जठरापवरके हंसतूलशय्यायामिव गर्भशय्यायां सुखमेवावतिष्ठते बालकः। यया च वत्सेच्छामनुरुन्धानया आजन्मनोप्यनास्वादितमास्वाद्य पदार्थम् उच्छ्वसितनिर्विशेषं परिपाल्यते वत्सः! हा! हन्त! आसन्नप्रसवया च दुःसहतरां दशामनुभवन्त्या कृतान्तकरालरज्जुनियन्त्रितयेव च विह्वलीभूयापि सप्रेमनिर्भरं स्तन्यमपि पाय्यते वत्सः। यया च शिशुसुखैकाभिलाषुकया दुःसहतरा अप्यनुभूयन्ते दशाः। हा धिक् कथं तामेव विस्मरत, अहो केयं दुरात्मता ? कोयं व्यामोहः ? केयं निद्रा ? किमिदं नैर्घृण्यम् ?। जाग्रत जाग्रत। पूजयत मातरम् सेवध्वं सुखानि। निराकुरुत दुःखानि। आयत्तीकुरुत स्वर्गम्। सम्पादयत यशः। नयत देवैरप्यभ्यर्चनीयतामात्मानम्। इति शिवम्।

राशिवडेकरोपाह्वः श्रीअप्पाशास्त्री
कोल्हापुरः।

---

## गर्वपरिणतिः।

### ( पूर्वप्रकाशितात्परम् )

### चतुर्थोऽङ्कः।

अरण्याभ्यन्तरम्।

सुरेशः। निशातिरेको भूतः। कथमिदानीमपि पितरौ मे दासान् न प्रेरयतः। हन्त! किं करोमि ; का गतिः ; कुत्र यामि ; कमालपामि ; को मे शरणं भविष्यति ? ( दीर्घं निःश्वस्य ) किं कृतमज्ञेन ; मूर्खतमोऽस्मि संवृत्तः ; मद्बीलतास्वनने उरगनिर्गतिरिवेदं कृत्यं मेऽविवेकस्य। (सदृष्टिक्षेपं प्ररुद्य च ) हन्त! मातर्म्रियेः; तातस्तेऽद्य सुरेशस्य जीवनशेषो जातः ; इतस्ततो विच-

[illegible] श्वापदैरवश्यमेव भक्षितो भवेयम् ; आर्त्तोऽस्मि ; अनाथोऽस्मि ; अशरणोऽस्मि ; किमिति न करोषि दयाम् ; अद्य [illegible] रक्षम् ; अतःपरं कदापि पुनरेतादृशं कर्म्म न करिष्यामि। मातः! पितः—(इत्यवोचत् पदशब्दमभिनीय ससम्भ्रमम्) अयं व्याघ्रो हर्को वा समायाति ; कुत्र गच्छामि ; को मे जीवनत्राता भविष्यति ; अयि दैव ! निर्घृण ! दर्शय दयाम्। (सदृष्टिक्षेपम्) वृक्षमिमं तावदारोहामि। ( इति वृक्षमारोढुमिच्छन्नपारगस्तन्मूल उपविश्य रोदिति। )

रोदनशब्दानुसरणेन प्रविश्य

कृष्णदासः। कोऽयं रोदिति ? ( निरूप्य ) किमयमखिलस्य सुरेशः ? महात्मन्! कथमेतादृशे निशासमये, श्वापदसङ्कुलेऽत्र विजने समायातम् ? किं वा भवतः सङ्घटितं येन निराश्रयवत् रुद्यते ?

सुरेशः। ( उत्थाय कृष्णदासमालिङ्ग्य च ) अहह ! हितकरः प्रतिवासी मे कृष्णः समायातः। प्रियबन्धो ! कृतान्तमुखात् प्रतिनिवृत्तोऽहमित्यनुभवामि।. प्रियदर्शन ! दुरदृष्टवशतः पथभ्रष्टोऽत्र तिष्ठामि ; न पारये गृहं प्रतिनिवर्त्तितुम्। उद्धरमामतो विपदसागरात्।

कृष्णः। ( साश्चर्य्यमवलोक्य ईषद्विहस्य च ) महोदय ! किं भणसि, अहन्ते प्रियसुहृत्, प्रियदर्शनस्य। नहि ; नहि ; कथं नावगम्यते ? अहं स एव निर्बुद्धिः कृष्णदासः। मा स्पृशतु मां लौहनिर्म्मितम् ; मुञ्चतु शीघ्रं नचेदङ्गहानिर्भविष्यति।

सुरेशः। प्रियदर्शन ! क्षम्यतामयं जनः। सदयः शीघ्रं प्रापयतु मां गृहपदम्।

कृष्णः। अप्यधीतं रामशर्म्मपुस्तकम्। कथयतु साम्प्रतं चन्द्रः किं परिमाण इति।

सुरेशः । (लज्जितोऽवनतशिराः ।) प्रार्थये, क्षम्यतामयं जन इति । अतःपरं कदापि त्वयि विरुद्धो न भविष्यामि ।

कृष्णः । पश्यतु तावत् मादृशः साधारणोऽपि कदापि कस्मैचित् कार्य्याय प्रभवतीति । निर्बुद्धिर्ग्राम्यकल्पोऽपि कदापि विज्ञतः सुसाधयति कार्य्यकलापमिति । महात्मन् ! आप्रभातमत्र स्थातव्यं मया सह । श्वः किल, पितृभ्यां संयोजयिष्यामो भवन्तम् । आगच्छ दर्शयामि शय्यास्थानम् ।

सुरेशः । कुत्र ते शयनमन्दिरम् ?

कृष्णः । (तर्जन्या वृक्षतलं निर्दिश्य) इदमेव वृक्षतलम् । अत्रैव शयित्वा परमानन्दमनुभवामि । साम्प्रतं भवता बन्धुत्वेन गृहीतोऽस्मि, अतएवानन्दार्द्धमनुभवितुमर्हसि ।

सुरेशः । मित्र ! नायमुपहासस्य समयः । बिभेति ममा-न्तरात्मा । सत्यमादिश सत्वरम् ।

कृष्णः । सभ्यतम ! ग्राम्यदेशीया हि सदा सरलाः कदापि मिथ्यां न कथयन्ति । सत्येनाभिलपामि, इदमेव नौ रात्रियापनाय भविष्यति ।

कृष्णः । किमाच्छादनरहितेऽत्र शयनीयम् ?

कृष्णः । अथ किम् ? वृथाभीरुक ! नास्त्यत्र किञ्चिदपि भयकारणम् । (चतुर्दिशं निरूप्य) चक्रवर्त्तिनोऽपि नास्त्येतादृशं प्रशस्तगृहम् । (चन्द्रं निर्दिश्य) किमेतादृशो हीरकखण्डः सम्राजोऽपि मन्दिरे वर्त्तते ? पश्यतु, किरणजालेनास्य समुद्भासित-मखिलमरण्यम् । देव ! विमनसा न भवितव्यम् ; कोमलपल्लवान्या-हृत्याच्छाद्य च तान्युत्तरीयवस्त्रेण तादृशीं शय्यां विधास्यामि, या हि भवन्तम् अनन्तशय्या श्रीधरमिव सुखिनं करिष्यति ।

सुरेशः । सत्यं सर्वम् । परं श्वापदा इतस्ततो विचरन्ति ; कथं न भीतिरस्माकम् ?

कृष्णः। विज्ञवर! किं न ज्ञायते वैश्वानराग्रतः कस्यापि प्रभुत्वं न फलतीति।

सुरेशः। सत्यमेतत्; परमत्र तु नास्त्यग्निकणापि।

कृष्णः। साम्प्रतं नास्ति, शीघ्रमुत्पाद्यते।

सुरेशः। केन प्रकारेण?

कृष्णः। (सशिरःकम्पम्) किं नास्त्येष विषयः सांख्यसूत्रे। पश्यतु तावत्। (इति काष्ठवर्षणेन वह्निं प्रज्वाल्य शुष्ककाष्ठानि तत्र निक्षिपति।)

सुरेशः। (सविस्मयः स्वगतम्) अहो! मे वृथाभिमानित्वम् पित्रा बहुशः कथितम्, कृष्णोऽसौ तवापि शिक्षको भवितुमर्हतीति। अधुना पश्यामि, न केवलं मां, मम शिक्षकमपि शिक्षयितुं समर्थोऽयं जनः। (प्रकाशम्) मित्र! बलवती क्षुधा मां बाधते; किं करोमि; गृहन्तु बहुदूरे वर्त्तते।

कृष्णः। कात्र शङ्का; अस्त्यत्रापि क्षुधानिवृत्तेरुपायः। अनल-समीपे तावदपेक्ष्यताम्, यावत् भक्ष्याण्याहृत्यागम्यते। नोद्विजस्व नास्त्यत्र कोऽपि भयलेशः। (इति निष्क्रान्तः।)

सुरेशः। अहो! किमाचरितमसाधु पूर्वमस्मिन् साधौ मया-नार्य्येण; तृणवद्दृष्टोऽसौ वृथाभिमानिना; नितरां कटूक्त्या कथितोऽनभिज्ञेन; सुकठिनं विताड़ितो निष्ठुरेण; किं बहुना बहुधा तिरस्कृतोऽपि पुनः सहवसतिमभिलाषुकोऽयं विदूरितो मुग्धेन। अधुनानुतापानलः स्मारं स्मारं तदखिलं प्रज्वलितो द्विगुणतरं दहति मां न तु भस्मसात् करोति। धिक् मामधन्यम्; कष्टं मे जीवनधारणम्। यदाहमस्य चरित्रेण स्वशीलतुलनां चिकीर्षुस्तदा पश्यामि तस्य चारित्र्यं सुरवृन्दसेवितं दिवि वर्त्तते, मम पुनः कीटदूषितं नरकेऽवतिष्ठते। क्वेदृशस्य निरभिमानिनः परहितैषिणः शीलता, क्वचाभिमानदूषितस्य मादृशः कूपमण्डकस्य

कार्य्यता। सर्वथा निष्फला मे प्रज्ञा; निर्गुणं शास्त्रानुशीलनम्; निष्कारणञ्च ज्ञानम्। अद्य मे नष्टं खलु पाण्डित्याभिमानित्वम्; गतं गर्वित्वम्; मृतञ्चासमदर्शित्वम्। (दीर्घं निःश्वस्य) अतःपरं कदापि पुनस्तादृशं नाचरिष्यामि। मातः! पितः! नयतु मां कृपया कृतापराधम्। (इति रोदिति।)

प्रविश्य फलहस्तः कृष्णदासः। महात्मन्! कथं रुद्यते; अपि नाम बलवत्या क्षुधया पीड्यते? अहह! अननुभूतक्लेशस्य भवत ईदृशीं दशामवलोकयतो मे हृदयं स्फुटतीव। प्रभो! निशीति फलाहरणे बहुतरः समयोऽतिवाहितस्ततोऽपराधिनमात्मानं मन्ये। प्रार्थये, विस्मृत्य तं दोषविसरं यथेच्छं भुज्यतामिति। (इति सुपक्वफलानि उपहरति।)

सुरेशः। नास्ति भवादृशे गुणाधारे दोषलेशोऽपि। मया पुनर्बहुशोऽपराद्धमसदाचरणेन। यदि तत्सर्वं क्षम्यते, तदा मयापि भुज्यते। अन्यथा न। (इति मुखमाच्छाद्य रोदिति।)

कृष्णः। किमिदमध्यवसितम्। नास्ति मे मनसि पूर्ववृत्तान्तलेशोऽपि। साम्प्रतं क्षुन्निवृत्तिं विधेहि। (इति फलानि हस्ते ददाति)

सुरेशः। अलङ्घनीयमद्यावधि भवद्वचनम्। भक्षयामि तावत्। (इति कथञ्चित् भक्षयित्वा।) आः स्वस्थोऽस्मि; अतःपरं करणीयमुपदिशतु।

कृष्णः। इतो नातिदूरे स्थिता पर्वतगुहा शयनार्थमेव निर्दिष्टा; कृता च तत्र कोमलपत्रबहुला शय्या। तत्र निर्विघ्नं शयिष्यते भवता, मया पुनर्वह्निना सह रक्षकेण भवितव्यम्। आगच्छतु दर्शयामि। (इति प्रस्थातुमुद्युक्तः।)

सुरेशः। प्रार्थयामहे करुणामयं रामचन्द्रमतःपरं मे भवता प्रियबन्धुना कदापि विच्छेदो माभूदिति। (इति निष्क्रान्तौ।)

इति चतुर्थोऽङ्कः।

श्रीनन्दलालविद्याविनोदस्य।

# चपेटमालिनी । *

## एम्, ए, प्रमुख-न्यायालङ्कार-श्रीयुत-नीलमणिमुखोपाध्याय-भट्टाचार्य्यपादान्तेवासि-श्रीमदविनाशचन्द्रगुह-ग्रथिता ।

चकितचकितमन्तः प्रोच्छलन्ती चपेट्या
सजलनयनपद्मे प्रोञ्छिका स्पन्दते ते ।
स्फुटदमृतफलानां * * प्लोष्यतेऽलक्तलक्ष्मीः
पुलकविकचगल्ले चूर्णकैश्चम्पकानाम् ॥ १ ॥
वियति हसति हंसी वेपते चाञ्जलिस्ते
स्खलति चरणहीना विह्वला श्लोकलेखा ।
मुहुरुपहितमायामुग्धदृष्टि पश्चाद्
धुरि वररुचिसूरिर्धीरधीरः प्रयाति ॥ २ ॥

---

* पञ्चिकेयं सरस्वती सम्बोधना। अत्राभ्यासः। पुरा किलैकदा भगवती भारती कालिदासकवेः काव्यकौशलं परीक्षितुं श्लोकमेकं स्वयमेव संदृभ्य पादं च तस्य प्रणाश्य शिष्टत्रिपादीमादाय कलितबालिकाकल्पा क्वचिदुज्जयिनीराजपथे राज्ञो माध्यन्दिनं सभाभङ्गं प्रतिपालयन्ती तिष्ठति स्म। अथ विकीर्णायां संसदि तेनैव पथा समागच्छत्सु सुधीजनेषु वररुचिं दृष्ट्वाऽभिवाद्य भारती भणति ब्रह्मन्नन्धो मे तातः। राजकीयप्रसाद-प्रेप्सया स भवान् भिक्षामयीं श्लोकपत्रीं विरचय्यात्मना मन्तुमशक्तेन मयेमां महाराज-चरणराजीवेष्वहैषीत्। परमहो प्रमादः सपदि संसर्पन्त्या मेऽङ्गुलिसंघर्षात् प्रमृष्टेयं प्रत्यग्रा मसीलेखा। तेनेमं लुप्तपादं ननु पूरयन्त्वाचार्य्यपादा इति। वररुचिरपि स्मितं यथा भूतमेव पूरयामास। वाणी ब्रूते न खलु ब्रह्मन् पादमेतादृशं स्मरामीति। वररुचिः सव्रीडमाह ध्रुवं न जाने बाले। अगाधं हि सारस्वतागारमिति उक्त्वा च शनैः प्रस्थितः। अथारादागते कालिदासे समभिवाद्य वाणी प्राग्वदेव लुप्तपादपूरणं ययाचे। कालिदासोऽपि तं सहेलं यथाभूतमेव पूरयामास। सुरबाला तु ससङ्कोच-माह देव न खल्वमुमेतादृशं स्मरामि। किन्नु सूरे! सोऽन्यादृक् संभाव्येतेति। आः किं जल्पसि वाचाटे! कः पुनारे अन्यादृगिति नयननिमिषादेव कुपितः कविर्भ्रुकुटिकुटिलि-तास्यस्तस्यै चपेटिकां प्रदादिति किं वदन्ती।

** अमृतफलमिति नास्पाति इति प्रख्यातः फलभेदः। तथा हि भावप्रकाशे भिषगाचार्य्यः श्रीमद्भावमिश्रः॥ अमृतफलम्। यददक्षान काबिलप्रभृतिषु देशेषु नास्पति इति प्रसिद्धमिति॥ फलमेतच्छिशिरे कलिकातामहानगरीवासिनां सुपरिचितमेव।

क्व चिरमगमदस्तं सद्ग्रहैर्विक्रमार्कः
क्व च बत नवरत्नं कालनीलाम्बुसग्नम् ।
स्फुरति ननु कपोलेऽद्यापि ते तत्रपेटं
स्मरसि सरसिजस्थे सारदे तद्दिनं किम् ? ॥ ३ ॥
न किमु मिषसि पद्मा पद्मनाभी स्मयेते
व्यतियुतकरकण्ठावूर्द्ध्ववैकुण्ठजालात् ।
यदि वितरसि मर्त्ये देवदुष्प्राप्यचित्तं
किमहह चिरमूढ़े तस्य मूल्यं चपेटी ॥ ४ ॥
वपुरलिपत योऽङ्कैश्चन्द्रचूर्णाचितं ते
अयि किमिति विदग्धे त्वत्सुधावर्चं धिक् ।
तव सुरचितकाच्युतस्य ताम्बूलसारः
कुचलकुचयुगं ते लेढ़ि हा लोललोलः ॥ ५ ॥    ॥ शिवम् ॥

---

# सती च्छाया ।

## द्वितीयपरिच्छेदः ।

( निष्ठुरनैराश्यम् )

अहो विधे वेद न हीदृशं विधिम्
कीटो निवस्ते ह्यरविन्दकोरके ।
मृगीं विहन्तुं सरलां विपाकात्
नियोजितं जालमितः किरातैः ॥

कलिकातान्तःपातिनि गड़पारग्रामे राजनन्दनस्यापि तस्य रमणीमोहनस्य इन्द्रप्रियया विवाहोऽन्यैरलक्षितः सम्पन्नः। वरपक्षीयस्तत्र अतुलकरः, कन्यापक्षीयस्तु कुमारस्यान्यतमो बन्धुः कमलमित्रः। कमलमित्रस्यैव भार्य्याप्रभृतयः स्त्र्याचारं विदधति। पुरोहितस्तु दक्षिणारूपं रूपकशतकं लेभे।

परिणयात्परं दिनद्वयमतीत्य रमणीमोहनः व्याघ्रापणस्योपगङ्गं मनोहारिण्यामुद्यानवाटिकायान्तां न्यवासयेत्। विवाहात्परं मासमेकमतीत्य एकदा इन्द्रप्रिया रमणीमोहनं वदति, नाथ ! मातरमवलोकितुमतीव मे मनश्चञ्चलीभूतं, मन्ये च नो चेत् जीवनेनापि वियुज्ये। तत्सत्वरमुपायमस्योद्भावयेति। रमणीमोहनः कथयति, नेदानीं तत्रोपगन्तुं साम्प्रतम्, यतिष्ये तदर्थमुपायतो भवत्या भ्रात्रादीन् वशमानीय साचात् करिष्यावः।

एवमालपतोस्तयोर्दम्पत्योरतुलकरस्तत्रोपतस्थे, संलापश्च तयोरवसितः। रमणीमोहनः कथयति "इन्द्रप्रिया मातरमवलोकितुमभिलषति। अतुलः कथयति इदानीं नैव तदुपयुज्यते। श्रुत्वैतदिन्द्रप्रिया वदनमावृत्य चेलाञ्चलेन वाष्पवारि विमुञ्चति। रमणीमोहनस्तु तस्या रोदनेन नितरां व्यथामापन्नः अतुलं प्रति वदति सखे ! किं विधास्यामि न सोढुं प्रभवामि इन्द्रप्रियारोदनम्। अतुलस्तु क्रोधमभिनीय उत्तरयति वाढ़म् आत्मानं तद्भ्रात्रे अभिज्ञाप्य राजदण्डः कारागारः स्वीक्रियताम्।

रमणी। कथमेवं, यथाविधि सा विवाहिता।

अतुलः। न कथमित्थम्। न हि किं मयेयं चोरिता ? किन्त्वात्र भयेन ?।

रमणी। (सचिन्तम्) भ्रातः ! त्वमेव सार्द्धं तैः साचात्कृत्य यथा चास्माभिस्तेषां बन्धुत्वं स्थिरीभवति तथैव यतितव्यम्।

अतुलः। कुमार ! समये तत्सर्वं भविता, इदानीं भवितुं नैव युज्यते। चौर्य्येणापहृत्य इन्द्रप्रियां निर्म्मले तेषां कुले कलङ्कः पातितः। अधुनैव यदि ते जानीयुस्तदा क्रोधेन विवशीकृताः राजद्वारे प्रतिवदेयुः।

रमणी। तदा कथमप्येनां सान्त्वयितुं प्रलोभ्य वड्डापणे मणिकारापणं गत्वा सहस्ररूपकमूल्येन मुक्तामालामानीयास्यै समर्पय।

अतुलस्तु सानन्दं घोटकशकटमारुह्य शनैर्वङ्गापणं गच्छन्नपि इन्द्रप्रियायां दुरभिलषितं चरितार्थयितुं चिन्तयन्नपि मनसा शैलाग्रमारूढः। मुहूर्त्तादिव शकटं वङ्गापणे उपस्थितम्। तथैव मुक्तामालापि क्रीता। ततः प्रत्यागच्छन्नपि स पाषाणशयः "यदि दिनमेकमपि सा मे अङ्के शयिष्यते तदाप्यत्रैव स्थित्वापि आत्मानं नन्दनकानने विचरन्तमिव मंस्ये। अहो सौभाग्यं रमणीमोहनस्य, यः खलु तथाविधां स्वर्गीयां देवमूर्त्तिं अहर्निशं हृदयमन्दिरे पूजयति। यदा अतुलकरं रमणीमोहनञ्च परिहृत्य इन्द्रप्रिया रोरुद्यमाना अन्तर्वाटिकां प्रविशति तदा दासी यशोदा ताम्बूल-विटिकां सज्जति। यशोदा रोरुद्यमानान्तां निशम्य ससम्भ्रमं चेलाञ्चलेन वदनं प्रोञ्छ्य तस्याः शयनकक्षमानीय खट्टिकायां शाययति। बालिका इन्द्रप्रिया तु उपाधाने मुखमानमय्य भूयो रोदितुमारेभे। यशोदा सकातरं कथयति भगिनि! इन्द्रप्रिये! किमित्यकारणं रोदिषि? किमिति वा दुश्चिन्तया क्षणमपि शरीरं क्षीणीकरोषि?। इन्द्रप्रिया कथयति अयि मातरमालोकयितुं नितान्तमुत्कण्ठते चेतः।

यशोदा। अहो तदर्थं किमिति रोदनेन। मासद्वयात् परमेव तत्र यास्यति। एतदर्थमहं रमणीमोहनं सानुबन्धं वक्ष्यामि। रोदनेनात्मा केवलं शोष्यते न तु फलान्तरं लभ्यते।

अस्मिन्नेवावसरे रमणीमोहनः इन्द्रप्रियापार्श्वमुपैति, यशोदा च ततः निष्क्रामति। रमणीमोहनः मृदु मृदु करावर्त्तनेन तां सान्त्वयन् कथयति अयि प्रिये! नाहं स्वेच्छया तां क्लेशयामि, शीघ्रमेव तत्र त्वां प्रेरयितुं यतिष्ये। प्रिये! त्वत्कृते महार्घो हारो-ऽयमानीतः गृह्यतामिति कण्ठे परिधापितः। कथयति च प्रिये! कण्ठन्ते समवाप्य मुक्तामालेव भूषितेति मन्ये। एवं सादरं प्रिया-चिवुकमुन्नमय्य निर्वर्ण्य च मुखकमलम् उरसि संगोप्य मृदु मृदु

पृष्ठं ममार्ज। सा च लज्जिता भूयोऽपि मुखं संगोप्य नेत्रं निमील्य स्थिता। रमणीमोहनः कथयति प्रिये! अधुनापि मयि वचनकरे एवं लज्जसे नैतद्युक्तमिति। अहन्तु प्रफुल्लन्ते नयनेन्दीवरमालोक्य वचसामगोचरं प्रीणामि।

अस्मिन्नेव काले सन्ध्या समागता। भृत्यः कक्षं प्रविश्य दीपं प्रज्वाल्य च वहिर्निःसृतः। अतुलकरोऽपि तदा रमणीमोहन-माह्वयति, रमणीमोहनस्तु क्षणमपेक्ष्यतां वहिरागच्छामि। पापी-यान् अतुलकरः पापचक्षुषा सतृष्णं इन्दुप्रियामालोकयन् अस्फुटं कथयति अहो कदेयमङ्कशायिनी मे भूयात् इति।

( क्रमशः )

---

## धर्म्मविवेकः।

( पूर्वप्रकाशितात्परः )

एतेषां धृत्यादीनाम् अहिंसादीनाञ्च नियतनिषेवनात् आत्मो-न्नतिर्जायते लभते च चरमं परमं श्रेयः, अतएव ते धर्म्माः। एतेषामेव धर्माणां सत्त्वात् वयं मनुष्याः। एतेषामेवाभावात् गवा-दयः पशवः। येषां खलु मनुष्येषु नास्ति अहिंसा नास्ति सत्यं नास्तेयं न शौचं नेन्द्रियनिग्रहः, न दानम्, न दया, न दमः, न च क्षान्तिर्वर्त्तते तेषु मनुष्यलक्षणं किमपि नास्ति, ते केवलं मनुष्य-चर्माच्छादिताः शृङ्गलाङ्गूलरहिताः पशव एव। सर्वेषामेव मनु-ष्याणामल्पाधिकभावेन अहिंसादयः सन्त्येव, येषां मात्रयाधिकमहिं-सादिकमस्ति ते पूर्णावयवेन मनुष्याः येषान्तु ततो न्यूनमहिंसादिक-मस्ति तेऽसम्पूर्णा विकलाङ्गा इव मनुष्याः।

वामाः। गुरवः! अहिंसादीनां सेवनात् मनुष्या आत्मानं कियदुन्नेतुं शक्नुवन्ति?

शिवः। ईश्वरत्वं यावदात्मानं प्रापयितुं शक्नुवन्ति।

वामा:। साक्षादुत परम्परया ?।

शिवः। परम्परया। अहिंसादिभ्यः बुद्धेर्मालिन्यमपसरति, मालिन्ये च विगते अविवेकस्तिरो भवति। तिरोभूते च अविवेके विवेक उपजायते, तथाच योगसूत्रम्।

योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥ २ । २८।

अविद्या अहंभावः विषयवासना द्वेषः साधून्यसाधूनि च कर्माणि, तत्फलञ्च विपाकः तत्फलानुकूला च वासना आशयाः ते पञ्चविधक्लेशाः मनस्येव वर्त्तमाना अपि आत्मनि उपचर्य्यन्ते, आत्मा फलस्य भोक्तेति। यो हि पुरुषः अनेन भोगेन न स्पृश्यते स एव पुरुषविशेष ईश्वरः। अहिंसादितश्च इह जन्मनि जन्मान्तरे वा जीवत्वमपहाय अविद्याक्षयादीश्वरो भवति स एवमुक्तः कथ्यते। अस्य च विशेषा वक्ष्यन्ते।

वामा। गुरवः! अहिंसादीनामीदृशशक्तौ किं प्रमाणम् ?।

शिवः। शास्त्रं तदनुष्ठानञ्च। प्रथमतः श्रूयतां शास्त्रम्। तथाहि। योगसूत्रम्। २। ३५।

"अहिंसा प्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥"

यस्य खलु स्वप्नेऽपि मनस्तो नोदेति हिंसा एकाशीति प्रकारा, तस्यैव अहिंसा प्रकर्षेण तिष्ठति, तस्यामहिंसायां प्रतिष्ठायां तस्य पुरुषस्य सन्निधौ सर्वप्राणिनां मशकदंशकभुजङ्गशार्दूलानाम् अन्योन्यवैरत्यागो भवति। यथा मेधसस्य मुनेराश्रमे स्वाभाविकं वैरं हित्वा सर्पमयूराः व्याघ्रमहिषाश्च विचरन्ति। एवं

"सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥" २। ३६ ॥

( क्रमशः )

# तत्त्वप्रपञ्चः ।

( पूर्वप्रकाशितात्परः )

अथ यदुक्तं चतुर्विंशतितत्त्वेषु प्रथमं तत्त्वं प्रकृतिः सा कीदृशी ? किं लक्षणा ? तत् कथ्यते । सत्त्वरजस्तमसाम् अकार्य्यावस्था प्रकृतिः । अकार्य्यावस्थैव कीदृशी ? सत्त्वरजस्तमसां साम्यावस्थेति गृहाण, किमिति साम्यावस्था ? तुल्यावस्थेति । तथाहि यथा समत्रि-त्रिभागेण पञ्चानक-षड्गण्डिका-द्विकपर्दक-द्विक्रान्तेन (।/६॥=) षोड़शानको रूपको भवेत्, तथा यदा सत्त्वं पञ्चानक-षड्गण्डिका-द्विकपर्दक-द्विक्रान्तम्, ( ।/६॥= ) रजोऽपि पञ्चानक-षड्गण्डिका-द्विकपर्दक-द्विक्रान्तम् ( ।/६॥= ) एवं तमोऽपि पञ्चानक-षड्-गण्डिका-द्विकपर्दक-द्विक्रान्तञ्च ( ।/६॥= ) भवेत् तत् समष्टीभूता एषैव प्रकृतिः । कथमस्याः "प्रकृति"रिति नाम ? यस्मात् प्रकर्षेण जगत् करोति स्वयमेव जगद्रूपेण परिणमते इति प्रकृतिः । विकृति-भूतानां सर्वजगतां प्रकृतिः आदिकारणम् । यथा वृक्षः प्रकृतिस्त-द्विकृतिर्नौका, तथा गुणत्रयसाम्यावस्था प्रकृतिस्तद्विकृतिर्जगत् । इयमेव प्राकृतप्रलयावस्था कथ्यते * एतेन गुणसाम्यात् प्रलयः गुण-वैषम्याच्च सृष्टिरिति परमार्थः ।

---

( * ) प्राकृतप्रलयावस्था यथा कूर्मपुराणे ४२—४३ अध्याये ।

अतः परं प्रवक्ष्यामि प्रतिसर्गमनुत्तमम् । प्राकृतं प्रसमासेन शृणुध्वं गदतो मम ॥
गते परार्द्धे द्वितये काले लोकप्रपालकः । कालाग्निर्भस्मसात् कर्त्तुं करोति निखिलं मतिम् ॥
आत्मन्यात्मानमावेश्य भूत्वा देवो महेश्वरः । दहेदशेषं ब्रह्माण्डं स देवासुरमानुषम् ॥
तमाविश्य महादेवो भगवान्नीललोहितः । करोति लोकसंहारं भीषणं लोकमाश्रितः ।
प्रविश्य मण्डलं सौरं कृत्वाऽसौ बहुधा पुनः । निर्दहत्यखिलं लोकं सप्तसप्तिस्वरूपधृक् ॥
स दग्ध्वा सकलं सत्त्वं सर्वं ब्रह्मशिरो महत् । देवतानां शरीरेषु क्षिपत्यखिलदाहकः ॥
दग्धेष्वशेषदेहेषु देवी गिरिवरात्मजा । एका सा साक्षिणः शम्भोस्तिष्ठते वैदिकी श्रुतिः ॥
शिरः कपालैर्देवानां कृतस्रग्वरभूषणः । आदित्यचन्द्रादिगणैः पूरयन् व्योममण्डलम् ॥

तथा च प्रकृतिपर्य्यायः । महाभारते आश्वमेधिकपर्व्वणि ।

तमोऽव्यक्तं शिवो धाम रजो योनिः सनातनः । प्रकृतिर्विकारः प्रलयः प्रधानं प्रभवाप्ययौ ॥
अनुद्रिक्तमनूनं वाप्यकम्पमचलं ध्रुवम् । सदसच्चैव तत्सर्वमव्यक्तं त्रिगुणं स्मृतम् ॥
ज्ञेयानि नामधेयानि नरैरध्यात्मचिन्तकैः ॥

एव प्रलयावस्था तमोरूपा यतः प्राकृतिकी सृष्टिः । यथाह मनुः । १ । ५ ।

आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्यमविज्ञेयं प्रसुप्तमिव सर्वतः ॥

अत्र च मेधातिथिधृतश्रुतिः । "तम आसीत् तमसा गूढ़मग्रे प्रकेतं सलिलं सर्वमा इदं तुच्छेनाभिपिहितं यदासीत्तमसस्तन्महिना जायतैकम् । चन्द्रार्काग्न्यादिषु बाह्याध्यात्मिकेषु महाप्रलये प्रकाशकेषु नष्टेषु तम एव केवलमासीत्" । एतेन चन्द्रादयस्तदानीं प्रकृतौ लीना आसन् इति प्रतीयते ।

---

सहस्रनयनो देवः सहस्राकृतिरीश्वरः । सहस्रहस्तचरणः सहस्रार्चिर्महाभुजः ॥
दंष्ट्रा करालवदनः प्रदीप्तानललोचनः । त्रिशूली कृत्तिवसनो योगमैश्वर्य्यमास्थितः ॥
पीत्वा तत् परमानन्दं प्रसूतममृतं स्वकम् । करोति ताण्डवं देवीमालोक्य परमेश्वरः ॥
पीत्वा नृत्यामृतं देवी भर्त्तुः परममङ्गला । योगमास्थाय देवस्य देहमायाति शूलिनः ॥
स त्यक्त्वा ताण्डवरसं स्वेच्छयैव पिनाकधृक् । याति स्वभावं भगवान् दग्धा ब्रह्माण्डमण्डलम् ॥
संस्थितेष्वथ देवेषु ब्रह्मविष्णुपिनाकिषु । गुणैरनेकैः पृथिवी विलयं याति वारिषु ॥
सवारितत्त्वं सगुणं ग्रसते हव्यवाहनः । तैजसं गुणसंयुक्तं वायौ संयाति संचयम् ॥
आकाशे सगुणो वायुः प्रलयं यान्ति सत्तमाः । भूतादौ च तथा काशं लीयते गुणसंयुतम् ॥
इन्द्रियाणि च सर्वाणि तैजसे यान्ति संक्षयम् । वैकारिके देवगणाः प्रलयं यान्ति सत्तमाः ॥
वैकारिकस्तैजसश्च भूतादिश्चेति सत्तमाः । त्रिविधोऽयमहङ्कारो महति प्रलयं व्रजेत् ॥
महान्तमेभिः सहितं ब्रह्माणममितौजसम् । अव्यक्तं जगतो योनिः संहरेदेकमव्ययम् ॥
एवं संहृत्य भूतानि तत्त्वानि च महेश्वरः । नियोजयत्यथान्योन्यं प्रधानं पुरुषं परम् ॥
प्रधानपुंसो रजयोरेष संहार ईरितः । महेश्वरेच्छाजनितो न स्वयं विद्यते लयः ॥
गुणसाम्यं तदव्यक्तं प्रकृतिः परिगीयते । प्रधानं जगतो योनिर्म्मायां तत्त्वमचेतनम् ॥
कूटस्थश्चिन्मयो ह्यात्मा केवलं पञ्चविंशकः । गीयते मुनिभिः साक्षी महानेकः पितामहः ॥
एवं संहारकरणी शक्तिर्माहेश्वरी ध्रुवा । प्रधानाद्यं विशेषान्तं दहेद्रुद्र इति श्रुतिः ॥

अत्र कुल्लुकः। "तमःशब्देन गुणवृत्त्या प्रकृतिर्निर्दिश्यते"।

सैव प्रलयावस्था नामरूपाद्यनिर्वाच्यत्वात् सर्वद्रव्याणां कारणीलयत्वाच्च असदवस्थोच्यते। यथा तैत्तिरीयोपनिषदि ब्रह्मवल्ल्याम् ७म खण्डे।

असद्वा इदमग्र आसीत्। ततो वै सदजायत।

एवं छान्दोग्ये ३। १९। १।

"असदेवेदमग्र आसीत्। तत्सदासीत्तसमभवत्तदाण्डं निरवर्त्तत"।

एवं बृहदारण्यके १। २। १।

नैवेह किञ्चनाग्र आसीत्। मृत्युनैवेदमावृतमासीत्।

अशनायया। अशनाया हि मृत्युस्तन्मनोऽकुरुतात्मन्वी स्यामिति॥

अत्र शङ्करभाष्यम्। "इह संसारमण्डले किञ्चन किञ्चिदपि नामरूपप्रविभक्तविशेषं नैवासीन्न बभूव। अग्रे प्रागुत्पत्तेर्मन आदेः"। तस्मात् सदेव कार्य्यं प्रागुत्पत्तेरिति सिद्धम्॥" किं लक्षणेन? मृत्युना आवृतः अत आह अशनायया अशितुमिच्छा अशनाया सैव मृत्युर्लक्षणं तया लक्षितेन मृत्युना अशनायया।" "अशनाया हि मृत्युः यो ह्यशितुमिच्छति सोऽशनायानन्तरमेव हन्ति जन्तून्। बुद्ध्यात्मनो अशनाया धर्म इति। स एव बुद्ध्यवस्थो हिरण्यगर्भो मृत्युरित्युच्यते। तेन मृत्युनेदं कार्य्यमावृतमासीत्।"

अवस्थेयं नामरूपेण निर्देष्टुमशक्यत्वात् सर्वजगतोऽभावप्रतीयमानत्वात् अतिसूक्ष्मस्याव्यक्तस्य बुद्धेरविषयत्वाच्च "असतः सज्जायत" इत्याहुर्बौद्धाः।

तथाच श्रुतिमपि प्रमाणयन्ति। यथा छान्दोग्ये। ६। २। १।

तद्धैक आहुरसदेवेदमग्र आसीत् एकमेवाद्वितीयं तस्मादसतः सज्जायते।

अत्र भाष्यम्। "तत्तत्र हैतस्मिन् प्रागुत्पत्तेर्वस्तुनिरूपणे एके वैनाशिका आहुर्वस्तु निरूपयन्तोऽसत् सदभावमात्रं प्रागुत्पत्तेरिदं जगदेकमेवाग्रेऽद्वितीयमासीदिति। सदभावमात्रं हि प्रागुत्पत्तेस्तत्त्वं कल्पयन्ति बौद्धाः। न तु सत् प्रसिद्धं वस्त्वन्तरमिच्छन्ति।"

वेदान्तिनो यद्ब्रह्म जगदुत्पत्तिकारणं श्रुत्या मन्यन्ते तदेव ब्रह्म प्रकृतिमित्यभिप्रेत्य सांख्या: तामेव श्रुतिं प्रमाणयन्ति तथाच तैत्तिरीयोपनिषदि भृगुवल्ल्याम् १ ।

"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति ।
यत् प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व । तद्ब्रह्मेति ॥

अत्र बृंहितत्वात् ब्रह्म प्रकृति: विश्वेत्यर्थ: कथ्यते । तथा च भगवद्गीता १४।२। "मम योनिर्म्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहमिति"।

विष्णुपुराणीय प्रकृत्यवस्था १।२।१८—३३ ॥

अव्यक्तं कारणं यत्तत् प्रधानमृषिसत्तमै: । प्रोच्यते प्रकृति: सूक्ष्मा नित्यं सदसदात्मकम् ॥
अक्षयं नान्यदाधारममेयमजरं ध्रुवम् । शब्दस्पर्शविहीनं तद्रूपादिभिरसंहतम् ॥
त्रिगुणं तज्जगद्योनिरनादिप्रभवाप्ययम् । तेनाग्रे सर्वमेवासीत् व्याप्तं वै प्रलयादनु ॥
वेदवादविदो विद्वन् नियता ब्रह्मवादिन: । पठन्ति वै तमेवार्थं प्रधानप्रतिपादकम् ॥
नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्न चान्यत् ।
श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्म पुमांस्तदासीत् ॥
विष्णो: स्वरूपात् परतो हि तेऽन्ये रूपे प्रधानं पुरुषश्च विप्र ।
तस्यैव तेऽन्येन धृते वियुक्तरूपेण यत्तद्द्विज कालसंज्ञम् ॥
प्रकृतौ संस्थितं व्यक्तमतीतप्रलये तु यत् । तस्मात् प्राकृतसंज्ञोऽयमुच्यते प्रति सञ्चर: ॥
अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमा: ॥
गुणसाम्ये ततस्तस्मिन् पृथक् पुंसि व्यवस्थिते । कालस्वरूपं रूपं तत् विष्णोर्मैत्रेय वर्त्तते ॥
ततस्तत् परमं ब्रह्म परमात्मा जगन्मय: । सर्वग: सर्वभूतेश: सर्वात्मा परमेश्वर: ॥
प्रधानं पुरुषञ्चापि प्रविश्यात्मेच्छया हरि: । क्षोभयामास सम्प्राप्ते सर्गकाले व्ययाव्ययौ ॥
यथा सन्निधिमात्रेण गन्ध: क्षोभाय जायते । मनसो नोपकर्तृत्वात् तथासौ परमेश्वर: ।
स एव क्षोभको ब्रह्मन् क्षोभ्यश्च पुरुषोत्तम: । स सङ्कोचविकाशाभ्यां प्रधानत्वेऽपि च स्थित:
विकाराणुस्वरूपैश्च ब्रह्मरूपादिभिस्तथा । व्यक्तस्वरूपश्च तथा विष्णु: सर्वेश्वरेश्वर: ॥
गुणसाम्यात्ततस्तस्मात् सर्वज्ञाधिष्ठितान्मुने । गुणव्यञ्जनसम्भूति: सर्गकाले द्विजोत्तम ॥

(क्रमश:)

# FOR ENTRANCE STUDENTS.

AS GIVEN BY THE HEAD PUNDIT

*OF*

G. A. INSTITUTION, CALCUTTA.

☞ Questions with answers on Sanskrit Entrance Course for 1896.

Q 1:—Explain the following sloka in tika form.

### उद्योगिनं पुरुषसिंहमिति ETC.

Ans.—उद्योगिनमिति। लक्ष्मीः सम्पत् उद्योगिनं सचेष्टं पुरुषः सिंह इव तं पुरुषश्रेष्ठमित्यर्थः। (स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः। सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः इत्यमरः। उपमितं व्याघ्रादिभिः सामन्याप्रयोगे। इति उपमितसमासः।) उपैति आप्नोति। नियतोद्यमशालिनः सम्पत् चिरस्थायिनीति भावः। कुत्सिताः पुरुषाः कापुरुषाः। "पथि पुरुषे" वा इति सूत्रेण कुशब्दस्य कादेशः। पक्षे कुपुरुषा इति। दैवेन नियत्या भाग्येनेत्यर्थः। (दैवं दिष्टं भागधेयमित्यमरः।) देयं दातव्यम् इति दिष्टसूचितमवश्यमेव भविष्यतीत्येवंरूपं वदन्ति कथयन्ति। अनुद्यमशालिनो मन्दा एव दिष्टपरा इति भावः। अतः आत्मनः स्वस्य शक्त्या सामर्थ्येन दैवं भाग्यं निहत्य विनाश्य दैवं हीनबलं विधायेत्यर्थः। पुरुषस्य भावस्तं पौरुषं पुरुषकारं यत्नमित्यर्थः। कुरु विधेहि। यथासाध्यं यत्नमनुतिष्ठेत्यर्थः। न हि यत्नवैफल्ये दोषाशङ्का कर्त्तव्या

इत्यत आह यत्ने इति। यत्ने उद्यमे कृते अनुष्ठिते सति यदि न सिध्यति न सफलं भवति कार्य्यमिति शेषः। अत्र अस्मिन् कार्य्या-साफल्ये को दोषः अपराधः न कोऽपीत्यर्थः। कार्य्यवैफल्यशङ्कया उद्योगविरतिर्न कार्य्येति भावः।

II. Expound the Samasa in पण्डितसभा and write grammatical notes on it.

Ans. पण्डितानां सभा। (६ष्ठीतत्) अत्र राजामनुष्यपूर्वेति सूत्रे अमनुष्य पूर्वेति कथनात् मनुष्यवाचकपण्डितशब्दपूर्वकत्वाञ्च न नपुंसकत्वम्।

III. Derive पुत्रः, सुप्तः, यत्नः, विद्वान् and सिंहः, and decline the base of विद्वान् in Ist+7th cases.

Ans. पुत्रः = पुत् + त्रै + डः। सुप्तः = स्वप् + क्तः। यत्नः = यत् + न। विद्वान् = विद् + सतु × क्वसुः। सिंहः = हिन्स् + अन्। वर्णः विपर्य्ययात् विपर्य्ययेण निपातनात् सिद्धम्।

1st case.

विद्वान्, विद्वांसौ, विद्वांसः,

7th. case.

विदुषि, विदुषोः, विद्वत्सुः।

# FOR. F. A. STUDENTS.

## QUESTIONS WITH ANSWERS ON RAGHUVANSAM—CANTO, 1.

☞ Paper set by Baboo Haris Chandra kaviratna professor of Sanskrit Literature, Presidency College, Calcutta.

1. Explain in your own words the purport of the 10th. sloka.

१। कुत्सिताकुत्सितरूपयोर्विचारे चक्षुष्मन्त इव काव्यस्यापि गुणदोषविचारे सन्त एव प्रभवन्ति न त्वन्ये इति भावः।

2. Derive and give the meaning of the following terms :—व्यक्तिः, वैवस्वतः, मनीषिणाम्, महीक्षिताम् and प्रणवः।

२। वि+अञ्ज+क्तिः। प्रकाशः। विचारः। परीक्षा वा विपूर्वाञ्जतेरर्थः। वि+वस्+क्विप्। विवस्तेजोऽस्यास्तीति। विवस्+मतुप्। मस्य वः। "तसौमत्वर्थे" १।४।१९। मत्वादुत्वाभावः। विवस्वतोऽपत्यं पुमान् विवस्वत+अण्। प्रशस्ता मणीषा अस्ति येषाम्। मणीषा+इनिः। महीं क्षयते ईष्टे क्षि+क्विप्। तुक् च। प्र+णु+अप्। "ऋदोरप्"।

3. In the 12th stanza, some read "शुद्धमतिः" instead of "शुद्धिमति"; Impugn or justify this with your reasons.

३। नायं भ्रमः यदि विसर्गो दीयते यथा शुद्धमतिः शुद्धामतिर्यस्य इति तदा दिलीपविशेषणम्।

4. Expand the idea expressed in the following hemistich— "आत्मकर्मक्षमं देहं क्षात्रो धर्म इवाश्रितः" ।

४ । दुष्टदमनशिष्टपालनादिना पृथिवीरक्षणादिकार्यक्षमः मूर्त्तिमान् पराक्रम इवासौ दिलीप इति भावः ।

5. Point out the grammatical peculiarities in व्यूढोरस्कः and आरम्भः ।

५ । व्यूढम् उरो यस्य इति बहुब्रीहौ कः । व्यूढम् । वि+वह+क्तः । आ+रभ+घञ् ततो नुम् ।

6. Explain the simile in the 16th. stanza.

६ । भीमगुणैर्यादोभिः, कान्तगुणैरत्नैः, सादृश्यं राज्ञः अर्णवेन सादृश्यम् ।

7. Explain in English, or in Sanskrit, the meaning of the 17th. sloka.

७ । नियन्तुः तथा तथा नियोजयितुः शिक्षयितुः सारथेश्च तस्य दिलीपस्य सम्बन्धिन्यः प्रजाः नेमीनां चक्रधाराणां वृत्तिरिव वृत्तिर्यासां ताः प्रजाः आमनोः मनुमारभ्य क्षुणात् अभ्यस्तात् एवृताच्च वर्त्मनः नियमपद्धतेः मार्गाच्च परमधिकं वहिः रेखामात्रमपि ईषदपि न व्यतीयुः । नातिक्रान्तवत्यः । निपुणसूतचालित रथचक्रनेमय इव तस्य प्रजाः पूर्वपुरुषनिर्दिष्टमार्गं न जहुरिति भावः ।

8. Parse सहस्रगुणम् and account for the reflexive form (आत्मनेपद) in आदत्ते in the 18th. sloka.

८ । सहस्रगुणमिति उत्स्रष्टुमिति क्रियाविशेषणम् । आ+दा+ते । "आङोदोऽनास्य विहरणे" इत्यात्मने पदम् ।

9. Give the etymology of परिच्छद, आतता, संस्काराः and अग्रधुः ।

९। परि+छद+णिच्। "पुंसि संज्ञायाम्" घः। "छादे-र्घेऽद्व्युपसर्गस्य" इत्युपधा ह्रस्वः॥ आ+तन+क्तः स्त्रियामाप्। सं+क्र+घञ्। उपसर्गात् सुड़ागमः। गृध+त्रसिगृधि धृषि-क्षिपेः क्नुः। न गृध्नुः अगृध्नुः।

10. Turn into passive voice the first and the last foot of the 21st. stanza.

१०। जुगुपे आत्मा। भेजिधर्म्मः। आददे। अन्वभावि।

11. Explain fully the purport of the last line of the 22nd. sloka.

११। ज्ञानमौनादयो विरुद्धा अपि गुणा स्तस्मिन् निर्विरोधाः स्थिताः इति भावः।

12. Derive पारदृश्वनः. Give its feminine form.. Mention the alternative of जरसा. Name the Samasa in धर्म्मरतेः।

१२। पारदृश्वा। पार+दृश+क्वनिप्। स्त्रीलिङ्गे "वनोरच"। ४।१।७। इति ई ङीप् पारदृश्वरी। जरसा। जरया। धर्म्मरतेः। धर्म्मरतिर्यस्य तस्य इति बहुव्रीहिः।

---

# FOR ENTRANCE & F. A. STUDENTS.

☞ A Paper on Sanskrit Grammar, Given by

Baboo Upendra Nath Ray B. A.

Professor Sanskrit Literature, Century College.

SAMASA (Continued)

A केवलकर्म्मधारय becomes a द्विगु when the adjunct is a numeral, as, द्वयोः दिनयोः क्षतं=द्विदिनं।

In the द्विगु compound the numeral comes first. (संख्यापूर्वो द्विगुः) i.e. द्विगु is a compound, in which the first member is a numeral.

The numeral compound is of three kinds; viz:-(a) तद्धितार्थ विषयक in which compound words convey the sense of तद्धित affixes. (b) उत्तरपदपर in which an additional word is affixed to them (c) समाहार in which collectiveness or aggregation is implied.

Examples (a) पञ्चभिः दिनारैः क्रीतः = पञ्चदीनारः, द्वयो दिनयोःकृतम् = द्विदिनम् ; Expound the samasas in— पञ्चकपालः ; (b) चतसृणां दिशाम् ईशाः = चतुर्दिगीशाः। Expound the Samasa in पञ्चनावप्रियः। (c) त्रयाणां भुवनानां समाहारः = त्रिभुवनं ; त्रयानां लोकानां समाहारः = त्रिलोकी। Expound the Samasas in — पञ्चमूली, पञ्चवटी, पञ्चपात्रं, चतुर्युगम्, त्रिपथम्, & पञ्चगवम्।

In the समाहार द्विगु compound (समाहार द्विगु समासे) the compound words are put in the neuter gender (स नपुंसकम् इति सूत्रात्); as पञ्चगवम्; But when the second member of the compound (उत्तरपद) ends in अ (अकारान्त), the compound word must be put in the feminine gender ; as, पञ्चमूली। This rule also admits of an exception. viz, when the second member of the compound is पात्र etc, the compound word is to be put in the neuter gender ; ("पात्राद्यन्तस्य न" इति सूत्रात्)। पञ्चपात्रम्, त्रिभुवनम्, चतुर्युगम्।

Q How do you account for the compound in

समर्थयः ? Ans. दिक्संख्ये संज्ञायाम् इतिसूत्रात् संख्यापूर्वपद-संज्ञायां संख्यापूर्वत्वेऽपि शब्दस्यास्य केवल कर्मधारय समासत्वम्। अतएव विग्रह वाक्यं सप्त संख्यका ऋषयः इति ।

## (३) बहुव्रीहिः ।

When the compound word refers to something, different from what is conveyed by the words forming the compound, the compound is then called बहुव्रीहिः ( "अनेकमन्य पदार्थे" इति सूत्रात् )।

(a) द्वितीया बहुव्रीहिः—प्राप्तम् उदकं यं सः = प्राप्तोदकः ( ग्रामः ); गतः क्रुद्धः सिंहः यं सः = गतक्रुद्धसिंहः ( करी )।

(b) तृतीया बहुव्रीहिः—जितः कामः येन सः = जितकामः ( महादेवः ); कृतं कार्य्यं येन सः = कृतकार्य्यः ( पुरुषः )।

(c) चतुर्थी बहुव्रीहिः—दत्तं धनं यस्मै = दत्तधनः (मानवकः)।

(d) पञ्चमी बहुव्रीहिः—उद्धृतः ओदनः यस्याः सा = उद्धृतोदना ( स्थाली )।

(e) षष्ठी बहुव्रीहिः—पीतम् अम्बरं यस्य सः = पीताम्बरः ( विष्णुः ); रक्तं वस्त्रं यस्याः सा = रक्तवस्त्रा ( नारी )।

( f ) सप्तमी बहुव्रीहिः—वीराः पुरुषाः यस्मिन् सः = वीरपुरुषः ( ग्रामः ) प्रफुल्लानि कमलानि यस्मिन् तत् = प्रफुल्लकमलं ( सरः )।

(g) व्यधिकरण बहुव्रीहिः—चक्रं पाणौ यस्य सः = चक्रपाणिः (प्रहरणार्थेभ्यः परे निष्ठा सप्तम्यौ इति वार्त्तिकवचनात्); मनुष्या-जन्म यस्य सः = मनुष्यजन्मा ।

( h ) उपमानपूर्वपदः—पद्मे इव नेत्र यस्य सः = पद्मनेत्रः। मृगस्यनयने = मृगनयने ; मृगनयने इव नयने यस्याः सा = मृग-नयना। कुन्दमिव दशनं यस्याः सा = कुन्ददशना। मुनीणां वृत्तिः = मुनिवृत्तिः ; मुनिवृत्तिरिव वृत्तिर्येषां ते तेषां = मुनिवृत्ती-नाम् ( रघूणाम् सप्तम्युपमानपूर्वपदस्य उत्तरपदलोपश्च वक्तव्यः इति पतञ्जलिशासनात् )।

(क्रमशः)

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्माणि कारयन्ती जनानिव ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

गर्जे खलानां मनसीवपङ्किले धाराभिराधातुमिहाङ्ग्रि विध्यति ।
मनीषिनस्तत्र तु कामकिङ्कराः श्वानश्च भाद्रेऽभिसरन्ति निश्यपि ॥

## उद्भटश्लोकाः ।

उत्तादित्य विकाशितं पदपतद्गङ्गाम्बुधारासवं
ब्रह्मेशेन्द्रदिवौकसां नतशिरस्तचापि भृङ्गायते ।
स्वच्छं चारुनखावलिर्नवदलं वाञ्छास्पदं पातु वो
वृन्दारण्यनिवासिनो नवघनश्यामस्य पादाम्बुजम् ॥ १२१ ॥
उभौ पक्षौ शक्तौ भुवि वियति चाव्याहतगतिः
सदा मीनं भुङ्क्ते वसति सकलस्याग्र शिरसि ।
बकश्चन्द्रस्तुल्यो गुणसमुदयः कश्चिदधिको
गुणाः स्थाने मन्या न हि नरवराः स्थानविकलाः ॥ १२२ ॥
ईषन्मुद्रितमम्बुजं कुमुदिनी किञ्चित् समुल्लासिनी
चक्री चक्रवियोगिनी पतिभयाद्बाला बधूल्लासिनी ।
यूनी वेशविधायिनी विरहिनी नेत्राम्बुसम्बाहिनी
भानुर्याति नगेन्द्रकोणकुहरे दृष्टा हि चात्यद्भुतम् ॥ १२३ ॥
यदीच्छसि वशी कर्तुं जगदेकेन कर्मणा ।
उपास्यतां कलौ कल्पलतादेवी प्रतारणा ॥ १२४ ॥

श्रीविधुभूषणदेवः ( राँचि )।

# दानमाहात्म्यम् ।

कस्मिंश्चिद्देशे आसीदेकप्रजा नाम, सर्वशास्त्रविद्ब्राह्मणः सदा हरिपादाब्जमानसो देवानां ब्राह्मणानाम् गुरूणाञ्च अचलेन मनसा, अचपलया श्रद्धया च त्यक्तान्यशतकार्य्यो, यथोचितम् अहरहः कृतार्च्चनः। स च परद्रव्यं विषमिव, भ्रातृजायात् दुहितरं स्वसारं गुरुदारान् किमन्यत् परस्त्रीवृन्दं मातरमिवाद्राक्षीत् । तथा, मित्रे शत्रौ, दृषदि काञ्चने मानापमानयोश्च समबुद्धिर्गृहप्रविष्टोऽपि प्रात्यहिकेन स्वेन कर्म्मणा स्म तापसायते अभ्यागतो नीचोऽपि याचकस्त्वं भृशमानन्दयति स्म। एकदा स, द्विजाग्रनीः संसारसागरं भीमतरङ्गमपारञ्च तितीर्षु र्निजां जातिं स्मरन् स्वपन् जाग्रञ्चलंस्तिष्ठन् परिमेयां चिन्तामवाप कोऽहं कुत्रासम् किं वा वृत्तिरासीत् केन कर्म्मविपाकेन वास्मिन् संसारकारागारे जन्म प्राप्य पुत्र कलत्रैरभेद्य शृङ्खलैरिव, बद्धोऽस्मि क्व वा भूयो गमिष्यामीति स्मरन् मुहुर्मुहुर्निश्वस्य च चिप्तप्राय इतस्ततो बभ्राम कुत्रापि शान्तिमलभ्य पूर्ववृत्तान्तं विज्ञातुं शिवक्षेत्रं जगाम । तत्र बद्धाञ्जलिर्विप्रः परमया भक्त्या मधुरया गिरा शङ्करं तुष्टाव नमस्ते शूलपाणये महादेवाय नमस्ते वृषध्वजाय, ज्ञानदायिने सर्वभूतानां हृदयाम्बुजवासिने नमः नमस्तुभ्यं चन्द्रनेत्राय नमस्ते सूर्य्यनेत्राय नमो वाह्निचक्षुषे नमस्ते कन्दर्पदर्पविध्वंसकारिणे नमो भीममूर्त्तये नमस्ते चित्यप्तेजोमरुद्व्योमादिरूपधारिणे जानेहं संसारस्रष्टातस्त्वं धाता जानेऽहं जगत्पालकोऽस्मात् कारणात् त्रिभुवनपतिर्विष्णुस्त्वं चित्यादिसमस्तम् । प्रलयसमये संहरसि अतस्त्वां त्रिगुणात्मकं महेशं ज्ञात्वा भजामि नित्यं प्रभो ! बहुभाषितेनालम्, वस्तुतो बाहुल्येन सकलमपि त्वां वेद्मि अतस्त्वां किं स्तौमि। तस्य ब्राह्मणस्येदृशीं स्तुतिमाकर्ण्य परमकारुणिकः परमेश्वरो लोकशङ्करः शङ्करः सहसा आविर्बभूव। श्वेतं परशुमृगवराभीतिहस्तं त्रिनेत्रं वृषभस्थं तमालोक्य हर्षनिर्भरमानसो विप्रोऽसौ

चरणौ ववन्दे, ततः शिवोऽब्रवीत् महाभाग! झटिति वरं वृणु खलुरहं वरं दित्सुस्त्वत्समीपमुपस्थितोऽस्मि ततो ब्राह्मणोऽचकथत् भवन्तं परमात्मानं देवैरप्यदृश्यमद्य साक्षात् पश्याम्यहं किमपरैस्तथापि वरमीप्सु र्यदहं पृच्छामि तद् ब्रूहि? परमेश्वर! पुरा कोऽहमासम् किं वा कर्म्म कृतं कथं वा संसारजलधौ पतितोऽस्मि? श्रुतोऽहं स्वकर्म्मणा देहमासाद्य देही पापेन लिप्यते पुनः पापप्रभावेन विषमा गतिः प्राप्यते। जन्ममृत्युप्रदे महाघोरेऽस्मिन् संसारे गर्भवाससमं दुःखं नास्त्येव! नास्त्येव!! अहह मूत्रविष्ठाप्रकीर्णे जननीजठरे जठरानलतापितः पूर्वदुष्कृतमनुस्मरति प्रतिक्षणमनुतप्यते च लोकः कथमापातरम्यं जन्ममूलं कर्म्मकृतमित्यादिकं विभाव्य तदैव ईश्वरमुद्दिश्य प्रतिज्ञां करोति मातृगर्भान्निःसृत्य जात्वपि नेश्वरं विस्मरामि सदा विषयं तृणाय मंस्ये ध्रुवं नजाने मातृगर्भान्निःसृत्यैवात्मप्रतिज्ञा विस्मर्य्यते कथम्? विभो केषां कर्म्मणां प्रभावैर्जन्मेदं प्राप्तं मया शिवोऽब्रवीत् यद्यपीदं सुगुप्तं तथापि भक्तवत्सलं त्वां प्रति वदामि द्विजनन्दन पुरात्वं सरववंशजातो नाम्ना दण्डपाणिः परिचेयः त्वं परलोकभयं त्यक्त्वा सर्वदा परमक्लेशदायिनां दस्युवृत्तिं चकरिथ, दस्युवृत्तिगतं भवन्तं दृष्ट्वा तवापरे भ्रातरः षड़नुचरा बभूवुः। तेषां नामानि निगदाम्यहं दण्डी दण्डायुधो दण्डवान् दण्डभृत् सुदण्डो दण्डकेतुरिति एतैः सममरण्ये घोरे कोटिकोटिशो विप्रा निहताः वनस्थेन त्वया मदिराभिः सह गवां क्रव्याजि भुक्तानि सर्वे वणिजः पथिकाश्च यातायातविधिं तद्भयात् तत्यजुः। एकदा त्वं भ्रातृभिः सह तस्मिन् वने स्नानाय सरसीं गतः तत्र स्नानं समाप्य क्षुधितेन त्वया बह्वानि मृनालानि भक्षितानि कौतुकादनेकानि पद्मपुष्पानि प्रचेयानि तस्मिन्नेव काले वृद्धो वल्कलाम्बरधारी सर्वदेवाख्यो ब्राह्मणः स्नानार्थं तत्रागतः स तत्र स्नात्वा भगवन्तं जनार्दनं यष्टुं त्वामिकमम्भोजं ययाचे त्वयापि परमया भक्त्या पद्ममेकं

दत्तं कमलापतेः सपर्य्यायै त्वद्दत्तपद्मेन जनार्दनः प्रीतो बभूव ब्राह्मणस्य पूजाप्रणतिं दृष्ट्वा त्वमपि प्रहसन् विष्णुं नमितः। तेनाम्बुजदानप्रणामपूजादर्शनेन तव सर्वपातकं नष्टम्। ततः कियति काले गते कालप्राप्तस्त्वं पञ्चत्वं गतः प्राक्तनपद्मदानादिकर्म्मणा तुष्टो भगवान् कमलापतिस्तुभ्यं परमं स्थानं ददौ तत्र मन्वन्तर-शतानि सुखं भुक्त्वा क्षीणे पुण्ये कर्म्मभूमिमिमामागत्य शुद्धे द्विजकुले जन्मसंप्राप्य हरिभक्तिरचला लब्धा। त्वमहं याहि याहि सुप्रीतो हरिस्तुभ्यं ज्ञानं दास्यति ज्ञानान्मुक्तो भविष्यसीत्युक्त्वा शम्भुरन्तर्दधे।

तथा च क्रियायोगे।

विष्णुं समाराध्य चिरं स विप्रः पद्मप्रसूनैर्विकचैः सुदिव्यैः।
ज्ञानं समासाद्य जगाम मोक्षं प्रसादतः श्रीगरुड़ध्वजस्य ॥

श्रीकालीनाथशर्म्मतर्कसिद्धान्तः।
आयनातलीविद्यालयाध्यापकः।

---

## प्रावृट्।

आवृषिकुञ्जे फुल्लमनोज्ञैर्भूषणरूपैः पुष्पसमूहैः।
जम्बुशीर्षाः सुन्दरवृक्षास्तेऽपि भवन्ति स्निग्धसुदृश्याः ॥ १ ॥
जाती यूथी चारुसुवर्णा नेत्रहरी संसौरभपूर्णा।
मेदुरवातान्दोलितदेहा चित्तहरी वा पुष्पलता सा ॥ २ ॥
नीरदनीरं चित्रप्रसूने राजत एवं श्यामलपर्णे।
हीरकहारी रम्य निसर्गः सज्जितमस्मिन् मन्यत एषः ॥ ३ ॥
वर्षणनीरैः स्नाति निसर्गः सोऽपि यदा वा सन् प्रतिभाति।
पश्यति योऽसौ मोहितचित्तः शान्तिप्रयुक्तश्चैव तदास्ति ॥ ४ ॥
सोऽपि नितान्तं विस्मितशान्तः पूतप्रमोदं चेतसि प्राप्तः।
चिन्तयती शस्यामलभावान् पूजनहेतोर्यस्य च विश्वम् ॥ ५ ॥
चन्द्र उदेति क्व च सूर्य्यः वान्ति समीराः प्रवहति तोयम्।
वर्षतिमेघः खल्वनुमत्या पूर्णकृपाभिर्यस्य च विश्वम् ॥ ६ ॥

श्रीसरोजमोदिनी देवी।

---

# गर्वपरिणतिः ।

( पूर्वप्रकाशितात्परम् )

## पञ्चमोऽङ्कः ।

रामचन्द्रस्य गृहम् ।

शान्त्या परिशान्त्यमाना कमला ।

शान्तिः । सखि ! प्रभाता रजनी ; कथमधुनापि स्वस्था न भवसि । प्रकृतिस्था भव, नचेत् शीघ्रं प्राणैर्विमुच्यसे ।

कमला । ( सवाष्पगद्गदम् ) सखि ! कुतश्च मे कठिनहृदयायाः मरणम् । नूनमपुण्योपहतायाः पापाया मे भगवानन्तकोऽपि परिहरति दर्शनम् । ( सदीर्घनिःश्वासम् ) सखि ! अतःपरं किमपि कष्टतरं नास्ति, यदि पुनरद्य तं नयनानन्दं न प्राप्स्यामि तदा निश्चितमेव सखीजनानां दुःखाय भविष्यामि ।

शान्तिः । निशावशतः स नायातः, अधुना दिवाकरकरैर्विदितमार्गोऽवश्यं समेष्यति ।

कमला । सखि ! अनयैव दुराशामृगतृष्णिकया गृहीताहमिदं दग्धशरीरं वहामि । नचेत् तनयादर्शनमात्रेणैव मे मृत्युरनिवार्य्य आसीत् ।

शान्तिः । (क्षणं विमृश्य) मन्ये किमप्यसाधु आचरितमार्य्येण ; अन्यथा कथं तादृशे सुशीले एतादृशकृत्यस्य सम्भावना ।

कमला । सखि ! किं भणामि, न मे वचनं स्फुरति, आर्य्यपुत्रन्तु तस्मिन् वीतश्रद्धमिव लक्षयामि ।

शान्तिः । (ससम्भ्रमम् ) कथं तादृशे गुणवति पुत्रे वीतश्रद्धः स महात्मा । ( विभाव्य स्वगतम् ) अत्र केनचित् निगूढ़कारणेन भवितव्यम् । यद्भवतु भूयताम् । अलं तादृशचर्च्चयास्माकम्

( रामचन्द्रमागच्छन्तमवलोक्य प्रकाशम् ) सखि ! इत एवासौ महात्मा समायातीति तर्कयामि ।

कमला । कृतावगुण्ठना तिष्ठति ।

प्रविश्य रामचन्द्रः । प्रिये ! इत्यर्द्धोक्ते ।

कमला । नाथ ! किं मन्त्रयते ? सर्वत्र उदासीनमिव भवन्तं लक्षये । युगान्तरमिव गतरात्रिरतिवाहिता । जीवनधारणमधुना कष्टतरं जातम् । उपायश्चिन्त्यतां शीघ्रं नचेन्न द्रक्ष्यसि मां पुनरिहलोके । ( इति वस्त्रेणाच्छाद्य मुखं रोदिति । )

रामचन्द्रः । प्रिये ! पुनः पुनरुच्यते धैर्य्यमवलम्ब्यतामिति । अकथितेनापि पूर्वमुपायश्चिन्तितः । तावदपेक्षस्व यावत् कृष्णस्यागमनम् । निशाभ्यन्तरे तस्यानिवृत्तिरेव मां दृढ़ीकरोति सुरेशदर्शनायेति ।

कमला । कठिनवस्तुनैव निर्मितं विधात्रा पुरुषहृदयमिति मन्ये । नचेत् कथमिदानीमपि अदृष्ट्वैव पुत्रमुखं स्थिरीभवतीति ।

रामः । प्रिये ! विपरीतमिदमुपालम्भनम् । स्त्रीहृदयमेव कठिनमिति विदितम् ; अन्यथा, कथं प्रस्तरादिवत् लघुतरं सुतसं भवति । नियतिरनिवार्य्येति विविच्य तावत् स्थिरीभूयताम् ।

कमला । अबलानां सर्वमेव दोषाय । मम पुनः सुरेशमृते नास्त्यन्यो जीवनोपाय इत्यवगम्यताम् । ( इति रोदिति )

रामः । समाश्वसिहि तावत् । ( स्वगतम् ) कथं कृष्णोऽपि चिरायमानो मदुत्कण्ठां बहुलीकरोति । ( प्रकाशम् ) प्रिये ! स्वस्था भव ; अयमहं स्वयमेव तदन्वेषणाय निर्गच्छामि । ( पदशब्दमाकर्ण्य ) के पुनरेतेऽत्र समायान्ति ? ( निरूप्य साह्लादम् ) प्रिये ! सन्तुष्टा नः कुलदेवता ; दृश्यतां सुरेशद्वितीयः कृष्णः समायातीति ।

कमला । ( ससम्भ्रमम् ) कुत्र मे सुरेशः । प्रविश्य कृष्णेन सह सुरेशः । प्रणताः स्म पितरौ ।

कमला । अहह ! मे प्रियदर्शनः समायातः । (मस्तकमाघ्राय) वत्स । चिरं जीव । कथमिमां मन्दभागिनीं विसृज्यान्यत्र निशातिवाहिता । अपि नाम कुशलिना यापिता निशा ?

सुरेशः । लब्ध प्रियसुहृदो मे कुशलं सर्वत्र ।

कमला । कस्ते प्रियसुहृत् ।

सुरेशः । सम्मुखस्थो महात्मा कृष्ण एव । स मां गतनिशायां तादृशं सुखिनमकरोत् यदहमभिनवगुरुविच्छेददुःखमपि नानुभूतवानिति ।

कमला । कृष्ण ! सुखं ते भूयात् ; अऋणो खलु जातोऽनया प्रभुभक्त्या ।

सुरेशः । मातः ! अतःपरममुं सामान्यमिव द्रष्टुं नार्हति, परं मदधिकस्नेहचक्षुषा पश्यतु । यदुपकृतमनेन महात्मना, जीवनसर्वस्वेनापि तस्य प्रत्युपकृतिर्न भवतीति मन्ये ।

रामचन्द्रः । ( स्वगतम् ) विचारितं फलितमितितर्कयामि । ( प्रकाशम् ) वत्स ! कदा किमुपकृतं कृष्णदासेन ?

सुरेशः । पितः ! गतनिशायामस्य संसर्गतो मे पशुभावोऽन्तर्हितो मनुष्यत्वञ्चायातम् । गता मेऽन्तरतोऽभिमानकुज्झटिका, निर्म्मलमभवत् हृदयाकाशम्, प्रकाशितश्च विनयरविः ।

रामचन्द्रः । सत्यमेतत् ? कृतार्थोऽस्मि साम्प्रतम् । ( कृष्णदासं प्रति) कृष्ण ! पूर्वतोऽपि त्वं मे स्नेहपात्रमासीरधुना कार्य्येणानेन सन्तोषितः पारितोषिकार्थं जीवनसर्वस्वं सुरेशस्तव हस्ते समर्पितः ।

कृष्णः । (सविनयम् ) मामपि समर्पयतु भ्रातृकल्पे ।

सुरेशः । एतदपि वक्तव्यमेव । मूर्त्तिमान् मदन्तरात्मेव बहिस्तिष्ठति भवान् ।

रामचन्द्रः । युवयोः सौहार्दमवलोक्यानन्दसागरे निमग्नोऽस्मि ।

प्रविश्यापटीक्षेपेण नीलाम्बरः । जयतु बन्धो ! पुत्रसमागमेन ।

श्रुतं द्वौवारिकमुखात् सुरेशमागमनम्। ( सुरेशं प्रति ) एहि प्रियदर्शन! नष्टलब्धरत्नं त्वां दृढमालिङ्गन्नात्मानं सुखी करोमि।

सुरेशः। अभिवादये भवन्तम्।

रामः। वन्धो नौलाम्बर! उपभुङ्क्ष्व मे प्रमोदार्द्धम्।

नौलाम्बरः। सरलात्मा कदापि दुःखभाक् न भवतीति महाजनवचः। यदपि समयान्तरे दुःखपातस्तत् केवलं द्विगुणसुखभोगाय।

रामः। वत्स! सुरेश! अपि सुखौदानौमसि कृष्णदाससमागमेन।

सुरेशः। पितः! किं बहुना कृष्णदास एव मे सर्वस्वमित्यवगम्यताम्।

रामः। अपरं किन्तेऽन्यत् प्रियं करोमि।

सुरेशः। अतःपरं किमपि प्रियमस्ति। यदि स्यात्तदा ;—

भवतु गुरुजनानां प्रीतिकारीह पुत्री गुरुरपि तनयानां साधुशिक्षाप्रमोदी।
क्वचिदपि गुरुशिष्ये माभवत्प्रमोदः इति निखिलविधाता प्रार्थ्यतां देवदेवः॥

इति सर्वे निष्क्रान्ताः।

इति पञ्चमोऽङ्कः।

सम्पूर्णम्।

श्रीनन्दलालविद्याविनोदस्य।

---

## प्रार्थना।

दुर्लभं मनुजजन्मभाग्यत एत्य भक्तिविभवैः कदाप्यहो।
न स्मरामि हरिपादपङ्कजं का गतिर्मम वतातिपापिनः॥ १॥
शेषवासरमहो विलोकितं यत्र सुतिरनघा समेष्यति।
मांचिराय शयने परिस्थितं का गतिर्मम वतातिपापिनः॥ २॥
शेषवासरमहो विलोकितं भूमिपृष्ठमधिशाय्य मां हरिः।
यत्र वान्धवचयोरुदन्मुखः श्रावयिष्यति पवित्र नाम तत्॥ ३॥

अन्तवासरमिदं सुहृदाश्रयात् यच्च मन्दिरगयाद् विभत्स्यते ।
क्रीड़ितं भववनैकवेश्मन: स्नेह-दाम भवमर्दनं चणम् ॥ ४ ॥
एकतोऽत्र बहुश: सुहृत्तमो मां विलोक्य नयनाश्रु मोक्ष्यति ।
अन्यतो मलिनभस्म पावको दारुवर्द्धिततनु: करिष्यति ॥ ५ ॥
श्रोतुमत्र न पुरेव शक्ष्यति श्रोत्रयुग्मसुलल्लं प्रियध्वनिम् ।
अक्षिणी न सुहृदां मनोरमं द्रक्ष्यतो वदनपङ्कजं मुहु: ॥ ६ ॥
अम्लतिक्तमधुरादि षड्रसतत्त्वसारपरिबोधने सदा ।
या क्षमाऽत्र रसना विचेतना सा मया सह चिरं शयिष्यते ॥ ७ ॥
याऽभवद्रुचिरमन्दगन्धके लोलुपा च विरता च सर्वदा ।
नासिकाऽत्र जड़तामवाप्स्यति वातरोगजड़ितेव सुन्दरी ॥ ८ ॥
आर्द्रचन्दननिशेशदीधितिदक्षिणानिलरसग्रहे पटु: ।
याऽजनिष्ट ननु सापिहास्यते त्वक् चिराय सहजैर्गुणैर्वत ॥ ९ ॥
न स्फुरिष्यति, गमिष्यतोऽत्र न, नग्रहीष्यति, चलिष्यति स्वयम् ।
न, भ्रमिष्यति न, गौ:, पदौ, करौ, देह एष, सततं मनश्चलम् ॥ १० ॥
प्रेतराजमुखवीचणे मम भीतभीत चकितस्य तत्चणम् ।
नैव बान्धवचयोऽपि निर्भय: शक्नुयात् कमपि कर्तुमाश्रयम् ॥ ११ ॥
नो चकार मधुरैर्वितर्पणं कस्यचित् सुवचनै: कदाप्यहम् ।
अन्य शान्तिमभिचिन्तयन् वत ! शुद्धसत्त्वजसुखं न वा ददे ॥ १२ ॥
नो ददर्श सरलेन चक्षुषा साधुमानवसुखानि निष्फलम् ।
सन्मुखेचणपरानपि स्वत: कर्म्मभिर्न सुहृदोऽभ्यतोषयम् ॥ १३ ॥
नोपकार्षमपरान् कथञ्चन स्वार्थद्वन्दरहित: कदाप्यहो ।
दु:खिदर्शनपरोऽपि किञ्चन निष्ठुरो न दद्दशेऽनुकम्पया ॥ १४ ॥
सत्य-शौच परितुष्टिभि: समं योग एष न कदापि पापिन: ।
पूण्यमूर्त्तिमिव सज्जनं परं पश्यतोऽपि कुतुकं न वर्त्तते ॥ १५ ॥
जानत: परविवादरोदने गर्हणञ्च परमं कुतूहलम् ।
मन्दवृत्तसमलङ्कृतो जन: स्यादभिन्नहृदय: सखा मम ॥ १६ ॥
असारं न परिबुध्य विग्रहं सुस्थिरं हृतमति: प्रगर्वत: ।
अत कर्म्म तदसम्भवं फलं लप्स्यमानमलमेव रोदनम् ॥ १७ ॥
विश्वकर्तृपुरुषेऽप्यदर्शयं दोषद्वन्दमसहं वितर्कत: ।
नास्तिकत्व तमसा समर्दित स्तीव्रमोहकलुषीकृतस्मृति: ॥ १८ ॥

विश्वपातृपुरुषाङ्घ्रिपङ्कजं नाहमानमनमपि क्षणं बत ! ।
गर्व्वं शाखिफलनिःसृतं मधुपानकर्म्मकृतवानपत्रपः ॥ १९ ॥
अन्नमुष्टिमपि नाददामहं पक्षिणेऽपि पशवेऽति दुःखिने ।
अर्थमेव पुरुषार्थमग्रगं भावयन् धनपिशाचतां गतः ॥ २० ॥

( क्रमशः )

श्रीअन्नदाचरणतर्कचूड़ामणिः ।

---

## सतीच्छाया ।

( पूर्वतोऽनुवृत्ता )

रमणीमोहनः अन्यमनस्कः वहिर्वाटिकां गच्छति। इन्द्रप्रिया प्रायश एव विलोकितुं मातरं प्रियमनुरुणद्धि। सोऽपि अतुलकरं कोननगरं गत्वा इन्द्रप्रियाभ्रातरमनुकूलयितुं भूयो याचते। किन्तु कुटिलोऽसौ अतुलकरः इन्द्रप्रियायां विविधं जुगुप्सितं भावं हृदि पुष्णाति ।

इन्द्रप्रिया तदानीं वर्षे चतुर्दशे पदमादधाति। तथापि आधुनिकब्राह्मभावेन रमणीमोहनः शकटमेकमारूढ़ः सहेन्द्रप्रियया अतुलकरेण च दुर्गप्रान्तरे प्रत्यहं प्राह्णे पर्य्यटाय्यते।

सरला वालिका वाल्यभावं यावन्नातिरोहति, तावत् प्रसूतिभावमाधत्ते। राजकुमारं दुरत्यया चिन्ता निरन्तरं सन्तापयति। श्रुतन्तु तेन तं प्रति तस्य पिता अतीवक्रुद्धो जात इति कथितवांश्च कथं स अधुना सदैव स्थानान्तरमधितिष्ठति।

राजकुमारः क्लिष्टेन मनसा व्याघ्रापणो(*)पगङ्गं निवसति। तदैव अतुलकरः समीपमागत्य कथयति—"कुमार! भयङ्करस्ते समयः समुपस्थितः" राजकुमारः सत्रासं कथयति कथङ्कार इति"। अतुलः कथयति—अहमद्य राजसन्निधौ गतवान्। स तु अतीव क्रुद्धः कथयति तनयस्य विवाहसम्बन्धः सुस्थिरीकृतः खिदिरपुरवासिनो राजवाहादुरस्य कन्यया सार्द्धं मयेति। कन्यातीव

---

* वाग्वाजार इति यस्य प्रसिद्धिः ।

सुन्दरी। विवाहदिवसस्तु आगामिमासस्तृतीयदिवसे इति। अद्यारभ्य प्रतिरात्रि रमणीमोहनेन स्वगृह एव उपस्थातव्यम्। यदि विवाहोऽयमस्वीक्रियते तदा त्वं त्यज्यपुत्रं विधास्ये इति।

तदाकर्ण्य कुमारः सकातरं कथयति "भ्रातः! अतुल! कथमिन्द्रप्रियया विरहितमात्मानं रक्षिष्यामि। सा विवाहप्रसङ्गमाकर्ण्य किं वा वक्ष्यति?। विशेषतः सा ससत्त्वा। अहन्तु निपुणं विचिन्त्यापि न पारमधिगच्छामि समासन्नाया विपदः। त्वं यदि महाराजं इन्द्रप्रिया-विवाहवृत्तान्तं विज्ञाप्य विपदो मामुद्धर।" पापीयसि अतुलस्य हृदये दुरभिप्रायो जागर्त्ति। स सभयमाह "भ्रातः! बिभेमि तस्मात्, सत्येवं तदा महाराजः पुनर्मुखं नावलोकयिष्यति "तद्गृहस्य न प्रवेष्टुं मां प्रदास्यति, भवानपि विपदो नोत्तरिष्यति।"

कुमारः भग्नहृदयेन कथयति "तर्हि कथङ्कारं इन्द्रप्रियायै निष्ठुरनैराश्यं" विज्ञापयामि, एकतस्तस्याः सपत्नी भवेत्। द्वितीयतः प्रतिनिशं तस्याः समीपमधिष्ठातुं नैव पारयामि, किमद्य करणीयम्।

अतुलः मनसि विहस्य वहिर्विमर्षभावं प्रकटयन् कथयति "कुमार! कोऽपरस्तत्रोपायः? अधुना इन्द्रप्रियां प्रकाशं ब्रूहि, पिता मम एवमादिशति, नास्मिन् तव दोषलेशोऽपि। द्वितीयतः इन्द्रप्रिया यदि तवोपपत्नरपि भूत्वा व्यवस्थातुं पारयति तदापि तस्याः सौभाग्यं मन्ये।

अहो निर्वोधस्तु राजतनयः तस्य धूर्त्तस्य वञ्चनाजालेन जड़ितो बभूव। तेन हि पाषण्डस्य तस्यातुलकरस्य मतमेवानुसर्रात। तदा अतुलकरः सोत्साहं कथयति "अहो समयस्तु सङ्कीर्णीभूतः नातःपरं समयो लभ्यते अद्य पौषस्य पञ्चदशदिनानि माघस्य द्वितीयदिवसे विवाहः अतोऽधुनैव इन्द्रप्रियां ब्रूहि, नो चेत् तदानीं कलहो नैव

युज्यते। निर्दयो राजकुमारः पापात्मना बन्धुना सम्मन्त्र्य गर्भिणीं हरिणीं वेद्धुं विषाक्तं बाणमादाय इन्द्रप्रियाया वक्षसि क्षिपति। वीतभाग्या अबला गर्भभारप्रपीड़िता निश्चेष्टा च सती पर्य्यङ्के शयाना, नैव सा जानाति मन्दभागिनी नैराश्यकालसर्पः फणां प्रसार्य्य दंष्टुमनुसरति इति।

इन्द्रप्रिया सह स्वामिना अतुलकरं समागतमालोक्य पर्य्यङ्का-दवरुह्य रौमेयातारां नीचैः शय्यायामुपविशति। बन्धुद्वयन्तु खट्टिकायामुपविष्टः। कुमारः सभीतं मृदुमृदु कथयति, इन्द्रप्रिये! भवतीं किञ्चित् विवक्षुः दुःखमनुभवामि, अज्ञापनमपि दोषाय। पिता मदीयः आगतमासस्य तृतीयदिवसे मां विवाहयिष्यति, एवं नवोढ़ा सा यत्रैव स्थास्यति तत्रैवाहमपि प्रत्यहं स्थास्यामीति पिता आज्ञापयति।

"इन्द्रप्रियाया वदनसुधाकरः म्लायति। शुष्ककण्ठेन सा कथयति किमिति नाथ! पुनरपि विवाहः किमिति? सत्यां परिणीतायां पुनर्विवाहः किं सत्कुलानां कर्त्तव्यः श्वशुरं ब्रूहि रहसि त्वयाहं विवाहिता। स खलु ईदृशीमवस्थामापन्नाया मम दयिष्यते" कुमारः कथयति न मे एतावान् साहसः यत् वृत्तान्तमेतत् तस्मै कथयामि। अहञ्चेद्विवाहमन्यं करिष्यामि तर्हि तावता तवापि का हानिर्भवेत्, अधुना यथा सुखमस्मि तदापि तथैव सुखमनुभविष्यसि भविष्यति तव सन्ततयोऽपि यथा सुखेन दिनानि यापयिष्यन्ति तथैवाधुनैव विधास्यामि तस्योपायम्।

इन्द्रप्रिया सगद्गदं कथयति "नाहं किं ते सह धर्म्मिणी न किं मे सन्तानस्तव वंशधरः? किमिदमसम्बद्धमसङ्गतञ्च वचः" निर्दयस्तु राजकुमारः कथयति "पिता मे आधुनिकब्राह्मः अहमपि, कथमिति स्त्रीद्वयं सम्भवेत् अतएव भवत्यास्तनयगणा सप्रकाशं मम सन्ताना भवितुं नैव युज्यन्ते भवती वा किमित्येतदर्थं मनसि

क्लेशमेतावन्तं चिन्तयति त्वन्तु याद्दशदशां गतस्य तनया अधुना ईदृशी ते दशा अवश्यमेव श्रेयस्करी चिन्तयितुं साम्प्रतम् ।

इन्द्रप्रिया भूतले पतित्वा कोमलया बाहुवल्ल्या पत्युः पादयुगलं गाढ़ं धारयन्ती उच्चैरोदयमाणा कथयति "नाथ! नाथ! न मां कलङ्किनीं कुर्य्याः, इयमेव किं ते मयि प्रियता ? कथङ्कारं निष्ठुर-नैराश्ये मां क्षिपसि ? मान्तु मन्दभागिनीं ते पितरमुपप्रापय, अहन्तु तस्य चरणे निपत्य मदीयदुःखवृत्तान्तं वक्ष्यामि । अवश्यं मे सदयालुः "तदीयवंशाङ्कुरोऽस्ति मे जठरे" इत्यपि दयिष्यते ।

( क्रमशः )

---

## तत्त्वप्रपञ्चः ।

( पूर्वप्रकाशितात्परः )

परिदृश्यमानस्थूलजगताम् अष्टविधैव प्रकृतिः यथा सर्वेषां सप्तानां महदादीनामपि प्रकृतिः गुणत्रयसाम्यावस्थारूपा प्रथम-प्रकृतिः । प्रकर्षेण स्वरूपेण परिणतेत्यर्थः । विकरोतीति विकृतिः महदादिविकृतिरपि उपचारात् प्रकृतिरुच्यते । यथा,—

२य प्रकृतिः हिरण्यगर्भाख्यं बुद्धितत्वमहङ्कारकारणम् ।

३य प्रकृतिः अहङ्कारः तन्मात्रेन्द्रियकारणम् ।

४र्थ प्रकृतिः शब्दतन्मात्रमाकाशकारणम् ।

५म प्रकृतिः स्पर्शतन्मात्रं समीरणकारणम् ।

६ष्ठ प्रकृतिः रूपतन्मात्रं तेजःकारणम् ।

७म प्रकृतिः रसतन्मात्रं जलकारणम् ।

८म प्रकृतिः गन्धतन्मात्रं पृथिवीकारणम् ।

तथा च भगवद्गीतायां ७ । ४ ।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

सांख्यकारिकायान्तु मूलप्रकृतिमपहाय सप्त प्रकृतय उक्ताः यथा—

"मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त" इति।

एतासामेव भागतारतम्येन समग्रं विकृतिभूतं जगज्जातम्।

इमामेवाष्टविधां प्रकृतिं क्षेत्राध्याये गीतायां चतुर्विंशतिधा कथ्यते यथा—

"महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च। इन्द्रियाणि दशैकञ्च पञ्च चेन्द्रियगोचराः॥"

ये खलु नास्तिका वदन्ति स्वभावादेव जगज्जायत इति तदपि नैकान्ततोऽश्रद्धेयं वचः। तेषां यः स्वभावः स एवास्माकं प्रकृतिः। स्वभावप्रकृत्योरेकपर्य्यायत्वात्। प्रलयावस्थैव जगतः स्वभावः स एव प्रकृतिः। दृश्यमानजगदवस्था च अस्वभावो विकृतिर्वा।

सांख्याचार्य्यः पञ्चशिखः स्वभावतो जगदुत्पत्तिरिति राजर्षिं जनकमन्वशात्। यथा महाभारते मोक्षधर्मे शान्तिपर्वणि २२९ अ०

भीष्म उवाच।

तमसा हि प्रतिच्छन्नं विभ्रान्तमिव चातुरम्। पुनः प्रशमयन् वाक्यैः कविः पञ्चशिखोऽब्रवीत्
उच्छेदनिष्ठा नेहास्ति भावनिष्ठा न विद्यते। अयं ह्यपि समाहारः शरीरेन्द्रियचेतसाम्॥
वर्त्तते पृथगन्योऽन्यमप्यपाश्रित्य कर्म्मसु। धातवः पञ्चधा तोयं खं वायुर्ज्योतिषं धरा॥
ते स्वभावेन तिष्ठन्ति वियुज्यन्ते स्वभावतः। आकाशं वायुरूष्मा च स्नेहो यच्चापि पार्थिवः॥
एष पञ्च समाहारः शरीरमपि नैकधा। ज्ञानमूष्मा च वायुश्च त्रिविधः कार्य्यसंग्रहः॥
इन्द्रियाणीन्द्रियार्थाश्च स्वभावश्चेतनामनः। प्राणापानौ विकारश्च धातवश्चात्र निःसृताः॥
श्रवणं स्पर्शनं जिह्वा दृष्टिर्नासा तथैव च। इन्द्रियाणीति पञ्चैते चित्तपूर्वं गता गुणाः॥
तत्र विज्ञानसंयुक्ता त्रिविधा चेतना ध्रुवा। सुखदुःखेति यामाहुरदुःखासुखेति च॥

अत्र प्रकृतिविषये सुश्रुत एवमाह यथा शारीरस्थाने १ अध्याये।

"सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम। तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम्॥"

वैद्यके तु।

"स्वभावमीश्वरं कालं यदृच्छां नियतिं तथा। परिनामञ्च मन्यन्ते प्रकृतिं पृथुदर्शिनः॥
तन्मयान्येव भूतानि तद्गुणान्येव चादिशेत्। तैश्च तल्लक्षणः कृत्स्नो भूतग्रामो व्यजायत॥"

तथाच भावप्रकाशे पूर्वखण्डे प्रथमभागे।

सत्त्वं रजस्तमश्चेति गुणास्ते प्रकृतेः समा।

सा जड़ापि जगत् कर्त्री परमात्मचिदव्ययात् ॥ इति।

(क्रमशः)

---

## धर्म्मविवेकः।

(पूर्वप्रकाशितात्परः)

यः खलु स्वप्नेऽपि मिथ्या न ब्रूयात् स एव सत्यप्रतिष्ठः। स यदि कञ्चित् पुरुषं "त्वं धार्म्मिको भूयाः" तदा तत्क्षणात् स धार्मिको भवेत्, यदि कञ्चित् ब्रूयात् स्वर्गं गच्छ तदा तत्क्षणात् स स्वर्गं गमिष्यति, यथा त्रिशङ्कुः। यदि कञ्चित् ब्रूयात् स त्वां विस्मरिष्यति, तदा तत्क्षणात् स विस्मरिष्यति यथा "शकुन्तलां दुःषन्तः। यदि कञ्चिद्ब्रूयात् "त्वं जीव" तदा तत्क्षणात् स जीविष्यति यथा तक्षकदष्टो वटवृक्षः कश्यपवचनात्। अमोघास्य वाग्भवति।

ये हि मनसापि स्वप्नेऽपि च न परेषां द्रव्यं प्रतिलुभ्यन्ति तेषामस्तेयं प्रतिष्ठति सत्येवं स्मृतिमात्रेणैव तेषां सर्वाणि रत्नानि सर्वदिकस्थानि पदोपान्ते समुपतिष्ठन्ते तथा च पतञ्जलिः। साधनपादे ३७।

"अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥" इति।

एतदन्यदपि शास्त्रं बहुधा बहुषु ज्ञातव्यम्। अहिंसादीनां तादृशशक्तौ अपरञ्च प्रमाणं तदनुष्ठानम्। यथा पूर्वं ऋषयः गृहिणश्चाप्यनेके अहिंसादिकं धर्म्ममाचेरुः तत्फलममि अनुस्नन्ते बुभुजिरे। तथा त्वमपि तथा धर्ममनुतिष्ठन् तद्वत् फलं भोक्ष्यसि तत्प्रत्यक्षतोऽनुभविष्यसि किमिति तर्केण।

चिन्तय तावत् "त्वं ब्रवीमि तिक्तं निम्बपत्रमिति। अहं ब्रवीमि मधुरं निम्बपत्रमिति सुचिरमपि तत्तर्केण निर्णेतुं नैव

शक्यते। परन्तु समाख्याय तत्पत्रं त्वमहञ्च वादिप्रतिवादिनौ निश्चिनुवः निश्चपत्रं तिन्नमिति" तदानीं तर्कं तु स्वतएव निरस्यति। एवं धर्मविधावपि तर्केणालम् अनुष्ठानेनैव धर्मफलं प्रत्यक्षीभवति। अत्र दृष्टान्तमेकं कथयामि।

अस्मिन्नेव ग्रामे इतो दक्षिणस्यां "रामसुन्दरो नाम" कश्चित् रजकः प्रतिवसति, स स्वस्मिन्नेव धर्मे संजातश्रद्धः वस्त्रं निर्णेनेक्ति एवमेव स सदारापत्यः सुखेन दिनान्यतिवर्त्तयति। अस्य तु स्वाभाविकं सारल्यं सत्यप्रियत्वञ्च सम्यक् श्रद्धेयम्। एकदाहं तमाहूयाब्रुवं "रामसुन्दर" कदा मे वस्त्राणि निर्णिज्य प्रत्यर्पयिष्यति ? सोऽवदत् दशदिनाभ्यन्तरे इति, अहन्तु कुटुम्बालये निमन्त्रणानुरुद्धः पञ्च दिनमध्ये एव वस्त्रं प्रत्यर्पयितुं सनिर्वन्धम् अनुरुधत्। स प्रत्यवादीत् भगवन्! यदि वदामि तदावश्यं तत् परिपालनीयम्। किन्तु भगवन्! कार्य्यान्तरव्यग्रतया दिनपञ्चकमध्ये नैव दातुं शक्नोमि सुतरां स्वीकृत्या प्रदाने वचो मे मृषा भवेत् तन्न युक्तमिति। सर्वैरेव सार्द्धं स व्यवहरत्येवम्। एवं न केनापि स विवदते न सूचयति नासूयति न द्रुह्यति। तेन हि न कोऽपि तस्य विप्रियमाचरति, किन्तु सर्व एव तं श्रद्दधते धार्मिकोऽयमिति।

यदि एवङ्कारं कालेन स सत्यप्रतिष्ठः अहिंसाप्रतिष्ठः अस्तेयप्रतिष्ठश्च भवेत्, तदावश्यमेव स शास्त्रीयं धर्मस्य तावत् फलं भोक्ष्यति किमत्र चित्रमिति। अतः प्रत्यक्षत एव धर्मानुष्ठानस्य फलं "रामसुन्दरे" लक्षयतु।

( क्रमशः )

# FOR ENTRANCE & F. A. STUDENTS.

☞ A Paper on sanskrit grammar given by Baboo Upendra nath Ray. B. A. Professor of Sanskrit Literature. Century college Calcutta.

Samasa. ( पूर्वप्रकाशितात्परम् )

( i ) उपमानोत्तरपदः—गतम् उड्डीनमिव यस्य सः = गतोड्डीनः ( अश्वः )

( j ) विषयपूर्वपदः—न भवेत् बुद्धिः यस्य सः = न भवेद्बुद्धिः ( देवदत्तः ); शिव इति शब्दो यस्य सः = शिवशब्दः (तपस्वी); अहम् इति अभिमानः यस्य सः = अहमभिमानः ( मुर्खः )।

( k ) अवधारणबहुव्रीहिः ( i. e. रूपकबहुव्रीहिः )—यश एव धनं यस्य सः = यशोधनः ( रघुः )।

( l ) मध्यपदलोपी—खरमुखः; खरस्य मुखं = खरमुखं; खरमुखम् इव मुखं यस्य सः = खरमुखः; Similarly हरिणमुखी; ( see h ).

( m ) संख्योत्तरपदः—दशानां समीपे ये सन्ति ते = उपदशाः ( i.e. नव वा एकादश:) आसन्ना विंशतेः = आसन्नविंशाः; द्वौ वा त्रयो वा = द्वित्राः। द्विरावृत्ताः दश = द्विदशाः; त्रिरावृत्ताः दश = त्रिदशाः। but it must be noticed that द्वादश, अष्टादश etc are formed by the द्वन्द्व Compound. द्वौ च दश च = द्वादश; अष्टौ च दश च = अष्टादश।

( n ) दिगन्तराललक्षणः—दक्षिणस्याः पूर्वस्याश्च अन्तरालं यत् सा = दक्षिणपूर्वा ( south-east).

( o ) व्यतिहारलक्षणः—केशेषु केशेषु गृहीत्वा इदं प्रवृत्तं =

केशाकेशि ( क्रीड़नं ) ; दण्डैश्च दण्डैश्च इदं प्रवृत्तम्=दण्डादण्डि ( युद्धम् )।

( p ) In the बहुव्रीहि compound सह changes into स optionally — as पुत्रेण सह = सपुत्रः or सहपुत्रः। But when the compound is formed with a word denoting time ( कालवाची ) सह is not changed ; as सहमध्याह्नः।

## द्वन्द्वः समासः।

In the द्वन्द्व compound equal prominence is given to the meanings of all the members forming the compound as, रामश्च लक्ष्मणश्च = रामलक्ष्मणौ।

In द्वन्द्व compound, the compound word has the gender of its last component, as लतावृक्षमूलानि or वृक्षमूललता।

But this rule does not apply to the समाहार द्वन्द्व as अश्वश्च मातङ्गश्च=अश्वमातङ्गम्।

The द्वन्द्व compound is of three kinds viz :—(1) इतरेतरयोगः (2) समाहारद्वन्द्वः and (3) एकशेषद्वन्द्वः।

(1) समासघटकसर्वपदार्थप्रधानः इतरेतरयोगो द्वन्द्वः as लक्ष्मीश्च नारायणश्च=लक्ष्मीनारायणौ ; हरश्च पार्वती च=हरपार्वत्यौ ; रामश्च कृष्णश्च=रामकृष्णौ।

(2) समासघटकपदार्थसमूहप्रधानः समाहारद्वन्द्वः—पाणी च पादौ च=पाणिपादम् ; शङ्खश्च पटहश्च=शङ्खपटहम् ; रथिकाश्च अश्वारोहाश्च गजस्थाश्च=रथिकाश्वरोहगजस्थम्। N.B. In समाहारद्वन्द्व compound words take the neuter gender and the singular number.

(3) It is of two kinds viz (a) स्वरूपसम्बन्धी, as —विप्रश्च विप्रश्च = विप्रौ; शूद्रश्च शूद्रश्च = शूद्रौ; पद्मञ्च पद्मञ्च पद्मञ्च = पद्मानि ।

(b) विरूपसम्बन्धी as ब्राह्मणश्च ब्राह्मणी च = ब्राह्मणौ ; नीलञ्च नीला च नीलश्च = नीलानि ; शुक्लश्च शुक्लञ्च = शुक्ले or शुक्लम् ; माता च पिता च = पितरौ, अजश्च अजा च = अजे । भ्राता च दुहिता च = भ्रातरौ ; पुत्रश्च दुहिता च = पुत्रौ ।

## साधारणविधिः ।

(1) राजाहः सखिभ्यष्टच्—टच् is inserted after राजन्, अहन्, and सखि in the तत् पुरुष compound (including कर्म्मधारय and द्विगु) and of टच् only अ remains — as कलिङ्गानां राजा = कलिङ्गराजः, पुण्यं अहः = पुण्याहम्, मरुतः सखा = मरुत्सख ।

(2) महत् becomes महा in कर्म्मधारय and बहुव्रीहि compounds when it is the पूर्व पद (first member) there as महान् पुरुषः = महापुरुषः; महत् बलम् यस्य सः = महाबलः । N. B, In the तत्पुरुष compound महत् does not change into महा — as महतः (जनस्य) करः = महत्करः ।

(3) The word रात्रि when it is preceded by a numeral in a compound is changed into रात्रम्; as त्रिरात्रम्, द्विरात्रम् But in the एकदेशी and द्वन्द्व compound it becomes रात्रः — as अहोरात्रः ; रात्रेः पूर्वभागः = पूर्वरात्रः In the कर्म्मधारय compound, however, the word रात्रि as the second member of the compound, does not change its form; as पूर्वा रात्रिः = पूर्वरात्रिः ।

(4) In the तत्पुरुष compound the word छाया

when it is the उत्तरपद change into छायम् denoting छाया or shade given by more then one thing; as इक्षूणां छाया=इक्षुच्छायम् But छाया is optionally changed into छायम् when the shade is given by one thing only, as शालच्छाया or शालच्छायम्।

N. B. "इक्षुछायानिषादिन्यः" इत्यत्रतु आ समन्तात् निषादिन्य इति आङ् प्रश्लेषो बोध्यः।

(5) In the बहुव्रीहि compund षः is inserted after मूर्द्धन् when it is preceded by द्वि or त्रि; as द्विमूर्द्धः, त्रिमूर्द्धः

Q. How do you then account for the use of खरदूषणत्रिमूर्द्धानो रणे हताः in भवभूति उत्तरचरित ?

(6) the words प्रजा and मेधा become प्रजस् and मेधस् when they are preceded by सु, दुः and नञ् in the बहुव्रीहि compound; as अप्रजाः राजा; अमेधाः पुरुषः।

(7) अनङ् inserted after धनुष् when it is the second member in a बहुव्रीहि compound; as शार्ङ्गधन्वा; अधिज्यधन्वा।

(8) जाया becomes जानि in a बहुव्रीहि compound when it is the उत्तरपद there; as युवतिर्जाया यस्य सः =युवजानिः।

(9) गन्ध becomes गन्धि in the बहुव्रीहि compound when it is preceded by उत्, पूति, सु, सुरभि or an उपमान as उद्गन्धिः, पूतिगन्धिः, सुगन्धिः, पद्मगन्धिः, गन्ध may also become गन्धि in the बहुव्रीहि compound, when it is used in its diminutive sense (गन्धलेशः); as सूपस्य गन्धो लेशो यस्मिंस्तत् सूपगन्धि (भोजनम्)।

(10) In the द्वन्द्व compound जाया optionally becomes जम् or दम्; as जाया च पतिश्च = जायापती, जम्पती दम्पती ।

I How do you account for the formation of compound in अपथम् and अपथः ?

II. Name and expound the Samasas in— (a) बलाहकः (b) दास्याः पुत्रः (c) ग्रामान्तरम् (d) नग or अगः (e) बिम्बाधरः or अधरबिम्बः (f) पञ्चगुः (g) विहृतासि (h) सर्वश्वेतः (i) अस्तिक्षारा (j) अर्द्धपिप्पली (k) किंसखा (l) सप्रसवाः (m) सदसद्व्यक्तिहेतव (n) भीमकान्तैर्नृपगुणैः (o) त्रिलोकनाथेन (p) पीतप्रतिबद्धवत्सां and (q) वृषस्कन्धः ।

III Form compound words out of each group and name the compound in each case :— (a) शाकस्य शल्ते (b) तटे (c) मक्षिकाणां अभावः (d) सुराया गन्धो यस्मिन् तत् (e) कुत्सितो राजा (f) चतुर्णां पथां समाहारः (g) पञ्चानां नदीनां समाहारः and (h) साधूनां एकतमः ।

IV. Correct or justify the use of the underlined words and phrases in the following :—

(a) प्रज्ञया सदृशागमः (b) तस्य सप्रसवा इव (c) रतेर्दृष्टीतानेनयेन कामं (d) गुरोर्मवान् दर्शित शिष्यभक्तिः । (e) मृगैर्वर्त्तितरोमन्थम् उटजाङ्गनभूमिषु (f) अतोऽहं षण्मासाभ्यन्तरे तवपुत्रान् नीतिशास्त्राभिज्ञान् करिष्यामि । (g) गतागतेन वा कालो दीर्घं एवभविष्यति (h) तद्गतं हृदयं यस्यास्तदधीनश्च जीवितम् (i) अर्द्धरात्रे प्रबुद्धः सन् सम्मारात्मसुदुष्कृतम् । and (j) बद्धा तूणी धनुष्पाणिः शरयुमगमं नदीम् (k) अधिज्यधन्वा विचचारदावम् ।

V. What do you mean by (a) अलुक् समासः, (b) सर्वसमासः (c) प्रादिसमास, (d) नित्यसमास and (e) व्यतिहार बहुव्रीहि समास give examples of each.

VI. Explain the exceptional character of the Samasa in नगः and contrast it with

### समासे लिङ्गानुशासनम्।

अव्ययीभावोऽव्ययं नपुंसकं, तत्पुरुषे।
द्वन्द्वे च परपदार्थलिङ्गं बहुव्रीहावन्यपदार्थलिङ्गम्॥
एकशेषे त्वनियमः॥

### Number (पूर्वप्रकाशितात् परम्)

As in English, the plural in Sanskrit is often used for the singular, when the speaker or the person spoken of, is a high personage; as आर्य्यमिश्रा एव प्रमाणम् (your honour is an authority) मालविकाग्निमित्रे। इति तात पादा ब्रुवन्ति (so says my reverend father). King Dusmanta says सूत दूरममुना सारङ्गेण वयम् आकृष्टाः (charioteer, we have been drawn very for away by the antelope there) In the first person (उत्तम पुरुष), the plural may be nsed for the singular or the dual, irrespective of the speaker; (अस्मदो द्वयश्च। एकत्वे द्वित्वे च विवक्षिते अस्मदोबहुवचनं वा स्यात्) as किन्तु अवन्त्यसदो वयम्, अमभ्यस्तरथचर्य्याः (उत्तरचरिते)। But when the pronoun in the first person has a modifying adjunct, this is not allowed; सविशेषणस्य प्रतिषेधः।—as पटुरहं ब्रवीमि।) as पण्डितोऽहं ब्रवीमि and not पण्डिताः वयम्।

Names of countries are used in the plural when they are taken from the people inhabiting those tracts : as अहं गतः कदाचित् कलिङ्गान् (once I went to the county of the Kalingas) दशकुमारचरिते (स्थापयिष्यामि दण्डकान् (रामायणे)। ततो वङ्गान् जेतुं प्रतस्थे। (रघौ)। अस्ति विदर्भेषु काञ्ची नाम्नी नगरी। The follwing sloka of मनु will better illustrate it :—

"कुरुक्षेत्रञ्च मत्स्याश्च पञ्चालाः सुरसेनकाः। एष ब्रह्मर्षिदेशो वै।" Book II 19'

( Panini's aphorisms to the same effect are:—जनपदे लुप्। लुपि युक्तवद्व्यक्तिवचने ॥ )

But it must be noticed that when these names of countries have such words as देश, विषय, जनपद etc joined to them ,the singular must be used ; as, मगधदेशे पाटलीपुत्रं नाम नगरम् । हितोपदेशे । अस्तिकान्यकुब्जविषये राजावीरसेनो नाम । Ibid.

As in English, proper names in Sanskrit very often denote the family or race :—as जनकानां रघूणाञ्च सम्बन्धः कस्य न प्रियः (To whom is a connection between the families of Raghu and Janaka not dear) उत्तरचरिते। इक्ष्वाकूणामयं वंशः सत्यवाक् प्रथितः क्षितौ। रामायणे। रघूणामन्वयं वक्ष्ये तनुवाग्विभवोऽपि सन्। रघौ।

☞Students are invited to mark the peculiar use of the under lined words in the folloing expressions (1) गुणाः पूजास्थानम् गुणिषु न च लिङ्गं न च वयः (To the meritorious, merits alone, are the object of worship and not

sex or age ) Here स्थानं has not been changed into स्थानानि ( उत्तरचरिते )। (2) एतेषां नीतिशास्त्रोपदेशाय भवन्तः प्रमाणम् (you are the proper person for imparting lessons to these, on the science of conduct). Here प्रमाण has been used, not प्रमाणानि । हितोपदेशे। (3) सम्पदः पदमापदाम् (wealth is the abode of miseries). Ibid. पदम् is used, and not पदानि। In all these cases we commit mistake when we use these predicates in the plural.

U. N. R.

# FOR F. A. STUDENTS.

## A PAPER ON RAGHUVANSAM, AS GIVEN in the Allahabad University.

I (j) Explain the Samasa in आपादितवंशकृत्यम्।

(k) Write out the 3rd person plural of शुश्राव, सिषेवे and शशाम

(l) Parse गाहमाने; and write out the 3rd person, presnt tense of the root from which it is derived.

(m) Explain the Sandhi in दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः।

( क्रमशः )

श्रीश्रीदुर्गा शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी॥

## भाषावतरणिका।

द्रक्ष्यामि पङ्क्तीकृतराजवर्त्मनः इष: प्रकृष्टस्य पयोद! पामर!।
संमार्जनीभिर्दुमयीर्मरीचिभिराहन्यमानस्य स्तुतिं नरुस्वता॥

## उद्भटश्लोकाः।

राधे चौर्य्यगुणासि केशव! हृतं किं ते धनं कस्य वा,
हंसीयानमगीचणे विधुसुधां हस्तीन्द्रकुम्भद्वयम्।
मच्चित्तं हरिमध्यमं (*) विधिकृतं नैवं लवन्यादिकं
इत्थं कौतुकविह्वलोऽवतु मुदा त्वां देवदेवो हरि:॥ २२५॥

आनयाननमागते वितनुते नो भाषते भाषिते
स्थानाद्गन्तुमपीह ते न कुरुतेऽप्यालापमात्रं क्वचित्।
रुद्धे वर्त्मनि वक्तिनिष्ठुरतरं गुप्ताचरं जल्पति
भिक्षुं वीक्ष्य धनी धवं (?) नववधूर्यद्वत् सदा चेष्टते॥ २२६॥

कस्येयं तरुणि! प्रपा (‡) पथिक! हे किं पीयतेऽस्या: पय:
धेनूनामथ माहिषं वधिर! भो वार: कथं मङ्गल:?।
सोमो वाथ शनैश्चरोऽस्तमह्नो तस्ते सुखे दृश्यते,
श्रीमन् पान्य नितान्तकान्तरसिको यद्रोचते तत् पिब॥ २२७॥

---

* हरिमध्यमम्—हरे: सिंहस्य मध्यमं मध्यस्थानं कटिम्। (?) धवं भर्त्तारम्।

‡ प्रपा पानीयशाला। पय: जलं दुग्धम्। वार: जलानि। पक्षे दिनम्।

## दशापरिणतिः ।

अस्ति दक्षिणारण्ये कुसुमावती नाम नगरी। तत्र च कुवेरचन्द्रनामा श्रेष्ठी प्रतिवसति स्म। स प्रतिदिनं नानाजनपदसमागतानि बहुमूल्यवस्तुजातानि विक्रीय सम्पन्नव्यवहारी महतीं सम्पदमुपागच्छत्। आसादयच्च क्रमेण प्रावीण्यं सांयात्रिककलायाम्। अथ एतद्देशीयानपि पदार्थान्नौयानेनान्यत्र विक्रयाय नेतुमचीकमत प्रक्रान्तोद्यमश्च तत्र द्वित्रवारं महीयांसं लाभमध्यगच्छत्।

अथैकदा स पञ्चषवर्षैरुपगन्तव्यं कञ्चन देशं जिगमिषति स्म। ततोऽनर्घाणि रत्नानि मणींश्च विविधवस्तुजातानि च तरण्यामारोप्य चिरविप्रयोगभीरुकया शिरीषकुसुमसुकुमारया भार्यया अपरैः प्राणैरिव च कुमारैर्विस्रम्भभाजनैः कतिपयैरासन्नपरिचारकैर्भृत्यैश्च सममेव नावमारुह्य सुमुहूर्त्ते तां प्रतीचीं दिशमुद्दिश्य प्रैरिरत्।

अथार्णवसुषमावलोकनादिभिः प्रणन्दत्सु सुकुमारेषु कुमारेषु, तदानन्दद्विगुणितप्रमोदायां च प्रमदायां निरन्तराय नौगत्या च सम्मोदमानेषु नाविकेषु ससुखान्तरे च कुवेरचन्द्रे सर्वेषां निरतिशयमानन्दमसहिष्णुः सासूयेव समुत्प्लावितार्णवकल्लोला संक्षोभितजलचरा प्रावर्त्तत महावात्या।

पाठकाः! न सर्वदा सुखमेव प्रणन्दयति जन्तून् न वा दुःखमेव चिरायोद्वेजयति। महीयसि सुखार्णवे विनिमज्जतोऽपि समुद्भवन्त्येवापदो यथाकालम्। तथाहि मुदितान्तरेषु तेषु सर्वेषु सा तरणिस्तया महावात्यया कस्मिंश्चन महीयसि सुकठिने प्रस्तरसन्ताने साघातमापात्य सपदि सूक्ष्मतरखण्डशेषतां नीता। ततः सर्वमप्यवसन्नं नाव्यम्, निमग्नाश्चांगनाकुमारादयः किन्तु अपरित्यक्तधैर्यः कुवेरचन्द्रो विस्रम्भभाजनं च तस्य चिन्तानन्दो नाम कश्चिद्भृत्यश्च।

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥"

इत्यनुभावयितुमिव भाविनीं सम्पदं प्रेरितौ भागधेयेन फलकमवलम्ब्य दुःखार्णवमिव महार्णवं कथञ्चिदुत्तीर्य्योपागतौ तीरम्। तत्र चापितवसनतया सापत्रपः श्रेष्ठी कौपीनधारिणमात्मनो भृत्यं प्राह। "सखे! चित्तानन्द! यावेव सम्पदमनुभवन्तौ सुखैकनिलयावभवाव। तावेवेदानीं दुर्लभवसनौ दुःखमनुभवावावाम्। अत्र हि भवितव्यतैव बीजम् सैव हि भगवती सर्वङ्कषा। भवतु महाशय! यदहं जीवामि भवाँश्चानपेतप्राणस्तदेव भद्रंशतावलोकनमावयोः। सति हि कन्दे प्रणष्टा अपि पुनः प्ररोहन्त्येव शाखाः। सखे! नेदानीमङ्गुलीयकादेतस्मादन्यन्मे द्रव्यम्। तद्गृहाणेदम्, इदं चाग्रतो दृश्यते नगरम् तत्र गत्वा विक्रीयैतत्तल्लब्धेन च द्रव्येणादाय वासांसि इहानीय मे प्रयच्छ। भवानेव हि सकौपीनः प्रभवति नगरे गन्तुम्। तद्गच्छ इहैव त्वामहं प्रतिपालयामि॥" इति

पाठकाः! मरौ कूपा इव विपदि सन्तोषयितारः सुदुर्लभा एव जनाः। यावदेवेयं यथावत् प्रवर्त्तते लोकयात्रा तावदेवेदं सर्वम्। समुपस्थितायां त्वापदि प्रायेण सर्वेऽपि दूरीभवन्ति। सुहृदोऽपि रिपवः सम्पद्यन्ते, बान्धवा अपि विमुखीभवन्ति अननुष्ठितकृत्या भृत्या अपि कलहायन्ते। विपर्य्यस्तभागधेयस्य हि सर्वमपि विपरीतत्वेनैव परिणमति। तथा हि आजन्मनः प्राणवत् परिपालितोऽपि स तस्य श्रेष्ठिनो भृत्य आदाय तदङ्गुलीयकं निधिमिवाकस्मिकं हस्तगतं मन्यमानो नातःपरं किञ्चिदप्यस्माल्लब्धव्यमिति मत्वा सानन्दस्तन्नगरं प्राविशत्। तस्मिन्नेव दृढं विस्रब्धस्य कुवेरचन्द्रोऽपरित्यक्तस्थानो मुहुर्मुहुरनुध्यायन्नात्मनोऽवस्थां चिराय तं प्रत्यपालयत्। भृत्यस्तु प्रविश्य नगरं कस्यचन रत्नविक्रयिणः श्रेष्ठिनो

विपणीमागत्यावोचत्। "तात! इदं नः क्रय्यमङ्गुलीयकम् तदेतदादाय दीयतामस्य यथोचितं मूल्यम्" इति। स तु सचकितमवलोक्य तन्मूल्यं सहस्रदीनारा इत्येतावत्यापि वणिग्भावसहजया तिरस्कारिमुद्रयाऽब्रूत महाभात! हीनमेतदतीव तथापि यदि दीयते रह्यन्तां दशदीनारा इति। सोऽपि तस्य तया मुद्रया सञ्जातविश्वासस्तदेव बहुमन्यमानोऽग्रहीत्। अचिन्तयच्च चेतसि "यद्यहमेतेषां वसनाऽन्यादाय स्वामिनमुपगच्छेयम् किं वा लभेय प्रणष्टाशेषसम्पदस्तस्मात्। न च मे प्ररोहत्याशा यथा स पुनर्धनीभूत्वा मां पालयेत्। तन्न गन्तव्यं तत्र एतैरेव तावद्दीनारैर्निर्वाहयाम्यात्मनो वृत्तिम्" इति। ततः स तत्रैव नगरे सदनमेकमन्विष्य कञ्चन कालं सुखमवात्सीत्।

इति प्रथमभागः।

राशिवड़ेकरोपाह्वस्य
अप्पाशर्मणः
( कोल्हापुर )

---

## (क्व सुखम् ?)

सुखं क्व काम्यं ? चरतीति वार्त्ता देशेऽन्यदेशे नगरे विपण्याम्।
ग्रामे च राज्ये बहुना किमास्ते पयोधिवस्त्रावृतभूमिमध्ये ॥ (१)
सुखं क्व काम्यं ? चरतीति वार्त्ता विलासवस्तूपहिते सरामे।
सकानने सज्जित रञ्जितान्ते हर्म्ये प्रमोदप्रणयाभिगीते ॥ (२)
सुखं क्व काम्यं ? चरतीति वार्त्ता प्रायः सुजीर्णे पृथिवी-शयाने।
पर्णे कुटीरेऽपटले विदीर्णे ग्रहैः कराध्यासितमध्यभागे ॥ (३)
सुखं क्व काम्यं ? चरतीति वार्त्ता प्रदीप्तकार्त्तस्वररम्यवप्र-
प्रवेष्टितायां समितौ महत्यां अनन्तविद्यध्वनिनादितायाम् ॥ (४)
सुखं क्व काम्यं चरतीति वार्त्ता ? प्रभातकाले स्मरणीय-पुण्य—
पवित्रसाधु-प्रविभूषितेऽस्मिन् तीर्थे सुपर्वप्रतिमूर्त्तिपूर्वे ॥ (५)
शिलोच्चये निर्झरिणीप्रवाहशब्दायिते रत्न-विदीप्तशृङ्गे।
श्रीरम्भुवश्री तरुनीलपर्णे सुखं क्व काम्यं चरतीति वार्त्ता ॥ (६)

सुदुष्प्रवेश्ये ननु हिंस्रजन्तु भुजङ्ग मातङ्ग पतङ्ग भीष्मे।
वने, विरागाध्युषिताश्रमेऽपि सुखं क्व काम्यं चरतीति वार्त्ता ॥ ७ ॥
उपोषितश्रामतमस्य भिक्षाभृतः, करस्थं पिबतः पयस्तु।
धराश्रयामस्य सुखेऽपि सैव सुखं क्व काम्यं चरतीति वार्त्ता ॥ ८ ॥
यदन्तरे दुर्वहरोगदुःखं यदन्तरे भोगविलासवाञ्छा।
नूनं तदाखेऽपि मलीमसेऽस्मिन् सुखं क्व काम्यं चरतीति वार्त्ता ॥ ९ ॥
विशुष्कपत्राश्रुभिरत्र शाखी रम्या व्रतत्यः श्लथपाण्डुपत्रैः।
विश्रापयन्तीव वितर्कयामि सुखं क्व काम्यं ननु नास्ति नास्ति ॥ १० ॥
वीचिच्छलादूर्द्ध्वभुजा भवन्ती स्रोतस्विनी वेगभवैर्निनादैः।
आक्रुश्य तारं वदतीव तां तां सुखं क्व काम्यं ननु नास्ति नास्ति ॥ ११ ॥
तरौ लतायां कुसुमे च पत्रे ह्रदे तटे मन्दिरपर्वतेषु।
नद्यां नदेऽस्मिन् लिखितेव सेयं सुखं क्व काम्यं ननु नास्ति नास्ति ॥ १२ ॥
प्रभञ्जन शीघ्रगमाश्रयानमारुह्य वेगविजगत्प्रधानम्।
गत्वा समन्तात् कथितेव सेयं सुखं क्व काम्यं ननु नास्ति नास्ति ॥ १३ ॥
पिकः सुकण्ठः परिगायतीव प्रीतो द्विरेफः स्वनतीव भूयः।
शुकः सुखाशी वदतीव नित्यं सुखं क्व काम्यं ननु नास्ति नास्ति ॥ १४ ॥
पशौ च सत्त्वे च विहङ्गमे च भूते च्युते स्थावर जङ्गमे च।
पुनः पुनर्वर्त्तत एवमन्ये सुखं क्व काम्यं ननु नास्ति नास्ति ॥ १५ ॥
स्त्रैणाः सकामं सरसं रमण्याः रम्याननाम्भोजसुधाभिपानम्।
प्रीत्योपभोगः प्रणयक्रिया च ब्रुवन्ति पूतं सुखमद्वितीयम् ॥ १६ ॥
बुभुक्षिताः स्वादुरसप्रधानसुभोज्य-सारोदरसाद्विधानम्।
निद्रालसास्ते सुकुमारपुष्पसमानशय्या-शयनं प्रमोदम् ॥ १७ ॥
अदृष्टपूर्वाश्रुतपूर्वभोगे गिरौ तड़ागे नगरे प्रदेशे।
वने नदे सस्पृहमिष्टभूमौ पर्य्यट्य तत्सेर्गहणञ्च केचित् ॥ १८ ॥
अहर्निशं दर्शन-काव्य-वेदपुराणशास्त्राध्ययनं सकामम्।
केचित्, विना क्वान्तिद-कर्म्मजातं आधिष्ठितं कर्म्मभयातुरोऽन्यः ॥ १९ ॥
क्रीड़ासुखं क्रीड़न-सेवकानां मद्यं सुखं तत्प्रणयाश्रितानाम्।
कलासुखं तद्रसकोविदानां तत्तत् सुखं तत्तदनुसृतानाम् ॥ २० ॥
मन्ये, न तत्तत्सुखमीहनीयं आपाततः किन्त्विह तानि तानि।
अवं सुखाभासतया भवन्ति यतो न सर्वैरभिवाञ्छितानि ॥ २१ ॥

आसीत् तदा किं न सुखं धरायां ? छायाविषादस्य दृशाति तां किम् ?।
सुखस्वरूपस्य शिवस्य सर्गे सुखस्य लोपो घटते विचित्रम् ॥ २२ ॥
युगान्तकालप्रभृतिप्रमुग्धाः तवाशया हृष्टतमा युवानः।
नार्य्यः समन्तात् शिशवोऽप्रगल्भाः सुख ! त्वदर्थं ननु पर्य्यटन्ति ॥ २३ ॥
तीर्थस्य ते स्त्री बहुयाचिकास्तु केचित् पतन्त्यर्द्धपथेऽसमर्थाः।
रुदन्ति केचित् समटन्ति केचित् प्रायस्त्वदीक्षा घटते न किन्तु ॥ २४ ॥
शशाङ्क को दर्शयितुं भवेऽस्मिन् सुख ! स्खलन्ते बत ! दुर्ग्रहं यत्।
विश्लिषती लक्ष्यवियागयोगात् गतासुवत् राजति विश्वमेतत् ॥ २५ ॥
क्वचित् गिरेरुन्नतरत्नशृङ्गे ? मन्दाकिनी शुभ्रतटे क्व रम्ये ?
क्वाथवा कृत्रिमकाननान्ते सुख ! लमास्मे बत ! कल्पवृक्षे ॥ २६ ॥
सुख ! क्व रत्नाचितमासनं ते ? वयं क्व विन्दाम इहेप्सितन्त्वाम् ?।
न किन्त्वमप्रज्वलदन्तरस्य ज्वालां हरिष्यस्यथ शान्तिनीरैः ? ॥ २७ ॥
वय तृषार्त्तातिथयः चमायामाजीवनात् त्वामनुसन्दधाम।
अभ्यागतप्रार्थनलोपभीतेः किं नीरदानं तव नैव युक्तम् ? ॥ २८ ॥
जाने न ; तस्मात् बत ! चिन्तयामि निर्माय शान्ते परमं पवित्रम्।
चेतं नु ! कुवाम्रतरस्यहर्म्यं संस्थापयामासिथ, वाञ्छित ! त्वम् ? ॥ २९ ॥
नतोऽभिवन्दे सुख ! जीवितत्त्य ! त्वद् याचिकान् नः कृपयातिदीनान्।
सिञ्च स्वयं प्रीतिदशान्तिनीरैः आश्लिष्य चेहामृतशीतदेहैः ॥ ३० ॥
स्वर्गो भवत्वाशु तव कृपातो धरा सराभूर्नगरं प्रशान्तम्।
उद्यानजातं ननु नन्दनेशं शान्त्यावृतास्ते सुख ! जीविनः स्युः ॥ ३१ ॥

श्रीअन्नदाचरणतर्कचूड़ामणिः—
नोयाखाली,—सोमपाड़ा।

---

# सती छाया।

( पूर्वप्रकाशितात्परम् )

अहो मासोयं पौषः। घोरायां निशीथिन्यां तमस्विन्याम् इन्द्रप्रिया बहुमूल्यशाटीयुगलेन गात्रं प्रावृत्य तूष्णीं द्वारमुद्घाट्य नदीतीरमुपतस्थौ। भयचकितदृष्ट्या इतस्ततो निरीक्ष्य यदा

निश्चिनोति नैकोऽपि जनोऽत्राधुना विचरति, तदा झटिति गात्रावरणमुन्मुच्य नद्यां निमज्जितुं यावदुद्यता तावत् पश्चादागत्य कोऽपि जनस्तां सुदृढ़ं दधार। तेन सा अज्ञातार्था सती पराहृत्यमुखी पश्यति यशोदाम्।

यशोदा कथयति इन्द्रप्रिये ! मैवं कार्षीः त्वदीये जठरे बालो वर्त्तते किमित्यनागसं तं जीविताद्वियोजयसि। एहि इन्द्रप्रिये ! प्रतिनिवर्त्तस्व। इन्द्रप्रिया सगर्वमाह "अरे सति जीवने तस्यां पापवाटिकायां न पुनः प्रविशामि" यशोदा आह नवविपन्यां मम भगिनी वर्त्तते वर्त्मन आवर्त्तनभाग एव तस्या भर्त्तुरापणम्। तत्रैव त्वां नेष्यामि एहि। इन्द्रप्रिया यशोदा माह "तावद्दूरं किं पदा गन्तुं शक्नोमि ?" दासी ब्रवीति "हा धिक् हा धिक् गत्वैव कियद्दूरं शकटमारुह्य व्रजामि" इन्द्रप्रिया यशोदाया मलिनवस्त्रेणात्मानं पिधाय सह यशोदाया अग्रे सर्त्तुं मारभते। व्याघ्रापणस्थसेतुसन्निधौ शकटमेकं स्थिरीकृत्य तदारोहति। शकटं यथासमयं नूतनविपन्यां चित्पुरवर्त्मनि उपतिष्ठते। यशोदा इन्द्रप्रियया सह शकटादवरुह्य सम्मुखस्थितमापनिकमाह "आवुत्त! आवुत्त! वाहिकायास्मै रूपकद्वयं देहि" आपनिकस्तु सविस्मयमिन्द्रप्रियामालोक्य शकटवाहिकाय रूपकद्वयं ददाति।

वाहिको हि लब्धरूपकः हिस् हिस् इति शब्देन शकटं चालयित्वा प्रस्थितः। यशोदायाम् इन्द्रप्रियया सह विपण्यभ्यरे गृहे प्रविशन्त्याम् एका अर्द्धवयस्का वावच्यते "केयं कन्यका ? केयं कन्यका ? भगिनि ! यशोदे !" यशोदा सविमर्षं कथयति "समस्तं ब्रवीमि भगिनि ? संप्रति सत्त्वरं पर्य्यङ्के परिष्कृतां शय्यामिकां विधेहि" सा च साग्रहं चिप्रहस्तञ्च पर्य्यङ्कं वस्त्रेणाप्लाव्य पयःफेणनिभां कोमलां शय्यां विदधाति। इन्द्रप्रिया व्याकुलेन मनसा गृहस्य इतस्ततः परिवीक्षमाणा निरन्तरां वाष्पधाराञ्च मुञ्चन्ती अकस्मान्मूर्च्छिता भूतले पतति।

यशोदा सत्रासं कथयति "वामे !! वामे !!! जलमानय जलमानय शीघ्रमानय" वामा त्वरितगतिर्जलमाहृत्य इन्द्रप्रियायाश्चक्षुषोर्गात्रे च शीकरीकृतानि वारीणि विक्षिपति। हस्तेन च तस्याः कोमलमङ्गं संवाहयति।

व्यतीत्य कियत्क्षणं लब्धचेतन्याम् इन्द्रप्रियां वामायशोदे विधृत्य पर्य्यङ्के सुस्वापयतः। परिक्लान्ता च सा इन्द्रप्रिया अनतिविलम्बं निद्राति। वामायां तस्याः स्वामिनि च इन्द्रप्रियायाः परिचय जिज्ञासतोः यशोदा आद्योपान्तं समस्तञ्च वृत्तान्तं निगदति।

इति द्वितीयः परिच्छेदः।

---

## तृतीयपरिच्छेदः।

(दुःखिनी सती छाया।)

अर्द्धार्द्धमव्यक्तवचो ब्रुवन्ती अङ्गं क्षिपन्ती मधुरं हसन्ती।
क्रोड़े शयाना लतिकेव छैनी विलोक्य माता रुदती शुचार्त्ता॥

षड़्विंशपौषे दिवा द्विप्रहरसमये अल्पायतनस्य एकतलगृहस्योपरि छदिःपार्श्वे एकस्मिन् खर्परगृहे दुःखिनीराजवधूः दुर्विसहप्रसववेदनया नितरां कातरा, एकैव सा आत्मीया यशोदा दासी, तस्या भग्नी च उपस्थिता। यशोदा कथयति "भग्नीपतिः किमिति विलम्बते? एतस्मिन्नेव काले कश्चित् पश्चाद्देशात् प्रतिवक्ति अयमहमुपस्थित इति, इतो दूरतरं स्थानं तत् तेनैव विलम्बो जातः। यशोदा सत्रासं कथयति अयि धात्रीभगिनि! पश्य तावदथतः पीतवतीं (*) धात्री सयत्नं पीतवतीं शुश्रूषमाणा कथयति "नेतःपरं विलम्बः सम्भवेत् यदा एकघटिकासूचकः शतघ्नी (†)

---

(*) पोयातीति यस्य भाषा। (†) कामान तोप इति यस्य भाषा।

श्वन्दायिष्यते तदैवापत्यं भूमिमलङ्करिष्यति” धात्रीवाक्यं सत्यमेवाभूत्, एकघटिकाशतघ्नोध्वनिर्यावदुज्जृम्भते तावत् शरच्चन्द्रनिर्द्धिनी तनया प्रसवशय्यां स्तनन्ती सुस्वरं रोरुद्यमाना सर्वा एव स्त्रीस्थिताः स्नेहेन प्लावयामास। सापि दुःखिनी जननी क्षणं दुःखभारं विस्मृत्य एकाग्रचित्ता लावण्यपूर्णं तनयाननं सादरं दरीदृश्यते।

धात्री यथाविधि प्रसूतीं परिष्कृत्य परिधाप्य च वस्त्रान्तरं प्रच्छिद्य च तनयानाभिनालं संस्नाप्य च तां प्रसूत्याः क्रोड़े समर्पयन्ती सस्मितमाह “अयि बहुशोऽहं गर्भिण्या अस्रुषवत्, किन्तु न क्वापि ईदृशीं सुन्दरपोतवतीमपश्यम्।” धात्री इन्द्रप्रियां कथयति “मातः! पारितोषिकं किञ्चिदभिलषामि” इन्द्रप्रिया सजलनेत्रं यशोदां कथयति “अयि यशोदे! मम काञ्ची (१) कियता मूल्येन विक्रीता? यशोदा कथयति “पञ्चशतमुद्रयेति। इन्द्रप्रिया कथञ्चिदाश्वस्ता कथयति” तस्मात् पञ्चविंशतिरूप्यकमस्यै प्रदेहि, धात्री मुद्रां प्राप्य सपुत्रीं प्रसूतिमाप्याय्य सदाशीर्वचसा प्रतिगच्छति।

निराश्रयाणामाश्रयो नारायणः—कथेयमिन्द्रप्रियायां समधिकं प्रमाणम्। नवजाता बालिका चान्द्रमसी कलेव प्रत्यहं वर्द्धमाना प्रसवात् पञ्चमेऽहनि समतीते यशोदा परिचारिका सूतिकागारपरिचारिकया सह नवजातां कन्यां स्नपयित्वा इन्द्रप्रियामपि स्नपयति। स्नात्वा च इन्द्रप्रिया शिशिरधौतस्वर्णलतेव शोभते। यशोदा सूतिकादासी च यदा गृहान्निर्गच्छति तदा इन्द्रप्रिया क्रोड़े शाययित्वा तनयां स्तन्यं पाययन्ती विस्मरन्ती च निमेषं, लावण्यपारावारं सुकोमलमङ्गं कन्याया अवलोकयन्ती च तुष्णीमश्रूणि विमुञ्चति मनसा जल्पति च, अयि बालिके! न किञ्चिदपि मे दुःखमनुभवसि। न जाने कोऽपि स्वर्गीय आनन्दस्ते अन्तर्विराजते। अहो साम्प्रतं कोरकितं वदनपङ्कजं किमिवमनोहरं दृश्यते। किन्तु

(१) कटिभूषणं गोट् इति यस्य भाषा।

हा हा दृश्येनानेन मनोहारिणापि दुःखिनीयं जननी अणुमप्यानन्दं नानुभवति। इत्येवं वावच्यमाना इन्द्रप्रिया वाष्पधाराभिर्वक्षः प्लावयामास।

अस्मिन्नेव काले यशोदा सूतिकापरिचारिका च गृहं प्रविशति। यशोदा अश्रूणि मुञ्चन्तीमालोक्य इन्द्रप्रियां कथयति हा धिक् हा धिक् अपत्यं क्रोड़े विधाय रोदनमसाम्प्रतं, शान्तं पापम्। इन्द्रप्रिया पाणिभ्यां नेत्रे विमृज्य स्तोकं कथयति "अयि यशोदे! मन्दभागिन्या अस्याः कोऽस्ति? य एतस्य कोरकितस्य मुखस्य मृदु हास्यं निरीक्ष्य आनन्दिष्यति? अहह अस्याः सर्वमेवास्ति किन्तु तथापि किमपि नास्ति" यशोदा कथयति धिक् धिक् शान्तं पापम् इन्द्रप्रिये! यदि नारायणस्तेऽनुकूलस्तदा सर्वमेव लभ्यते"।

इन्द्रप्रिया दीर्घं निःश्वस्य कथयति "अयि यशोदे! या पूर्वद्युरागता सा ब्राह्मणी पाचिका अद्य किं समेष्यति? यशोदा वाढं, सैवाद्यागता त्वत्कृते पक्ष्यति" सूतिकापरिचारिका इन्द्रप्रियायाः क्रोड़ादानीय वालिकां पर्य्यङ्के असूषुपत्।

माघमासस्य चतुर्थे दिवसे सायं समये इन्द्रप्रिया क्रोड़े कृत्वा तनयां सूतिकागारे शयाना तिष्ठति, यशोदा सूतिकागृहद्वारमुन्मोच्य कथयति "अयि इन्द्रप्रिये! समधिकं सज्जीभूय साड़म्बरं कोऽपि वरः चित्पुरपथं समुद्भासयन्समागच्छति, द्रक्ष्यसि चेत् तूर्णमागच्छ। चतसृषु दिक्षु कति लोका बद्धपरिकराः सोच्छ्वासं सदर्पमागच्छन्ति, कति वा दिदृक्षवः अट्टालिकाशिरोऽधिरूढ़ाः, के तदियत्तामधिगन्तुं प्रभविष्यन्ति। पूर्वेद्युर्निशीथे अयमेव वा गतवान् इत्यनुमिनोमि। इन्द्रप्रियाया हृदयन्त्रो ताड़ितेव निनदति। सर्वेषामेवैतत् विदितमस्ति—वाकवालिकाः धावन्तः स्खलन्तश्च नान्यस्मै निवेदयन्ति आघातव्यथां, तथापि न च निवर्त्तन्ते धावितुम्। इन्द्रप्रियाया अपि

तदेव घटितं, भीतिस्तस्याश्चेतसो न प्रकाशिता, चतुर्दशवर्षीया वालिका किं नाम दुःखमनुभवन्ती वर्षीयसीव व्यवहरति इति न कोऽपि जानाति। किन्तु मुहूर्त्तादिव वालिकास्वभावसुलभ आग्रह इन्द्रप्रियामधिकरोति।

तदा द्रुतपदा सा सह यशोदया एकतलप्रासादोपरि समारोहति, तिष्ठति च छदिषः प्रान्तदेशे। क्रमशः वादित्रध्वनिः समीपे श्रूयते, विविधास्तु खधूपा वियति प्रज्वलिताः, विविधाश्चालोका दिवैव मार्गमुद्भासयन्ति। अग्रतः पृष्ठतश्च वरस्य तरवारिधारिणो राजन्ति। पश्चाच्च अश्वारोहिणोऽसंख्याश्च शूलदण्डधारिणः शतमेकञ्च सैनिका दृप्ता व्रजन्ति। स्यन्दनञ्च षड्घोटकमध्यासीनो वरः, कन्या च चतुर्दोलामध्यासीना व्रजति।

क्रमशस्तु वरस्य स्यन्दन इन्द्रप्रियायाः सम्मुखे समुपतिष्ठते, इन्द्रप्रिया निरुद्धदीर्घनिःश्वासा पश्यति,—क्षीणञ्च तस्याः शरीरं वेपते। एतस्मिन्नेव काले लोहितालोक एकः सम्मुखे वरस्य प्रज्वलितः, नेत्रे च वरस्य इतस्ततः उपरि विचरन्ती झटिति इन्द्रप्रियायाश्चक्षुषोर्मिलिते। अहो हर्षविकसितं वरस्य वदनं कालिम्नालिप्तमिव पुनरपि इन्द्रप्रियां द्रष्टुकामः पश्चाद्भागे पतन्निव परावर्त्तितमुखः क्षणं तिष्ठति। तदा इन्द्रप्रियापि अवसन्नेव विक्षतकण्ठा चित्रकल्प मूर्च्छति।

यशोदा प्रभृतयश्च प्रसूतिं सत्रासं नीत्वा कुटीराभ्यन्तरे शाययन्ति। तस्याश्च मूर्च्छा राजकुमारस्याप्रत्यचिता नाभूत्।

(क्रमशः)

# धर्म्मविवेकः ।

( पूर्वप्रकाशितात्परम् )

वामापदः । "नमोऽस्तु गुरवे तस्मै इष्टदेवस्वरूपिणे ।

यस्य वाक्यामृतं हन्ति विषं संसारसंज्ञकम् ॥"

इति शिवरामं प्रणम्य कृताञ्जलिः स्थितः ।

शिवरामः । वत्स ! कियत्कथितं धर्म्मविवेकस्य तत्स्मरसि ?

वामा । आ एवं नु तत् प्रभो ! स्मरामि ।

शिव । प्रीतोऽस्मि ते वत्स ! ईदृशेन तेऽभिनिवेशेन धर्म्म-व्याख्याने । मया तु कृतव्याख्यानेनापि न स्मर्य्यते कियत् व्याख्यातो धर्म्मः । अहो—

"क्षणात् प्रबोधमायाति लमस्ताभ्रियते पुनः ।

निर्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥"

स्मारय मां कियन्तं व्याख्यातं धर्म्मविवेकम् ।

वामा । भाद्रमासि तर्केण विना धर्म्मफलमनुष्ठितमेव प्रत्यक्षेण ज्ञायत इति सत्यवादी रजको रामसुन्दरो दृष्टान्तितः ।

शिवः । स्मरामि सर्वम् । इदानीं परिचिन्तय मनूक्तं—

"धृतिःक्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।

धीर्विद्या सत्यमक्रोधो दशकं धर्म्मलक्षणम् ॥"

इत्येवं धर्म्मं संसेवमानः क्रमशः यदि धृत्यादीनां परां कोटिं लभते तदावश्यमेवाभ्युदयो भवेदात्मनः । अतएव सत्यमेव कणादः "यतोऽभ्युदय निश्रेयससिद्धिः सधर्म्म" इत्याह । आत्मनोऽभ्युदयस्य तु सीमा ईश्वरत्वलाभः, स च धर्म्मादेवैतस्मात् सम्पद्यते ।

वामा । भगवन् ! भवतु साधारणेन धर्म्मेण धृत्यादिना सत्त्व-संशुद्धेर्म्मालिन्यक्षयादात्मनोऽभ्युन्नतिः विशेषेण च धर्म्मेण विसदृशेण ब्राह्मणगतेन क्षत्रियगतेन वैश्यगतेन शूद्रगतेन च को नामाभ्युदयः ?

यथा ब्राह्मणस्य जननमरणे दशाहमशौचं क्षत्रियस्य द्वादशाहं वैश्यस्य पञ्चदशाहं शूद्रस्य तु मासमिति । इत्यादि इयत्तापथमतिक्रान्तैर्धर्म्मैरापाततो भ्रान्तिरेवोदेति।

शिवः । सत्यमेव ब्रवीषि, ततः प्रश्नोयमतीव गरीयान् तत् प्रणिहितमनाः शृणु। वामापद ! किमितिमस्तकस्य नाम "उत्तमाङ्गं" तज्जानासि ?

वामा । अङ्गानां मध्ये उत्तमं अतएव उत्तमाङ्गं कथ्यते शीर्षम् ।

शिवः । अङ्गानां मध्ये शिरस एव कथमुत्तमत्वं ?

वामा । शिरसि छिन्ने नैव जीवति मानुषः अतएव तस्योत्तमत्वं ।

शिवः। (विहस्य) स्थूलधियामेतद्वचः यत् "शिरसि छिन्ने नैवजीवति मानुषः" इति, हृत्पिण्डेऽपि विदीर्णे कटावपि द्विधाकृतायां नैव जीवति मानुषः तत् किमिति हृदयं कटिश्च नोत्तमाङ्गं कथ्यते ?

वामा। गुरवो ब्रुवन्तु शृणोमि तत्।

शिवः। ज्ञातमेतत्त्वया यद्ब्राह्मणो ब्रह्मणो मुखात्, क्षत्रियो वाहुभ्यां, वैश्य उरुभ्यां, शूद्रास्तु जाताः पद्भ्यामिति तथाच श्रुतिः।

"ब्राह्मणोऽस्य मुखमासीत् वाहू राजन्यतः कृतः ।
उरू तदस्य वैश्यस्तु पद्भ्यां शूद्रोऽजायत ॥"

एतदपि जनीहि उपादानकारणगुणाः कार्य्ये संक्रामन्ति, यथा नीलैः सूत्रैर्नीलं शुक्लैः सूत्रैः शुक्लं लोहितैश्च लोहितं वस्त्रं जायते।

एतदपि जानीहि ब्रवीषि च अङ्गेषु शिर एव प्रधानम्, व्यवहरति च लोके तथा, यथा आज्ञा ते शिरसा गृह्यते पादौ ते शिरसा वन्द्येते इति शिरस एव प्राधान्यम् । तथा चाभिधीयते।

"उत्तमाङ्गं शिरः शीर्षं मूर्द्धा ना मस्तकोऽस्त्रियाम्"। इति।

कथमिति शिर उत्तमाङ्गम् ? ज्ञानाकरत्वादेवेति निश्चिनु।

चत्वारि सत्त्वगुणप्रधानानि ज्ञानेन्द्रियाणि शिरस्येव तिष्ठन्ति, श्रोत्राक्षिरसनाघ्राणाख्यानि, त्वक् च शिरसि अन्यस्मिन्नप्यङ्गेऽस्तीति। तस्मादेव ज्ञानाकराच्चतुर्मुखमुखात् ब्राह्मणा व्यजायन्त ज्ञानवृत्ति-प्रधानाः। तस्मादेव कारणान्न तेषु ब्राह्मणेषु भुजवीर्य्यम् ऊरुवीर्य्यं वा तथा, यथा ज्ञानाकरमुखवीर्य्यम्, तथा क्षत्रियाणां बाहुवीर्य्यं शौर्य्यादिकं, वैश्यानामुरुवीर्य्यं वाणिज्यव्यपदेशेन विदेशाटनमिति।

मस्तकस्य सन्निहिताद्बाहोर्जातेषु क्षत्रियेषु मस्तकाधिष्ठितं ज्ञानं ब्राह्मणात् न्यूनं वैश्याच्चाधिकं वर्त्तते। मस्तकस्य भुजव्यव-हितादुरुतः जातेषु वैश्येषु क्षत्रियापेक्षया न्यूनं ब्राह्मणापेक्षया न्यूनतमं ज्ञानं वर्त्तते, तेन हि ब्राह्मणक्षत्रियवैश्याः द्विजातयः वेदे-ष्वप्यधिकारिणः स्युः। शूद्रास्तु मस्तकादतिव्यवहितात् पादाज्जाताः अतएव ते ज्ञानेन मस्तकाधिष्ठितेन नैव स्पृश्यन्ते अपि।

अपि च। सति ज्ञानोत्कर्षे श्रेष्ठो भवति जनः इति तु लोक एव प्रमाणम्। तथाहि निरक्षरेभ्यः साक्षराः श्रेष्ठाः। साक्षरेभ्यः विद्वांसः, विद्वद्भ्यः पण्डिताः, पण्डितेभ्य ऋषयः, ऋषिभ्यो देवाः, देवानामपि हरिहरविरिञ्चयः श्रेष्ठाः केवलं ज्ञानोत्कर्षादेव।

वर्त्तुलार्थस्तु लोके सर्वेभ्यो ब्राह्मणा ज्ञानिनः सत्त्वबहुलाः। ब्राह्मणेभ्यः क्षत्रिया अल्पज्ञानिनः, क्षत्रियेभ्यो वैश्याः, वैश्येभ्यश्च शूद्रा अज्ञानिन इति। इत्येवं स्वीक्रियते त्वया ?

वामा। अथ किम् ? अत्र कः सन्देहः ?

शिवः। इदानीं भवता दर्शितं ब्राह्मणादीनामशौचे तारतम्य कारणं निबोध।

अशौचन्तु वैदिककर्मप्रतिबन्धो आत्मगतः संस्कारविशेषः। तत्र च पित्रादिबन्धूनां निधने पुत्रादीनां जनने वा आत्मनो विकृति-भाव एव प्रतिबन्धकः। पित्रादिमरणशोकेनात्मा विकृतायते, पुत्रादिजनने तु हर्षेणात्मा अभिभूयते, उभयथापि आत्मा स्वस्थो

न भवति। एवञ्चेत् विकृतात्मना तु अनुष्ठितं श्रौतं कर्म्म न सम्यक् सिद्ध्यति। अतएव ज्ञानिनाञ्च ब्राह्मणानां दशभिर्दिनैः ततोऽल्पज्ञानिनां क्षत्रियाणां द्वादशभिर्दिनैः ततोऽल्पज्ञानिनां वैश्यानां पञ्चदशभिर्दिनैः अज्ञानिनान्तु शूद्राणां मासेन हर्षशोकौ मन्दौ भवतः। ततश्चात्मनो वैकृत्ये हर्षशोकनिमित्ते अपगते ते स्वस्थात्मानः श्रौतकर्म्मसु प्रभवन्ति। एतदेव ब्राह्मणादीनामशौचे तारतम्यविधानकारणम्। तदपि प्रायः सम्भवपरतया कथञ्चित् नियमविधिना नियन्त्रितम्। अन्यथा विशृङ्खलतया धर्मो विपर्य्येत।

एवं सर्वस्मिन्नेव विशेषधर्मे सूक्ष्मतरं कारणं वर्त्तते युक्तिश्च, सर्वत्र तदुद्घाटनं दुष्करं ऋजुधियां दुरधिगमञ्च, परन्तु मुनयो अवितथवादिन इति तद्वचनं शिरोभिर्राभवाह्यम् इति।

अतो ब्राह्मणादिवर्णभेदात् शौचाशौचादिधर्मैः नित्यनैमित्तिकप्रायश्चित्तादिभिश्च संसेव्यमानैः क्रमशः बुद्धेस्तमोऽभिभवति, बुद्धितमोऽभिभवाच्च सात्त्विकभावः समुद्रिक्ति। सात्त्विकभावसमुद्रेकाच्च तस्य साधोश्चेतसि धृतिः क्षमा, दमः अस्तेयं शौचं, इन्द्रियनिग्रहः, ज्ञानं, विद्या, सत्यम्, अक्रोधश्च समुपजायमानः प्रज्ञां विशारदी करोति अविवेकस्तिरो भवति, विवेकश्च उदेति, ततश्च ब्रह्मात्मैकत्वज्ञानात्, प्रकृतिपुरुषयोर्भेदावधारणाच्च जीवन्मुक्तो भवति लभते च ब्रह्मत्वं पिण्डपातात्। तथा च श्रुतिः।

"ब्रह्मविद् ब्रह्मैव भवति"।

तथा च पतञ्जलिः।

"तदा द्रष्टुः स्वरूपेणावस्थानम्"।　　　　( क्रमशः )

---

## तत्त्वप्रपञ्चः।

(पूर्वप्रकाशितात् परः)

सा च प्रकृतिः सर्वकारणकारणम् स्वयमकारणा, नित्या, सर्वव्यापिनी महदादिरूपेण कार्य्येण सर्वमेव व्याप्नोति, परि-

स्पन्दादिलक्षणक्रियारहिता, एका, सर्वाश्रयः, अलिङ्गं, निरवयवा, स्वतन्त्रा च। तथाच सांख्यकारिका।

"हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्।
सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्॥" (१०)

तथाच तत्त्वकौमुदी।

"अहेतुमन्नित्यं व्यापि, निष्क्रियं, । यद्यप्यव्यक्तस्यास्ति परिणाम लक्षणा क्रिया तथापि परिस्पन्दो नास्ति। एवमनाश्रितमलिङ्गमनवयवं स्वतन्त्रमव्यक्तम्॥"

सा च प्रकृतिः त्रिगुणमयी, अविवेकिनी, विषयः, सामान्या, अचेतना, प्रसवधर्मिणी। तथाच सांख्य कारिका।

"त्रिगुणमविवेकि विषयः सामान्यमचेतनं प्रसवधर्मि।
व्यक्तं तथा प्रधानं तद्विपरीतस्तथा च पुमान्॥" (११)

प्रकृतिस्त्रिगुणमयीत्युक्तं तत्र किं तत्त्रिगुणम्? किं वा तल्लक्षणम्? किं वास्य प्रयोजनं का वा तस्य त्रिगुणस्य क्रिया? तत् कथ्यते—यस्य गुणत्रयस्य साम्यावस्था प्रकृतिः तत् सत्त्वं रजस्तमश्चेति गुणत्रयम्, तत्र सुखात्मकं सत्त्वं, दुःखात्मकं रजः, मोहात्मकञ्च तमः।

सत्त्वस्य प्रयोजनं प्रकाशः, रजसः प्रयोजनम् चालनं, तमसः प्रयोजनं नियमनं। परिचालकं रजः लघु सत्त्वं सर्वत्र चालयितुं यतते, किन्तु गुरुभारेण तमसा आक्रम्य नियम्यते। तमो नियमनन्तु क्वचिदेव।

तथाहि—कश्चिद्विद्यार्थी न कथं सर्वमेव विषयं बुध्यते? कथं वा गुरूपदेशमपेक्षते? रजस्तु चालकं लघु सत्त्वं सर्वत्र चालयिष्यति, सत्यं किन्तु रजश्चालकतया सर्वस्मिन्नेवार्थे लघु सत्त्वं प्रेरयति, सत्त्वञ्च प्रकाशभावेन सर्व एवार्थो बुद्ध्या विषयीक्रियते, किन्तु गुरुभारन्तु तमः अन्धकाररूपेण लघु सत्त्वमवष्टभ्य नियम्य आप्नोति। ततश्च सत्त्वप्रकाशाभावात् विद्यार्थी सर्वमर्थं न बुध्यते, आचार्योपदेशरूपेण च वायुना सत्त्वाग्निरुज्ज्वलति उज्ज्वलितञ्च सत्त्वं तमोऽभिभवति तदोपदिष्टं विषयं बुध्यते सः।

## वर्णे पादस्पर्शनिषेधः ।

अकिञ्चित्करवस्तुज्ञानेन अकारादि वर्णोपरि पदप्रक्षेपात् कोऽपि दोषो न भवेत् इति। श्रीआनन्दचन्द्रविद्यारत्न एवं व्यवस्था मदात्।

तत्र साक्षी श्रीरामकृष्णपाठकः। श्रीयदुनाथचक्रवर्त्ती च।

तत्र श्रीविश्वेश्वरभागवतशिरोमणेः प्रतिवादोऽयम्।

अकारादि-पञ्चाशद्वर्णानां शब्दब्रह्मस्वरूपतया शिवशक्तितया सर्वेषां पूज्यतया च देवप्रतिमादिवत् तेषु पदप्रक्षेपादिना गुरुतर-पातकं तज्जन्यनरकभोगादिरवश्यं भवतीति विदां मतम्।

तथाच कङ्कालमालिनीतन्त्रे प्रथमपटले—

"शब्दब्रह्मस्वरूपं तदादि चान्तं जगत् प्रभु इति।"

अन्यच्च तत्रैव—

"अकारादिक्षकारान्ता वर्णास्तु शिवशक्तयः।

पञ्चाशच्च इमे वर्णा ब्रह्मरूपाः सनातनाः॥" इति।

अपरञ्च तत्रैव पञ्चमपटले—

"इति ते कथितं भद्रे पञ्चाशद्वर्णपूजनम्।

वर्णानां पूजनाद्भद्रे देवपूजा प्रजायते।

अणिमाद्यष्टसिद्धीनां पूजा स्याद्वर्णपूजनात्।

सप्तकोटिमहाविद्या उपविद्या तथैव च।

श्रीविष्णुकोटिमन्त्रश्च कोटिमन्त्रः शिवस्य च।

पूजनात् पूजितं सर्वं वर्णानां सिद्धिदायकमिति॥"

कामधेनुतन्त्रे च—

"वर्णज्ञानं यदा नास्ति किन्तस्य जपपूजनैः।

मम कण्ठे स्थितं बीजं पञ्चाशद्वर्णमद्भुतम्।

पञ्चाशन्मातृकां देवीं महाविद्यामयीं तथा।

सर्ववर्णमयीं देवीं सर्वदेवमयीं पराम्।

अकारादिक्षकारान्ता मातृका बीजरूपिणी।

विसर्गश्चैव बिन्दुश्च चिच्छक्तिर्ह्यविग्रहः।

वर्णात्तु जायते ब्रह्मा तथा विष्णुः प्रजायते।

रुद्रश्च जायते देवि जगत्संहारकारकः ।
मम कण्ठस्थिता या सा सारदा वामलोचना ।
तस्या गर्भस्थिता देवि बीजानि विविधानि च ।
विधृत्य कण्ठदेशे तु शिवोऽहं कमलानने ।
शृणु तत्त्व मकारस्य अतिगोप्यं वरानने ।
पञ्चदेवमयं वर्णं शक्तित्रयसमन्वितम् ।
निर्गुणं त्रिगुणोपेतं स्वयं कैवल्यमूर्त्तिमान् ।
बिन्दुतत्त्वमयं वर्णं स्वयं प्रकृतिरूपिणीति ॥"

तत्रैव द्वितीयपटले—

"अकारं परमाश्चर्यं शङ्खज्योतिर्मयं प्रिये ।
ब्रह्मविष्णुमयं वर्णं तथा रुद्रः स्वयं प्रिये ॥"

इत्यादिना सर्वेषां वर्णानामेव ब्रह्मविष्णुमहेश्वरादिदेवतामयत्वं प्रकटितम्, एतत् सर्वं कामधेनुतन्त्रे द्वितीय-तृतीय-चतुर्थ-पञ्चम-षष्ठपटलेऽनुसन्धेयम् । सारदातीलके च—

त्रिधामजननी देवी शब्दब्रह्मस्वरूपिणी ।
द्विचत्वारिंशवर्णात्मपञ्चाशद्वर्णरूपिणी ॥

पञ्चाशद्वर्णमयी मातृकामयीति राघवभट्टः ।

पदार्थादर्शे सारदातिलके च—

"इच्छाज्ञानक्रियात्मासौ तेजोरूपा गुणात्मिका ।
क्रमेणानेन सृजति कुण्डली वर्णमालिकाम् ।
पञ्चाशद्वारगुणिका पञ्चाशद्वर्णमालिका ।
सूते तद्वर्णतोऽभिन्नन् कलारुद्रादिकाः क्रमात् ॥" इति ।

आदिपदेन अकारादिपञ्चाशद्वर्णस्वरूपाः पञ्चाशत्कामाः पञ्चाशत् कामशक्तयः पञ्चाशद्गणेशाः पञ्चाशद्गणेशशक्तयः पञ्चाशत् क्षेत्रपालाः पञ्चाशद्विष्णवः पञ्चाशद्विष्णुशक्तयः पञ्चाशद्रुद्राः पञ्चाशद्रुद्रशक्तयोऽपि बोध्याः । एते तु प्रपञ्चसारे ज्ञातव्याः ।

दीक्षादौ पञ्चाशद्वर्णध्यानपूजादिकं विना सर्वं निष्फलं भवतीति

ब्रह्मचर्य्यम् ।

(१८१६ खृष्टीय [illegible]

ते तमर्थमपृच्छन्त देवानागतमन्यवः ।

देवाश्चैतान् समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥१५२॥

152. They, moved with resentment, asked the gods concerning that matter, and the gods, having assembled, answered, 'The child has addressed you properly'.

अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।

अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥ १५३ ॥

153. 'For (a man) destitute of (sacred) knowledge is indeed a child, and he who teaches him the Veda is his father; for (the sages) have always said "child" to an ignorant man, and "father" to a teacher of the Veda'.

न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।

ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥ १५४ ॥

154. Neither through years, nor through white (hairs), nor through wealth, nor through (powerful) kinsmen (comes greatness). The sages have made this law, 'He who has learnt the Veda together with the Angas (Anukana) is (considered) great by us'.

विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणान्तु वीर्य्यतः ।

वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥ १५५ ॥

155. The seniority of Brahmanas is from (sacred)

knowledge, that of Kshatriyas from valour, that of Vaisyas from wealth in grain (and other goods), but that of Sudras alone from age.

न तेन वृद्धो भवति येनास्य पलितं शिरः।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः॥ १५६॥

156. A man is not therefore (considered) venerable because his head is gray; him who, though young, has learned the Veda, the gods consider to be venerable.

यथा काष्ठमयो हस्ती यथा चर्म्ममयो मृगः।
यश्च विप्रोऽनधीयानस्त्रयस्ते नाम बिभ्रति॥ १५७॥

157. As an elephant made of wood, as an antelope made of leather, such is an unlearned Brahmana; those three have nothing but the names (of their kind),

यथा षण्डोऽफलः स्त्रीषु यथा गौर्गवि चाफला।
यथा चाज्ञेऽफलं दानं तथा विप्रोऽनृचोऽफलः॥ १५८॥

158. As a eunuch is unproductive with women, as a cow with a cow is unprolific, and as a gift made to an ignorant man yields no reward, even so is a Brahmana useless, who (does) not (know) the Rikas.

अहिंसयैव भूतानां कार्य्यं श्रेयोऽनुशासनम्।
वाक् चैव मधुरा श्लक्ष्णा प्रयोज्या धर्म्ममिच्छता॥ १५९॥

159. Created beings must be instructed in (what concerns) their welfare without giving them pain, and sweet and gentle speech must be used by (a teacher) who desires (to abide by) the sacred law.

यस्य वाङ्मनसे शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥ १६० ॥

160· He, forsooth, whose speech and thoughts are pure and ever perfectly guarded, gains the whole reward which is conferred by the Vedanta·

नारुन्तुदः स्यादार्त्तोऽपि न परद्रोहकर्म्मधीः ।
ययास्योद्विजते वाचा नालोक्यां तामुदीरयेत् ॥ १६१ ॥

161. Let him not, even though in pain, (speak words) cutting (others) to the quick ; let him not injure others in thought or deed ; let him not utter speeches which make (others) afraid of him, since that will prevent him from gaining heaven.

सम्मानाद्ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ १६२ ॥

162. A Brahmana should always fear homage as if it were poison; and constanly desire (to suffer) scorn as (he would long for) nectar.

सुखं ह्यवमतः शेते सुखञ्च प्रति बुध्यते ।
सुखञ्चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ १३३ ॥

163. For he who is scorned (nevertheless may) sleep with an easy mind, awake with an easy mind, and with an easy mind walk here among men ; but the scorner utterly perishes.

अनेन क्रमयोगेण संस्कृतात्मा द्विजः शनैः ।
गुरौ वसन् सञ्चिनुयाद्ब्रह्माधिगमिकं तपः ॥ १६४ ॥

I64. A twice-born man who has been sanctified by the (employment of) the means, (described above)

in due order, shall gradually and cumulatively perform the various austerities prescribed for (those who) study the Veda.

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः ।

वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ॥ १६५ ॥

165. An Aryan must stuby the whole Veda together with the Rahasyas, performing at the same time various kinds of austerities and the vows prescribed by the rules (of the Veda).

वेदमेव सदाभ्यस्येत्तपस्तप्स्यन्द्विजोत्तमः ।

वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते ॥१६६॥

166. Let a Brahmana who desires to perform austerities, constantly repeat the Veda; for the study of the Veda is declared (to be) in this world the highest austerity for a Brahmana.

आहैव स नखाग्रेभ्यः परमं तप्यते तपः ।

यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् ॥ १६७ ॥

167. Verily, that twice-born man performs the highest austerity up to the extremities of his nails, who, though wearing a garland, daily recites the Veda in private to the utmost of his ability.

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम् ।

स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ १६८ ॥

168. A twice-born man who, not having studied the Veda, applies himself to other (and worldly study), soon falls, even while living, to the condition of a Sudra and his descendants (after him.)

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।
मायाबलन्यते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

प्राकर्षति त्वं परभिन्नतयैकतोऽन्यान् सङ्केसुभिः प्रियजनैर्भृतिकांश्च तव ।
अवं कियत्क्षणमतोऽधिगतांस्त्रिशङ्कोः कर्मस्वभाव किल कार्त्तिक आगतोऽसौ ।

## उद्भटश्लोकाः ।

"पृथ्वी तावदियं महत्सु महती तद्वेष्टनं वारिधिः
पीतोऽसौ कलसोद्भवेन मुनिना स व्योम्नि खद्योतवत् ।
तद्विष्णोर्दनुजारिनाथमथने पूर्णं पदं नाभवत्
तद्देवो वसति त्वदीयहृदये त्वत्तो महान् नापरः ॥२२८॥ (१)
"अहो विधातः शिशुता तवैव अकारणं दीषि चकार यस्मात् ।
चक्षुः प्रशस्तं विपिने मृगाणां दाताधनो वित्तमदातुरेव ॥" २२९ ॥ (२)
"गन्धः सुवर्णे फलमिक्षुदण्डे नाकारि पुष्पं खलु चन्दनेऽपि ।
विद्यानुरागी न च दीर्घजीवी धातुःपुरे कापि न युक्तिरासीत्' ॥२३०॥
"आतरखाधवहेतोर्मुरहर ! तरणीं तवावलम्बे ।
अपणं पणमिह कुरुषे नाविकपुरुषे न विश्वासः ॥' २३१ ॥ (३)

(१) विष्णोर्वामनस्य । दनुजारिनाथमथने वलिदमने ।

(२) दाता अधनः दरिद्रः । अत्र नीचैस्तनमित्यपि पठन्ति ।

(३) आतरस्तरणमूल्यम् । अपणं पणायोग्यं रत्नो मेलनाकिमद ।

# शिवाष्टकम् ।

शीतांशुशुभ्रकलया कलितोत्तमाङ्गं
ध्यानाश्रितं धरणिभृत्तनयार्चितं तम् ।
कालानलोपमहलाहलकृष्णकण्ठं
विश्वेश्वरं कलिमलापहरं नमामि ॥ १ ॥

गायन्ति यस्य चरितानि महाद्भुतानि
पद्मोद्भवोद्भवमुखाः सततं मुनीन्द्राः ।
ध्यायन्ति यं यमिनमिन्दुकलावतंसं
सन्तः समाधिनिरतास्तमहं नमामि ॥ २ ॥

त्रैलोक्यमेतदखिलं ससुरासुरञ्च
भस्मीभवेद्यदि न यो दययार्द्रदेहः ।
पीत्वाऽहरद्गरलमाशु भयं तदुत्थं
विश्वावनैकनिरताय नमोऽस्तु तस्मै ॥ ३ ॥

पापप्रसाधनरता दितिजा अपीन्द्रं
सद्यो विजित्य सुरधामधराधिपत्यम् ।
यस्य प्रसादबललेशवशादवापुः
तस्मै नमोऽस्तु विनतिः परमेश्वराय ॥ ४ ॥

नो शक्यमुग्रतपसाऽपि युगान्तरेण
प्राप्तुं यदन्यसुरपुङ्गवतस्तदेव ।
भक्त्या सकृन्नततयैव सदा ददाति
यो, नौमि नम्रशिरसा च तमाशुतोषम् ॥५॥

भूतिप्रियोऽपि वितरत्यनिशं विभूतिं
भक्ताय, यः फणिगणानपि धारयन् सन् ।
हन्ति प्रचण्डभवभीमभुजङ्गभीतिं
तस्मै नमोऽस्तु सततं मम शङ्कराय ॥ ६ ॥

येषां भयेन विबुधा रजनीचराणां
नो तस्थुर्हिममहीध्रगुहान्तराणि ।
हत्वा ददौ समिति तानपि मोक्षधाम
त्वत्तः परोऽस्ति परमेश्वर ! को दयालुः ॥ ७ ॥
अर्चा कृता न च जजाप कदापि नाम
नो भक्तवत्सल ! कृतं तव किञ्चिदन्यत् ।
वीक्ष्य स्वपादकमलोपनतं तथापि
मां पाहि कारुणिकमौलिमणे महेश ॥ ८ ॥
महावीरप्रसादो यो द्विवेदिकुलसम्भवः ।
स भक्त्या परया युक्तश्चकारेदं शिवाष्टकम् ॥९॥
द्विवेदिनो महावीरप्रसादस्य (झांसी)

---

## दशापरिणतिः ।

### द्वितीयभागः ।

कुवेरचन्द्रस्तु चिराय तं प्रतीक्षमाणोऽपि तमनागतमवेक्ष्य याव-द्दिष्टपरिणतिं विचिन्तयति तावदेव परिस्फुरच्चञ्चलकां काञ्चन कृपामिव मूर्त्तिं परिमृश्य नावमद्राक्षीत् । स्वयन्तु दिगम्बरो नौखेभ्य आत्मानं गोपयितुमियेष दीर्घमुष्णं च निशश्वास विषसाद च विलोक्यात्मनोऽवस्थाम् ।

अथ क्रमेण तीरमुपगतायां तरण्यां निःक्षिप्तकाष्ठकुद्दालैश्च नियामकैर्नियमितायां तत्रस्थाः केऽपि महाशया अवतीर्य यत्रैव निलीयात्मानं स्थितः कुवेरचन्द्रस्तत्रैव दिष्ट्या समाजग्मुः । कुवेर-चन्द्रस्तु अधिकाधिकं लज्जते । ते तु तं गम्भीराकारानुमेयं महा-भाग्यं विपरीतभाग्यतया निमज्जन्तमिव दुःखाब्धौ सम्यगवलोक्य

दयमाना महार्हाणि स्ववसनानि प्रादासिषुरवादिषुश्च महाभाग ! को भवान् कथं चेयं तवावस्थेति। सोऽपि निःशेषमात्मनो वृत्तमक-थयत्, तदाकर्ण्य विषसेषु प्रयातेषु च तेषु वसनलाभमपि शुभो-दर्कमेव तर्कयन् श्रुत्वागतमेव नगरं जगाम। तत्र च कस्यचिन्महा-भागस्य विपणौ लेखकीभूय स्थितः। कुवेरचन्द्रसंसर्गाच्च तस्य वणिजो लाभोऽत्यधिकमुत्पद्यते स्म। तेन स श्रेष्ठी कुवेरचन्द्रे प्रतिदिनमधिकाधिकां प्रीतिमकार्षीत्। अथ गच्छता कालेन स सकलेष्वपि नगरेषु महीयसीं प्रसिद्धिमुपगतः सर्वेऽपि तस्मिन्नयं प्रामाणिक इति बाढं विश्वस्तः।

अथैकदा कुवेरचन्द्रः प्राभातिकं विधिं निर्वर्त्तयितुं सरित्पतेः तीरमुपगतः परिपूर्णनाव्यां भव्यां काञ्चन काव्यां नावमद्राक्षीत्। सा यावत्तीरमभ्युपैति तावदेव तत्रत्याः पोतवणिजः "भो! विक्री-यतामिदं नाव्यमग्निममूल्येन" इत्युच्चैरुदघोषयन्। तदाकर्ण्य कुवेरचन्द्रः सपदि तत्सकाशमागत्य नाव्यस्य मूल्यमप्राक्षीत्। तत-स्तैर्दशसहस्रमुद्रिका इत्युक्ते सांयात्रिककलाप्रवीणः कुवेरचन्द्रस्तत्र निश्चितमात्मनो लाभं विभावयन् सानन्दं तदभ्युपागच्छत् प्रायच्छच्च सत्यङ्कारम्। एवं वृत्ते तत्रागता अन्येऽपि व्यवहारिणः कुवेरचन्द्रं सानुनयाभ्यर्थयामासुः "महाशय! वयं ते पञ्चदशसहस्रमुद्रिकाः प्रयच्छामो दीयतामितन्नाव्यमस्मभ्यम्" इति। स त्ववोचत दास्यामि यदि दीयन्ते विंशतिसहस्रमुद्रिका इति तैरपि तथेत्यङ्गीकृते गृहीतविंशतिसहस्रमुद्रिको नौस्थपोतवणिग्भ्यो नाव्यमूल्यं दश-सहस्रमुद्रा वितीर्य गृहीतदशसहस्रमुद्रः स्वस्वामिनो मन्दिरमुपा-गच्छत्। तदवलोक्य सकौतूहलः स्वामी पप्रच्छ भोः कुत इदन्ते द्रव्यमिति सोऽपि समग्रमात्मनो वृत्तान्तमाचष्ट। ततः सञ्जातानन्दः स्वामी स्वकन्याया अनुरूपं तमेव वरं मन्यमानः कुवेरचन्द्रेण स्वात्मजां मारमञ्जरीं नामान्वर्थनामिकां पर्य्यणाययत्। अभाषत च

"महाशय ! न मे वर्त्तते पुत्रः किन्तु कन्यैवेयमेकाकिनी जीवित-सर्वस्वा दिष्ट्या च सकलकलाप्रवीणो भवानेवास्या वरः सम्पन्नः लब्धरूपयेयं जीवितनिर्विशेषं परिपाल्यताम्। किञ्च येयमेतावती मे सम्पत् सेयं भवत एवाशेषा तदेतस्मिन्नेव मन्दिरे सभार्य्येण भवता स्थीयताम्" इति। सोऽपि सानन्दं महानयं प्रसाद इति मत्वा तत्रैवावात्सीत्। गच्छता कालेन च कुबेरचन्द्रस्य भार्य्या ऋतुमती बभूव। कालेन समाभिश्च पुत्रं प्रासोष्ट। एवं सन्तीर्णापदर्णवः पूर्वाभ्यधिकां सम्पदमुपगतः कुबेरचन्द्रः कदाचिदान्दोलिकायामुप-विष्टः "अस्ति कश्चित काष्ठजिघृक्षुः" इत्युच्चैः शब्दमशृणोत् मेने च चिरपरिचित एवायं ध्वनिरिति। ततो भृत्यमाहूय आह्वयतां काष्ठ-विक्रेतेत्यब्रूत। तेन चाहूते स्वस्वामिवञ्चनपातकभारमिव काष्ठभारं स्वशिरसि निदधानमागच्छन्तमात्मनो भूतपूर्वं भृत्यमेवापश्यत्। अवादीच्च सप्रणयगद्गदम् अयि जीवितनिर्विशेष चित्तानन्द! कुत इयं तवावस्थेति सोऽपि सापत्रपः सर्वमप्यात्मनो वृत्तं यथावदभिधाय क्षमामयाचत। कुबेरचन्द्रोऽपि महाशयः क्षान्तापराधः तं पर्य्य-पालयत् चिराय च सुखमनुभवन्नुवास।

इति दशापरिणतौ द्वितीयो भागः।

समाप्तश्चायं प्रबन्धः।

राशिवडे करोपाह्वस्य।

अप्पाशास्त्रिणः (कोल्हापुर)

---

## (दशा-सादृश्यम्)

कथं विषण्णोऽसि मलीमसास्यो ? विलोक्यसे दुःखकराक्रान्तचित्तः।
कथन्नु वा त्वं ? तव कोऽप्यभावो न दृश्यते चिन्तयताऽपि दूरम्॥ १॥

सौधे सश्वार्द्रे शयने स्थितस्य यूनोऽस्य दासैरभिषेवितस्य ।
अवस्थया स्वां विषमामवस्थां समाश्रितः सन् परिभासि किं त्वम् ? ॥२॥
पुनः पुनश्चिन्तयतापि नैव समीक्ष्यते कश्चन रम्यभोग्यः ।
धरासनात्त्वत् रजनीशशुभ्रसौधस्थितस्यापि ध्रुवं महार्घः ॥ ३ ॥
अस्यैकगम्यो रथ एकवर्त्मा सौमाभिभूत स्तव कल्पनैव ।
अनन्तवर्त्मा बहुगम्यदेशो रथोपसीमा सततं प्रयाति ॥ ४ ॥
निपीय धात्र्या ननु वत्सलायाः स्तन्यं युवासौ ववृधे चिरेण ।
क्रोड़े प्रकृत्या रुचिरे सुखेन साध्यै रुपायै रुपचीयसे त्वम् ॥ ५ ॥
असौ नवं शास्त्रमधीत्य यद् यत् ज्ञानं समापद्यत नैव नैव ।
विजानतस्ते खलु विश्वशास्त्रं ज्ञानस्य पूर्णस्य तुलां तदाप ॥ ६ ॥
उत्पद्यमाना व्यजनात्कथञ्चिदमुं पुरस्तात् परितर्पयन्ति ।
धीराः समीराः सततं भवन्तं विचुम्बिताम्भोज सरित्तरङ्गाः ॥ ७ ॥
उत्तुङ्ग मातङ्ग ममुं तुरङ्गमारुह्य यूनेह समुत्पथेन ।
वभ्रम्यते किन्तु सदध्वनैव त्वया सुखेनोद्यतरं विवेकं ॥ ८ ॥
विचित्र चित्रालय एष सौधो विनिर्ममे शिल्पिभिरस्य भोग्यः ।
शिल्पिप्रधानेन परन्त्वदर्थं गुहागृहं प्राकृतचित्ररम्यम् ॥ ९ ॥
न याचकान्नानलतो न चौरात् सपत्नजातादपि नो बिभेषि ।
त्वं, किन्त्वयं क्षुभ्यति नित्यमेभ्यो वतागमिष्यद्भयमीक्षमाणः ॥ १० ॥
स्वप्नेऽप्ययं वित्तमपेक्षमाणो नापद्यते प्रीतिसुखं कदाचित् ।
समीक्ष्यसे त्वं न कथञ्चनापि शान्तेरभावेन विनष्टलिप्सः ॥ ११ ॥
धनस्पृहोपप्लुतशान्तचित्तः पुत्रो यथा कामयते वियोगम् ।
अमुष्यः हिंसाप्रवणस्तथा ते धरासपत्नोऽपि न हीनशत्रोः ॥ १२ ॥
युवानमेनं प्रतिभाप्रधानं स्तौतीव विज्ञः प्रतिभा-मनोज्ञम् ।
चरित्रवन्तं सततं भवन्तं शास्त्रानभिज्ञोऽपि सदानुकुर्य्यात् ॥ १३ ॥
अस्य प्रदीपाः किल तैलपूराः सौधस्थितं वस्तु विकाशयन्ति ।
भवद्गृहान्योषधि-यामिनीश ज्योतिर्भिरेव स्फुटमाविभाति ॥ १४ ॥

भीत्या ह्रिया भाविमहोपकारप्राप्त्याशयाप्येन मही श्रयन्ति ।
देहेन; किन्तु त्वयि सर्व एव वध्नन्ति भक्तिं मनसापि काम्ये ॥ १५ ॥
केका मयूरस्य विहङ्गनादानीयद्विदिक्षम्यं कुसुमाक्तदल्लराः ।
श्रुत्वा समीक्ष्यापि यथा सुखी स्याः नासौ तथा स्त्रीजनगीतनृत्यैः ॥१६॥
पुत्रायमाना विहगा निरीहा मृगा मयूराश्च सदा भवन्तम् ।
सन्तोषयन्तीह यथा तथैनमभ्यागताः स्वार्थ निरुद्ध नेत्राः ॥ १७ ॥
नीलानि पत्राणि समुज्ज्वलन्ति नीरन्ध्रसुस्निग्धरसायनानि ।
यथातपेभ्यः परिरक्ष्य शान्तिं ददात्यहो नामलमातपत्रम् ॥ १८ ॥
सुधांशुकान्तादि विभूषितेऽयं सस्त्रीजनेऽस्मिन् रमते सुखेन ।
सपुष्प-गुञ्जन्-मधुप-हिलालिलतावलो मण्डितमण्डपे त्वम् ॥ १९ ॥
आराम मन्तर्धृत रत्नशाखि-लतं युवायं स्मयमान आस्ते ।
पश्यन्, भवान् नित्यमरण्यमेतत् नीरन्ध्रपुष्पावलिवल्लरीकं ॥ २० ॥
बालैः सदामोदकरैर्नवीनैः क्रीड़त्यसावस्फुट चारु वाग्भिः ।
भवानपत्यैर्ननु दुग्धपोष्यैः कुरङ्ग-मातङ्ग-पतङ्गकानाम् ॥ २१ ॥
एकान्तविस्रब्धमभीत्यसाचैर्मृगैर्मयूरैर्विहगैर्हिजैश्च ।
प्रमोदकृद्भिः स्वजनैश्च नित्यं भवानसौ साध्वनुगम्यमानः ॥ ॥२२॥
समीरणापूरितरन्ध्रकाणां सुखस्वनानां किल कीचकानाम् ।
वीणा विशेषस्य च रम्यनादं श्रुत्वा भवाने प च कौतुकी स्यात् ॥२३॥
मध्यन्दिनार्कप्रतिमः प्रजानां देहानयं साध्वसकातराणाम् ।
क्रान्ता परेषामपि मानसानि भवान् शरच्चन्द्रनिभो विभाति ॥२४॥
स्थिरायमाणे मलवर्ज्जिते च सद्दर्पणेऽसौ प्रतिबिम्बितः स्यात् ।
ज्योतिर्वलेनैव, भवान् मनुष्यचित्तेऽन्धकारेष्वपि भक्तिपात्रम् ॥२५॥
सुस्वादुभोज्यं मधुरं सुपेयं ददात्यमुष्मै ननु सूपकारः ।
स्वभावजं किञ्चन वस्तुजातं सुधोपमं ते प्रकृतिः शरण्या ॥ २६ ॥
सुखासनं शारदपार्वणेन्दु-शुभ्रांशु-सङ्काशमलङ्करोति ।
अयं, भवान् लोहित-शुक्ल-नील-दुर्वा प्रवालाञ्चितमद्भुतं तत् ॥ २७ ॥

प्रीतिप्रदं सुन्दरचित्रचित्रं चन्द्रातपं पश्यति सस्पृहोऽयम्।
पूर्णेन्दुनक्षत्रविचित्रितं त्वं नीलाम्बरं प्राकृतरम्यमेव ॥ २८ ॥
अमन्दमन्दाशन-खिन्नदेहमेकाकिनं त्वामिव मृत्युरेनम्।
स-शस्त्र सैन्यावृत मिष्टभोज्यपुष्टं भुजैराश्रयतीह नित्यम् ॥ २९ ॥
अथानलेनेन्धन-वर्द्धितेन भस्मीभवेत्तेऽस्य च देह एषः।
महत्सु भूतेषु समर्प्य भागं स्वं स्वं ध्रुवं यास्यति लुप्तभावम् ॥ ३० ॥
ततो दशा कस्य नु! कीदृशी स्यादहं न जाने भगवानवैति।
अदृष्ट-कालोदरमध्यवस्तु के मादृशा वेत्तुमहो! विमूढाः ॥ ३१ ॥

( नारायणार्पणमस्तु )

श्रीअन्नदाचरणतर्कचूडामणिः
नोयाखाली—सोमपाड़ा।

---

## सती छाया।

( पूर्वतोऽनुवृत्ता )

अर्द्धघटिकामतीत्य प्रायः प्राप्तचेतना बभूवेन्द्रप्रिया साश्रु-नयना कथयति "ज्ञातवार्त्ता भवत्यः कोऽयं वरः" सूतिकादासी कथयति "को न जानाति मातः! असौ श्यामापणस्यस्य महाराजस्य मनोमोहनरायस्य पुत्रः कुमारो रमणीमोहनः।" श्रुत्वैतदिन्द्रप्रिया रोरुद्यमाना निरागसं बालिकामालोकितुमारब्धवती। तस्यां रात्रौ वारमेकमपि न सा निद्रितवती।

षष्ठाहे आपणिकः।कश्चिद्ब्राह्मणमानिनाय, स च सूतिकाषष्ठीं पूजयित्वा सपुत्रीं प्रसूतिं शान्तिजलेन अभिषिञ्चति। इन्द्रप्रिया तस्मै रूपकपञ्चकं प्रदाय प्रणमति। दत्ताशीश्च ब्राह्मणः प्रहृष्टो निर्ययौ।

दिवावसाने आपणगृहस्य कस्मिंश्चित् प्रकोष्ठे यशोदा वामा च इन्द्रप्रियासन्निधौ उपविशत:। इन्द्रप्रिया सवाष्पनयना कथयति "यशोदे! न ते सेवाया: निष्क्रय: तथापि किञ्चित् गृहाण!" "वामे! त्वमपि भगिनीनिर्विशेषं मां सुश्रूषितवती त्वमपि मदीयस्मरणार्थं किञ्चित् स्वीकुरु" इत्युक्त्वा स्वाङ्गादुन्मुच्य केयूरं यशोदायै वलयञ्च वामायै प्रददाति। यशोदा वामा च तदादातुमनिच्छन्त्यौ अपि तस्या आग्रहेण गृहीत:। इन्द्रप्रिया कथयति काञ्चीं विक्रीय व्ययं निर्वाहितवती, शङ्खवलयमात्रमेव हस्ते मे विराजतु। या तु ग्रीवायां मुक्तामालाद्वयी वर्त्तते तत: एका माला मन्दभागिन्या अस्या: कृते तिष्ठतु, अपरा च व्ययनिर्वाहार्थम्। एतद्वर्जं शिल्पं विधायापि कथञ्चिदर्जितुमर्थं प्रभवामि। यशोदे! त्वम् अयि वामे! त्वञ्च यदि मत्प्रदत्तमलङ्कारं नाग्रहीष्यत् तदा मर्म्माहत दु:खं मामुपतापयिष्यत्। नाहं प्राणानेतानग्रहिष्यं यशोदे! त्वमेव तत्र प्रतिबन्धिका जाता। इदानीं वाटीयमेव मे गृहं युवामेव मे भगिन्यौ। भवत्यौ चेत् सुखिन्यौ तदैवाहं सुखिनी स्याम्। दु:खभागिन्या अस्या बालिकाया अस्मिन् जगति कोऽपि नास्ति, गृहीत्वाप्युच्चै:कुले जन्म नीचैरेवं कोऽपि न भवेत्। पवित्रं जन्म लब्ध्वापि कलङ्कितं नाम कोऽपि न गृह्णाति। अहमिमां यथाशक्ति शिक्षयामि यथाहमिव प्रतारिता न स्यादिति।

यादृशमकलङ्कं सौन्दर्य्यमियं प्राप्तवती तादृशमेव यथा सती नाम रक्षितुं समर्था स्यात्। अनेके संस्कारविशेषेण नाम कुर्वते, किन्तु वीतभाग्याया अस्या: को नाम संस्कारविधिना नाम करिष्यति? अद्याहं तनयाया यन्नामाभिलषामि तत् प्रकाशयाम्यग्रतो वां "सती छाया" इति। यथा छाया सती शान्तिसुखेन जगदाप्यायते, तथैवेयं मे दु:खिनी पवित्रेण चरित्रेण जगत् प्रीणयितुं शक्नुयात्। इन्द्रप्रिया इत्येवं ब्रुवाणा पौन:पुन्येन कन्यावदनं चुम्बति। सिञ्चतीव नयनसलिलेन तनयाङ्गतिम्।

शरदाविरस्ति, एकदा इन्द्रप्रिया सायं क्रोड़मारोप्य कन्यां एकतलच्छदिषि दण्डायमाना तिष्ठति, बालिका च आकाशं दर्शयिष्यति। ज्योतिर्जालं व्योम समाच्छ्रोति। प्रवहमाणस्य शरत्समीरणो जीवकुलमानन्दयति। कलिकातानगरीं लोककोलाहलः पूरयति। चलत्-क्रयिणः (१) तत्तन्नाम चीत्कृत्य क्रेतारमाह्वयन्ति, घोटकशकटवाहिकाः हे हे विलासिनः! हे हे विलासिनः! शकटमिदमारोहतु सर्वस्मात् द्रुतं सुखञ्च नेष्यामि इत्येवं ब्रुवन्तः आरोहकान् किं कर्त्तव्यविमूढ़ान् कुर्वन्ति।

अस्मिन्नेव काले यशोदा दीर्घश्वासं धावन्ती कथयति "अयि इन्द्रप्रिये! तव प्रसूति; भ्राता च अत्रोपतिष्ठते"।

इन्द्रप्रिया शुष्ककण्ठा कथयति कुत्रासाते तौ? यशोदा कथयति "आपणगृहस्य पार्श्वस्थगृहे" इन्द्रप्रिया तूष्णीमश्रूणि पातयति, लज्जया हृदयं वेपते। यशोदा सव्यग्रा कथयति "किं कर्त्तव्यं शीघ्रमुपदिश" इन्द्रप्रिया धीरं कथयति अयि यशोदे! पत्रं लिखितुं सामग्रीमुपहर।

द्रुतपदा सा लेखनसामग्रीमुपस्थापयति। लिखित्वा च पत्रं यशोदाहस्ते समर्प्य पुनः पुनः कन्याननं चुम्बित्वा सदीर्घनिःश्वासं कन्यां यशोदाक्रोड़े समर्प्य कथयति, "याहि यशोदे मातुः समीपम्" यशोदायां व्रजन्त्यां निःशब्दमिन्द्रप्रिया छदिषः अवरोहति।

यशोदा भीतभीता पुरातणप्रभोः सम्मुखीना भवति, नरेन्द्रघोषस्य दृष्टिः यशोदा-क्रोड़स्थबालिकायां निपतति। बालिकायाः कण्ठे मुक्तामाला द्विगुणतरमुद्भासयति बालिकावर्णम्। नरेन्द्रस्तु तां दृष्ट्वा स्नेहार्द्रो भवति। भवति च तच्चक्षुर्जलभारेणाक्रान्तम्। महार्घञ्च हारमालोक्य बालिकाकण्ठे निश्चिकाय नेयं दरिद्रवंशे जन्म जग्राह।

---

(१) शिरसि निधाय क्रय्यं, नाम च क्रय्यस्योच्चैर्गायन् पथ्युपपथे च पर्यटन् यो विक्रीणाति "फिरिवाला" इति यस्य भाषा।

इन्द्रप्रियाया माता उच्चैःकुलाभिमानिनी सरोषा कर्कशमाह अरे अकृतज्ञे ! पापीयसि ! कुलकलङ्किनी सा क्वास्ते ? सा किं कामपि कथामावयोः समीपे न प्रकाशयिष्यति ? अपि सा नीचैर्दशया सुखिनी ? या तां कुपथं परिचालयति सा क्वास्ते ? किं नाम तस्याः ? अपि किं तत् कलङ्किनी न व्यक्तीकरिष्यति ?

यशोदा अश्वत्थपत्रवद्वेपमाना इन्द्रप्रियाप्रदत्तं पत्रं प्रत्यर्पयति। नरेन्द्रघोषस्तु तत् पठितुं प्रवर्त्तते। (पत्रम्)

अयि मातः ! अयि भ्रातः ! कुलकलङ्किनीयं नैव विलोकयितुं वदनं वामभिलषति, अधुनैतत् प्रार्थनीयं चिरदुःखिनीमिमां "सतीछायां" गृहाण, नास्याः कोऽप्यपराधः ? अस्यै साधु शिक्षयतु, यथा न मद्विधा प्रतारिता भवेत्। समधिकं लिखितुं नैव साहसं भजामि, तथापि निश्चयं जानीहि यद्यपि लोकतः कलङ्कं स्पृशामि, तथापि धर्म्मतः कलङ्कं न लभेय। यशोदा किमपि नापराध्यति नार्हत्यतः कमपि दण्डम्। कुलजाप्यहं विनीतापि प्रतारणां लेभे, नीचजातीया अशिक्षिता च सा अवला कथमिव दोषमुपैति। प्रार्थनेयं दुःखिन्या यथा नैव विफलतामेति तथैव व्यवहर्त्तव्यम् इति।

इन्द्रप्रिया-माता कथयति अयि यशोदे ! आद्योपान्तं समस्तञ्च वृत्तान्तं यद्यवितथं ब्रूयास्तदा न लभेथाः शास्तिम्। नो चेत् काराबन्धनं लप्स्यसे।

यशोदा तु बद्धाञ्जलिः मुद्रासहस्रलाभवर्जम् आदितः प्रभृति सर्वमेव वृत्तान्तं यथावत् कथयति। श्रुत्वा च इन्द्रप्रिया-माता यशोदाभाषितं स्तम्भिता तिष्ठति। करुणानिधानः नरेन्द्रस्तु सस्नेहं भागिनेयीं क्रोड़मानीय यशोदामाह "यशोदे ! अत्रागन्तुमिन्द्रप्रियामाह्वय।"

यशोदा द्रुतपदा तामानेतुं गच्छति। इति।

इति तृतीयः परिच्छेदः।

## चतुर्थपरिच्छेदः ।

( यतीन्द्रवाहादुरः )

"आत्मानमादर्शयते पुरोगिरौ, यदा रवीरश्मिमरीचिषान्वितः ।
विभाषयेचाम्बरमम्बुजन्तदा प्रहृष्टचेतो वदनं विकाशयेत् ॥"

तदा शरच्चन्द्रो गगणं सुधया प्लावयति । जनन्यस्तु क्रोड़े निधाय तनयं चन्द्रमसमाह्वयन्त्यूर्द्ध्वहस्ताः, सहर्षीकुर्वन्ति च तनयाननेन, अस्मिंस्तु मधुमये समये इन्द्रप्रिया-माता दुरत्ययां चिन्तामाप्नुवन्ती विषण्णमुखी उपविशति । कृतविलम्बां यशोदामालोक्य नरेन्द्रः सचिन्तश्च उद्विजते । क्षणमतीत्य यशोदा आगत्य सभया विस्मिता च कथयति "इन्द्रप्रिया गृहेनास्तीति पश्यामि ।"

श्रुत्वैतन्माता भ्राता च युगपत् सत्रासमाहतुः तत् किमिति, कथमिति ? यशोदाह "निपुणमनुसन्धायापि न क्वापि इन्द्रप्रियां नावलोकये ।

नरेन्द्रोऽपि सोत्कण्ठः भागिनेयीं यशोदाक्रोड़े समर्प्य कथयति अहमप्येकधा पश्यामि क्वास्ते इन्द्रप्रियेति, किन्तु न कुत्रापि तस्या-दर्शनं लब्ध्वा निराशः प्रतिनिवृत्तश्च सनिर्वेदं मातरमाह "मातः ! सर्व एव क्लेशो विफलीभूतः, कस्या मोचयामि कलङ्कं तैस्तैरुपायैः ? मातः ! वामे विधौ न प्रभवति कोऽपि प्रतिकर्त्तुम्, अन्यथा अस्मिन्नेव सुसमये कथं तस्या बुद्धिर्विपर्य्येति । कथं वात्मनोऽहित-माचरन्ती स्वयमेव स्वपदे कुठारमाहन्ति ।

जुगुप्सया लज्जया च मर्म्मवेदना माता अनुभवन्ती कथयति "अरे नरेन्द्र ! तथाविधकन्यार्थं न पुनरहं दूये न वा कातर्य्य-माश्रये, या खलु पुनः पुनरपमानमेवंविधमसोढ़मिव शूलमनुभाव-

यति, न पुनरिच्छामि तां स्वीकर्त्तुमिति। तर्हि निरागसमिमां कथमिव परिहास्यामि तदेनामादाय स्वगृहं प्रतिगच्छ।

अपिच यदि सा मन्दभागिनी साधु जीवति तदा जीव्यात्, नो चेत् सत्वरमेव भारभूता पृथिव्या अपसरतु शीघ्रम्। नरेन्द्रस्तु यशोदामाह "अत्र कोऽपि इन्द्रप्रियासन्निधौ प्रतिशोध्यम् ऋणं लप्स्यते" यशोदाह "न हीति" श्रुत्वैतत् नरेन्द्रः यशोदामाभाष्य समारुह्य च शकटमेकं समादाय च भागिनेयीं कोननगराभिमुखं प्रतिष्ठति।

मन्दभागिनी छाया सती मातुलालय एव पालिता वर्द्धते। विशेषेण न कोऽपि तां स्निह्यति, वृद्धा च मातामही कदापि न सस्नेहं वीक्षतेऽपि। केवलं मातुलस्यैव नरेन्द्रघोषस्य तस्यां बालिकायां स्नेहपरिपूता दृष्टिः वरीवर्द्धते। यद्यपि कदापि मातामहि! इति सुललितं छायासती संबोधयति तदैव "नरेन्द्रमाता सरोषमाक्रुश्य तां तूष्णीं करोति। नरेन्द्रवनितापि न च स्निह्यति, प्रत्युत तिरस्कर्त्तुमेव सदा पटीयसी यतते।

छाया सती बालिकास्वभावतः कदाचित् हसति रोदिति तूष्णीम्भवति क्रीडति च स्वयम्। स्नेहमयस्तु मातुलः नरेन्द्रः "अयि मातुल! सुमधुरम् इत्याह्वयमानां सतीछायां प्रसार्य्य बाहू क्रोड़ं नयति, स्निह्यति, भक्षयति, स्नपयति शाययति च।

नरेन्द्रघोषस्य वाटीं निकषा माननीयस्य भूम्यधिकारिणः श्रीउमाकान्तवाहादुरस्य भवनम्। स तु अशीतिवर्षवयस्कः पुत्रेण हीनः, एकमेवावलम्बनं जीवनस्य पौत्रः श्रीयतीवाहादुरः। यतीन्द्रस्तु विंशतिवर्षदेश्यः। मूर्त्त्यासौ देवप्रतिकृतिः, कान्त्यासौ दलितहरितालः, गुणा अपि तस्य रूपमेवानुकुर्वते। जितेन्द्रियः सत्यप्रियः मधुरभाषी, परहितैषी च किमधिकं सत्पुरुषोचितास्तावन्त एव गुणास्तस्मिन्नद्रोहं विराजन्ते। यतीन्द्रः पित्रा मात्रा च विहीनः।

बालकमल्पवयस्कं पोषयितुं नास्त्यन्यः केवलं तस्य विधवा मातुलानी उमाकान्तवाहादुरस्य वेश्मनि निवसति, तं पालयति च, न तस्याः पुत्रोऽस्तीति केवलं कन्यैका निर्म्मला नाम शैशवे विवाहिता सुचतुरा च। सैव मन्दभागिन्याश्छायासत्याः सखी।

एकग्रामे सन्निवेशे च परस्परं प्रतिवेशिनां गृहगमनं न दोषाय इति सार्द्धं छायया निर्म्मलाया अतीवसद्भावः।

भागिनेयीं शिक्षयितुं नरेन्द्रः प्राचीनं पण्डितमेकं नियोजयति। साधुतरस्य विदुषो यत्नेन छायासती एकादशवर्षमन्तरेव वङ्गभाषायां लब्धकीर्त्तिः सती संस्कृतमिंरेजीविद्याञ्च आयत्तौ चकार। विविधेन च गुणेन मातुलस्य समधिकं स्नेहमधिकरोति।

एकदा अपराह्ने निर्म्मला निजगृहस्य द्वितलच्छदिषि चित्रकर्म्मणि मनोनिविशमाना सम्मुखीनां छायासतीमाह "अयि सखि! किमिति चन्द्रविडम्बि मुखन्ते विषीदति? किमिति वा पङ्कजदलाचन्ते वाष्पवारिणि प्लवते? एहि सखि! पश्य तावन्मे चित्रकर्म्म विचारय च, दोषश्चेत् क्वापि तदपि बोधय, कथंकारं वा समुचितंचित्रीययै? तदप्युपदिश। दुःखिनी सती छाया किन्तु तूष्णीं रोदितुमारभते। निर्म्मला पुनरप्याह सनिर्बन्धं किमिति सखि! रोदिषि? छाया सती कथयति "अयि सखि! मातुलानी अद्य अतीव तिरस्कारमकरोत्, तस्यास्तु जुगुप्सितेन वचोवाणेन मर्म्मणि विद्धेव क्लेशमनुभवामि।

अस्मिन्नेवावसरे धीरपादसञ्चारं "यतीन्द्रवाहादुरः" तत्र छदिषि उपतिष्ठमानः छायां सतीं रोरुद्यमानामालोक्य ब्रवीति। "अयि सुशीले! किमिति रोदिषि? त्वत्कृते कोनामानार्थो जातः?" निर्म्मला कथयति 'तस्या मातुलानी वृथा इमां भर्त्सितवती।' यतीन्द्रः सस्नेहं पृच्छति कोऽप्यपराधो विदधे भवत्या? छाया वाष्पनिरुद्धकण्ठा कथयति "न मया किमप्यागो विहितं, तथापि मातुलानी

मदीया सदैव मां गर्हितुं प्रयतते; ब्रू ते च सदा सरोषं "कुत्रासीदापङ्कुतेयं ? कुतश्चात्र समापतिता नित्यं नः प्रज्वालयतीव ।" अपि च मातुलश्चेन्मां स्निह्यति तदैव सा द्विगुणं क्रोधेन प्रज्वलति जुगुप्सते च मातुलं । अद्य प्रातः वीणामवीवदं, मातुलस्तदानीमागत्य निशम्य च वीणागीतं शिरसि मे करं वरीवृत्यमानः सस्नेहं कथयति, "मदीया सती छाया गुणैः सरस्वत्याः रूपैश्च रमाया अनुकरोति" श्रुत्वैतन्मातुलानी साक्षेपमाह "वाढ़ं वाढ़ं केवलमियं जननीमनुकर्त्तुञ्चेदिदानीं शक्नुयात् तदैव कृत्यकृत्या भवेत्" मातुलस्तु तन्निशम्य अन्तर्व्यथामापन्नः कथयामास "त्वमिव हिंसाप्रिया न दृष्टचे न च शुश्रुवे, बालिकायामपि हिंसावृत्तिं चरितार्थं करोषि ? उक्त्वैतत् स्थानात्तस्मात् प्रतिजगाम ।" तस्मात्क्षणादुपरि मातुलानी यत्परं नास्ति मां मातरञ्चाक्षिप्य अश्राव्याणि कटूनि च वचनानि ववर्ष ।—अशेषीभूते च वचसि निरर्गलं सा रोदितवती । यतीन्द्रस्तु स्तम्भित इव मन्त्रित इव कीलित इव तस्यामप्यवस्थायां छायासत्याः स्वरस्य वचसश्च सौन्दर्यं दरीदृश्यमानः विस्मयते । दोधूयतीव च तस्याः क्लिष्टवचनेन । निर्म्मला चेलाञ्चलेन तस्या नेत्रे विमृज्य कथयति "सखि किमिति तदर्थं दुःखमनुभवसि ? परं निन्दन्नात्मानमेव निन्दार्हं प्रतिपादयाति निन्दुकः । विशेषतश्च मातुलस्त्वयि अतीव प्रीणाति । जानासि त्वं तव जननीं धर्म्मतस्तेन महात्मना विवाहितामनिन्दितचरित्राञ्च, लोकस्तु यदृच्छं ब्रवीतु तेन का हानिः ? तदर्थमात्मनि क्लेशः स्थापयितुं नोचितः ।

(क्रमशः)

---

# FOR F. A. STUDENTS.

( पूर्वतोऽनुवृत्ताः )

(a) हैयङ्गवीनमादाय घोषवृद्धानुपस्थितान् ।
नामधेयानि पृच्छन्तौ वन्यानां मार्गशाखिनाम् ॥

(b) तस्मै सभ्याः सभार्य्याय गोप्त्रे गुप्ततमेन्द्रियाः ।
अर्हणामर्हते चक्रुर्मुनयो नयचक्षुषे ॥

(c) अथोपनीतं विधिवद्विपश्चितो विनिन्युरेनं गुरवो गुरुप्रियम् ।
अवन्ध्ययत्नाश्च बभूवुरत्र ते क्रिया हि वस्तूपहिता प्रसीदति ॥

(d) वार्षिकं संजहारेन्द्रः धनुर्जैत्रं रघुर्दधौ ।
प्रजार्थसाधने तौ हि पर्य्यायोद्यमविश्रमौ ॥

I (j) आपादितं वंशस्य कृत्यं यस्मिन् तत् ।

(k) श्रु+उस् । शुश्रुवुः । सिषेविरे । शेसुः ।

(l) वृष्ट्यापि विना दवाग्निः शशाम ।

वनं गाहमाने ।

गाहते । गाहेते । गाहन्ते ।

(m) दव+अग्निः+आसीत्+विशेषा ।

II. (a) हैयङ्गवीनं ह्योदो गोदोहोद्भवं घृतम् । "हैयङ्गवीनं संज्ञायाम्" ५।२।२३। इति खञ् ह्यियङ्गादेशश्च । आदाय गृहीत्वा आङ्पूर्वो दाङ् ग्रहणे वर्त्तते । उपस्थितान् समीपे समागतान् घोषवृद्धान् घोषाणां वृद्धाः तान् प्राचीनगोपान् वन्यानां वनजातानां मार्गशाखिनां शाखा एषामस्तीति इनिः मार्गे पथि ये शाखिनस्तेषाम् । शेषे षष्ठी । नामधेयानि किन्नामोऽयं वृक्षः ? इत्येवं पृच्छन्तौ ( जग्मतुरित्यन्वयः ) ।

( b ) सभ्याः सभासु योग्याः गुप्ततमेन्द्रियाः गुप्ततमानि

असत्कर्म्मभ्यो नियन्त्रितानि सुरक्षितानि इन्द्रियाणि यैस्ते । जितेन्द्रियाः मुनयः गोप्तृ रक्षयित्रे सभार्य्याय सह भार्य्यया वर्त्तमानाय अर्हते पूजायोग्याय तस्मै दिलीपाय दिलीपं प्रीणयितुं अत्र तुमर्थे चतुर्थी । अर्हणां पूजां प्रीतिजननक्रियां चक्रुः ।

(c) अथ अनन्तरं विपश्चितः पण्डिताः गुरवः उपनीतं कृतयज्ञोपवीतसंस्कारम् । गुरुप्रियं गुरूणामध्यापकानां प्रियं प्रीतिपात्रम् एनं विधिवत् यथारीति विनिन्युः शिक्षयामासुः । अत्र शिक्षाविधौ ते गुरवः अवन्ध्ययत्नाश्च वा न वन्ध्यः निष्फलः यत्नो येषां ते कृतकृत्या इत्यर्थः । बभूवुः । हि यतः क्रिया कर्म्म वस्तूपहिता वस्तुषु सद्वस्तुषु उपहिता न्यस्ता सती प्रसीदति फलतीत्यर्थः ।

(d) इन्द्रः सुरपतिः वार्षिकं वर्षाकालीनं धनुः संजहार प्रतिसंहृतवान्, तदा ऐन्द्रं धनुर्नाजनि, प्रावृट् निवृत्ता प्रवृत्ता च शरदिति भावः । रघुः ( पुनरध्याहार्य्यम् ) जैत्रं जयत्यनेनेति जयतेः करणे ष्ट्रण् । जयहेतुर्धनुः दधौ जग्राह, प्रवृत्तायां शरदि रघुर्दिग्‌जिगीषया प्रवृत्त इत्यर्थः । प्रजार्थसाधने प्रजानाम् अर्थस्य प्रयोजनस्य साधने निष्पादने तौ स च स च इतीतरेतरद्वन्द्वः, इन्द्ररघू हि यतः पर्य्यायोद्यमविश्रमौ उद्यमश्च विश्रमश्च तौ, पर्य्यायेण क्रमशः उद्यमविश्रमौ ययोस्तौ यदा प्रजानां कृष्यादिप्रयोजनसिद्ध्यर्थम् इन्द्रो वर्षति तदा वर्षन्तौ रघुर्युद्धान्निवृत्तः विश्रमति । यदा च शरदि दुष्टं निर्जेतुं रघुः प्रवर्त्तते तदा इन्द्रो विश्रमति लोकरक्षायै द्वयोरेव तयोस्तुल्यत्वमिति भावः ।

II. Explain fully, in Sanskrit in the form of a Tika :—

( क्रमशः )

# ब्रह्मचर्य्यम् ।

( पूर्वप्रकाशितात्परम् )

मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने ।
तृतीयं यज्ञदीक्षायां द्विजस्य श्रुतिचोदनात् ॥ १६९ ॥

169. According to the injunction of the revealed texts the first birth of an Aryan is from (his natural) mother, the second (happens) on the tying of the girdle of Munga grass, and the third on the initiation to (the performance of) a (Srauta) sacrifice.

तत्र यद्ब्रह्म जन्मास्य मौञ्जीबन्धनचिह्नितम् ।
तत्रास्य माता सावित्री पिता त्वाचार्य्य उच्यते ॥ १७० ॥

170. Among those (three) the birth which is symbolised by the investiture with the girdle of Munga grass, is his birth for the sake of the Veda; they declare that in that (birth) the Savitri (verse) is his mother and the teacher his father.

वेदप्रदानादाचार्य्यं पितरं परिचक्षते ।
न ह्यस्मिन् युज्यते कर्म्म किञ्चिदा मौञ्जि बन्धनात् ॥ १७१ ॥

171. They call the teacher (the pupil's) father because he gives the Veda; for nobody can perform a (sacred) rite before the investiture with the girdle of Munga grass.

नाभिव्याहारयेद्ब्रह्म स्वधा निनयनादृते ।
शूद्रेण हि समस्तावद् यावद्वेदे न जायते ॥ १७२ ॥

172. (He who has not been initiated) should not

pronounce (any) Vedic text excepting (those required for) the performance of funeral rites, since he is on a level with a Sudra before his birth from the Veda.

कृतोपनयनस्यास्य व्रतादेशनमिष्यते।
ब्रह्मणो ग्रहणञ्चैव क्रमेण विधिपूर्वकम्॥ १७३॥

173. The (student) who has been initiated must be instructed in the performance of the vows, and gradually learn the Veda, observing the prescribed rules.

यद् यस्य विहितं चर्म्म यत् सूत्रं या च मेखला।
यो दण्डो यच्च वसनं तत्तदस्य व्रतेष्वपि॥ १७४॥

174. Whatever dress of skin, sacred thread, girdle, staff, and lower garment are prescribed for a (student at the initiation), the like (must again be used) at the (performance of the) vows.

सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्।
संनियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः॥ १७५॥

175. But a student who resides with his teacher must observe the following restrictive rules, duly controlling all his organs, in order to increase his spiritual merit.

नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्।
देवताभ्यर्चनञ्चैव समिदाधानमेव च॥ १७६॥

176 Every day, having bathed, and being purified, he must offer libations of water to the gods, sages

and manes, worship (the images of) the gods, and place fuel on (the sacred fire).

वर्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः।
शुक्तानि यानि सर्वाणि प्राणिनाञ्चैव हिंसनम् ॥ १७७ ॥

177. Let him abstain from honey, meat, perfumes, garlands, substances (used for) flavouring (food), women, all substances turned acid, and from doing injury to living creatures.

अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्।
कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम् ॥ १७८ ॥

178. From anointing (his body), applying collyrium to his eyes, from the use of shoes and of an umbrella (or parasol), from (sensual) desire, anger, covetousness, dancing, singing, and playiug musical instruments),

द्यूतञ्च जनवादञ्च परिवादं तथानृतम्।
स्त्रीणाञ्च प्रेक्षणालम्भमुपघातं परस्य च ॥ १७९ ॥

179. From gambling, idle disputes, backbiting, and lying, from looking at and touching women, and from hurting others.

एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्।
कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः ॥ १८० ॥

180. Let him always sleep alone, let him never waste his manhood; for he who voluntarily wastes his manhood, breaks his vow.

स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः।
स्नात्वार्कमर्च्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्॥ १८१॥

181. A twice-born student, who has involuntarily wasted his manly strength during sleep, must bathe, worship the sun, and afterwards thrice mutter the Rik-verse (which begins), 'Again let my strength return to me.'

उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्।
आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत्॥ १८२॥

182. Let him fetch a pot full of water, flowers, cowdung, earth, and Kusa grass, as much as may be required (by his teacher), and daily go to beg food.

वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु।
ब्रह्मचार्य्याहरेद्भैक्ष्यं गृहिभ्यः प्रयतोऽन्वहम्॥ १८३॥

183. A student, being pure, shall daily bring food from the houses of men who are not deficient in (the knowledge of) the Veda and in (performing sacrifices, and who are famous for (following their lawful) occupations.

गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु।
अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत्॥ १८४॥

184. Let him not beg from the relatives of his teacher, nor from his own or his mother's bloodrelations; but if there are no houses belonging to strangers, let him go to one of those named above, taking the last-named first;

सर्वं वापि चरेत् ग्रामं पूर्वोक्तानामसम्भवे।
नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत् ॥ १८५ ॥

185. Or, if there are no (virtuous men of the kind) mentioned above, he may go to each (house in the) village, being pure and remaining silent; but let him avoid Abhisastas (those accused of mortal sin).

दूरादाहृत्य समिधः सन्निदध्याद्विहायसि।
सायं प्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः ॥ १८६ ॥

186. Having brought sacred fuel from a distance, let him place it anywhere but on the ground, and let him, unwearied, make with it burnt oblations to the sacred fire, both evening anb morning.

अकृत्वा भैक्ष्यचरणमसमिध्य च पावकम्।
अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत् ॥ १८७ ॥

187. He who, without being sick, neglects during seven (successive) days to go out begging, and to offer fuel in the sacred fire, shall perform the penance of an Avakirnin (one who has broken his vow.)

भैक्ष्येण वर्त्तयेन्नित्यं नैकान्नादी भवेद् व्रती।
भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता ॥ १८८ ॥

188. He who performs the vow (of studentship) shall constantly subsist on alms, (but) not eat the food of one (person only); the subsistence of a student on begged food is declared to be equal (in merit) to fasting.

व्रतवद्देवदैवत्ये पित्र्ये कर्म्मण्यथर्षिवत् ।
काममभ्यर्थितोऽश्नीयात् व्रतमस्य न लुप्यते ॥ १८९ ॥

189. At his pleasure he may eat, when invited, the food of one man at (a rite) in honour of the gods, observing (however the conditions of) his vow, or at a (funeral meal) in honour of the manes, behaving (however) like a hermit.

ब्राह्मणस्यैव कर्म्मैतदुपदिष्टं मनीषिभिः ।
राजन्यवैश्ययोस्त्वेवं नैतत् कर्म्म विधीयते ॥ १९० ॥

190. This duty is prescribed by the wise for a Brahmana only; but no such duty is ordained for a Kshatriya and a Vaisya.

चोदितो गुरुणा नित्यमप्रचोदित एव वा ।
कुर्य्यादध्ययने यत्नमाचार्य्यस्य हितेषु च ॥ १९१ ॥

191. Both when ordered by his teacher, and without a (special) command, (a student) shall always exert himself in studying (the Veda), and in doing what is serviceable to his teacher.

शरीरञ्चैव वाचञ्च बुद्धीन्द्रियमनांसि च ।
नियम्य प्राञ्जलिस्तिष्ठेद्वीक्षमाणो गुरोर्मुखम् ॥ १९२ ॥

192. Controlling his body, his speech, his organs (of sense), and his mind, let him stand with joined hands, looking at the face of his teacher.

नित्यमुद्धृतपाणिः स्यात् साध्वाचारः सुसंयतः ।
आस्यतामिति चोक्तः सन्नासीताभिमुखं गुरोः ॥ १९३ ॥

193. Let him always keep his right arm uncovered,

behave decetly and keep his body well covered, and when he is addressed (with the words), 'Be seated,' he shall sit down, facing his teacher.

हीनान्नवस्त्रवेशः स्यात् सर्वदा गुरुसन्निधौ ।
उत्तिष्ठेत् प्रथमञ्चास्य चरमञ्चैव संविशेत् ॥ १९४ ॥

194. In the presence of his teacher let him always eat less, wear a less valuable dress and ornaments (than the former), and let him rise earlier (from his bed), and go to rest later.

प्रतिश्रवणसम्भाषे शयानो न समाचरेत् ।
नासीनो न च भुञ्जानो न तिष्ठन्न पराङ्मुखः ॥ १९५ ॥

195. Let him not answer or converse with (his teacher), reclining on a bed, nor sitting, nor eating, nor standing, nor with an averted face.

आसीनस्य स्थितः कुर्य्यादभिगच्छंस्तु तिष्ठतः ।
प्रत्युद्गम्य त्वा व्रजतः पश्चाद्धावंस्तु धावतः ॥ १९६ ॥

196. Let him do (that), standing up, if (his teacher) is seated, advancing towards him when he stands, going to meet him if he advances, and running after him when he runs;

पराङ्मुखस्याभिमुखो दूरस्थस्येत्य चान्तिकम् ।
प्रणम्य तु शयानस्य निदेशे चैव तिष्ठतः ॥ १९७ ॥

197. Going (round) to face (the teacher), if his face is averted, approaching him if he stands at a distance, but bending towards him if he lies on a bed, and if he stands in a lower place.

श्रीश्रीदुर्गा शरणम् ।

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव :
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भासावतरणिका ।

असौ सदा दुःसहशीतशीकरैः समीरणैः शीतमहीध्रप्रेरणैः ।
वियोगिवक्षःस्थतदुःखदक्षकैः जिघृक्षुभिः चेङ्नमोच्यते पुनः ॥

## उद्भटश्लोकाः ।

भिक्षुः क्कास्ति बलेर्मखे पशुपतिर्द्दृष्टो न किं गोकुले,
बाले ! पन्नगभूषणः सखि ! सदा शेते च शेषोपरि ।
मुग्धे ! मुञ्च विषादमाशु कमले ! नाहं प्रकृत्या चला,
इत्येवं कमला गिरीन्द्रतनया वाक्कौशलं पातु वः ॥ २२९ ॥

राधे त्वं परिमुञ्च नीलवसनं हृत्वाव नावं रम,
वातो वारिदसम्भ्रमाद्यदि वहेन्मग्ना भवेन्नौरियम् ।
सत्यं तद्वसनान्तरं परिदधाम्यादौ त्वदीयं वपुः
श्यामं श्याम ! नवीननीरदसमं तत्कैः समाच्छाद्यताम् ॥ २३० ॥

अस्माकं यान्तु गव्यानि प्राणा यान्तु न शोचनम् ।
अख्यातिरिति ते कृष्ण ! मया नौनाविकौ त्वयि ॥ २३१ ॥

मा भूज्जन्म कुलस्त्रीणां जन्म चेद् यौवनं न हि ।
यौवनं चेन्न तु प्रेम प्रेम चेद्विरहो न हि ॥ २३२ ॥

## ( किमेष भेदः ? )

एको विलासी शशि-रश्मि-धौतप्रासादवातायन-वातसेवी ।
अन्यश्चिरं पर्णकुटीरवासी किमेष भेदः समदर्शि-सर्गे ? ॥ १ ॥
एको रसज्ञा-सुखदं सुभाज्यं प्राचुर्यतो भोक्तुमहो ! न शक्तः ।
न विन्दतेऽन्योऽपरसान्न-चूर्णं किमेष भेदः समदर्शि-सर्गे ॥ २ ॥
एकः शिरीषाति कुमारवस्त्रावृतां सुशय्यामधिशेत एव ।
न लभ्यतेऽन्येन धरापि शुष्का किमेष भेदः समदर्शि-सर्गे ॥३॥
एकः पदौ स्फाटिकरम्यपीठे निधाय सिंहासनमाददाति ।
नान्यो शिलामप्युपवेष्टुमेति किमेष भेदः समदर्शि-सर्गे ॥ ४ ॥
एकः पयोभिर्मधुरैर्हविर्भिर्मध्वादिभिस्तर्पणमेति नित्यम् ।
शाकेन दीनः कियतापि नान्यः किमेष भेदः समदर्शि-सर्गे ॥५॥
एकश्चिरं सेव्यत एव धन्यो भूषाविभोज्ज्वलविनकिङ्करौघैः ।
संसेवतेऽन्यः प्रभुमत्र भीतः किमेष भेदः समदर्शि-सर्गे ॥६॥
एकोऽत्र कार्त्तस्वरदोलिकां तामारोहति स्वेप्सितकौतुकेन ।
अन्योऽतिदुःखेन वहत्यभाग्यः किमेष भेदः समदर्शि-सर्गे ॥७॥
एकं गृहं प्रीतिदनृत्य-गीत-वीणा-मृदङ्ग-ध्वनिजातपूर्णम् ।
अन्यद्वियोगार्त्त-निनादखिन्नं किमेष भेदः समदर्शि-सर्गे ॥ ८ ॥
एकं गृहं सज्जितसुत्सुकानां कोलाहलैः श्रोत्रसुखैर्महद्भिः ।
अन्यत् महाक्रन्द-विलापसार्थैः किमेष भेदः समदर्शि-सर्गे ॥९॥
शरीरमेकं रमणीयगन्धचूर्णोदकैः सिक्तमलं विभाति ।
अन्यत् पतत्पत्रकषायनीरैः किमेष भेदः समदर्शि-सर्गे ॥१०॥
कश्चित् सुभाग्यः सततोपविष्टो रत्नेश्वरत्वं कुतुकात् प्रयाति ।
भ्रान्त्वापि नो रूप्यकमीक्षतेऽन्यः किमेष भेदः समदर्शि-सर्गे ॥११॥
एकत्र कार्त्तस्वरपात्रमाला भाग्यप्ररोहस्त्विव सज्जितास्ति ।
अन्यत्र चार्त्तस्वरपङ्क्तिरेषा किमेष भेदः समदर्शि-सर्गे ॥ १२ ॥

एकस्य सितानि शिरीषपुष्पसुकोमलान्युत्सव-पुष्टिभाञ्जि ।
अन्यस्य कङ्कालमयानि तानि किमेष भेदः समदर्शि-सर्गे ॥१३॥
सुस्वादुभोज्यं सततं बुभुक्षां विनापि वक्त्रे क्षिपतीह कश्चित् ।
अन्यः क्षुधार्त्तोऽपि न याति किञ्चित् किमेष भेदः समदर्शि-सर्गे ॥१४॥
वीरत्व दर्पेण बहून् मनुष्यान् निवर्त्तयत्याशु समस्त एकः ।
नेशः स्वदेहग्रहणेऽपि कश्चित् किमेष भेदः समदर्शि-सर्गे ॥ १५ ॥
केचित् सदा हास-विलास-चारूपहास-मोदैः सुखिनो भवन्ति ।
अन्ये विषादानल-दह्यमानाः किमेष भेदः समदर्शि-सर्गे ॥ १६ ॥
एकस्य वक्त्रे नयने शरीरे स्फुरत्प्रभा क्रीडति केशजाले ।
अन्यस्य तस्मिन् विषमो विषादः किमेष भेदः समदर्शि-सर्गे ॥ १७ ॥
एकं गृहं भूषितसर्वजीवि-प्रभावितानस्फुरितं तदन्यत् ।
प्रायः पतद्भूषित-सर्वजन्तु, किमेष भेदः समदर्शि-सर्गे ॥ १८ ॥
एकं गृहं दीपक-रत्नराजि-प्रभा-प्रदृष्टामितवस्तुसंघम् ।
अन्यत् तमो राजराट-भीषभीषमं किमेष भेदः समदर्शि-सर्गे ॥ १९ ॥
एको हरिः पादसरोजलुब्धः सीमन्तिनीं कामहितान्न वेत्ति ।
मूर्खोऽपरः कामहितान्न वेत्ति किमेष भेदः समदर्शि-सर्गे ॥ २० ॥
एको गृहेऽनल्पविलासमिष्टमपेक्षमाणः समयं भिनत्ति ।
अन्यो वने भीमतमे विलासं किमेष भेदः समदर्शि-सर्गे ॥ २१ ॥
परोपकारव्रतरक्त एको दोषाकरस्येव समः सुशीलः ।
दोषाकरस्येव समः किलान्यः किमेष भेदः समदर्शि-सर्गे ॥ २२ ॥
द्विजप्रियत्वात् द्विजराजभावादेको महानन्यजनो निकृष्टः ।
द्विजप्रियत्वात् द्विजराजभावात् किमेषः भेदः समदर्शि-सर्गे ॥२३॥
एको विलासी न वधू-मतापगमात्प्रमोदी न वधूमताप-
गमात्प्रमोदी खलु याचिकोऽन्यः किमेष भेदः समदर्शि-सर्गे ॥२४॥
एकः समं सोमरसं पिपासुः पत्न्या सुखायेतर ईश्वरस्य ।
सुप्रीतये सोमरसं पिपासुः किमेष भेदः समदर्शि-सर्गे ॥ २५ ॥

विचित्रचित्रोज्ज्वल सन्नताङ्गी सपुष्पवल्लीव विभाति काचित्।
सुदुर्बलचामतनुः परास्ति किमेष भेदः समदर्शि-सर्गे ॥ २६ ॥
आकृष्यते कश्चन सुन्दरीभिर्विड़म्ब्यते कश्चन वञ्च्यते च।
प्रतार्य्यते कश्चन छीयतेऽपि किमेष भेदः समदर्शि-सर्गे ॥ २७ ॥
यशः प्रभा-राजितदिग्विभागः सम्पूज्यते कश्चन लोकसंघैः।
अन्योपतेजा उपकार-कर्म्मा किमेष भेदः समदर्शि-सर्गे ॥ २८ ॥

हे देव सर्वभुवनाश्रय विश्वबन्धो !
भेदोऽयमुल्वरिपुर्न विनष्टभावम्।
किं यास्यति ? चितितलं त्रिदिवस्य शोभां
किं नेष्यति ? अमरवद्भिर्मनुजा न किं स्युः ? २९ ॥

( नारायणार्पणमस्तु )

श्रीअन्नदाचरणतर्कचूड़ामणिः।
नोयाखाली—सोमपाड़ा।

---

## सती छाया।

( पूर्वप्रकाशितात्परम् )

छाया धीरमाह "सखि ! अधुना यातनामयं मे जीवनम्। क्षणमपि जीवितुं नेच्छामि, किं करोमि ? क्व यास्यामि ? सकरुणमाहूतापि मातामही नार्पयति प्रतिवचनं, मातुलान्यास्तु कथाः कथयित्वा अलं, दुष्टं मे अदृष्टं पीड़ापि प्राणान्तिका नोत्पद्यते।

निर्म्मला छायां समानीय वक्षसि पुनरेवं मा वद, श्रुत्वा च हृदयं दीर्य्यतीव। अनुमाय च तयोरकृत्रिमप्रेमाणं यतीन्द्रो निश्चिकाय प्रीतिस्रोतोदृश्येव जायताम् अहो जगति धन्योऽसौ प्रेमा यः खलु भिन्नमपि हृदयमेकी कर्त्तुं प्रभवति।

अहो कथमिव छायामद्यावलोक्यैव हृदयमाकृष्टम्। सत्यमेव छाया देवीव सुन्दरी धरातले दृष्टापि बहुधा, सुहूर्त्तमपि मानसे

नोदियाय छायामाश्रयितुं प्रयते। अद्यैवानाथिन्या दुःखेन हृद्-व्याकुलितम्। तदहं मनोजं साक्षीकृत्य दृढ़ं प्रतिजाने यदि परिणयेयं तदा छायामिवाङ्कलक्ष्मीं करिष्यामि। यतिष्ये च त्वरितमुन्मोचयितुं दुःखकारावरोधात्। अर्चयिष्यामि च संस्थाप्य प्रमोद-मन्दिरे प्रणयसिंहासने प्रीतिकुसुमैः।

निर्म्मला च यतीन्द्रं चिन्तापहृतमिवालोक्य कथयति "अयि भ्रातः! किमिति गाढ़ं चिन्तयसि? स्मित्वा च यतीन्द्रः कथयति "चिन्तयामि यथा च छाया अचिरात् तथाविधदुष्टसंसर्गात् प्रमुच्यते इति। छाया च नेत्रे विसृज्य सदीर्घनिःश्वासं कथयति "सम्भावयामि सति जीवने तथा नैव घटिष्यते। यतीन्द्रः स्मित्वा सुकोमलं पाणिपुटं छायायाः समादाय सादरं कथयति "यदि महानसौ नरेन्द्रघोषः पवित्रमेतत् पाणिद्वयं मह्यमर्पयति, तदा चिराय तदधीन-जीवितः स्याम्।" निर्म्मला समाकर्ण्य तत् पुलकपूर्णा कथयति "भ्रातः! एवं शुभदिनं किं नो घटिष्यते, एवंविधा लक्ष्मीर्गृह-मलङ्करिष्यति"?

अहो तदानीं मन्दभागिन्यास्तस्या हृदयकन्दरे अभूतपूर्वोऽदृष्ट-चरश्च भावः समुदितस्तामन्तर्दुनोति सुखयति वा किमपि निर्णेतुं, न सा प्रभवति। प्रत्युत बालास्वभावलज्जया जड़ितेव नम्रमुखी बभौ।

यतीन्द्रस्तु कोमलमाभाष्य "अयि छाये! त्वं सम्यग्विनीता चेन्मह्यं पाणिग्रहणं राचते तर्हि स्पष्टं ब्रूहि, तदा पूर्वमभिप्रायं पितामहस्य विदित्वा ततो ज्ञास्यामि ते मातुलाशयम्। छाया तु निर्वातनिष्कम्पदीपशिखेव निस्पन्दा तिष्ठति। तथापि अन्त-र्जागरित आनन्दः वदने लक्ष्मीभूतः, को न जानाति, निपतत्यरुण-किरणे स्वतएव सूर्य्यमुखी विकसति।

निर्म्मला सादरं कण्ठमालिङ्ग्य छायाया "ब्रूहि सखि! ब्रूहि, किमत्र लज्जया त्वं मे भ्रातुरङ्कलक्ष्मी भवेः। आनन्दयेश्च भूत्वा नो

स्टहशोभिनी सुमधुरेण वीणाविड़म्बिना। त्वमसि श्रीरूपिणी चेद्-भ्रातुर्मे शतधा प्रवर्द्धयसि श्रीं गृहमधितिष्ठन्ती, यथा हेमन्ते समुत्तीर्णे सरसवसन्तः समुदितः तरुनिकरं परिशोभयति।

श्रुत्वा च निर्मलावचनं ज्ञात्वा च यतीन्द्रान्तःकरणं दृष्ट्वा चात्मनो दशां निश्चित्य च भविष्यल्लोकयात्रां गम्भीरं धीरञ्च कथयति "सखि निर्मले! मन्दभागिन्या अस्या अदृष्टं किं कदाप्येकं प्रसन्नौ भविष्यति? यत् देवसोदरं पतिं लप्स्ये? अतिवाहयिष्ये च त्वामिव सहृदयाधिकां सङ्गिनीमनु निर्भरप्रहर्षेण जीवनदिनानि। यतीन्द्रः कथयति।

अयि सरले! अमृतभाषिणि! यदि परिणयेयं तदा त्वमेव मम, नो चेत् चिराय भीष्मवत् अकृतपरिणयः स्थास्यामि"। तदा परस्परं सारल्यपूर्णदृष्टिं विनिमयतस्तौ प्लवेते च विस्मृत्य संसारदुःखं प्रमदामृतजलधौ।

निर्मला चिन्तयति शुभेऽस्मिन् गोधूलिलग्ने शुभदृष्टिः सञ्जाता इति।

इति चतुर्थपरिच्छेदः।

---

## पञ्चमपरिच्छेदः।

### छायानिर्वासनम्।

प्रफुल्लसङ्गी नवनीतकोमला, विषाददिग्धा मलिनाधुना बभौ।
अहो यथा शारदशुभ्रचन्द्रिका, मलीमसाभ्रेण चिरं तिरोहिता॥

सन्ध्या समुत्तीर्णा शुक्लपक्षीय पञ्चमीशशिकला कोमलेन स्निग्धकिरणेन भुवनमालोकयति। छाया तु सशङ्का कथयति "अयि सखि! अद्य समधिकं भीतास्मि, न जाने कतिशः सहिष्ये अद्य यातना, अविदितैवाद्य यथा सन्ध्या समतीता"।

निर्मला छायाकण्ठमालिङ्ग्य कथयति "सखि! माभैषीः सदैव

गत्वाहं भवतीं तत्र नयामि" इत्युक्ता छायाया धृतहस्ता गन्तुं प्रवृत्ता।

यतीन्द्रस्तु गम्भीरमाह—"अयि सरले"! नैव विस्मर मां त्वदेकजीवनं, शीघ्रमेव भवतो लाभाय यतिष्ये, तदाकर्ण्य सती छाया केवलं स्नेहसारल्यपूर्णेन नयनेन तं पश्यति, बालिका सा प्रणयवाणीषु अनभिज्ञा।

मानसोन्मादकारिण्या इच्छयैवाहतोऽसौ अनिच्छन्नपि छायां दृष्टिपथादतिक्रामति। इच्छापि तस्य छायामनुगच्छति। परन्तु व्यथितहृदयेन छदिषोऽवरोहति।

छाया सती निर्म्मलया एकया परिचारिकया च सह नरेन्द्रस्यान्तःपुरं प्रविशति। तस्मिन् क्षणे नरेन्द्रः स्वगेहालिन्दे समासीनः, वृद्धाजननी आसने उपविश्य मालाजपे प्रवृत्ता, क्रूरहृदया मातुलवधूः साय गृहकर्म्म कुर्वती कथयति, "अयि मातः! पश्य तावदधुनापि छाया स्वगेहं नायाति इयती रात्रिर्व्यतीता, इदानीमेव बालिका सा परगृहे पर्य्यटितुमेवं प्रीणाति साहसं सजते च, का कथा युवत्याः"?।

प्राचीना लुब्धा च क्रूद्धा च तुष्णीमास्ते। तदैव सह सङ्गिन्या समागतां छायामालोक्य मातुलः सस्नेहं कथयति "अयि छाये! रजनीमियतीं किन्नाम क्रीड़नम्"? दुःखिनी छाया सभयं मातुलासन्नमुपाविशत्। नरेन्द्रः पश्यन् निर्म्मलावदनं वदति "अयि निर्म्मले"! कथमेतावन्त मुररीकृत्य क्लेशं पुनस्त्वमप्यत्रागच्छसि? परिचारिकैवास्याः प्रत्यागमने निर्दुष्टेति" निर्म्मला कथति "नात्र कश्चिलेशोऽप्यनुभूयते, अत्यासन्नमेव मे गृहमधुनैव यास्यामि"। ततःपरं प्राचीनामुद्दिश्य कथयति "अयि आर्य्यमातः! किमपि प्रार्थयामि,तत्तु पूरयितव्यम्" वृद्धा स्मित्वा कथयति "अयि नप्तः! किन्तद्ब्रूहि" निर्म्मला हसित्वा कथयति "आर्य्यमातः! श्वाले मे यतीन्द्राय सखीं

छायां संप्रदास्यसि" ? श्रुत्वै तत् प्राचीनाया सुखं गाम्भीर्य्यमादधे। सजलनयना च कथयति अधुनाप्यसौ बालिकेति नैतदयुक्तं, तथापि अदर्थं विवेच्मि" निर्म्मला तु हर्षविषादमापन्ना सह दास्या प्रतिगच्छति। नरेन्द्रस्तु सनिर्वेदमाह "मातः! निर्म्मालायाः शुभोऽपि परिणयप्रस्तावोऽस्माकं विडम्बणारूपेणेव परिणंस्यति" प्राचीना कथयति "वत्स! छायाया विवाहो नानायास साध्यः, यदि कश्चिदस्याः पितुः पितामहस्य वा नाम प्रच्छति तदा मृत्युरेव श्रेयान् मंस्यते। नरेन्द्रस्तौ कटुवादिनौ श्लेषेण कथयति नास्त्युपायान्तरमधुनास्या विवाहादृते, अन्यथा मातृवदियमपि प्रच्छन्नं गृहान्निर्यास्यति।" सत्यमेवास्या अपि मानसौ गतिर्न समीचीना, अन्यथा का नाम बाला रात्रिमियतीं परवेश्मनि अतिवर्त्तयति ? ब्रवीतु इयं शपथेन यतीन्द्रवाहादुरेण सार्द्धं कालमेतावन्तं रहस्यमालापयामास किं न वेति" ? नरेन्द्रः मृदु मृदु पृच्छति "अयि वासु! सत्यं ब्रूहि अद्य यतीन्द्रवाहादुरेण सह कोऽपि संलापोऽनुष्ठितः ?" दुःखिनी छाया सभयं सलज्जञ्चाह "मातुल! अद्य सख्या सार्द्धं तत्र क्रदिपि समलपं, तदानीमागत्य धीरपादसञ्चारं कथामन्यांसमाप्य निर्म्मलां प्रत्याह अहं छायाया पाणिग्रहणार्थं नरेन्द्रघोषसन्निधौ वार्त्तामवतारयामि। निर्दया प्राचीना सरोषं कथयति दूरमपसर निर्लज्जे! नेच्छामि त्वदीयं साधुमितिहासमाकर्णितुम्। अरे नरेन्द्र! विलम्बेनालं दुःशीलामिमां गृहादस्मात् वहिष्कुरु नेदं पुनरनया स्थातव्यम्। तदाकर्ण्य नरेन्द्रः साश्रुलोचनः कथयति अयि छाये! स्वशय्यामधिसर्पिसि भव्यन्ते तत्र प्रेरयामि।

दुःखिनी च छाया निर्गलहास्यधारा समुपेत्यैव स्वाद्यं शयनकक्षं प्रविशति। नरेन्द्रस्तु परेद्युः छायायाः शिक्षकमाहूय निवेदयति "हे पण्डितमहाशय! शक्यते श्रीमता सतौ छाया अनूढावस्थया कञ्चित्कालं क्षपयितुं निरापत्स्थानमेकं निर्देष्टुं" ? तदाकर्ण्य

पण्डितः प्राह "बाढ़ं भवानीपुरे कस्यचित् धनाढ्यस्य विधवापत्नी वर्षीयसी वर्त्तते सा च सदैव मामुत्तेजयति "ममैका सुशीला शिक्षिता च कापि कायस्थबालिका समुपयोगितामेष्यति" तस्याः सन्निधौ सर्वदा स्थास्यति, एव वङ्गभाषया रामायण महाभारतादिकं पुराणं तां श्रावयिष्यति। सा खलु अतीवदयार्द्रहृदया, चेत् तस्याः सन्निधौ छाया स्थास्यति तदा तस्या अतीव श्रेयो भवेत् कन्यावच्च स्नेहमधिकुर्य्यादित्यहं मन्ये।

( क्रमशः )

---

## धर्म्मविवेकः ।

( पूर्वप्रकाशितात्परम् )

अतएव वत्स वामापद ! सम्यगाचारवान् भव, स्वधर्म्मं श्रद्दधस्व।

वामा। श्रीगुरुप्रसदादाभूलं संशयश्छिन्नः।

शिवः। यदि वा भूयोऽपि ते गरीयसी प्रवृत्तिर्धर्म्मविधौ युक्तिं श्रोतुं, तदा संस्कृतचन्द्रिकायां प्रकाशितं "पूर्वकालीनाः कथं दीर्घायुषः" प्रबन्धमेतमादितः पठ तत्र बहुधा उपयोगिन्यो दर्शिता युक्तयः। किन्तु विवेचयतु। जगति मुनिवाक्यैकविश्वासानां ऋजुधियां अशिक्षितानाञ्च लोकाणां संख्याः समधिकाः, सुतरां तेषां प्रत्येकेन युक्तिप्रबोधनं नानायाससाध्यं भवेत्। अतः कुत्रचित्प्रमाणे "स्वर्गलोके महीयते," कुत्रचिद्वा "रौरवं नरकं व्रजेत्" इत्यादि प्रलोभनं भयञ्च प्रदर्शितम्।

अत एव सूक्ष्मदर्शिभिर्वस्तुगुणदोषविद्भिर्मुनिभिर्यद्यदुपदिष्टं तत् सर्वमेव युक्तिमूलकं हितसाधकञ्च, यत्र च स्थूलमतिभि युक्तिर्द्रष्टुं न शक्या तत्राप्यवश्यं युक्तिरस्तीति सर्वथा विश्वस्तव्यम्।

युक्तिश्च त्रिविधा लौकिकी, यौगिकी, लौकिकयौगिकी च, या च केवलमायुर्वेदे लौकिके विधिनिषेधौ वा निर्दिश्यते तत्र लौकिकी-युक्तिः यथा ये खलु परिमितं भुञ्जते जितेन्द्रियाः स्युस्ते जातु विसूचिकया नाक्रम्यन्ते, म्रियन्ते खलु तयाक्रान्ताश्च अमितभोजिनो विमूढ़ा बुभुक्षया प्रमत्ता इन्द्रियकिङ्कराः। अत्र लोक एव प्रमाणम् । तथा च वैद्यके—माधवनिदाने । ईदृग्भोजनं मनुनापि निषिद्धम् ।

"न तां परिमिताहारा लभन्ते विदितागमाः ।
मूढ़ास्तामजितात्मनो लभन्तेऽशनलोलुपाः ॥"

यत्र लौकिकयुक्तिः प्रमाणयितुं न प्रभवति, तत्र योगिप्रत्यक्षमेव प्रमापयति यथा ब्राह्मणस्य संक्रान्त्यादौ सन्ध्याया अनुष्ठाने पापम् । सन्ध्या खलु ब्राह्मणानां परमोपास्या, कालोऽपि संक्रान्तिः अमावस्या पूर्णिमा च पुण्यजनकः, किन्तु तत्र सन्ध्यामुपासतः पापं भवेदत्र क्वापि लौकिकीयुक्तिर्नालम् । योगनेत्रास्तु याज्ञवल्क्यादयः स्मृतिकारा अस्मच्चाक्षुषवत् योगेन सन्ध्यायाः पापजनकत्वमीक्षाञ्चक्रिरे, दृष्ट्वा च तथा प्रतिपेदिरे—

"संक्रान्त्यां पक्षयोरन्ते द्वादश्यां श्राद्धवासरे ।
सायं सन्ध्यां न कुर्वीत कृते च पितृहा भवेत् ॥" इति ।

नात्र लौकिकी युक्तिः प्रभवति तद्बोधनाय । योगिजनविज्ञानं लौकिकं बोधयितुं न शक्नोति, तथा चोक्तं वाचस्पतिमिश्रैस्तत्त्वकौमुद्याम्—

"आर्षन्तु विज्ञानं योगिनामूर्द्ध्वस्रोतसां न लोकव्युत्पादनायालमिति ।"

यत्र च लौकिकी यौगिकी च वर्त्तते युक्तिः सा लौकिकयौगिकी । यथा स्मृतिविदो ब्रुवन्ति लवणयुक्तदुग्धपानं गोमांसभक्षणतुल्यमिति तथाच—

"ताम्रपात्रे पयःपानमुच्छिष्टे घृतभोजनम् ।
दुग्धञ्च लवणैर्युक्तं सद्यो गोमांसभक्षणम् ॥" इति ।

लौकिकास्तु आयुर्वेदविदः कथयन्ति लवणयोगेन दुग्धस्याहितत्वमिति। तथा च सुश्रुते सूत्रस्थाने २० अध्याये—

(तत्र भक्ष्यवस्तुनो हितत्वमहितत्वञ्च प्रतिपाद्य योगेनाहितत्वं कथयति)

"अनिष्टगन्धमम्लञ्च विवर्णं विरसञ्च यत्।
वर्ज्यं सलवणं क्षीरं यच्च विग्रथितं भवेत्॥" इति।

अतएव धर्मविधौ यत्र युक्तिर्नास्तीवापाततो भाषते तत्रापि यौगिकी युक्तिरस्तीत्यवश्यमकामेनापि स्वीकर्त्तव्यम्।

एवं सर्वत्र युक्तिप्रकाशः अवसराभावात् न सम्भवति, एवं मुनीनामप्यभिप्रायोल्लङ्घनं स्यात्, तेन हि ऋजुधियाम्, अशिक्षितानाञ्चानिष्टपातः सम्भवेत्। मतिमन्तस्तु स्वयमेव युक्तिमनुसर्त्तुं शक्नुयुः। धर्म्मशास्त्रे तत्तत् फलादिप्रदर्शनञ्च नृणां रुच्यर्थम्। यथाह भागवते। ११। ३। ४६।

"वेदोक्तमेव कुर्वाणो निःसङ्गोऽर्पितमीश्वरे।
नैष्कर्म्यां लभते सिद्धिं रोचनार्था फलश्रुतिः॥"

फलन्तु धर्म्मस्यानुषङ्गिकं लभ्यत एव, किन्तु कर्त्तव्यबुद्ध्या स्वं स्वं धर्मं कुर्य्यात् न तु परकीय धर्मं सुखसाध्यमपि। तथाच गीता—

"श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः॥"

अतएव शूद्रो ब्राह्मणधर्मं ब्राह्मणश्च शूद्रधर्मं रजकः क्षुरिणो धर्मं क्षुरी च रजकधर्मं नोपगच्छेयात्। एवं सति विशृङ्खलतया न कस्यापि धर्मे श्रेयःसाधने मतिर्दृढ़ा स्यात्।

वामा। भगवन्! श्रीमदुक्तं सर्वमेव सुसङ्गतं शिरसा गृह्णामि। अधुना किञ्चिदन्यत् पृच्छ्यते धर्माङ्गम्।

शिवः। पृच्छ तावत् संक्षिप्य कथयामि।

वामा। अधुना अन्ये केचन नव्यशिक्षिताः कथयन्ति "धर्मेण सह भक्ष्याभक्ष्यस्य कोऽपि सम्बन्धो नास्तीति" व्यवहरन्ति च ते तथैव।

तेषामनेके पित्रोः श्राद्धमाचरन्ति सन्ध्यातर्पणमप्यनुतिष्ठन्ति तीर्थान्यपि भ्रमन्ति, किन्तु इंलण्डीयसूपकारपाचितैः गोकुक्कुटमांसैर्विना तेषामुदरदेवस्य त्रिसन्ध्यं पूजा न सिध्यति। किमत्र तत्त्वम्।

शिवः। (विस्मित्य) अहो रे गरीयान् कालः समायातः यदश्रुतमपि श्रावयति अदृष्टमपि दर्शयति। नारायण!!! भगवन्! विष्णो! राम! राम! शिव! शिव! मातर्भगवति! दुर्गे! निस्तारय पापसंसारात्। मातः पृथिवि! द्विधा भव प्रविशामि ते कुहरम्। (दीर्घं निःश्वस्य) वत्स! वामापद! ये त्वेवं कथयन्ति व्यवहरन्ति च पापं, तेषां कुशिक्षा कुसंसर्गश्च तत्र कारणं, ते केवलं लौकिकव्यवहाररक्षार्थं पित्रादीनां श्राद्धादिकमाचरन्ति न तु श्रद्धया। अश्रद्धया कृतञ्च धर्मकृत्यं न फलप्रदाने समर्थं तथाच श्राद्धतत्त्वे देवलः—

"प्रत्ययो धर्मकार्य्येषु तथा श्रद्धेत्युदाहृता।
नास्ति ह्यश्रद्दधानस्य धर्मकृत्ये प्रयोजनम्॥"

ये वदन्ति आहारेण समं नास्ति धर्मस्य कोऽपि सम्बन्धः, ते अतीवमूर्खाः उदरम्भरयः विद्वन्मानिनश्च। शृणु तावत्। ब्राह्मणस्य सुरापानं महापापजनकमधर्मः। तथाच मनुः—

"ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह॥"

वामा। सुरापानं कथमधर्मो भवितुं युज्यते। प्रत्युत सुराया बहुधा गुणा वैद्यके व्याख्याताः। परिमितया च पीतया सुरया रक्तं विशुध्यते, क्षुधा उद्रिच्यते, शरीरं पुष्णाति, मनश्च अवसादान्मुच्यते, आत्मा च निरतिशयमानन्दमनुभवति इति ज्ञातमेव भगवता। * एवं तन्त्रशास्त्रेषु मद्यस्य प्रचुरगुणवत्त्वं सहस्रकृत्यः प्रतिपादितम्।

---

* तथाच सुश्रुते उत्तरतन्त्रे ४३ अध्याये।
"स्निग्धैस्तदन्नैर्मांसैश्च भक्ष्यैश्च सह सेवितम्।
भवेदायुः प्रकर्षाय बलायोपचयाय च॥

शिवः । सुरायास्तथाविधगुणवत्ता वर्त्तते सत्यं, किन्तु संयमिनः प्रति । असंयमिनस्तु अमितपायिनः प्रभ्रष्टलज्जाः धृत्यादिधर्मं जहति मनुष्यत्वात् प्रच्यवन्ते ततश्च पशुतोऽपि निकृष्टं व्यवहरन्ति । पश्य तावत् शुक्राचार्य्योऽपि दैत्यगुरुर्मद्यं पायं पायं प्रणष्टज्ञानः स्वसुतस्य निहतस्य कचस्यैव भृष्टं मांसमभुङ्क्त, का कथा मानुषाणामस्माकम् । अतएवोक्तं महानिर्वाणतन्त्रे—

"कृपाणधारागमनं व्याघ्रकण्ठावलम्बनम् ।
भुजङ्गधारणान्नूनं अशक्यं कुलसाधनम् ॥
त्वत्समा चेद्भवेन्नारी मत्समः पुरुषो यदि ।
तदैव परमेशानि ! समर्थः कुलसाधने ॥"

अतएव खाद्येन समं धर्म्मस्यासन्नः सम्बन्धः । खाद्यानुरूपा बुद्धिः, बुद्धिसाध्यस्तु धर्म्मः । एवं मद्यवत् निषिद्धगोमांसादि अपि मतिभ्रंसकारि, मद्यमाशु करोति गोमांसादि तु खाद्यं विलम्बेनेति भेदः ।

वामा । भगवन्तः ! मनूक्ता याज्ञवल्क्योक्ताश्च सामान्यधर्माः श्रुताश्च भगवत्प्रसादात् कथञ्चिदधिगताश्च । अधुना धृत्यादिभ्योऽतिरिक्ताश्चेद्धर्मा अपरेऽपि सामन्या वर्त्तन्ते तेऽपि त्वदेकशरणं मामनुगृह्य वक्तुमर्हन्ति ।

शिव । अपरेऽपि अल्पाः सामान्यधर्मा विष्णुना कथिता यथा—

"क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ।
अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥
आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ।
अनभ्यसूया च तथा धर्म्मः सामान्य उच्यते ॥"

---

काम्यता मनसस्तुष्टिर्धैर्य्यं तेजोऽतिविक्रमः ।
विधिवत् सेव्यमाने तु मद्ये सन्निहिता गुणाः ॥"
"त्र्यवस्थश्च मदो ज्ञेयः पूर्वमध्योऽथ पश्चिमः ।
पूर्वे वीर्य्यं रतिःप्रीतिर्हर्षभाष्यादिवर्द्धनम् ॥
प्रलापी मध्यमे हर्षो युक्तायुक्तक्रियास्तथा ।
विसंज्ञः पश्चिमे शेते नष्टकर्म्मक्रियागुणः ॥"

वामा। गुरव: ! १८१६ शाकीयाषाढ़मासि श्रीमद्भि: भङ्ग्या प्रतिपादितं यत् धर्म्मशास्त्रे विधिनियमपरिसंख्यादिकं देशकाल-भेदादिकम् अधिकारिभेदादिकञ्च निरूपितमस्ति, विना हि तज्-ज्ञानं धर्म्मशास्त्रज्ञाने उपयोगितैव न जायते। इति अतस्तदाकर्णने चेत: समुत्कण्ठते।

शिव। वत्स ! अद्य एतावत् तिष्ठतु उपरिष्टादवशिष्टं वक्ष्यामि।

वामा। दासे शरणं गते मयि अहैतुकी दया बद्धमूला समुदेति, अद्य प्रतिगन्तुमादिशन्तु।

शिव:। शुभाय गम्यतां पुनरागमनाय च।

( क्रमश: )

---

## तत्त्वप्रपञ्च:।

( पूर्वप्रकाशितात्परम् )

"रजस्तमश्चाभिभूय सत्त्वं भवति भारत !।
रज: सत्त्वं तमश्चैव तम: सत्त्वं रजस्तथा॥" १४।१०॥

एवं ते च गुणा: परस्परमाश्रयन्ति। तथा हि सत्त्वं गुण: स्पन्दं नियमनञ्चाश्रित्य रजस्तमसी प्रकाशेनोपकरोति। रजोऽपि प्रकाशनियमनौ समाश्रित्य चालनेन सत्त्वतमसी उपकुरुते। तमस्तु प्रकाशचालने आश्रित्य नियमनेन सत्त्वरजसोरुपकुरुते।

एवं त्रयो गुणा: परस्परं जननवृत्तय: ! तथा हि एषामन्यतमो गुण: अन्यतमं जनयति—अन्यतमरूपेण परिणमयति—सदृशरूपेण जायते। यथा सत्त्वबहुलस्य साधोरसाधुसंसर्गात् सत्त्वमपि रज-स्तमोरूपेण परिणमति। रजो बहुलस्य क्रुद्धस्यापि संयमिसंसर्गात् रज: सत्त्वरूपेण जायते। एवं तमो बहुलस्यापि अज्ञानिन: ज्ञानि-संसर्गात् तम: सत्त्वरूपेण विपरिणमति।

एवं ते च गुणाः अन्योऽन्यमिथुनवृत्तयः—अन्योन्यसहचराः एकं गुणमपहाय नैको गुणः प्रचरति तथाहि सत्त्वबहुलं साधुं सत्सु कर्म्मसु रजश्चालयति, तमश्च युक्तं निद्रापयति। रजोबहुलञ्च लोभिनं परद्रव्यहरणे सत्त्वं सुखयति। एवं तमो बहुलञ्च पारदारिकं रजश्चालयति सत्त्वमपि सुखयति इति। भवति चात्रागमः।

"अन्योन्यमिथुनाः सर्वे सर्वे सर्वत्र गामिनः।
रजसो मिथुनं सत्त्वं सत्त्वस्य मिथुनं रजः॥
तमसश्चापि मिथुने ते सत्त्वरजसी उभे।
उभयोः सत्त्वरजसोर्मिथुनं तम उच्यते।
नैषामादिः संप्रयोगो वियोगो वोपलभ्यते॥"

एतदेव सांख्यकारिकायां स्पष्टीकरोति।

"प्रीत्यप्रीतिविषादात्मकाः प्रकाशप्रवृत्तिनियमार्थाः।
अन्योन्याभिभवाश्रयजननमिथुनवृत्तयश्च गुणाः॥"

त्रिगुणमय्याः प्रकृतेः सत्त्वस्य प्रकाशः रजसश्चालनं तमसस्तु नियमनं कुतः कारणात् सम्पद्यते? तदुच्यते। यत्तु सर्वपदार्थप्रकाशकं सत्त्वं तल्लघु कार्य्योद्गमने हेतुः गौरवप्रतिद्वन्द्वि यतोऽग्नेरूर्द्ध्वज्वलनं भवति तदेव लाघवं कस्यचित्तिर्य्यग्गमने हेतुर्यथा वायोः। एवमिन्द्रियाणां विषयग्रहणे पटुत्वहेतुर्लाघवम्। गुरुत्वे हि मन्दानि स्युरिन्द्रियाणि इति। सत्त्वस्य प्रकाशकत्वमुक्तं तदेव उपपादयति सत्त्वतमसी स्वयमचलतया स्वस्वकार्य्यप्रवृत्तिं प्रति असमर्थे रजसा चालकेन उपष्टभ्य अवसादात् प्रच्याव्य स्वकार्य्ये ते उत्साह्यं कार्य्येते। यतः रजश्चालकतया परितस्त्रैगुण्यं चालयत् गुरुभारेणावरकेण च तमसा स्वकार्य्ये प्रवृत्तिप्रतिबन्धकेन क्वचिदेव प्रवर्त्तत इति। ते च गुणाः परस्परविरोधिनोऽपि सुन्दोपसुन्दवत् न ध्वंसन्ते, प्रत्युत अनलविरोधिवर्त्तितैलवत् सहानलेन रूपप्रकाशलक्षणं कार्य्यं कुर्वतः। यथा वातपित्तश्लेष्माणः परस्परं विरोधिनोऽपि देहधारणरूपं कार्य्यं

विदधति। एवं सत्त्वादयो गुणा अपि परस्परमनुवर्त्तन्ते उपकुर्वते स्वस्वकार्य्यं करिष्यन्ति च।

सा च गुणमयी प्रकृतिः पुरुषप्रयोजनार्थं सुखदुःखमोहमयं जगत् कुरुते। अत्र च सुखदुःखमोहाः परस्परं विरोधिनः स्वस्वानुरूपाणि सुखदुःखमोहात्मकान्येव कारणाणि अनुसृत्य प्रवर्त्तन्ते। तेषाञ्च परस्परमभिभाव्याभिभावकत्वात् नानाविधत्वम्। यथा एकैव परमरमणीया युवतिः स्वामिनं सुखा करोति कथमिति चेत्, स्वामिन प्रति तस्याः सुखरूपेण परिणमनात्। सैव युवतिः सपत्नी-दुःखा करोति, कथमिति चेत् ताः प्रति तस्याः दुःखरूपत्वात्। एवम् अन्यांश्च पुरुषान् तामलभमानान् सैव मोहयति, तत्कथमिति चेत् तान् प्रति तस्या मोहरूपसमुद्भवात्। सर्वेष्वेव वस्तुषु युवतिदृष्टान्तः। तत्र यत्सुखहेतुस्तत्सुखात्मकं सत्त्वम्, यद्दुःखहेतुस्तद्दुःखात्मकं रजः, यच्च मोहहेतुस्तन्मोहात्मकं तमः। एतदेव सांख्यकारिकाया माह—

"सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चञ्चलञ्च रजः।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः॥"

ननु यदुक्तं त्रिगुणमविवेकीत्यादिना गुणत्रये अविवेकित्वं सामान्यत्वम् अचेतनत्वं प्रसवधर्म्मित्वञ्चास्ति, तत्तु वरं प्रत्यक्षतो दृष्टेषु पृथिव्यादिषु अनुभवसिद्धं भवति। किन्तु ये पुनः सत्त्वरजस्तमांसि नानुभवपथमधिरोहन्ति तेषां अविवेकित्वं विषयत्वं सामान्यत्वम् अचेतनत्वं प्रसवधर्म्मित्वञ्च कस्मादनुमातव्यम्?

सत्यमुच्यते। दृश्यते एतत् यथा त्रैगुण्यात् एकैव स्त्री कस्यचित् सुखं कस्यचित् दुःखं कस्यचिन्मोहञ्च जनयति, तथा यद्यत् सुख-दुःखमोहात्मकं तत्तत् अविवेक्यादिमत्। एवं पुरुषस्तु चैतन्यमयः तत्राविवेकादिकं तिष्ठतीति न सङ्गतं वचः। अतोऽगत्या अविवेकादिकं त्रिगुणेष्वेव निश्चेतुं युज्यते। (क्रमशः)

## ब्रह्मचर्य्यम् ।

( पूर्वप्रकाशितात्परम् । )

नीचैः शय्यासनञ्चास्य सर्वदा गुरुसन्निधौ ।
गुरोस्तु चक्षुर्विषये न यथेष्टासनो भवेत् ॥ १९८ ॥

198. When his teacher is nigh, let his bed or seat e low ; but within sight of his teacher he shall not it carelessly at ease.

नोदाहरेदस्य नाम परोक्षमपि केवलम् ।
नचैवास्यानुकुर्वीत गतिभाषितचेष्टितम् ॥ १९९ ॥

199. Let him not pronounce the mere name of is teacher (without adding an honorific title) behind is back even, and let him not mimic his gait, speech, nd deportment.

गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ २०० ॥

200. Wherever (people) justly censure or falsely lefame his teacher, there he must cover his ears or lepart thence to another place.

परीवादात् खरो भवति श्वा वै भवति निन्दकः ।
परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी ॥ २०१ ॥

201. By censuring (his teacher), though justly, he vill become (in his next birth) an ass, by falsely efaming him, a dog ; he who lives on his teacher's ubstance, will become a worm, and he who is envious of his merit), a (larger) insect.

दूरस्थो नार्चयेदेनं न क्रुद्धो नान्तिके स्त्रियाः ।
या नासनस्थश्चैवैनमवरुह्याभिवादयेत् ॥ २०२ ॥

202. He must not serve the (teacher by the intervention of another) while he himself stands aloof, nor when he (himself) is angry, nor when a woman is near ; if he is seated in a carriage or on a (raised) seat, he must descend and afterwards salute his (teacher).

प्रतिवातेऽनुवाते च नासीत गुरुणा सह ।
असंश्रवे चैव गुरोर्नकिञ्चिदपि कीर्त्तयेत् ॥ २०३ ॥

203. Let him not sit with his teacher, to the leeward or to the windward (of him) ; nor let him say anything which his teacher cannot hear.

गोऽश्वोष्ट्रयानप्रासादस्रस्तरेषु कटेषु च ।
आसीत गुरुणा सार्द्धं शिलाफलकनौषु च ॥ २०४ ॥

204, He may sit with his teacher in a carriage drawn by oxen, horses, or camels, on a terrace, on a bed of grass or leaves, on a mat, on a rock, on a wooden bench, or in a boat.

गुरोर्गुरौ सन्निहिते गुरुवद्वृत्तिमाचरेत् ।
न चानिसृष्टो गुरुणा स्वान् गुरूनभिवादयेत् ॥ २०५ ॥

205. If his teacher's teacher is near, let him behave (towards him) as towards his own teacher ; but let him, unless he has received permission from his teacher, not salute venerable persons of his own (family).

विद्यागुरुष्वेतदेव नित्या वृत्तिः स्वयोनिषु ।
प्रतिषेधत्सु चाधर्म्मान् हितञ्चोपदिशत्स्वपि ॥ २०६ ॥

206. This is likewise (ordained as) his constant behaviour towards (other) instructors in science, towards his relatives (to whom honour is due), towards all who may restrain him from sin, or may give him salutary advice.

श्रेयःसु गुरुवद्वृत्तिं नित्यमेव समाचरेत् ।
गुरुपुत्रेषु चार्य्येषु गुरोश्चैव स्वबन्धुषु ॥ २०७ ॥

207. Towards his betters let him always behave as towards his teacher, likewise towards sons of his teacher, born by wives of equal caste, and towards the teacher's relatives both on the side of the father and of the mother.

बालः समानजन्मा वा शिष्यो वा यज्ञकर्म्मणि ।
अध्यापयन् गुरुसुतो गुरुवन्मानमर्हति ॥ २०८ ॥

208. The son of the teacher who imparts instruction (in his father's stead), whether younger or of equal age, or a student of (the science of) sacrifices (or of other Angas), deserves the same honour as the teacher.

उत्सादनञ्च गात्राणां स्नपनोच्छिष्टभोजने ।
न कुर्य्याद् गुरुपुत्रस्य पदयोश्चावनेजनम् ॥ २०९ ॥

209. (A student) must not shampoo the limbs of his teacher's son, nor assist him in bathing,

nor eat the fragments of his food, nor wash his feet.

गुरुवत् प्रतिपूज्याः स्युः सवर्णा गुरुयोषितः ।
असवर्णास्तु संपूज्याः प्रत्युत्थानाभिवादनैः ॥२१० ॥

210. The wives of the teather, who belong to the same caste, must be treated as respectfully as the teacher; but those who belong to a different caste, must be honoured by rising and salutation.

अभ्यञ्जनं स्नापनञ्च गात्रोत्सादनमेव च ।
गुरुपत्न्या न कार्य्याणि केशानाञ्च प्रसाधनम् ॥ २११ ॥

2I1. Let him not perform for a wife of his teacher (the offices of) anointing her, assisting her in the bath, shampooing her limbs, or arranging her hair.

गुरुपत्नी तु युवतिर्नाभिवाद्येह पादयोः ।
पूर्णविंशतिवर्षेण गुणदोषौ विजानता ॥ २१२ ॥

212. (A pupil) who is full twenty years old, and knows what is becoming and unbecoming, shall not salute a young wife of his teacher (by clasping) her feet.

स्वभाव एष नारीणां नराणामिह दूषणम् ।
अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः ॥ २१३ ॥

213. It is the nature of women to seduce men in this (world); for that reason the wise are never unguarded in (the company of) females.

अविद्वांसमलं लोके विद्वांसमपि वा पुनः ।
प्रमादाह्युत्पथं नेतुं कामक्रोधवशानुगम् ॥ ११४ ॥

124. For women are able to lead astray in (this)

world not only a fool, but even a learned man, and (to make) him a slave of desire and anger.

मात्रा स्वस्रा दुहित्रा वा न विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति॥ २१५॥

215. One should not sit in a lonely place with one's mother, sister, or daughter ; for the senses are powerful, and master even a learned man.

कामन्तु गुरुपत्नीनां युवतीनां युवा भुवि।
विधिवद्वन्दनं कुर्य्यादसावहमिति ब्रुवन्॥ २१६॥

216. But at his pleasure a young student may prostrate himself on the ground before the young wife of a teacher, in accordance with the rule, and say, 'I, N. N., (worship thee, O lady).'

विप्रोष्य पादग्रहणमन्वहञ्चाभिवादनम्।
गुरुदारेषु कुर्वीत सतां धर्ममनुस्मरन्॥ २१७॥

217. On returning from a journey he must clasp the feet of his teacher's wife and daily salute her (in the manner just mentioned), remembering the duty of the virtuous.

यथा खनन् खनित्रेण नरो वार्य्यधिगच्छति।
तथा गुरुगतां विद्यां शुश्रूषुरधिगच्छति॥ २१८॥

218. As the man who digs with a spade (into the ground) obtains water, even so an obedient (pupil) obtains the knowledge which lies (hidden) in his teacher.

मुण्डो वा जटिलो वा स्यादथ वा स्याच्छिखाजटः।
नैनं ग्रामेऽभिनिम्लोचेत् सूर्य्यो नाभ्युदियात् क्वचित् ॥२१९॥

219. A (stndent) may either shave his head, or wear his hair in braids, or braid one lock on the crown of his head ; the sun must never set or rise while he (lies asleep) in the village.

तञ्चेदभ्युदियात् सूर्य्यः शयानं कामचारतः।
निम्लोचेद्वाप्यविज्ञानाज्जपन्नुपवसेद्दिनम् ॥ २२० ॥

220. If the sun should rise or set while he is sleeping, be it (that he offended) intentionally or unintentionally, he shall fast during the (next) day muttering (the Savitri).

सूर्य्येण ह्यभिनिर्मुक्तः शयानोऽभ्युदितश्च यः।
प्रायश्चित्तमकुर्वाणो युक्तः स्यान्महतैनसा ॥ २२१ ॥

221. For he who lies (sleeping), while the sun sets or rises, and does not perform (that) penance, is tainted by great guilt.

आचम्य प्रयतो नित्यमुभे सन्ध्ये समाहितः।
शुचौ देशे जपं जप्यमुपासीत यथाविधि ॥ २२२ ॥

222. Purified by sipping water, he shall daily worship during both twilights with a concentrated mind in a pure place, muttering the prescribed text according to the rule.

यदि स्त्री यद्यवरजः श्रेयः किञ्चित् समाचरेत्।
तत्सर्वमाचरेद्युक्तो यत्र वास्य रमेन्मनः ॥ २२३ ॥

223. If a woman or a man of low caste perform

anything (leading to) happiness, let him diligently practise it, as well as (any other permitted act) in which his heart finds pleasure.

धर्म्मार्थावुच्यते श्रेयः कामार्थौ धर्म्म एव च ।
अर्थ एवेह वा श्रेयस्त्रिवर्ग इति तु स्थितिः ॥ २२४ ॥

224. (Some declare that) the chief good consists in (the acquisition of) spiritual merit and wealth, (others place it) in ( the gratification of ) desire and ( the acquisition of ) wealth, ( others ) in ( the acquisition of ) spiritual merit alone, and (others say that the acquisition of ) wealth alone is the chief good here (below) ; but the (correct) decision is that it consists of the aggregate of (those) three.

आचार्य्यो ब्रह्मणो मूर्त्तिः पिता मूर्त्तिः प्रजापतेः ।
माता पृथिव्यामूर्त्तिस्तु भ्राता स्वो मूर्त्तिरात्मनः ॥ २२५ ॥

225. The teacher, the father, the mother, and an elder brother must not be treated with disrespect, especially by a Brahmana, though one be grievously offended (by them).

आचार्य्यश्च पिता चैव माता भ्राता च पूर्वजः ।
नार्त्तेनाप्यवमन्तव्या ब्राह्मणेन विशेषतः ॥ २२६ ॥

226. The teacher is the image of Brahmana, the father the image of Pragapati (the lord of created beings), the mother the image of the earth, and an (elder) full brother the image of oneself.

यं माता पितरौ क्लेशं सहेते सम्भवे नृणाम्।
न तस्य निष्कृतिः शक्या कर्त्तुं वर्षशतैरपि ॥ २२७ ॥

227. That trouble (and pain) which the parents undergo on the brith of (their) children, cannot be compensated even in a hundred years.

तयोर्नित्यं प्रियं कुर्य्यादाचार्य्यस्य च सर्वदा।
तेष्वेव त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥ २२८ ॥

228. Let him always do what is agreeable to those (two) and always (what may please) his teacher; when those three are pleased, he obtains all (those rewards which) austerities (yield).

तेषां त्रयाणां शुश्रूषा परमन्तप उच्यते।
न तैरभ्यननुज्ञातो धर्म्ममन्यं समाचरेत् ॥ २२९ ॥

229. Obedience towards those three is declared to be the best (form of) austerity; let him not perform other meritorious acts without their permission.

त एव हि त्रयो लोकास्त एव त्रय आश्रमाः।
त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ॥ २३० ॥

230. For they are declared to be the three worlds, they the three (principal) orders, they the three Vedas, and they the three sacred fires.

पिता वै गार्हपत्योऽग्निर्माताग्निर्दक्षिणः स्मृतः।
गुरुराहवनीयस्तु साग्नि त्रेता गरीयसी ॥ २३१ ॥

231. The father, forsooth, is stated to be the Garhapatya fire, the mother the Dakshinagni, but the teacher the Ahavaniya fire; this triad of fires is most venerable.

श्रीश्रीदुर्गा शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्ब्यते सेयमम्बा श्रीशिवसुन्दरी॥

## भासावतरणिका।

**निस्तेजयं स्तपनमग्निमपि प्रकामं**
**भ्रष्टश्रियं तरुचयं रचयन् स चायम्।**
**पौषः सरोष इव शोणितशोषयन्नः**
**मर्मस्पृशा तुहिनफुत्कृतिवायुनैति॥ ***

## उद्भटश्लोकाः।

"राजोत्पले हरिभुजामपि के शवस्य
यस्योरसीन्दुरदनञ्च जटाकलापे।
शङ्खाम्बरः सततगादरिनाथसूनुः
कान्ता स वोऽगतनया विपुलं ददातु॥" २३३॥ †

त्वमगल्भस्त्वहं राम इदानीं कथमादरः।
अवस्था पूज्यते राजन् न शरीरं शरीरिणा॥ २३४॥

"मनः क्षतं क्षतं राम! न शरीर क्षतं क्षतं।
येनैवालिङ्गिता कान्ता तेनैवालिङ्गिता सुता॥" २३५॥

---

* शोणितशोषं कुर्वन् इति णिजन्तात् शतृः।

† यस्य शिवस्य उरसि हरिभुजां सर्पाणां राजा वासुकिरस्ति। यस्य च अदनं भोजनं शवस्य मृतस्य उत्पले मांसरहिते के मस्तके। यस्य च जटाकलापे इन्दुश्चन्द्रः। यश्च शिवः खाम्बरः दिगम्बरः एवं सततगादरिनाथसूनुः सततगं वायुं अत्ति यः स सततगात् तस्य अरिर्मयूरः तस्य नाथः कार्त्तिकेयः सूनुर्यस्य सः। एवं अगतनया पार्वती कान्ता यस्य गृहिणी, स शिवः वः युष्माकं विपुलं मं मङ्गलं ददातु इत्यर्थः।

श्रीः

( धर्मस्तवः )

श्रीपतिं नौमि मद्बुद्धेः प्रसादार्थं दयाम्बुधिम् ।
वर्त्तते जगतो नूनं यस्याऽधीने स्थितित्रयम् ॥ १ ॥
श्रीद्वैतमतसंस्थापकाचार्य्यं वैष्णवोत्तमम् ।
मध्वन्नमामि मद्बुद्धि-शुद्ध्यै तद्गतमानसः ॥ २ ॥
येन धर्मविवेकाख्यो निबन्धोऽस्ति प्रकाशितः । "युग्मम्"
सँज्ञापरूपसारार्थं "चन्द्रिकायां" महात्मना ॥ ३ ॥
जयचन्द्रं पूज्यपादं सत्सिद्धान्तशिरोमणिम् ।
विद्वद्विभूषणं वन्दे भट्टाचार्य्यकुलध्वजम् ॥ ४ ॥
महर्षिसंस्तुतं धर्मं स्तौमि क्षुद्रमतिर्बुधाः ।
राजहंसैः सदा सेव्यां चटको जाह्नवीमिव ॥ ५ ॥
नमोऽस्तु धर्माय सनातनाय, स्वसेविनां भञ्जितयातनाय ।
समस्त सत्कर्मगणाश्रयाय, जितेन्द्रियैरेव समाश्रिताय ॥ ६ ॥
कथं लभन्ते ते मर्त्या येऽज्ञानध्वान्तचारिणः ।
धर्मदीपं विनाऽनर्घ्यं मुक्तिमार्गं सुरक्षितम् ॥ ७ ॥
धर्मो हि भूषणं पुंसां सुभ्रुवां कवरीभरः ।
माधुर्य्यं वचसां, विद्या तरुणानां सुरूपिणाम् ॥ ८ ॥
धर्माद् गुणाधानं तस्मात्सदसद्विवेकता बुद्धेः ।
तस्याः सदाश्रयेच्छा ततश्च नरजन्मसार्थकता ॥ ९ ॥
धर्मवर्मभृतः क्वाऽपि यमनिस्त्रिंशिकाऽऽहतिः ।
बाधते न यथा शीतं पञ्चाग्नेर्मध्यवर्त्तिनम् ॥ १० ॥
* धर्मिणां नास्ति धर्मस्य भीतिर्धर्मविहारिणाम् ।
शुद्धधर्मवतां जातु धर्माणामिव सज्जनाः ॥ ११ ॥

---

* घर्माः पुण्यचयन्याय स्वभावाचारणोपमाः ।

धर्मो धर्मभृतां सुरेशनगरीपाथेयमत्यादृशम्
धर्मो दुर्गतिरोगभीतमनसां जीवातुरित्युच्यते ।
धर्मः शर्मकरः कलौ तनुभृतां धर्मो भवाब्धौ तरि-
र्धर्मादन्यतमन्न वेद्मि जगतः सञ्जीवनं पावनम् ॥ १२ ॥
यदि क्षितरतिः सर्वो देही निदानमुपेक्षते
समधिकगुणं धर्मं मूढ़ः कथं लभते फलम् ।
वसनरचनाकांक्षी तन्तूनपास्य समीक्षितम्
कुत उपगतः क्वाप्यल्पं विवेकसुदुर्गतः * ॥ १३ ॥
धर्मश्रद्धाविधुरैर्दुर्गतसम्माननीयसत्पितरौ ।
कथमिव संसेव्येते धनवनितालोलुपैर्नृसमौ † ॥ १४ ॥
विना धर्मं सुखं नास्ति सुखवाञ्छा न कस्य च ।
तस्मात्सर्वैः प्रयत्नेन साधनीयतमो हि सः ॥ १५ ॥
अधर्माल्लोकानां विषमविषयाक्रान्तमनसा-
मगम्यासंभोगे प्रसरति मनोवन्यरहितम् ।
अभक्ष्ये भक्ष्यत्वं चपलरसना संजनयति
प्रभूतो दुःखाग्निर्दहति हि ततो देहमखिलम् ॥ १६ ॥
तदधर्मो गर्हणीयः प्रायश्चिः सर्वथा जनैः ।
किं भुज्यते रसालापि विषमिश्रा मनीषिभिः ॥ १७ ॥
धर्माद्बभूव विजयी युधिष्ठिरोऽधर्मतश्च तद्रिपवः ।
नाशं जग्मुः सर्वे श्रयताऽन्यतरं स्ववाञ्छितं स्मृत्वा ॥ १८ ॥
धर्माऽधर्मौ हेतू विजये रामस्य रावणस्यान्ते ।
एतत्सम्यग्बुद्धा धर्ममणिं हृद्गतं कुरुतः ॥ १९ ॥
शास्त्रद्वारपराङ्मुखो हि नितरां संगेन पाषण्डिनां,
भङ्गप्रायसुधर्मभक्तिरभवत् प्राक्काव्यविद्याभवः ।

---

* अतीव विवेकहीनः ।　　† मनुष्यसाधारणौ ।

दृष्ट्वा धर्मविवेकमार्य्यलिखितं श्रद्धालुरद्यास्ति यो,
भीमाचार्य्यसुतेन तेन नरसिंहेन प्रणीतः स्तवः ॥ २० ॥

पुणेकरोपाह्वः—श्रीनरसिंहशर्मा
कित्तूर ( बेवगांव )

---

## उद्भटप्रसङ्गः।

( श्वशुर-पुत्रवध्वौ। )

कस्मिंश्चिद्देशे दानवीरो नाम महान् धनिक एक आसीत्। तस्य खलु आपातमधुरे विषयोपभोगे नासीन्मनसः प्रवणता। स केवलं निरन्तरं दाने एव व्यसनतामापन्नः एकस्मै प्रचुरं द्रव्यं ददानोऽपि नास्मै किञ्चिदहमदामित्येवमाशु विस्मृतिं गतः पौनःपुन्येन तस्मै तस्मा एव ददाति स्म। एवममितदानात् द्रागेव क्षीणविभवः परं दारिद्र्यं गतः।

तथापि नासौ दानव्यसनादुपरराम। प्रत्युत ऋणमङ्गी कुर्वाणोऽपि यथापूर्वं केवलं द्रव्यं वितरत्येव न प्रतिशृणोति गुरूणां प्रतिषेधं न वा गृह्णाति मन्त्रिणामुपदेशम्।

तस्मिन्नेव समये तस्यैव राज्ये कस्यचित् नीतिव्रतनाम्नः चत्रस्य नवोऽभ्युदयो जातः। पूर्वतनो धनिकस्तु नूतनस्य नीतिव्रतस्य लक्ष्मीमतः अधमर्णो भूत्वा क्रमश आकण्ठं ऋणपारावारे निमग्नः ऋणशोधनाय समग्रां भूसम्पत्तिं तस्मा एव नवधनिने प्रादात्। एवञ्च सुतरामेव प्राचीनं तमपहाय राजश्रीर्नवीनमेव तं नीतिव्रतं धनिकमालिलिङ्ग। नीतिव्रतस्य तनयोऽपि कुलशेखरीभूतः एक आसीत्।

दानवीरस्तु दुर्लभऋणोऽपि परमं निर्वेदमापन्नः चिन्तयामास। अहो अधुना भारभूतमिव जीवनं वृथा वहामि। इदानीमलब्ध वेतनास्तु भृत्या यथेच्छं गताः। हाधिक् हाधिक् स्त्रीधनमेवेदानीं

जीवनसहायः * यदधुना सर्वा एव सम्पदो मम नीतिव्रतमेवाश्रिश्रियु स्ताहिं अनवद्याङ्गीं कन्यामपि हेमाङ्गीं नाम नीतिव्रतपुत्राय श्रीधराय प्रदास्यामि, एवं सुष्ठु विचार्य्य तथैव नीतिव्रतपुत्राय श्रीधराय स्वकन्यां हेमाङ्गीं प्रायच्छत् ।

नीतिव्रतस्य तु नीतिमधि श्रियः क्रमन्ते, संसिक्तानुदिनं व्रतती सदाश्रयमालम्बमाना निष्प्रत्यूहं लब्धोदया च कुसुमानि च फलानि च प्रसवति । स खलु प्राणानपि पणायन्ते तथापि नीतिपथात् तणीयसीमपि रेखां न व्यत्येति । न परिगणयति वचनीयामर्वाग्दृशाम् । न व्ययति मितमतिक्रम्य द्रव्यं । एवं स नीतिव्रतः सुखेन समयं नयति ।

अथ स कदाचिदित्थं चेतसि चिन्तयति अहो दानवीरस्य तस्य कन्यायै कथञ्चित् किञ्चिदुपदेष्टव्यं येनहि दुःखसम्पर्कमपि नोदर्कं दम्पती भजेते । गृहिणीभिर्व्यये मनाक् बद्धमुष्टिभिर्भवितव्यं तथाच मनुः । ५ । १५०

"सदा प्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥" इति

अथैकदा नीतिव्रतः स्वाभिप्रायं व्यज्ञापयत् मदीया स्नुषा माता कथङ्कारं कोट्टम्बा पचति इत्यहं परीक्षे, अत आगामिदिवसे वधूमात्रा पक्तव्यं परिवेशयितव्यं मया च भोक्तव्यमिति ।

अथ परेद्यवि यथासमयमशितुं नीतिव्रत उपविशति । विविधे च स्वर्णादिपात्रे सुपक्कमन्नं व्यञ्जनञ्च कियत्प्रदत्तम् । दत्त्वा च हेमाङ्गी प्रच्छन्नं गवाक्षच्छिद्रेषु सकौतुकं पश्यति ।

श्वशुरस्तु नीतिव्रतः प्रथमतः रजतपात्रादुष्णोष्णे अन्ने यावत्

---

* स्त्रीधनानि च ये मोहादुपजीवन्ति बान्धवाः ।
स्वर्णं यानानि वस्त्राणि ते पापा यान्त्यधोगतिं ॥ इत्यापस्तम्बसंहिता ९ । २६

घृतं पातयति तावन्मक्षिकैका च तत्र पपात पश्यति, ततश्च मक्षिका पक्षलग्नमपि घृतं नापव्ययतामेतु इति विविच्य एकधा द्विधा त्रिधा च मक्षिकासुष्णभक्तोपरि निदधाति। पुनः पुनः पश्यति च, यदा पश्यति नास्तीदानीं मक्षिकापक्षयोः किञ्चिदपि घृतं तदा तां परित्यजति। एवं सानन्दं षड्रसोपेतं विविधं व्यञ्जनं मधुस्फीतं स्नुषया परिवेशितं सुस्मृतं चोरस्य सुक्ष्मं आकण्ठमुदरपूरं स भुङ्क्ते। कथयति च स्वभार्यामन्यांश्च वधूमातुः पाकोऽतीव हृद्यो मधुरतर इति।

अथ दृष्ट्वा च श्वशुरेण हविषो निष्कासनं मक्षिकापक्षलग्नस्य हैमाङ्गी चिन्तामाप दुरत्ययां। अहो अनवरतमवाङ्मनसगोचरमर्थिसार्थेभ्यो दानं विदधानस्य न्यक्कृतकल्पपादपस्य मदीयतातपादस्य वेश्मनि किङ्करा अपि घृतेनाभ्यङ्गमाचरन्ति। प्रदीपेषु च घृतमेव व्यवहरन्ति। काककुक्कुरा अपि अवहेलया घृतं नाश्नन्ति। पत्तयोऽपि घृतेनोपानहां स्निग्धतामापादयन्ति। इतः किमिदमतिचित्रं यन्मक्षिकापक्षभ्यामपि घृतादानम्? न जाने का वा दशा लभ्यते मन्दभागिन्या पित्रोरतिदुर्ललितया (१) च मयेति। कथङ्कारं वा प्रतिक्षणं निपुणं सावहितापि तावन्ति गृहकृत्यानि सम्पादयामि; इत्येवं दुश्चिन्तयन्ती हैमाङ्गी परमातङ्केन समयं समापयति। कथमपि नास्यै प्ररोचन्ते भक्ष्याणि। न वा प्रतिरात्रमेकधापि लोचनकमले मुद्रयति निद्रा। एवमनन्ननिद्रारुचिः सा हैमाङ्गी क्रमशान्यप्यङ्गकाणि कृशीकरोति।

नीतिव्रतस्तु निशम्य तथाविधामवस्थां शारीरिकीं स्नुषायाश्चिकित्सार्थं चिकित्सकसार्थं न्ययुङ्क्त। चिकित्सकास्तु निपुणम् निरूप्यापि केयं विकृतिः कस्य वा रोगस्य निर्णेतुमिदमिह तथ्यमिति नाशक्नुवन्। गणत्कारास्तु ग्रहवैगुण्यमाकलयन्ति। भौति-

(१) अत्यादरभाजा। दुर्लभवस्तुमापि कृतसन्तोषया।

कास्तु देवयोनिविशेषानामियं विभीषिकेति निश्चिन्वन्ति। तथाच युक्तमुक्तमभियुक्तैः ।

"वैद्या वदन्ति कफपित्तमरुद्विकारान्
ज्योतिर्विदो ग्रहगणान् परितर्कयन्ति।
भूताभिभूत इति भूतविदो वदन्ति
कर्मेति शुद्धमतयो यतयो वदन्ति ॥" इति।

अथ यदा पश्यति नीतिव्रतः पृथग्विधैरप्युपायैर्नापगच्छति स्नुषाया तानवो ग्लानिः। तदा मनसि विहस्य स्मारं स्मारञ्च ग्लानि निदानं तच्छान्त्यर्थं महासंरम्भं क्रतुमेकं ऋत्विग्भिरारब्धवान्। तत्र च यज्ञे हीरकमुष्टिभिर्यष्टव्यं यावद्रोगोपशमम्।

अथ वितते यज्ञे स्वपुत्रं श्रीधरमाहूय नीतिव्रत ऋत्विङ्मुखे-नाह अयि नन्दन! श्रुतं त्वया स्नुषाया ग्लानिविनाशकं श्वः काले यज्ञमेकमकारयिष्यम् इति। तत्र च अद्य मात्रा स्नुषया त्वया च संयतेन भाव्यं। कोषागारे च स्थातव्यं। श्वस्तु स्नुषामातुः करस्पर्श-पूतानि हीरकाणि यज्ञभवने प्रेरयितव्यानि।

परेद्युर्यज्ञः प्रवृत्तः। प्रथमत ऋत्विग्भिरनुमता हेमाङ्गी लौह-पेटकादवतारितानि हीरकाणि शतमुष्टिमितानि दक्षिणहस्तेन सर्वतः पस्पर्श। ततश्च तानि यज्ञगेहं नीतानि प्रदीप्ते च जातवेदसि हेमाङ्गीशान्तिकामनया ऋत्विजो जुहुवुः। पुनरप्यन्यां हीरकपूर्णां लौहमञ्जूषामानेतुं भृत्या सदस्याग्रता कोषागारं जग्मुः। तान-वलोक्य हेमाङ्गी भर्त्तारं श्रीधरं पृच्छति अयि वल्लभ! इतो नीतै-रसंख्यातैर्हीरकैः किमद्य विधीयते? श्रीधर आह, अयि प्रिये! किमन्यत्, त्वमनुदिनं कान्त्याम्लायसि देहे च क्षिणासि अतः सर्वा एव सम्पदो विफला मन्यमानेन तातपादेन त्वत्कृते महत् स्वस्त्ययन-मनुष्ठापितम्। यज्ञे च तानि हीरकाणि प्रदीप्ते हुताशने जुहाव-यिषति। तदाकर्ण्य हेमाङ्गी चिन्तयति हंहो प्राचीनोऽयं श्वशुरः

अनतिविलम्बेन चेत् कालवशं गमिष्यति, तर्हि असौ कश्चिदपि दारिद्र्यक्लेशं नानुभविष्यति। किन्तु इत्थं सङ्गारलेषु दह्यमानेषु भविष्यति दारिद्र्यवेदनानां परां कोटीमावामेवानुभविष्याव: इति। ततो व्यक्तमाह अयि जीवितनाथ! मदाश्वादात्मजनैः श्वशुरं निवेदय "अहमधुना यन्नर्मह्म्ना स्वस्था हृष्टा चाभवम्; मा पुनर्महार्घ्याणि रत्नानि भस्मीभावं क्षपत।

एवमात्मजनोपनीते वधूवृत्तान्ते नीतिव्रत: सानन्दमिदमाह "चेदेवं, स्नुषा माता वीतग्लानिस्तदा यथेच्छं सहर्षं भुङ्क्तां निद्रातु हृष्यतु हसतु कौतुकं प्रकटयतु ततश्चास्मान् प्रीणयतु।

ततः प्रभृति नासौ कृपणो मे श्वशुर: यः खलु मदर्थं महामूल्यानि रत्नानि चाग्नौ जुहाव इति सानन्दा वीतदुश्चिन्ता हृष्टा च पुष्टा च पुत्रवधू हेमाङ्गी सुखेन समयं नयति।

अथापरेद्यु: नीतिव्रतः स्नुषायै विनीतायै तालपत्रे श्लोकद्वयं लिखित्वा नीतिमुपदिदिक्षुः प्रहितवान् यथा—

"यो जानात्यर्जितुं सम्यक् रक्षितुं न विचक्षणः।
स तु मूर्खतमो लोके वृथा तस्यार्जनश्रमः॥"

"यः काकिणीमप्यपथप्रपन्नां
निषेवते निष्कसहस्रतुल्याम्।
काले च कोटिष्वपि मुक्तहस्त-
स्तं राजसिंहं न जहाति लक्ष्मीः॥" * इति।

---

* काकिणीं षोड़षकार्षापणीम्। अपथप्रपन्नां असत्पथे व्ययिताम्। निष्कमिति सहस्रदीनारतुल्याम्। निषेवते मन्यते। कोटिष्वपि दीनारादिषु। काले समुचितव्यय समये।

# वैदिकाख्यायिका ।

## बृहदारण्यके ६ष्ठाध्याये २यं ब्राह्मणम् ॥

(तत्र श्वेत केतु प्रवाहणयोः प्रसङ्गः)

एकदा श्वेतकेतुर्नाम आरुणेरपत्यं ऋषिः पित्रानुशिष्टः सन् आत्मनो यशो विद्वत्सु प्रख्यापनार्थं पञ्चालानां परिषदमाजगाम। तत्र पञ्चालानां परिषदं जित्वा राज्ञोऽपि महतीं समितिं जेष्यामीति गर्वेण जीवलराजपुत्रं स्वभृत्यैरात्मनः परिचर्यां कारयन्तं प्रवाहण-नामानं राजानमाजगाम। स राजा पूर्वत एव तस्य विद्याभिमान-माकर्ण्य विनेतव्योऽयमिति मत्वा तं दृष्ट्वा च आगतमात्रमेव अहो बालक !!! इत्येवं संबोधयामास। राज्ञा एवमवज्ञया संबोधितः सोऽपि श्वेतकेतुः आकुपितः सन् "भोः" !!! इति राज्ञोऽननुरूपमेव प्रतिशुश्राव। राजा च प्रत्युवाच "किं पित्रा समनुज्ञातोऽस्यत्रा-गन्तुम् ?„ तदा श्वेतकेतुरपि प्रत्युवाच बाढमिति अनुशिष्टोऽस्मि पित्रा पृच्छ यदि संशयस्ते ॥ १ ॥

१। यद्येवं विशेषेण वेत्सि किं येन प्रकारेण म्रियमाणाः सत्यः काश्चित्प्रजा अन्येन मार्गेण गच्छन्ति काश्चिच्च तदितरेण मार्गेणेति प्रजा विप्रतिपद्यन्ते इति राजा पप्रच्छ। श्वेतकेतुराह तन्न वेदेति।

२। पुनरपि प्रवाहणः पप्रच्छ, तर्हि त्वं वेत्थ येन प्रकारेण पर-लोकगताः प्रजाः पुनरिमं लोकं आगच्छन्ति इति ? स श्वेतकेतुः प्रत्युवाच नेत्यहं वेद।

---

१। श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम। स आजगाम जैवलिं प्रवाहणं चारयमाणं तमुदीक्ष्याभ्युवाद कुमारा ३ इति स भो ३ इति प्रतिशुश्रावानुशिष्टो-ऽन्वसि पित्रेत्योमिति होवाच ॥ १ ॥

२। वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता ३ इति नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता ३ इति नेति हैवोवाच; वेत्थो यथासौ लोक एवं बहुभिः पुनः पुनः

३। पुनरपि प्रवाहण: पप्रच्छ—श्वेतकेतो! त्वं विजानासि प्रसिद्धेन ज्वरादिरोगेण पुन: पुनर्म्रियमाणै: बहुभिर्येन प्रकारेण असौ लोको न परिपूर्य्यते इति। नाहं वेद्मीति श्वेतकेतु: प्रत्युवाच।

४। पुनरपि प्रवाहण: पप्रच्छ—श्वेतकेतो! यत्सख्याकायामाहुतौ हुतायां आप: यदा पुरुषाकाररूपेण परिणता भूत्वा सम्यगुत्थिता: सन्त: वदन्ति इति त्वं वेत्थ। तदाकर्ण्य श्वेतकेतु: प्रत्युवाच नाहं वेद्मीति।

५। पुनरपि प्रवाहण: पप्रच्छ हे श्वेतकेतो यत्कर्म्म कृत्वा देवयानं वा पितृयानं प्रतिपद्यन्ते तत् देवलोकपितृलोकप्राप्ति-साधनं कर्म्म त्वं जानासि। देवलोकपितृलोकगमनसाधनं मार्ग-द्वयमेव नास्तीति मा मंस्था:। तत्रार्थे मार्गद्वयप्रकाशकमृषेर्वाक्य-मस्माभि: श्रुतमस्ति। (यथा) द्वौ मार्गौ श्रुतवानहं, तयोरेकेन मृता मनुष्या: पितृलोकं गच्छन्ति अपरेण च देवलोकमिति। ताभ्यामेव वर्त्मभ्यां समस्तं जगत् तत्र तत्र गच्छत् समवैति इति। द्यावा पृथिव्योर्मध्ये शरीरधारिणामेव तौ द्वौ मार्गौ इति। श्वेत-केतुराह नाहमेषां प्रश्नपञ्चकानां नैकमपि वेद इति ॥ २ ॥

अनन्तरं स राजा प्रवाहण: अपनीतविद्यागर्वं तं "इह आस्यन्तां भवन्त: पाद्यमर्घ्यञ्च प्रतिगृह्णन्तु" इत्येवमुपमन्त्रणं कृतवान्। अनादृत्य च तामभ्यर्चनां युवा श्वेतकेतु: तस्मात् प्रदुद्राव। आजगाम च पितरमुवाच! वाव! किल भवान् पुरा मां समावर्त्तनसंस्कारकाले

---

प्रयद्भिर्नपूर्य्यता ३ इति नेति हैवोवाच, वेत्थो यतिथ्यामाहुत्यां हुतायामाप: पुरुषवाचो भूत्वा समुत्थाय वदन्ती ३ इति नेति हैवोवाच,

वेत्थो देवयानस्य वा पथ: प्रतिपदं पितृयानस्य वा, यत्कृत्वा देवयानं वा पन्थानं प्रति-पद्यन्ते पितृयानं वापि हि न ऋषेर्वच: श्रुतं द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानां ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरञ्चेति नाहमत एकञ्चन वेदेति होवाच ॥ २ ॥

सर्वास्वेव विद्यासु भवान् लब्धज्ञानोऽस्तीत्येवमवोच इति। आरुणि-रेवं सोपालम्भं पुत्रस्य वचः श्रुत्वाब्रवीत्—हे मेधाविन्! शृणु ममापि पुरा यथावृत्तं एकदा स राजाधमः पञ्चकान् प्रश्नान् माम-प्राक्षीत् तेषां नैकमपि विदितवानस्मि। भवत्यपि तेन राज्ञा कतमे प्रश्नाः पृष्टा इति पित्रोक्तः पुत्र इमे एव प्रश्नाः मामपि तेन पृष्टा इत्युदाजहार॥ ३॥

ततः स आरुणिः क्रुद्धं पुत्रं तथा उपशमयन् प्राह हे वत्स! श्वेतकेतो! अहं यत्किञ्च विज्ञानजातं वेद सर्वमेव तुभ्यमवोचमिति ध्रुवं जानीथाः। कोऽन्यो मे त्वदृते प्रियतरोऽस्ति यदर्थं रक्षिष्ये। अहमप्येतन्नवेद्मि यद्राज्ञा ते पृष्टम्। तस्मात् हे पुत्रक! एहि तां विद्यामुपार्जितुं तत्र गत्वा राज्ञि ब्रह्मचर्य्यं वत्स्यावः। श्वेतकेतुराह भवानेव तत्र गच्छतु नाहमुत्सहे पुनर्मुखं निरीक्षितुं तस्य। ततः स गोतमगोत्रः आरुणिः प्रवाहणस्यास्थानं जगाम। स च राजा तस्मा आरुणये अभ्यागताय आसनं भृत्येनानुरूपमुदकञ्चोपाहरत्। एवं पुरोधसा अर्घ्यं मन्त्रपूतमधुपर्कञ्च प्रादापयत्। कृत्वा चैवं विधां पूजां स "वरन्ते भगवते गौतमाय गोऽश्वादिरूपं ददामि इति" प्रोवाच॥ ४॥

तत आरुणिरुवाच—भोराजन्! त्वया खलु प्रदातुं वरः प्रति-ज्ञातः, किन्तु अस्यां प्रतिज्ञायामात्मानं दृढयतु तथाहि यां खलु

---

अथैनं वसत्योपमन्त्रयाञ्चक्रेऽनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तं होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचं इतिं कथं सुमेध इति पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत्ततो नैकञ्चन वेदेति कतमे त इतीम इति ह प्रतीकान्यु-दाजहार॥ ३॥

स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किञ्च वेद सर्वमहं तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्य्यं वत्स्याव इति भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवा-हणस्य जैवलेरास तस्मा आसनमाहृत्योदकमाहारयाञ्चकाराथ हास्मा अर्घं चकार तं होवाच वरं भगवते गौतमाय दद्म इति॥ ४॥

प्रश्नरूपां वाचं मम पुत्रस्यान्ते त्वमभाषथाः तां मे ब्रूहि स एव मे वर इति ॥ ५ ॥

(क्रमशः)

---

## सती छाया।

(पूर्वतोऽनुवृत्ता)

छायावत्सलो मातुलः कथञ्चित् मनसि शान्तिं लभते। नरेन्द्रः पण्डितमाह "पण्डितमहाशय! तर्हिं श्वः प्रातरेव तत्र नीत्वा छाया स्थाप्यताम्।

परेद्युः प्रातः दुःखिनी छाया शय्याया उत्तिष्ठति। तस्या मुखं मलिनं। गृहकोणे मध्यमधुषमास्ते। दुःखिनी सा ह्यो रात्रौ न किञ्चिन्मात्रमपि भक्ष्यमस्पृशत्। मनस्तु तीव्रवेदनया पीड़ितम्। तथापि मनसि आशास्ते—सम्भवत्येतत् यदि विलासी यतीन्द्रः स्वयमयाचिष्यते तदा मातामही मातुलश्च तथैवानुमोदिष्यते। मुग्धा बाला आशानिवद्धा झटिति प्रातः कृत्यं समाप्य स्वकक्षं प्रविशति पश्यति च नरेन्द्रः परमविमर्षमुपविशति। तदैव छाया अनुमिनोति अधुनैव मया वाटीयं परित्यक्तव्या इति। सरलाया अन्तर्विदीर्य्यत इव। विषादकालमेघस्तस्या मुखेन्दुमावृणोति। निर्म्मलाया अकृत्रिमः स्नेहः, यतीन्द्रस्य तथाविधं प्रेम, च युगपन्मानसे समुदित्य हृदि दलितेव निराश्रया बाला मातुलस्य पदप्रान्ते लुठन्ती विलपति मातुल! मातुल! त्वमसि मे अनन्यभक्तिभाजनं स्निह्यसि च कथमिव मां परित्यज्य स्थास्यसि। नरेन्द्रः व्याकुलमाह अयि मन्दभागिनि! नाहं त्वां किञ्चिदपि स्निह्यामि, तथा सति कथमकाण्डे केवलं लोकापवादाद्भीतस्त्वां निर्वासयामि? छाये! मातः! मारोदितव्यं। ईश्वरश्चेदनुगृह्णाति

---

स होवाच प्रतिज्ञातो म एष वरो यान्तु कुमारस्यान्ते वाचमभाषथास्तां मे ब्रूहीति ॥५॥

तर्हि सर्वत्रैव सुखं लप्स्यते। सती छाया वृद्धेन पण्डितेन सार्द्धं वेलाया नवघटिकायां वादितायां नौकामारोहति। खुद्रामिका श्वेतलौहपेटिकां पूरयित्वा छायाया वस्त्रादिकं प्रदत्तम्। नौका चलति, वत्सलस्तु मातुलस्तीरे तिष्ठन् सजलनयनं पश्यति, नावि अदृश्यायां स गृहं प्रत्यागतः।

कियन्तं चणमतीत्य विलासी यतीन्द्रः नरेन्द्रघोषगृह-माजगाम। तस्मै सादरमुत्थाय नरेन्द्र आसनं प्रददौ। पप्रच्छ च किमर्थमस्मिन् ग्रीष्मसमये अनुयायिन इव मे गृहागमनक्लेशः स्वीक्रियते कुमारेण। यतीन्द्रस्तु लज्जाविनम्रशिराः कथयति महा-शय! भवता ज्ञातमिति प्रतिभाति मे, यदहं भवतो भागिनेयीं परि-णयेनाभिलषामि, चेदेतद्भवतानुज्ञायते तदा सर्व एव वयं प्रीणीमः। नरेन्द्रघोषस्तु सदीर्घनिश्वासं म्लानमुखमाह कुमार! तत्तु न सम्भवनीयं, यतश्छाया प्रच्छन्नं जन्म गृह्णातिस्म, एवं तस्या मातापि पलायिता, पितापि न तस्या अभिज्ञायते। एवं सति छायया ते विवाहः सामाजिकरीत्या कुलं ग्लपयिष्यति। तदानीं नवीभूतेन लोकवादेन वयमपि मृत्युयातनामनुभविष्यामः। यतीन्द्रस्तदाकर्ण्य सनिर्वेदं स्वगृहं प्रतिनिवृत्तः निर्मलायै सर्वं कथयामास। श्रुत्वा च निर्मला मर्माणि विद्द्याति।

इतस्तु यथासमयं सती छाया महाध्यापकेन भवानीपुरे उप-तस्थे। गृहस्वामिनीं पूजागृहे स्थितां काचिद्दासी शिरोमणिना महात्मना सार्द्धं एका बालिका समागतवतीति व्यज्ञापयत्। गृह-स्वामिनी पूजादिकं समाप्य आगत्य च शिरोमणिभट्टाचार्येण समं बालिकां दृष्ट्वैव स्वतः स्नेहार्द्रहृदया बभूव, चिन्तयामास च हृदये कथमिव परगृहे ईदृशीं सर्वाङ्गसुन्दरीं प्रेरयामासास्या गुरुजनः। प्रणम्य गृहस्वामिनी पण्डितमहाशयं छायायाः समस्तवृत्तान्तं शृणोति। पण्डितश्च शिरोमणिः छायामधिकृत्य गृहस्वामिनीं

किञ्चिदनुरुणद्धि अयि आर्य्यहृदये बालिकेयं रत्नोपमा, किन्तु चिर-दुःखिनी, अस्याः कृते एतावद्वाच्यं यद्भवत्या कन्यानिर्विशेषमियं द्रष्टव्या, परन्तु भाग्यायत्तमस्याः न तदर्थं किञ्चिद् ब्रुवे।

ततश्च गृहस्वामिनी शिरोमणिमहाशयं यथार्हमि भोजयित्वा कथयित्वाच विविधकथां पराह्ने तस्मै रूपकशतं प्रदाय प्रणम्य च विसृजति।

गते च शिक्षके अश्रुपूर्णा छाया गृहस्वामिनीमालक्ष्य "मातः नास्ति मे जन्मतो दुःखिन्याः कोऽपि जगतीत्युच्चैरुच्चार्य्य तस्याः पादयोः पतति। गृहस्वामिनी च दयार्द्रहृदया छायां क्रोड़-मानीय पुनः पुनश्चुम्बित्वा च वदनकमलं परामृश्य च पृष्ठमस्याः कथयति कथमिति वत्से! तव कोऽपि नास्तीति अहमेवास्मि अद्य प्रभृति ते माता, सर्वमेव भवनमिदन्ते निश्चिनु, सुखं भुङ्क्ष, सुखं स्वपिहि इत्युक्त्वा गृहस्वामिनी छाया च प्रशस्तमेकं गृहमध्यासीना विविधेनालापेन दिनं गमयति।

(क्रमशः)

इति पञ्चमः परिच्छेदः समाप्तः

---

## धर्म्मविवेकः।

( पूर्वप्रकाशितात्परम् )

वामापदः समागत्य शिवरामं प्रणम्य पार्श्वे उपासीनः।

शिवरामः। वत्स! अपि सर्वाङ्गीनं ते गृहवासिनां कुशलं ?

वामा। श्रीमत्पादप्रसादात् प्राणतः कुशलं किन्तु गृहवासिनां मम, अन्येषाञ्च प्रतिवेशिनां प्रायः कश्चित् ज्वरेण कश्चित् पीनसेन, कश्चिद्वा उदरामयेण क्लिश्यति। न कस्यापि चेतसि स्फूर्त्तिर्जागर्त्ति।

शिवः। कालस्यैवायं महिमा, ऋतुविपर्य्ययदोषादेव प्रभवन्ति विविधा रोगाः। आ एवं स्मरामि पूर्वं दशवर्षतः [यावाननुभूतश्च]

शीतः प्रत्यञ्चिता च यावती वृष्टिः, नाधुना तथानुभूयते। पुरा तु शीतर्त्तौ शीतप्राबल्यात् करौ रिक्तस्पर्शशङ्किकौ न स्त इव जड़ौ बभूवतुः नाधुना तथेति। पुरा किल श्रावणमासि यथा स्थगितदिगन्तवलाहकव्रातः क्रमशो दिवाख्यहोरात्राणि निरन्तरं नीरवञ्च मुषलधारेणैव ववर्ष अधुना तथा नोपलभ्यते। अधुना ग्रीष्मस्यैव प्राचुर्य्यं समधिककालमनुमीयते।

वामा। गुरो कथमधुना इत्यङ्कारं सम्भवेत् ?

शिव। (विहस्य) दुराचारतैव लोकानामत्र कारणमन्वमानि ऋषिभिरिति, तथाच गर्गसंहितावार्हस्पत्ययोः।

"अतिलोभादसत्याद्वा नास्तिक्याद्वाप्यधर्मतः।
नरापचारान्नियतमुपसर्गः प्रवर्त्तते॥
ततोऽपचारान्नियतमपवर्जन्ति देवताः।"
ताः सृजन्त्यद्भुतां स्तांस्तु दिव्यनाभसभूमिजान्॥
त एव विविधा लोके उत्पाता देवनिर्म्मिताः।
विचरन्ति विनाशाय रूपैः सम्बोधयन्ति च॥०
"शीतोष्णादिविपर्य्यासो ऋतूनां रोगजं भयं।
पुष्पे फले च विकृते राज्ञो मृत्युं तथादिशेत्॥"

इत्याद्या बहुधा उपसर्गा विद्यन्ते। एतदेवाद्भुतमिति कथ्यते मुनिभिः

एते तु क्षुद्ररोगाः, ऋतुविपर्य्ययाज्जनपदोऽपि ध्वंसते। का कथा ग्रामस्य कस्यचिद्भवनस्य वा।

अद्य किञ्चिच्चरकोक्तं ऋतुविपर्य्ययादिकं शृणु। तथाच चरके विमानस्थाने ३याध्याये।

"कालन्तु खलु यथर्त्तुलिङ्गाद्विपरितलिङ्गमतिलिङ्गं हीनलिङ्गञ्चाहितं व्यवस्येत्।

इमानेवं युक्तांश्चतुरो भावान् जनपदोद्ध्वंसकरान् वदन्ति कुशलाः अतोऽन्यथाभूतांस्तु हितानाचक्षते।

विगुणेष्वपि तु खलु एतेषु जनपदोद्ध्वंसनकरेषु भावेषु भेषजेनोपपाद्यमानं भयं भवति रोगेभ्यः इति।

वैगुण्यमुपपन्नानां देशकालानिलाम्भसाम्। गरीयस्त्वं विशेषेण हेतुमत्सम्प्रचक्षते॥

वाताद् जलं जलाद्देशं देशात्कालं स्वभावतः। विद्याद्दुष्परिहार्य्यत्वात् गरीयस्तरमर्थवित्॥
वाय्वादिषु यथोक्तानां दोषाणान्तु विशेषवित्। प्रतिकारस्य सौकर्य्ये विद्याल्लाघवलक्षणम्॥
चतुर्ष्वपि तु दुष्टेषु कालान्तेषु यदा नराः। भेषजेनोपपद्यन्ते न भवन्त्यातुरास्तदा॥
येषां न मृत्युसामान्यं सामान्यं न च कर्म्मणाम्। कर्म्म पञ्च विधन्तेषां भेषजं परमुच्यते॥
रसायनानां विधिवच्चोपयोगः प्रशस्यते। शस्यते देहवृत्तिश्च भेषजैः पूर्वसुद्धृतैः॥
सत्यं भूते दया दानं बलयो देवतार्च्चनम्। सद्वृत्तस्यानुवृत्तिश्च प्रशमो गुप्तिरात्मनः॥
हितं जनपदानाञ्च शिवानामुपसेवनम्। सेवनं ब्रह्मचर्य्यस्य तथैव ब्रह्मचारिणाम्॥
सङ्कथा धर्म्मशास्त्राणां महर्षीणां जितात्मनाम्। धार्म्मिकैः सात्त्विकैर्नित्यं सहास्या वृद्धसम्मतैः॥
इत्येतद् भेषजं प्रोक्तमायुषः परिपालनम्। येषामनियतो मृत्युस्तस्मिन् काले सुदारुणे॥"

"तमुवाच भगवानात्रेयः सर्वेषामप्यग्निवेश! वाय्वादीनां यद्वैगुण्यमुत्पद्यते तस्य मूलमधर्म्मः तन्मूलञ्चासत्कर्म्म पूर्वकृतं तयोर्योनिः प्रज्ञापराध एव।

तद्यथा—यदा देशनगरनिगमजनपदप्रधाना धर्म्ममुत्क्रम्याधर्म्मेण प्रजां वर्त्तयन्ति। तदाश्रितोपाश्रिताः पौरजनपदा व्यवहारोपजीविनश्च तमधर्म्ममभिवर्द्धयन्ति। ततः सोऽधर्म्मः प्रसभं धर्म्ममन्तर्धत्ते। ततस्तेऽन्तर्हितधर्म्माणो देवताभिरपि त्यज्यन्ते। तेषान्तथान्तर्हितधर्म्माणां अधर्म्मप्रधानानाम् अपक्रान्तदेवतानाम् ऋतवो व्यापद्यन्ते। तेन नापो यथाकालं देवो वर्षति विकृतं वा वर्षति। वाता न सम्यगभिवान्ति चितिर्व्यापद्यते। सलिलान्युपशुष्यन्ति। ओषधयः स्वभावं परिहायापद्यन्ते विकृतिं। तत उद्ध्वंसन्ते जनपदाः। स्पर्शाभ्यवहार्य्य-दोषात्।"

**वामा।** श्रुतं बुद्धञ्च धर्म्मविप्लवाद्देशः समुच्छिद्यते इति। देव! देवाराधनेन यज्ञादिना ब्रह्मचर्य्यादिना च पवनः पवते, तेन च जलं शुध्यति तेन च मृत् शुचीभवति। तेन च देशः स्वस्थो स्यात्। तेन च कालः स्वारूप्यं भजते इति। अत्रैतदाशङ्कते देवाराधनादिना मानवसमवेतधर्म्मेण वाय्वादीनां कः सम्बन्धः?

**शिव।** वत्स! धर्म्मस्य गतिरतिसूक्ष्मा। धर्म्मकर्म्मानुष्ठानात् जनाः शुद्धसत्त्वा भवेयुः। तथा च हारीतः।

"हन्यादशुद्धं शुद्धेन शुद्धोऽशुद्धन्तु शोधयेत्।
अशुद्धश्च तमोभूतः शुद्धवासेन शुध्यति॥" इति।

तेषां शुद्धसत्त्वानां स्पर्शादिसंसर्गात् पवनः पवते। तेन च पूतेन पवनेन प्लावनाज्जलं शुध्यति। तेन च शुद्धेन जलेन क्लिन्ना मृत्

शुचौ भवेत्। तन्मृन्मयश्च देशः समन्तात् स्वच्छो स्यात्। प्रकृतिस्थ-देशे च स्वभावादेव कालो वैकल्यं न भजते ततश्च जनपदा निरु-पद्रवाः स्युरिति।

वामा। गुरो किमित्यद्भुतं ? यत्प्रागुक्तं श्रोतुमेतन्मनश्चञ्चलीभूतम्।

शिव। अद्भुतन्तु अतीव विस्तृतं सुष्ठु विचार्य्यञ्च। अद्य तावत् विधिनियमादिकं निवोध प्राक् पृष्टम्। समयान्तरे तु तच्छ्रोतव्यम्।

वामा। यथाभिमतं गुरूणाम्। कस्तावद्विधिरिति श्रोष्यामि।

शिव। वत्स! विधिस्तु बहुविधः अधीतन्यायादिशास्त्रेणैव वेद्यः। तथापि यावच्छक्यं वोधयामि। तत्र कर्त्तव्यतावोधको यः शब्दः स विधिरिति सामान्यतो निवोध, विशेषस्तु विधिषु कश्चित् प्रधानविधिः यथा अश्वमेधेन यजेत स्वर्गकाम इति न ह्यश्वमेधस्य एतद्वचनमन्तरेणान्यतः रागतः शास्त्रतो युक्तितो वा कुतश्चित्कर्त्तव्य-तावगमः। स तु स्वतः फलहेतुक्रियावोधकः। अत्र यष्टृगतफलन्तु स्वर्गः तस्य हेतुर्यागक्रिया तद्बोधकस्तु "यजेत स्वर्गकाम इत्यादिकः शब्दः स च विधिरिति।

कश्चिदङ्गविधिः यथा इड़ो* यजेत। स तु स्वतःफलहेतुक्रियायां कथमित्याकाङ्क्षायां विधायकः। इड़ा इति अश्वमेधान्तर्गतः अन्य-तमोऽङ्गीभूतो यागः। तत्र फलहेतुक्रिया अश्वमेधः केन प्रकारेण यष्टव्यः इत्याकाङ्क्षायां कथयति इड़ो यजेत इति। क्रियमाणे हि अश्वमेधे आदौ इड़ायागः कर्त्तव्य इति।

कश्चित्प्रयोगविधिः यथा यावदङ्गयुक्तं यजेत विलक्षणस्वर्गकामः, स तु यावदङ्गक्रियावोधकः। अत्र यः खलु स्वर्गं गत्वा स्वर्गीयं सम्यक् सुखं भोक्तुं कामयते तेन यज्ञाङ्गं तावदेवानुष्ठातव्यं न किमपि अङ्गं परित्यक्तव्यम्।

कश्चिद्गुणफलविधिः यथा गोदोहेनापः प्रणयेत् पशुकाम इत्यादि।

---

* इड़ः इति द्वितीया बहुवचनान्तं पदं।

स तु आकाङ्क्षानिवृत्तौ अधिकफलाय प्राप्तकर्म्मणि गुणविधिः। जल-प्रणयनन्तु चमसेनापः प्रणयेदिति सामान्यतः प्राप्तं यागमात्रे, तत्र यः खलु पश्वादिविशेषं फलं कामयते स जलसंस्करणार्थं चमस-मदत्त्वा तत्स्थाने गोदोहनीमेव प्रयुञ्ज्यात् इति। तत्र प्रधान-विधिश्च द्विविधः उत्पत्तिविधिर्नियोगविधिश्च। तत्रोत्पत्तिविधिस्तु कर्म्मस्वरूपबोधकः यथा अश्वमेधेन यजेत। तत्राश्वमेधस्वरूपमेव विधीयते। न लङ्गादिकं प्रकारादिकं वा। नियोगस्तु स्वर्गकामा-द्यधिकारिबोधकः यथा स्वर्गकामो यजेत इत्यादि। अत्र वाक्ये कर्त्तुर्नियोगात्।

अङ्गविधिस्तु कालदेशकर्त्रादिबोधकतया अनियत एव।

प्रधानाङ्गविध्योस्तु विधेयाप्राप्तिप्राप्तिभ्यां द्वैविध्यम्। तत्रापि अप्राप्तितो द्वैविध्यं यथात्यन्ताप्राप्तौ अपूर्व्वविधिः। पक्षतोऽप्राप्तौ च नियमविधिः। विधेयतत्प्रतिपक्षयोः प्राप्तौ तु परिसंख्याविधिः।

तत्र प्रधानस्य विधिभेदो यथा—अहरहः सन्ध्यामुपासीत इत्यादिरपूर्व्वविधिः। अत्र विधेयस्य सन्ध्यादेः शास्त्रतो रागतो न्यायतो वा क्वचिदपि सन्ध्योपासनायाः पूर्व्वमप्राप्तत्वादपूर्व्वविधिः।

नियमविधिस्तु यत्रादृष्टसिद्ध्यर्थस्य वचनमन्तरेण पाक्षिकी प्राप्तिः सः। यथा समे देशे यजेत इत्यादिः। दर्शपौर्णमासादिर्याग एव विहितः। कर्त्तव्ये तु यागे देशमात्रं तात्पर्य्यपरिप्राप्तं। न हि कञ्चिद्देशमनाश्रित्य यागप्रयोगः सम्भवति। तत्र यदा स्वतो दैवात् समतले देशे यजेत तदा "समे देशे यजेत" इत्यत्र समपदमनुवाद-मात्रं भवेत्। रागतः प्राप्तस्य समदेशस्य पुनः कथनात्। यदा तु इच्छाया निरङ्कुशत्वात् विषमे देशे यष्टुमिच्छति तदैतद्वचनं विदधत् सार्थकम्। विहिते तु समे देशे विषमदेशस्यानाश्रयणं विधानाभावात्। एतत्समपदसामर्थ्यात् विषमदेशनिवृत्तिः। विधिनिबन्धने ह्यनुष्ठाने किमित्यविहितं क्रियेत, तत्करणे हि न यथाविध्यनुष्ठानसिद्धिः।

( क्रमशः )

## तत्त्वप्रपञ्चः ।

( पूर्वप्रकाशितात्परम् )

अपि च पूर्वोक्तमेतत् सङ्गच्छेत यदि प्रकृतेरस्तिता सिध्यति नो चेत् सर्वमेव पूर्वोक्तमाकाशकुसुमायते। प्रकृतिसिद्धौ तु इयं युक्तिः। तथा हि तावत् कार्य्यं कारणगुणात्मकं दृष्टं यथा शुक्लतन्तुगुणात्मकः शुक्लपटः श्यामसृत्तिकागुणात्मकश्च श्यामो घटः इत्यादि। तथा बुद्धितत्त्वादिरूपेण कार्य्यद्रव्यसमूहेन सुखदुःखमोहस्वभावेन कारणगतसुखदुःखमोहात्मना अवश्यमेव भवितव्यम्। तदा बुद्धितत्त्वादीनां कारणमपि प्रकृतिः अवश्यमेव सुखदुःखमोहात्मक भवेत् अतः सुतरां प्रकृतिः सिद्धा। तथा च सांख्यकारिका ॥ १४ ॥

"अविवेक्यादेः सिद्धिः त्रैगुण्यात्तद्विपर्य्ययेऽभावात्।
कारणगुणात्मकत्वात् कार्य्यस्याव्यक्तमपि सिद्धम् ॥"

उपपन्नमेतत्। व्यक्ताद्व्यक्तमुत्पद्यत इति कणाद-गौतममतम्। तथा च परमाणवो नित्या व्यक्ताश्च तैः परमाणुभिः द्व्यणुक-त्रसरेणुक-चतूरेणुकादिक्रमेण क्षित्यादिकार्य्यमुत्पद्यते। पृथिव्यादिषु च कारणानां परमाणूनां गुणवशाच्छुक्लादिरूपोत्पत्तिः। अतस्तौ प्रकृतिमदृष्टचरीं न स्वीकुरुतः।

तन्न सम्यक् तथा हि स्वस्वकारणे कार्य्यं सत् इति सांख्यसिद्धान्तः।

तथा हि कूर्मशरीरे मध्ये स्थितानि हस्तपदादीनि यदा निःसरन्ति तदा विभज्यन्ते इदं कूर्मशरीरमेतानि हस्तपदादीन्यङ्गानि इति। एवं यदा तानि तत्र प्रविशन्ति तदा अव्यक्तौ भवन्ति। एवं कारणात् मृत्पिण्डात् हेमपिण्डाद्वा कार्य्याणि घटमुकुटादीनि यतः सन्ति तत एव कुम्भकार-स्वर्णकाराणां कर्त्तॄणां व्यापारात् आघातदहनादिरूपादाविर्भवन्ति विभक्तानि च स्युः इमे घटाः

एतानि च मुकुटानि। तथा तिरोभूतानि च पृथिव्यादीनि कारणात्तन्मात्रादाविर्भवन्ति विभक्तानि च स्युः इयं पृथिवी, इदं जलम्, अयमनलः, अयं वायुः इदञ्चाकाशमिति। एवं तिरोभूतानि च तन्मात्राणि कार्य्याणि अहङ्कारात् कारणादाविर्भवति। एवं सती बुद्धिः सर्वकारणकारणात् प्रकृतेराविर्भूता इति।

इत्थं साक्षात् परम्परया वा समन्वितस्य सर्वस्य जगतः प्रकृतिकार्य्यस्य विभागात् सर्वकारणकारणं प्रकृतिरवश्यं स्वीकर्त्तव्येति।

प्रलये तु मृत्पिण्डे हेमपिण्डे वा स्वकारणे घटमुकुटादयः भग्नाः सन्तः प्रविशन्तः अव्यक्तीभवन्ति। तदेव अनभिव्यक्तं कारणरूपं कार्य्यमपेक्ष्याव्यक्तं भवति। इत्थं पृथिव्यादयोऽपि स्वकारणानि तन्मात्राणि प्रविशन्तः स्वापेक्षया अव्यक्तीकुर्वन्ति। एवं तन्मात्राण्यपि स्वकारणेऽहङ्कारे लीनानि चाव्यक्तीभवन्ति स्वापेक्षया अहङ्कारमव्यक्तयन्ति। एवमहङ्कारोऽपि बुद्धितत्त्वे तिरोभूतः स्वापेक्षया बुद्धितत्त्वमव्यक्तयति। एवं बुद्धिरपि प्रकृतौ विशती स्वापेक्षया प्रकृतिमव्यक्तपदेन परिभाषयति। प्रकृतेस्तु नास्ति कस्मिन्नपि प्रलयः अतस्तस्या अव्यक्तान्तरं किमपि नास्ति सैव सर्वेषां परमाव्यक्ता *।

प्रकृत्यवस्थायान्तु घटपटादिभेदेन जगतो विभागो नास्ति। अत एव कारणे विद्यमानस्यैव कार्य्यस्य विभागादविभागाच्च कारणं प्रकृतिरस्तीति सिद्धम्।

अपि च कारणशक्तितः कार्य्यमुत्पद्यते इति सर्ववादिसिद्धम्। शक्तिहीनाच्च कारणात् कार्य्योत्पत्तेरदर्शनात्। कारणगता या कार्य्योत्पादिका शक्तिः सा केवलं कार्य्यस्याव्यक्तावस्था तिरोभावावस्था अस्फुरितावस्था एवेति यावत् न त्वन्या।

(क्रमशः)

* घटस्य अव्यक्तावस्था मृत्पिण्डं मुकुटस्य हेमपिण्डं अव्यक्तं एवं सर्वजगतोऽव्यक्तं प्रकृतिः न व्यज्यते कार्य्यजातं यस्मिन्निति व्युत्पत्तिवशात्। अव्यक्तावस्थैवात्राव्यक्तमुच्यते।

# ब्रह्मचर्य्यम् ।

( पूर्वप्रकाशितात्परम् । )

त्रिष्वप्रमाद्यन्नेतेषु त्रीन् लोकान् विजयेद्गृही ।
दीप्यमानः स्ववपुषा देववद्दिवि मोदते ॥ २३२ ॥

232. He who neglects not those three, (even after he has become) a householder, will conquer the three worlds and, radiant in body like a god, he will enjoy bliss in heaven.

इमं लोकं मातृभक्त्या पितृभक्त्या तु मध्यमम् ।
गुरुशुश्रूषया त्वेव ब्रह्मलोकं समश्नुते ॥ २३३ ॥

233. By honouring his mother he gains this (nether) world, by honouring his father the middle sphere, but by obedience to his teacher the world of Brahman.

सर्वे तस्यादृता धर्मा यस्यैते त्रय आदृताः ।
अनादृतास्तु यस्यैते सर्वास्तस्याफलाः क्रियाः ॥ २३४ ॥

234. All duties have been fulfilled by him who honours those three; but to him who honours them not, all rites remain fruitless.

यावत्त्रयस्ते जीवेयुस्तावन्नान्यं समाचरेत् ।
तेष्वेव नित्यं शुश्रूषां कुर्य्यात् प्रियहिते रतः ॥ २३५ ॥

235 As long as those three live, so long let him not (independently) perform any other (meritorious acts); let him always serve them, rejoicing (to do what is) agreeable and beneficial (to them).

तेषामनुपरोधेन पारत्र्यं यद्यदाचरेत्।
तत्तन्निवेदयेत्तेभ्यो मनोवचनकर्मभिः ॥ २३६ ॥

236 He shall inform them of everything that with their consent he may perform in thought, word, or deed for the sake of the next world.

त्रिष्वेतेष्वितिकृत्यं हि पुरुषस्य समाप्यते।
एष धर्म्मः परः साक्षादुपधर्म्मोऽन्य उच्यते ॥ २३७ ॥

237. By (honouring) these three all that ought to be done by man, is accomplished ; that is clearly the highest duty, every other (act) is a subordinate duty.

श्रद्दधानः शुभां विद्यामाददीतावरादपि।
अन्त्यादपि परं धर्मं स्त्रीरत्नं दुष्कुलादपि ॥ २३८ ॥

238. He who possesses faith may receive pure learning even from a man of lower caste, the highest law even from the lowest, and an excellent wife even from a base family.

विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम्।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ २३९ ॥

239. Even from poison nectar may be taken, even from a child good advice, even from a foe (a lesson in) good conduct, and even from an impure (substance) gold.

स्त्रियो रत्नान्यथो विद्या धर्म्मः शौचं सुभाषितम्।
विविधानि च शिल्पानि समादेयानि सर्वतः ॥ २४० ॥

240. Excellent wives, learning, (the knowledge of) the law, (the rules of) purity, good advice, and various arts may be acquired from anybody.

अब्राह्मणादध्ययनमापत्काले विधीयते ।
अनुव्रज्या च शुश्रूषा यावदध्ययनं गुरोः ॥ २४१ ॥

241 It is prescribed, that in times of distress (a student) may learn (the Veda) from one who is not a Brahma*n*a ; and that he shall walk behind and serve (such a) teacher, as long as the instruction lasts.

नाब्राह्मणे गुरौ शिष्यो वासमात्यन्तिकं वसेत् ।
ब्राह्मणे चाननूचाने काङ्क्षन् गतिमनुत्तमाम् ॥ २४२ ॥

242. He who desires incomparable bliss (in heaven) shall not dwell during his whole life in (the house of) a non-Brahma*n*ical teacher, nor with a Brahma*n*a who does not know the whole Veda and the Angas.

यदि त्वात्यन्तिकं वासं रोचयेत गुरोः कुले ।
युक्तः परिचरेदेनमाशरीरविमोक्षणात् ॥ २४३ ॥

243. But if (a student) desires to pass his whole life in the teacher's house, he must diligently serve him, until he is freed from this body.

आ समाप्तेः शरीरस्य यस्तु शुश्रूषते गुरुम् ।
स गच्छत्यञ्जसा विप्रो ब्रह्मणः सद्म शाश्वतम् ॥ २४४ ॥

244. A Brahma*n*a who serves his teacher till the dissolution of his body, reaches forthwith the eternal mansion of Brahman.

न पूर्वं गुरवे किञ्चिदुपकुर्व्वीत धर्म्मवित् ।
स्नास्यंस्तु गुरुणाज्ञप्तः शक्त्या गुर्वर्थमाहरेत् ॥ २४५ ॥

245. He who knows the sacred law must not

present any gift to his teacher before (the Samavartana); but when, with the permission of his teacher, he is about to take the (final) bath, let him procure (a present) for the venerable man according to his ability,

क्षेत्रं हिरण्यं गामश्वं छत्रोपानहमासनम्।
धान्यं शाकञ्च वासांसि गुरवे प्रीतिमावहेत् ॥ २४६ ॥

246. (Viz.) a field, gold, a cow, a horse, a parasol and shoes, a seat, grain, (even) vegetables, (and thus) give pleasure to his teacher.

आचार्य्ये तु खलु प्रेते गुरुपुत्रे गुणान्विते।
गुरुदारे सपिण्डे वा गुरुवद्वृत्तिमाचरेत् ॥ २४७ ॥

247. (A perpetual student) must, if his teacher dies, serve his son (provided he be) endowed with good qualities, or his widow, or his Sapi*n*da, in the same manner as the teacher.

एतेष्वविद्यमानेषु स्थानासनविहारवान्।
प्रयुञ्जानोऽग्निशुश्रूषां साधयेद्देहमात्मनः ॥ २४८ ॥

248. Should none of these be alive, he must serve the sacred fire, standing (by day) and sitting (during the night), and thus finish his life.

एवञ्चरति यो विप्रो ब्रह्मचर्य्यमविप्लुतः।
स गच्छत्युत्तमं स्थानं न चेह जायते पुनः ॥ २४९ ॥

249. A Brahma*n*a who thus passes his life as a student without breaking his vow, reaches (after death) the highest abode and will not be born again in this world.

समाप्तं ब्रह्मचर्य्यम्।

श्रीजयचन्द्रसिद्धान्तभूषण-भट्टाचार्य्यः।

श्रीश्रीदुर्गा शरणम्।

# संस्कृतचन्द्रिका।

श्रीश्रीगणेशाय नमः।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी॥

## मासावतरणिका।

रे शीत! भीतमपि दुर्गतमप्रगल्भं
क्रौर्याद्भिनत्सि च तनोषिच शौर्यमुग्रम्।
याम्यानिले प्रसरति क्षितिरप्यशक्या
द्रक्ष्यामि तत्फलमिहाशु निकृष्ट! साक्षात्॥

## उद्भटश्लोकाः।

धर्म्मे मतिर्भवतु वः सततोत्थितानां स ह्येक एव परलोकगतस्य बन्धुः।
अर्थाः स्त्रियश्च निपुणैरपि सेव्यमाना नैवात्मभावमुपयान्ति न च स्थिरत्वं॥ २३६॥

ईषन्मुद्रितमम्बुजं कुमुदिनी किञ्चित् समुल्लासिनी
चक्री चक्रवियोगिनी पतिभयादशङ्का वधूस्त्रासिनी।
यूनी वेशविधायिनी विरहिनी नेत्राम्बुसम्बाहिनी
भानुर्याति नगेन्द्रकोणकुहरे दृष्ट्वा हि चात्यद्भुतं॥ २३७॥

मा पश्य त्वं विमलमुकुरे स्त्रीयमङ्गं कदापि
आत्मप्राणानपहरसि किं तत्कटाक्षैरमुग्नैः।
यज्जन्यं स्यात् जनकमपि तद्धन्ति नो किं विचित्रं
जन्योऽसिः किं जनकमपि तं कर्म्मकारं छिनत्ति॥ २३८॥

समं स्थानं नीतं प्रणयविनतेन प्रणयिणा
न योषिन्मञ्जीर! स्पृहय हि तुलां मौलिमणिना।
यदि स्यातां दैवान्नगरवणिजां पाणिपतितौ
तदा वां जातीमः कतरमभिनन्दन्ति वणिजः॥ २३९॥

श्रीविधुभूषण देवः। (राँचि)

महाकालः महाकाली च।



# महाकालः महाकाली च ।

यः खलु शवरूपमहाकालः या च महाकालहृदि स्थिता, तयोरेव विषयमधिकृत्य हृत्पुण्डरीककुहरे निरन्तरं राजतोस्तयोरेव प्रवर्त्तनया किञ्चिल्लिखितुमुत्सहे। अस्य च प्रबन्धस्य विवेक्तुं सदसत्त्वं मामनुजिघृक्षूणां करुणापूर्णहृक्पातो निरपेक्षपात विचार-एव निकषपाषाणं प्रमाणमिति ।

महाकालः खलु परममहान् परमनित्यः परमनिरवच्छिन्नः परम सूक्ष्मः परमस्थूलः परमविप्रकृष्टः परमसन्निकृष्टश्च । स नास्ति यस्मिन्नेवं देश एव नास्ति । काल एव जगत् सृजति पाति हन्ति च । कालः सर्व्वेषामन्तकः स्वयमनन्तः । कालः सर्व्वेषामादिः स्वयमनादिः । कालः सर्व्वेषां प्रभुः स्वयमप्रभुः । कालः स्वतोऽतीन्द्रियः किन्तु क्रियया सम्यगनुमेयः ।

अनादि प्रसिद्धेति । युगपत् यदि भास्करो नोदियात् यदि शशाङ्कोऽन्तर्द्धीयात्, यदि नक्षत्राणि लुप्येयुः यदि ग्रहा निपतेयुः यदि समीरणो न वायात् । यदि जलं न प्रवहेत् । यदि खगा नोत्पतेयुः यदि मानवा न निःश्वस्युः न वा प्रश्वस्युः न गच्छेयुः न हसेयुः न निद्रायुः न भुञ्जीरन् न ब्रूयुः, न च पश्येयुः यदि नोन्मिषेयुः यदि न निमिषेयुः किमधिकं युगपज्जगदेतद् यद्यन्धायेत, तदा कला-काष्ठा-मुहूर्त्त-यामाहोरात्रर्त्त्वयनसंवत्सरादिः कथं व्यवह्रियेत ।

अतः क्रिययैव अखण्डदण्डायमानो महाकालः विभज्य कला-काष्ठादि रूपेण व्यवहार्य्यता मापद्यते । तदा खलु ।

"नाहो न रात्रिर्न नभो न भूमिर्नासीत्तमो ज्योतिरभून्नचान्यत् ।
श्रोत्रादिबुद्ध्यानुपलभ्यमेकं प्राधानिकं ब्रह्मपुमांस्तदासीत् ॥"

"अनादिर्भगवान् कालो नान्तोऽस्य द्विज विद्यते । अव्युच्छिन्नास्ततस्त्वेते सर्गस्थित्यन्तसंयमाः ॥
"गुणसाम्ये ततस्तस्मिन् पृथक् पुंसि व्यवस्थिते । कालस्वरूपरूपं तद्विष्णोर्मैत्रेय ! वर्त्तते"

( विष्णुपुराणं । १ । २ । २३ )

"ये समर्था जगत्यस्मिन् सृष्टिस्थित्यन्तकारिणः। तेऽपि कालेन लीयन्ते कालो हि बलवत्तरः॥"
( विष्णुधर्म्मोत्तरविष्णुसंहिते २०।२७ )

"अनादिनिधनः कालो रुद्रः सङ्कर्षणो विभुः। कलनात् सर्व्वभूतानां स कालः परिकीर्त्तितः॥"

"कालः कलयते लोकं कालः कलयते जगत्। कालः कलयते विश्वं तेन कालोऽभिधीयते॥
कालस्य वशगाः सर्वे देवर्षिसिद्धकिन्नराः। कालो हि भगवान्देवः स साक्षात् परमेश्वरः॥
सर्गपालनसंहर्त्ता स कालः सर्व्वतः समः। कालेन कल्यते विश्वं तेन कालोऽभिधीयते॥
येनोत्पत्तिश्च जायेत येन वै कल्यते कला। सोऽन्त वश्य भवेत् कालो जगदुत्पत्तिकारकः॥
यः कर्म्मणि प्रपश्येत प्रकर्षे वर्त्तमानके। सोऽपि प्रवर्त्तको ज्ञेयः कालः स्यात् प्रतिपालकः॥
येन मृत्युवशं याति कृतं येन लयं व्रजेत्। संहर्त्ता सोऽपि विज्ञेयः कालः स्यात् कलनापरः॥
कालः सुप्तेषु जागर्त्ति कालो हि दुरतिक्रमः। काले देवा विनश्यन्ति काले चासुरपन्नगाः॥
नरेन्द्राः सर्व्वजीवाश्च काले सर्व्वं विनश्यति॥"
( हारीते। १म स्थाने। ४ अध्याय )

**तथा च अथर्व्ववेदे। १९। ५३। ५४॥**

स एव संभुवनान्याभरत् स एव संभुवनानि पर्य्यैत्।
पिता सन्नभवत् पुत्र एषां तस्माद्वै नान्यत् परमस्ति तेजः॥ ४॥
कालोऽमुं दिवमजनयत् काल इमाः पृथिवी रुत। कालेन भूतं भव्यं चेषितं ह वितिष्ठते॥५॥
कालो भूमिमसृजत काले तपति सूर्य्यः। काले ह विश्वा भूतानि काले चक्षु र्विपश्यति॥६॥
काले मनः काले प्राणः काले नाम समाहितं। कालेन सर्व्वा नन्दन्त्यागतेन प्रजाइमाः॥ ७॥
काले तपः काले ज्येष्ठं काले ब्रह्म समाहितं। कालो ह सर्व्वस्येश्वरो यः पितासीत् प्रजापतेः॥८॥
तेनेषितं तेन जातं तदु तस्मिन् प्रतिष्ठितं। कालो ह ब्रह्म भूत्वा विभर्त्ति परमेष्ठिनं॥ ९॥
कालःप्रजा असृजत कालो अग्रे प्रजापतिः। स्वयम्भुः कश्यपः कालात् तपः कालादजायत॥१०॥

**यथा च भगवद्गीता १०। ३३। "अहमेवाक्षयः कालो धाता हं विश्वतो मुखः॥"**

"कालः प्रसिद्धः क्षणलवाख्यः। अथवा परमेश्वरः" ॥ इति शङ्करभाष्यं॥ "अक्षयः काल इति परमेश्वराख्यः" "कालज्ञः कालकालोगुणी सर्व्वविद्य इति श्रुतिः।" इति मधुसूदनः॥

**एतावता काल एव जगदुत्पत्तिस्थितिनाशकर्त्तृत्वादीश्वरः। तस्यैवाखण्डमहाकालस्याधिष्ठातृदेवो महाकालः शिवापरनामकः। यो यस्याधिष्ठातृ देवः स तनाम्ना परिगीयते। यथा जलमयगङ्गाधिष्ठातृदेवी चतुर्भुजा मकरवाहिनी गङ्गा। हिमवत्पर्व्वतस्याधि-**

धिष्टातृदेवः पार्व्वतीपिता हिमवान्। सूर्य्यमण्डलस्याधिष्ठातृदेवः चतुर्भुजः माणिक्यमौलिः सूर्य्यः। तथा महाकालोऽपि। तस्यैव महाकालस्य शक्तिः (भार्य्या) महाकाली महाकालरूपत्वाच्च महाकाली। शक्तिमतस्तु शक्तिरभिन्नेति महाकाली अपि महाकालाधिष्ठातृदेवी।

इयमेव देवी परा प्रकृतिः इयमेव सत्त्वरजस्तमसां साम्यावस्था महाप्रलयरूपा। मन्वादिशास्त्रेषु यदुक्तमासीदिदं तमो भूत मित्यादि तद्गुणमय्याः प्रकृतेरस्या एवोपलक्षणं। इयमेव देवी महामेघप्रभा चन्द्रसूर्य्याग्निभिस्त्रिनयना, चतस्र एव दिशोऽस्याः करायत्ता इति सा चतुर्भुजा। महाकालस्तु स्वतो निष्क्रिय इत्यसौ शवरूपः। तस्मिन्नेव महाकाले काली क्रीड़तीति "महाकालहृदम्भोजस्थिता" प्रलये तु अस्या एव करालवदने मुमूर्षवः प्रविशन्ति। करालदंष्ट्राभिश्च केचिच्चर्व्विताः केचिद्दशनान्तरेषु लग्नाः। कालशक्त्या एव उत्पत्तिमन्तो म्रियन्ते तेषां शीर्षाणि च परितः कीर्णाणि इति काली शवमुण्डमालिनी। कालशक्तिः श्मशाने एव वाहुल्येन वैराग्यादनुभूयते इति काली श्मशानालयवासिनी।

यः खलु जगति वाममाचरन्ति (१) तं प्रति सा वामपाणौ खड्गधारिणी भीषयति, न केवलं भीषयति वामपाणिना छिन्नशिरो वहन्ती वाममाचरतां शिरश्छेदं कार्य्यतोऽपि परिणमयतीति सूचयति।

यः खलुः जगति दक्षिणो भवेत् (२) मातः! रक्ष करुणामयि! प्रणते दयां वितर इत्येवं वादिनं प्रति काली दक्षिणेन पाणिना "मामैरिति" अभयदायिनी, ददामि यस्तेऽभिलषितमिति वरप्रदायिनी च।

(१) वामं विपरीतं प्रतीकूलं।
(२) दक्षिणः सरलः। उदारः सत् स्वभावः।

सैव महाकाली जगज्जननी, महाकाल्या ब्रह्मा जायते, महाकाल्याः विष्णुर्जायते, महाकाल्या रुद्रो जायते। इत्थं सर्व्वमेवेदं महाकाली, यद्भव्यं यच्च भूतं सर्व्वमेव महाकाली, पञ्चमहाभूतानि महाकाली। अहङ्कारो महाकाली। बुद्धिर्वै महाकाली। अव्यक्तं हि महाकाली। महाकाली चिन्मयी, आनन्दमयी। पश्यामि सर्व्वं महाकालीं। शृणोमि सर्व्वं महाकालीं। जिघ्रामि सर्व्वं महाकालीं। स्पृशामि सर्व्वं महाकालीं। भुञ्जे च सर्व्वं महाकालीं। महाकालीं विना सद्वा असद्वा किमपि नास्ति। तस्मात् सर्व्वं खल्विदं महाकाली।

अथ महाकाली प्रादुर्भाव समयः। यथा स्वतन्त्रतन्त्रे।

कृष्णाष्टम्यां मार्गशीर्षे घोररात्रिः प्रकीर्त्तिता। महाकालः समुत्पन्नस्तस्याञ्च भगवान् स्वयं॥(२)

तदैव महाकाल्याविर्भावः। यथा स्वतन्त्रतन्त्रे।

महारात्रिदिने ऽवन्त्यां नगर्य्यां जातमेव तत्। कालीरूपं महेशानि! साक्षात् कैवल्यदायकं॥

कालरात्रि यथा स्वतन्त्रतन्त्रे।

दीपोत्सव चतुर्द्दश्याममया योग एव च। कालरात्रिर्म्महेशानि! ताराकालीप्रियङ्करी॥

प्रकारान्तरं नारदपञ्चरात्रे तृतीयाध्याये।

दक्षगेहे समुद्भूता या सती लोक विश्रुता। कुपिता दक्षराजर्षिं सती त्यक्त्वा कलेवरं॥
अनुगृह्य च मेनायां जाता तस्यान्तु सा तदा। काली नामेति विख्याता सर्व्वशास्त्रे प्रतिष्ठिता

अपरन्तु दक्षयज्ञे यात्राविधौ निषेधते शङ्कराय काल्यादि दशमहाविद्याः सती प्रदर्षितवती। इति तु पुराणमतं।

महाकालीमधिकृत्य महानिर्व्वाणतन्त्रे चतुर्थोल्लासे सदाशिववाक्यं।

तव रूपं महाकाली जगत्-संहारकारकं। महासंहारसमये कालः सर्व्वं ग्रसिष्यति॥
कलनात् सर्व्वभूतानां महाकालः प्रकीर्त्तितः। महाकालस्य कलनात्त्वमाद्या कालिका परा॥
कालसङ्कलनात् काली सर्व्वेषामादिरूपिणी। कालत्वादादिभूतत्वादाद्या कालीतिगीयते॥
पुनः स्वरूपमासाद्य तमोरूपं निराकृति। वाचातीतं मनोऽगम्य त्वमेवैकावशिष्यते॥
साकारापि निराकारा मायया बहुरूपिणी। त्वं सर्व्वादिरनादिस्त्वं कर्त्री हर्त्री च पालिका॥

---

(२) पुराकृत युगे इति सम्बन्धः।

## गुप्तसाधन तन्त्रे षष्ठपटले ।

आलीढ़ं कीदृशं नाथ प्रत्यालीढ़न्तु कीदृशं । कथं सा दक्षिणा काली श्मशानालयवासिनी ॥
आलीढ़ं वामपादन्तु प्रत्यालीढ़न्तु दक्षिणं । संहाररूपिणी काली जगन्मोहनकारिणी ॥
वह्निरूपा महामाया सत्यं सत्यं न संशयः । अतएव महेशानी श्मशानालयवासिनी ॥
आलीढ़पादा सा देवी प्रत्यालीढ़ा क्षणे क्षणे । अनन्तरूपिणी श्यामा कैर्वक्तुं शक्यते प्रिये ॥

## पिच्छिलातन्त्रे द्वितीयपटले ।

ब्रह्मविष्णुशिवादीनां शिरोरत्नपदाम्बुजा । कलौ काली कलौ काली नान्यदेवः कलौ युगे ॥
शान्तशादावपि सा काली पूजनीया विशेषतः । कालिका पूजने श्रद्धा यदा संजायते हृदि ॥
न तदा ग्रहरोगाणां भयमस्ति कदाचन ।

## कुब्जिकातन्त्रे प्रथमपटले ।

के मे गोत्रे समुत्पन्ना कालीं साधितु मुद्यताः । तत् श्रुत्वा पितरः सर्वे नृत्यन्ति हृष्टमानसाः ॥

## पिच्छिलातन्त्रे ।

कालीनिन्दाकरा लोके भविष्यन्ति गतायुषः । तेषां पुत्रकलत्राणां नाशोऽन्ते नरकं व्रजेत् ॥

## महाकाल ध्यानं निरुत्तरतन्त्रे तृतीयपटले ।

धूम्रवर्णं [illegible] । त्रिनेत्रं शिवरूपञ्च शक्तियुक्तं निरामयं ॥
दिगम्बरं घोररूपं नीलाञ्जनचयप्रभं । निर्गुणञ्च गुणाधारं काली ध्यानं पुनः पुनः ॥

### महाकाली ध्यानं ।

शवारूढ़ां महाभीमां घोरदंष्ट्रां वरप्रदां । हास्ययुक्तां त्रिणेत्राञ्च करालकलिकाकरां ॥
मुक्तकेशीं ललज्जिह्वां पिबन्तीं रुधिरं मुहुः । चतुर्बाहुसमायुक्तां वराभय करांस्मरेत् ॥

( क्रमशः )

---

## का गतिः ।

मनुजोवन नाटकस्य मे क्रमशो ऽङ्का अभिनीततां गताः ।
र्गनरा जलधेरिवोर्म्मयः मम नारायण ! का गतिर्व्वत ॥ १ ॥
[illegible] दिनानि जीवनाद् वियतः पेतुरिवात्र तारकाः ।
तरुतः कुसुमानि वैकयः मम विश्वेश्वर ! का गतिर्वत ॥ २ ॥
विहगैरहितस्तरुर्यथा गतपद्मो ऽपजलो यथा ह्रदः ।
अभवद् गलितायुषःक्षणः मम दुर्गे ! वद का गतिर्वत ॥ ३ ॥

सुखदं मधुरञ्च वासरं यदतीतं गतमेव तन्ननु।
कुसुमं न विशुष्क मापतेत् मम नारायणि! का गतिर्वत ॥ ४ ॥
अपरत्नकुल: पयोनिधिरपदीप: खलु नाटकालय:।
अकरो विधुरस्त्वग्रहं हत: मम भागीरथि! का गतिर्वत ॥ ५ ॥
शिथिलास्थि विशुष्क चर्म्मभि र्जड़ताश्लिष्ट वचोभि रुत्सुक:।
कुतुकं सह किं वहामि नो, मम सीताधव! का गतिर्वत ॥ ६ ॥
अदृश: स्खलितां गतिं स्वत: ननु दृष्ट्वा सरसं हसन्नहं।
विदधे किमकार्य्यमार्य्यज: मम मृत्युञ्जय! का गतिर्वत ॥ ७ ॥
विकलाङ्ग जनस्य मानसमनुकृत्य व्यथितं मया न किं।
विहितं सततं समन्तत: मम कंसार्द्दन! का गतिर्वत ॥ ८ ॥
अलसै: शिशुभि: समै: सममवचोभि र्हतदेवनेन च।
अतिशैशवमभ्ययापयम् मम दाक्षायणि! का गतिर्वत ॥ ९ ॥
शयनीयविलग्नरोगिनो न कदाचित् परिदेवनध्वनि:।
कृतवानतिचञ्चलं मन:, मम कामार्द्दन! का गतिर्वत ॥ १० ॥
पतिपुत्र वियोग कातरहृदयाया: स्वतनौ कराहति:।
विकृतिं न निनाय तादृशीं मम गङ्गाधर! का गतिर्वत ॥ ११ ॥
मृत तातक-वालकाननात् चुग्रतमार्त्तं श्रुतवानपि स्वरं।
न चकार वहुप्रियं सदा मम कात्यायणि! का गतिर्वत ॥ १२ ॥
न ममार्ज्ज दृगम्बु नि:सृतं न बुभुक्षा-विनिवर्त्तनं महत्।
कृतवान् सहसातिदु:खिनां मम नारायण! का गतिर्वत ॥ १३ ॥
क्षुधया कृशतामितैर्न किं मृदु दृष्टाऽप्यहमभ्यतोषयं।
हतकुक्षिमहो! सुभोजनै: मम नारायण! का गतिर्वत ॥ १४ ॥
स्थविरानपि शान्तचेतस: ऋत-सारल्य-दया-शुचि-स्मृतान्।
तनु गर्व्वतयाभ्युपाहसं मम नारायण! का गतिर्वत ॥ १५ ॥
वल-वीर्य्य मति-स्मृति-क्षमावयसा क्रीड़नकं गुरुं जनं।
अभवं सुविधातुमुत्सुक: मम नारायण! का गतिर्वत ॥ १६ ॥

कुतुकाय विहङ्गमान् पशून् बहुशो व्याध इवाहमुत्सुकः ।
जितनम्रमना अताड़यम् मम नारायण ! का गतिर्वत ॥ १७ ॥
अह मत्र—यदच्चदेवनं, अह मस्मिन् —यदलीकभाषणं ।
अह मत्र—यदन्न-कीर्त्तनं, मम नारायण ! का गतिर्वत ॥ १८ ॥
हसनं परिहास-साधनं ननु यस्मिन् प्रमदो हृथा क्रिया ।
अवसं प्रथमे सुखासने मम नारायण ! का गतिर्वत ॥ १९ ॥
अभिमान-विलास-देवनैः मम मायुर्दिनमल्पवाहयम्
न कदापि परं व्यचिन्तयम् मम नारायण ! का गतिर्वत ॥ २० ॥
प्रतिवासरमप्यनिच्छया यमगेहं ननु यान्ति जन्तवः ।
इति लोकयतापि नेच्यते मम नारायण ! का गतिर्वत ॥ २१ ॥
विजितोपलमानसं दृढ़ं व्यथते नो विपमां विमुश्रुवः ।
अधुना पि निरासगीतिकां मम नारायण ! का गतिर्वत ॥ २२ ॥
रसनार्थमभक्षयं न किं ? न किमाघ्रायि धरेन्द्रियेष्टये ?
न किमैक्ष्यत हृतये हृशः ? मम नारायण ! का गतिर्वत ॥ २३ ॥
त्वगभीष्टकरं किमस्पृशं न न किं विष्णुपदेन्द्रियार्थकं ।
स्रुतवान् ? हतभागधेयको मम नारायण ! का गतिर्वत ॥ २४ ॥
विषयोन्नतिहेतवे मया चिरमभ्रम्यत दीर्घतृष्णया ।
अतिदीनतमात्तवर्त्मना मम नारायण ! का गतिर्वत ॥ २५ ॥
चिरवासनया प्रतिक्षणं ननु धिक् धिक् रमणीमुखाम्बुजं ।
मणि रत्न कुलं स्म कामये मम नारायण ! का गतिर्वत ॥ २६ ॥
निजकष्टमहं नु कृष्टवान् अचिरालोकसुखाय नित्यशः ।
समवर्द्धयमत्र कामनाः मम नारायण ! का गतिर्वत ॥ २७ ॥
विषये जलधौ पिपासया न विमृश्य स्वबलं न्यमज्जयं ।
अधुना न विलोकितं तटं मम नारायण ! का गतिर्वत ॥ २८ ॥
निजवर्द्धित वासना-शिखिज्वलनं केन निवर्त्तयिष्यति ।
हत एमि कथं नु रक्षणं, मम नारायण ! का गतिर्वत ॥ २९ ॥

सुविनश्वर-सम्पदाशये भ्रमदासीकृतलुब्धमानसः।
व्यवरं जगतीह नश्वरे मम नारायण ! का गतिर्वत ॥ ३० ॥
अमिता दिनवर्षनाड़िकाः विविशुः कालमहोदरार्णवे।
क्षणमप्यवरं न चिन्मयं मम नारायण ! का गतिर्वत ॥ ३१ ॥
जननं समनर्थमाप्तवान् न कदाचित् जगदीशितुः क्रियत्।
परमन्वभवं दयादिकं मम नारायण ! का गतिर्वत ॥ ३२ ॥
जगदीशपदाम्बुजे नतिं ननु नारायणनाम कीर्त्तनं।
भजनञ्च चकार नो हरेः मम नारायण ! का गतिर्वत ॥ ३३ ॥
ऋजुता करुणा क्षमा धृतिः ऋतमग्र्यं परितुष्टिरासते।
प्रभवामि किमत्र वर्त्तितुं मम नारायण ! का गतिर्वत ॥ ६४ ॥
न शमो न दमो न सुस्मृतिः न तितिक्षा न गुरौ मति र्मया।
क्रियते करुणा ह्यनाशया मम नारायण ! का गतिर्वत ॥ ३५ ॥
दम-सौध-विभूषितोदरं न विवेकामृतसागरान्तरं।
शमपादपमूलमाश्रयं मम नारायण ! का गतिर्वत ॥ ३६ ॥
नरकार्णव यातना क्रमः तनुपातः परजन्म सन्ततिः
न हरेर्नयदण्ड आस्मृतः मम नारायण ! का गतिर्वत ॥ ३७ ॥
तनुपोषणमिन्द्रियाहुतिं धनलाभं परदोषभाषणं।
परमं कुशलं स्म मन्यते मम नारायण ! का गतिर्वत ॥ ३८ ॥
विविधे कलहेतु दुर्ज्जनोऽनृततर्के गुरुरप्यकुण्ठितः।
अधमात् सततं विभेति सत् मम नारायण ! का गतिर्वत ॥३९॥
अतिथेर्न सुषेवनं गुरौ न सुभक्तिर्गिरिजापतौ मतिः।
न, न शान्तिमतिः कदाप्य हो मम नारायण ! का गतिर्वत ॥४०॥
क्षणमप्यवलम्ब्य विश्वकृच्चरणाब्जं, न हि नन्दनं वनं।
इह दर्शयितुं क्षमोऽस्म्यहं मम नारायण ! का गतिर्वत ॥४१॥
भवनं सुरमूर्त्ति-वर्ज्जितं विषमं दावविदग्धकाननं।
हृदजायत शान्ति-विस्मृतं मम नारायण ! का गतिर्वत ॥४२॥

तटिनीव च सागरोन्मुखी मन आवेगत आत्म-विस्मृतः
हृदये न निजं व्यसर्जयं मम नारायण ! का गतिर्वत ॥ ४३ ॥
प्रकृतिः प्रभयातिविस्मितः न कदाचित् परमात्म-तेजसि ।
अधमो नतमस्तको ऽभवं मम नारायण ! का गतिर्वत ॥ ४४ ॥
अभिलाष मति-स्मृतीर्धृतिं असमोत्साह-समुद्यमौ सुखं ।
खलु नास्तिकता व्यलोपयत् मम नारायण ! का गतिर्वत ॥४५॥
कमलापतिभक्तितो मया क्षणमप्यत्र दृगश्रुसंहतिं ।
विनिपात्य न हृस्थिरायये मम नारायण ! का गतिर्वत ॥ ४६ ॥

भवतु भवतु पूर्त्ति र्जीवनाशाभिनीतिः
पततु पततु देहो ,मास्तु चिन्तैव तत्र ।
चलतु चलतु जीवो ऽप्यश्रुताद्दृष्टदेशे
वदतु वदतु कृष्ण विश्ववीजं मनोऽदः ॥ ४७ ॥

( नारायणार्पण मस्तु )

श्रीअन्नदाचरण तर्कचूड़ामणिः—
नोयाखालि—सोमपाड़ा—

---

## वैदिकाख्यायिका।

### ( पूर्व्वतोऽनुवृत्ता )

स प्रवाहणो राजा कथयति हे गौतम ! 'यत्त्वया प्रार्थ्यते वरः स तु दैवविषयकः। किन्तु मानुषेषु वरमन्यतमं प्रार्थय ॥ ६ ॥

तत् श्रुत्त्वा आरुणिः कथयति हे राजन् ! भवता यद्विहितं तत्-सर्व्वमेव ममास्ति यत्त्वं प्रदित्ससि वरं। मम तु प्रभूतानि हिरण्यानि, गावः, अश्वाः दास्यः परिवाराः वसनानि च समुपार्ज्जितानि सन्ति। न च यन्मम विद्यमानं तत् त्वत्तः प्रार्थनीयं त्वया वा देयं।

---

६। स होवा च दैवेषु वै गौतम तद्वरेषु मानुषानां ह ब्रूहीति ॥ ६ ॥

नैवमहमिच्छामि यत् भवान् सर्व्वान् जनान् प्रति वदान्य-प्रवरो भूत्वा प्रभूतेषु अनन्तफलकेषु पुत्रपौत्रादिगामिषु दानविषयेषु केवलं मां प्रत्येव कदर्य्यो भवतु इति।

तदा राजाह हे गौतम! चेदेवं निर्व्वन्धातिशयस्तर्हि शास्त्र-विहितेन शिष्यभावेन मत्तो विद्यामधिगन्तुमिच्छ।

तदाकर्ण्य आरुणिराह राजन्! भवान् गुरुरहंशिष्य इत्येवं वाचा स्वीकृत्य भवदन्ते वसामि। पुरापि ब्राह्मणाः विद्यार्थिनः सन्तः क्षत्रियाणां क्षत्रियाश्च वैश्यानां वाङ्मात्रेण शिष्यत्वमङ्गीचक्रुः किन्तु फलकुसुमादीनादाय समित्पाणयो वा ब्राह्मणगुरुवत् शुश्रूषया वा न ब्राह्मणाः क्षत्रियान् क्षत्रिया वा वैश्यानुपजग्मु-रिति ॥ ७ ॥ ( * )

एवं आपन्नतेनैव गौतमेन उक्तः स राजा तं नितान्तं अन्तर्नि-विन्नं मन्यमानः क्षामयन् कथयति हे गौतम! अस्मदीयोऽपराधो न ग्रहीतव्यस्त्वया, तव च पितामहा अस्मत् पितामहेषु यथापराधं न जगृहुः तथा पितामहानां चरित्रं भवतापि रक्षणीयं। अधुना यथेयं विद्या त्वया प्रार्थिता इतः पूर्व्वं न कोऽपि ब्राह्मणस्तां प्रार्थित-वान् अतः सेयं विद्या न कस्मिन्नपि ब्राह्मणे विद्यते। एतत्त्वमेव जानीषे, सर्व्वदा क्षत्रियपरम्परेयं विद्या समागता सा मर्य्यादा

---

७। सहो वा च विज्ञायते हास्ति हिरण्यस्योपात्तं गोअश्वानां दासीनां प्रवाराणां परीधानस्य मा नो भवान् वहोरनन्तस्यापर्य्यन्तस्याभ्यवदान्योभूदिति स वै गौतम! तीर्थेने-च्छासा इत्युपैम्यहं भवन्तमिति वाचा ह स्मैव पूर्व्वं उपयन्ति स होपायन कीर्त्त्यो वास ॥ ७ ॥

* एतदेवोजीव्य मनुरब्रवीत्। २। २३८—।

"श्रद्दधानः शुभां विद्यामाददीतावरादपि। अन्त्यादपि परं धर्म्मं स्त्रीरत्नं दुष्कुलादपि।
विषादप्यमृतंग्राह्यं बालादपि सुभाषितं। अमित्रादपि सद्वृत्त ममेध्यादपि काञ्चनं॥
स्त्रियोरत्नान्यथो विद्या धर्म्मः शौचं सुभाषितं। विविधानि च शिल्पानि समादेयानि सर्व्वतः॥
अब्राह्मणादध्ययनमापत्काले विधीयते। अनुव्रज्या च शुश्रूषा यावदध्ययन गुरोः॥

मयापि रक्षणीया इति मत्वा उक्तं "देवेषु गौतम ! तद्वरेषु मानुषाणां ब्रूही"ति ।

न पुनरधुना तुभ्यमदेयोऽयं विद्यावरः शिष्यत्वं स्वीकृतवति । अतस्तां विद्यां तुभ्यं वक्ष्यामि अन्योऽपि एवं विनीतं ब्रुवन्तं त्वां न दास्यामीति वक्तुं न शक्नुयात् तत्कथमहं त्वां प्रत्याख्यातुं शक्नोमि ॥ ८ ॥

(क्रमशः)

---

# सतीच्छाया ।

(पूर्व्वानुवृत्ता)

## षष्ठः परिच्छेदः ।

सामीप्यात् निर्द्दयो दुष्टः शक्तिमान् यदि सर्व्वथा ।
मानिनीऽपि तिरस्कुर्य्यादज्ञानतमसावृत: ॥

यदा खलु राजकुमारो रमणीमोहनः चित्पुरराजपथेन वरासनमध्यासीनः परिणेतुं गतवान् । तदा स प्रायः सुन्दरीमिन्द्रप्रियामन्तःसत्तां विसस्मार । तदा परिहृत्य सरलायाः सहवासं दुष्टप्रकृतिना अतुलकरेण प्रतारितः कुकृत्ये प्रवृत्ते । संप्रति महोत्सवेन परिणेतुं गच्छन् प्रासादोपरि स्थिताः द्रष्टुकामाः कामिनीः चञ्चलेन चक्षुषा पश्यन् इन्द्रप्रियामपि पश्यति । दृष्ट्वा च तां चिरसहवासिनीं विशुष्कमुखीं द्राक् वज्राहतइव स्तम्भितो भवति । कम्पते च तस्य हृदयं द्रुततरं । स्वयमवश इव पश्चात्स्थितं चर्म्मों-

---

८ । सहोवाच तथान स्त्वं गौतम मापराधास्तव च पितामहा यथेयं विद्येतः पूर्व्वं न कस्मिंश्चन ब्राह्मण उवास । तां त्वहं तुभ्यं वक्ष्यामि को हि त्वेवं ब्रुवन्तमर्हति प्रत्याख्यातुम् इति ॥ ८ ॥

पाधानं समाश्रयति। इन्द्रप्रियाया मूर्च्छादर्शने च स्वयमपि मूर्च्छति। न जानाति क्वास्ते क्व वा यातीति। ईदृगेव पापिनां दण्डभोगः। कुसंसर्गस्य प्रतिफलञ्च तदैव जायते।

यथासमये नवदम्पती राजसदने समुपतिष्ठेते। तदा रमणीमोहनः कथञ्चिल्लब्धचैतन्यः मङ्गलाचारमाचरन्तीभिः स्त्रीभिः नवोढ़या वध्वा सार्द्धं गृहं प्रवेशितः।

विवाहप्रथम एव मासि रमणीमोहनः ज्वररोगमुपैति। क्रमशः साङ्घातिक इव ज्वरस्तमतीव कातरतां नयति। वहुविधया सुचिकित्सया च वीतज्वरो भूत्वापि दैहिकीं ग्लानिं न परिहातुमीष्टे। विना हि वायुपरिवर्त्तनं न दौर्वल्यमपगमिष्यतीति चिकित्सकैरुपदिष्टः पिता मोहिनीमोहनस्तथाविधं पुत्रमादाय प्रयागं गतः।

सेवित्वा च गङ्गाजलं पूतपवनञ्च कथञ्चित् स्वास्थ्यं रमणीमोहणो लभते। किन्तु मनोऽतितरां यातनया सततं ज्वलति। अहो कालस्तु वलीयान्। स्पष्टतः कोऽपि नास्ति व्याधीरमणीमोहनशरीरे किन्तु क्रमशः प्रतिदिनं शरीरं कान्त्या त्यज्यते क्षीयते च, एतदवलोक्य सह स्थितः कश्चित् चिकित्सको राजानमाह महाराज! मयैतदनुमीयते अस्ति काचिदस्य मानसी यातना, नान्यथा भवितुमीदृक् कथमपि युज्यते।

कार्त्तिकमासस्य शेषे एकस्मिन्नहनि चिकित्सकः कथयति महाराज! अतीवासमीचीनावस्था ते तनयस्य अतो भवानेव लज्जामपहाय पृच्छतु तावत् कास्य मानसी व्यथेति।

ततोऽपराह्णे रमणीमोहनः पितुरङ्के मस्तकं निधाय यदा स्वपिति तदा स्वयमेव सकरुणं कथयति तात! किञ्चित्ते ब्रवीमि, किन्तु वचनं न स्फुरति। ततः किञ्चित् दुग्धं पाययित्वा पिता कथयति किंवक्ष्यसि प्राणाधिक! ब्रूहि। रमणीमोहनस्य रुग्नचक्षुर्भ्यां दरदरितवेगेन वास्पधारा प्रवर्त्तते। स मृदु मृदु कथयति।

पितः ! मया भवत्यज्ञाते काचित् कुलीना स्कुलवालिका परम-रमणीया परिणीता। किन्तु सदा ममासाक्षात्कारात् त्वयि कुप्यति नवममासगर्भिणीं तामहं तत्यराज। राजा सघनं निःश्वसन् कथयति हाहा सर्व्वं विनाशितं, वंशाङ्कुरः क्व विसर्ज्जितः ? रमणी-मोहणो दीर्घदीर्घश्वासेन कथयति तात! अहं तामवदं भवतीं प्रच्छन्नं परिणीतवान् अतो न सेत्स्यति विवाहोऽयम्। अतोऽहमन्यां यथाविधि यथारीति विवक्ष्यामि। श्रुत्वै तत् सा वहु रुरोद। अहन्तु तात! त्वत्तो भीतः तस्माद्गृहाद्वहिरभवम्। तदानीमपि सा श्वशुरस्य सन्निधौ नय स खलु ईदृशीमवस्थामापन्नां मां वीक्ष्य आद्योपान्तं वृत्तान्तञ्च श्रुत्वा सदयो भविष्यति इति पुनः पुनर्मां सनिर्व्वेदमवादीत्। (श्रुत्वै तत् राज्ञश्चक्षुर्भ्यां वाष्पधारा निपेतुः)। तात! तदा तस्या वचनमवज्ञाय तद्भवनमत्यजं। मुहूर्त्तमतीत्य परावृत्य चाद्राक्षं सा नास्ति, तस्यादासी यशोदापि। तदानुमिने पलायिता सह यशोदया सेति।

ततः परं कृतविवाहः स्वगृहं गच्छन् चित्पुरवर्त्म पार्श्वे एकतल-गृहच्छदिषि तामपश्यम्। तात! सा कृतप्रसवा इव अन्वमानि। ततः प्रभृत्येव मम पीड़ा जाता, सैव मे तीव्रयातना। हा क्व सा अनाहारा ममार, अथवा ममैव दोषात् स्खलितचरित्रा जाता। हा तात! किं कृतं मया। इत्युक्त्वैव रमणीमोहणः मुमूर्च्छ। राजा तं शुश्रूषितुमारेभे ततःपरं वाक्शक्तिस्तिरोहिता, प्रणा अपि क्रमशस्तस्मात् रमणीमोहनदेहान्निश्चक्रमुः। शोकाकुलञ्च राजानं कथञ्चित् प्रवोध्य भृत्याः कुमारस्य निष्पादितान्त्येष्टिक्रियाः सह राज्ञा स्वगृहं प्रति नौकया गतवन्तः।

महाराजस्तु मोहिनीमोहनः प्रायश एव पुत्रसुहृदं अतुलकरं सर्व्वदा स्वसन्निहितं रक्षति। पुत्रवच्च तं स्निह्यति। दिनानि कानिचिद्ग-मयित्वा विधवां पुत्रवधूं स्वगृहमानाय्य तनयानिर्व्विशेषं पालयति।

एवं समये समये स्वयमनुतप्यते, हा यदि अधुनाप्यनुसन्धानेन पुत्रो वा कन्या वा रमणीमोहनस्य प्राप्यते तदापि सुखेन मर्त्तुं शक्नोमि। अहो पितृपुरुषस्य पिण्डेनैव लुप्यते। राजा खलु रहसि वहुदिनं यावत् रमणीमोहनस्य पत्न्या अनुसन्धानं चकार, किन्तु सफलप्रयत्नो न भवति। विधेर्वामतया कथं फलिष्यति मनोरथः।

एकदा अतुलकरः राजानं कथयति तात! अहमद्य भवानीपुरे पितृष्वसारं प्रणन्तुं यास्यामि। तस्मात्रागमने पञ्च षड् वा दिनानि विलम्बो भवेत्। मदीया तु पितृष्वसा महतो विभवस्याधिकारिणी अपुत्रिका च। मह्यं भूसम्पत्तिं कियतीं प्रदास्यतीत्यनुमिने। अतस्तत्रगन्तुं मामनुजानीहि।

अतुलकरस्तत्र गत्वा पितृष्वसुः समीपे उपविशन्तीं अतीव सुन्दरीं वालिकां छायां पश्यति। प्रणम्य च पितृष्वसारं कुशलप्रश्नोत्तरं विज्ञाप्य पृच्छति। अयि पितृष्वसः! केयं देवीरूपिणी वालिका? क्व वा लब्धा? सा कथयति इयं कोन्ननगरवासिनो नरेन्द्रघोषस्य भागिनेयी इत्यादि समस्तं वृत्तान्तं कथयति।

अतुलस्य मनः क्षणं विस्मयसागरे मज्जति। तस्याः सौन्दर्य्यराशिनाकृष्टः कुटिलं पापकटाक्षं तस्यां पुनः पुनः क्षिपति। मनसि चिन्तयति च हाहा अस्यास्तु मात्रा सार्द्धं वाञ्छितोऽपि मम सहवासः नैव सम्पन्नः। किन्तु यद्यपीमां स्नेहविनिमयेन परिणेतुं प्रभवामि तदा पश्चाद्राज्ञे मनोमोहनाय निवेद्य तस्यानन्योत्तराधिकारिकोऽहमेव तत् पौत्रीपतितया राजा भविष्यामीति। किन्तु नरपिशाचोऽसौ नैतच्चिन्तयति विवाहितायां सत्यां मनोमोहनराजस्य पौत्र्यां तस्य कुलमर्य्यादा विनश्यतीति।

अनन्तरं स दुराचारः अतुलकरः अनिच्छन्त्या अपि च्छायायाः सान्निध्यमुपवेष्टुं तया संलपितुञ्च प्रत्यहं यतते, किन्तु सा छाया स्वां

विरक्तिं सूचयति आलपतस्तस्य प्रत्युत्तरं न ददाति, सान्निध्यमुपविशतस्तस्मादन्यत्र व्रजति।

एकदा वृद्धा गृहस्वामिनी छायाया भावमनुमाय अतुलं प्राह। रे अतुल! छाया अतीव लज्जाशीला; त्वन्तु निर्लज्जः वहिर्वाटीमपहाय सततमन्तर्वाट्यां किमर्थं निरन्तरं पर्य्यटसि? नैतदुचितं प्रतिभाति। तच्छ्रुत्वा अतुलः मर्म्मणि वेदनामनुभूय कुप्यति। प्राह्णे अतुलः पुष्पोद्याने विहरन् पुष्पोद्यानभृत्येनालपति—यदि प्राचीना पितृष्वसा वोधशक्तिशून्या अद्यैव म्रियेत तर्हि प्रातरेवास्याः सर्व्वाः सम्पत्तयः ममैवायत्ता भविष्यन्ति। अहमेवैकोऽस्या भ्रातुष्पुत्रः। नान्योऽधिकारीति। वृद्धा तु दैवाद्गवाक्षवर्त्मनि प्रच्छन्नं तिष्ठन्ती तत् सर्व्वं शृणोति कथयति च अहो एवम्बिधाय गुणाकराय भ्रातृपुत्राय जीवन्ती एव सर्व्वां सम्पत्तिं दास्यामि तत्र कथं मम मरणापेक्षेति तदाकर्ण्य अतुलकरः म्रियमाणो भवति।

( क्रमशः )

---

# धर्म्मविवेकः।

( पूर्व्वप्रकाशितात्परः )।

अपि चात्रोदाहरणान्तरं यथा "प्राङ्मुखोऽन्नानि भुञ्जीत" इति नियमविधिः। भोजनकर्त्तुर्यदृच्छया यां काञ्चिद्दिशमाश्रित्य भोजनं प्राप्तं—तत्र कदाचित् प्राची कदाचिदितरा दिक् इति या काचिद्दिक् प्राप्ता। तत्र यदा प्राची प्राप्ता न तदेतरा। यदातु इतरा न तदा प्राचीति तत्राप्राप्तिपक्षे विध्यर्थं वचनं प्राङ्मुखोऽन्नानि भुञ्जीत" इति तदतिक्रमाच्छास्त्रार्थं जहाति। परन्तु अयं काम्यनियमः। आयुष्यं प्राङ्मुखो भुङ्क्ते इत्याद्येक वाक्यतया आयुर्वृद्धिकाम-परत्वात्।

एवं ऋतौभार्य्यामुपेयादित्यादिरपि नियमविधिः। विधेयस्य भार्य्याभिगमनस्य रागतः प्राप्तावपि रागाभावात् पक्षतोऽप्राप्तेः। यदृच्छयोपगमनं ऋतावनुपगमनं पक्षेविधीयमानं अनुपगमनं अनुष्ठीयमानञ्चेत् शास्त्राति क्रमणं जनयेत्। यथा अन्ये ऽपि शास्त्र विहितकर्म्माणि अतिक्रम्यमाणानि सन्ति प्रायश्चित्तकारणानि भवन्ति। तथा ऋतौ भार्य्यानुपगमनं पापजनकमतः प्रायश्चित्तहेतु र्भवेत्। अतो विधिनानेन ऋतुकाले भार्य्योपगमनं नियम्यते।

अथ पञ्च पञ्चनखान् भुञ्जीत (१) इत्यादिवत् ऋतौ भार्य्या मुपेयादित्यादिरपि परिसंख्याविधिरेवास्तां न तु नियमः। नियमे तु तदकरणे पापमुत्पद्यते परिसंख्यायान्तु तदकरणे नास्ति पापकथापि। अत्र क्षुन्नाशार्थं शशकादिषु पञ्चसु पञ्चनखेषु भक्षणं प्रसक्तं एवं शशकादिभिन्नेषु वानरादिष्वपि भक्षणं प्राप्तं अतो युगपत् शशकादिषु पञ्चनखेषु तदन्यत्र वानरादिषु च रागतो भक्षणप्रसङ्गे पञ्च पञ्चनखान् भुञ्जीत विधिरेषः इतरस्य वानरादेः प्रतिषेधनात् परिसंख्यैव। एवमिहापि। सत्यं परिसंख्या दोषत्रय विशिष्टा व्याख्याता। अतएव यत्र दोषत्रयं वर्त्तते तत्रैव परिसंख्या-भविष्यति। ऋतौभार्य्यामुपेयादित्यत्र दोषत्रयं नास्तीत्यतः परिसंख्या भवितुं न युज्यते। तच्च दोषत्रयं यथा स्वार्थत्यागः। परार्थ कल्पना। प्राप्तबाधश्चेति। अत्र तु नैवमर्थः कर्त्तव्यः—ऋत्वितर-काले भार्य्यां नोपेयादिति, तदा "ऋतावुपेयात् सर्व्वत्र वा प्रतिषिद्ध-वर्ज्जमि"ति गौतमादिवचनप्राप्तं अनृतावपि गमनं निषिध्यते। तन्न-युक्तं। यदि मांसं भक्षेत् तदा पञ्चानां पञ्चनखानामिव। अत्र तु एवं नार्थः यदि गच्छेत् तदा ऋतावेव ऋतौ गमनस्यावश्यकत्वात् "यदि" एवमर्थः नैव कर्त्तुं शक्यते। तथा सति पापश्रुतेः। नियमे विधेयप्रवृत्तेः प्राधान्यं परिसंख्यायान्तु इतर निवृत्तेः प्राधान्य मिति।

---

(१) शशकः शल्लकी गोधा खड्गी कूर्म्मस्तु पञ्चमः॥

परिसंख्याविधिस्तु यथा "प्रोक्षितं मांसं भुञ्जीत इति अत्र विधेयस्य प्रोक्षितमांसभक्षणस्य रागतः प्राप्तेः। एवं नात्र विवेचनीयं प्रोक्षितमांसं भक्षेदिति विधिवलात् प्रोक्षितमांस भक्षणस्यावश्यकत्वं किन्तर्हि प्रोक्षितेतरमप्रोक्षितं मांसं नैव भक्षयेत् इत्येवमर्थ एव तात्पर्य्यं। यदि मांसभोजनं रागतः कर्त्तव्यं तदा देवानुद्दिश्य निवेदितस्यैव मांसस्य भोजनं कर्त्तव्यं नत्वनिवेदितस्य। एवं पञ्च पञ्चनखा भक्ष्याः इत्यादिरपि परिसंख्या। अस्यार्थः—पञ्चेतरपञ्चनखा न भक्ष्याः। (१) अत्र विधेयस्य पञ्चनखभक्षणस्य रागतः प्राप्तस्य न प्राधान्यं किन्तु श्वाविधादि पञ्चेतरस्य रागतः प्राप्तस्य भोजन निवृत्तिरेव प्राधान्यं। श्वाविधादिपञ्चनखान् भुङ्क्ष्व वा नैव भुङ्क्ष्व न तत्र वाक्यमेतदेकान्ततो निवर्तकं प्रवर्त्तकं वा भवेत्, किन्तु श्वाविधादिपञ्चेतर पञ्चनखानां भक्षणं अत्यावश्यकत्वेन निषिध्यते। तथाच,—

"विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥"

अस्यार्थः। अत्यन्तं रागतः शास्त्रतो युक्तितो वा अप्राप्तौ सत्यां प्रवर्त्तकं वाक्यं विधि। यथा अहरहः सन्ध्या मुपासीत। अत्र सन्ध्योपासनस्य रागादितोऽप्राप्तत्वात्। पाक्षिके रागाभावात् अप्रापणे सति प्रवर्त्तकं वाक्यं नियमः। यथा ऋतौ भार्य्यामुपेयात्। ऋतौ यदि अनुरागाभावात् भार्य्योपगमनं न सम्भवति तत्रावश्यकत्वेन भार्य्योपगमनप्रवृत्त्यर्थं नियमः। तत्रचेत्यादि तत्र उद्देश्ये अन्यत्र अनुद्देश्ये च रागतः प्राप्तौ उद्देश्येतरनिवर्त्तकं वाक्यं परिसंख्या इति।

---

(१) "श्वाविधं शल्यकं गोधा खड्गकूर्म्मशशांस्तथा।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतो दतः" मनौ। ५।१८

"अश्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात्
प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिका" ॥

ताञ्च परिसंख्यां दोषत्रयवती माचक्षते। तथाच—

त्रयो हि तत्र दोषाः प्रादुः स्युः। स्वार्थत्यागः। परार्थकल्पना। प्राप्तबाधश्च। पञ्चनखा भक्ष्याः इति यदा रागतः पञ्चनखविषये भक्षणं प्रतीयते तदा तद्भक्षणं त्यक्तं भवति। तद्व्यतिरिक्तनिषेधपरत्वाद्वाक्यस्य। अश्रुतस्य निषेधः प्रतीयते इति परार्थकल्पना। अर्थित्वाच्च मांसमात्रभक्षणं प्राप्तं तस्य बाधः इत्येवं त्रयो दोषाः परिसंख्यायां। तथा च जैमिनीयन्यायमाला विस्तरे। अं १७ पां ५। अधिं १४। २०

"परिसंख्या पूर्वपक्षी न संयुक्ता विदोषतः।
अप्राप्तस्यार्थबाधेन विधेयः स न गम्यते॥" इति।

अङ्गस्य विधिभेदो यथा—शारदीयपूजायामष्टम्यामुपवसेत् इत्यादिरपूर्व्वविधिः। अत्र विधेयस्योपवासस्य एतदन्यशास्त्रतो रागतो न्यायतो वा क्वचिदप्राप्तेः। तथा श्राद्धे भुञ्जीत पितृसेवितं इत्यादिर्नियमविधिः। विधेयस्य श्राद्धशेषभोजनस्य रागतः प्राप्तावपि रागाभावात् पक्षतोऽप्राप्तेः। तथावृद्धिश्राद्धे प्रातरामन्त्रयेद्विप्रान् इत्यादिः परिसंख्याविधिः। अत्र विधेयस्य प्रातरामन्त्रणस्य तत्प्रतिपक्षस्य पूर्व्वदिनसायं निमन्त्रणस्य च पार्व्वणवन्न्यायतः प्राप्तेरिति।

( क्रमशः )

# वज्रसूची ।

श्रीं नमः परमात्मने ॥

वज्रसूचीं प्रवक्ष्यामि शास्त्रमज्ञानभेदनं ।
दूषणं ज्ञानहीनानां भूषणं ज्ञानचक्षुषां ॥

ब्राह्मणक्षत्रियवैश्यशूद्राश्चत्वारो वर्णाः । तेषां ब्राह्मण्यं प्रधानं वेदवचनान्निरूपितं स्मृतिभिरुक्तं च। तत्र चोद्यमस्ति को ब्राह्मणो नाम। किं जीवः किं देहः किं जातिः किं वर्णः किं पाण्डित्यं किं धर्म्मः किं धार्म्मिक्यं किं कर्म्म चेत्यष्टौ विकल्पाः। प्रथमं जीवो ब्राह्मण इति चेत् तर्हि सर्व्वस्यापि जनस्य जीवस्यैकरूपत्वात्, तस्माज्जीवो ब्राह्मणो न भवत्येव ॥१॥ अन्यच्च देहो ब्राह्मण इतिचेत् तर्हि चण्डालपर्यंतानां मनुष्याणां देहस्य जरामरणधर्म्मदर्शनात्। तस्माद्देहो ब्राह्मणो न भवत्येव। पितृमातृशरीर-दहनात्पुत्राणां ब्रह्महत्यादिदोषसम्भवःस्यादित्यपिहेतोर्देहो ब्राह्मणो न भवत्येव ॥ २ ॥ जातिः इति चेत् तर्हि अन्यजातिसम्भवा बहवो महर्षयः सन्ति। तथाहि ऋष्यशृङ्गो मृगीजातः। कौशिकः कुशास्तरणे। गौतमः शशपृष्ठे। वाल्मीकिर्वल्मीक्यां। व्यासः कैवर्त्तककन्यायां। वशिष्ठ उर्वश्यां जातः। विश्वामित्रः क्षत्रियाया मगस्त्यः कलशाज्जात इति श्रूयते। तेषां जात्या विनापि सम्यग् ज्ञानविशेषाद् ब्राह्मण्यमत्युत्तमं श्रूयते तस्माजातिर्ब्राह्मण्य हेतुर्नास्ति ॥ ३ ॥ वर्ण इति चेत्। ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति वचनात् सर्व्वेषामेव ब्राह्मणवर्णदर्शनाद्वर्णोऽपि ब्राह्मण्यहेतुर्नास्ति ॥ ४ ॥ पाण्डित्यमितिचेत्। तर्हि-क्षत्रिय वैश्य शूद्रादयोऽपि पदपदार्थवाक्यप्रमाणविज्ञाना बहवः सन्ति तस्मात् पाण्डित्यमपि ब्राह्मण्यहेतुर्न

भवति ॥५॥ धर्म्म इति चेत् तर्हि क्षत्रिय-वैश्य-शूद्रादयोऽपि इष्टापूर्त्त धर्म्मकारिणो बहवःसन्ति तस्माद्धर्म्मोऽपि न ब्राह्मण्यहेतुः। धार्म्मिक्य-मिति चेत् क्षत्रियवैश्य शूद्रादयोऽपि कन्यादान गजदान गोदान हिरण्यदानमहिषदानदातारः सन्ति तद्धार्म्मिक्यमपि न ॥ ७ ॥ कर्म्मेति चेत्। ब्राह्मणः श्वेतकर्म्मा शतं वर्षाणि जीवति क्षत्रियस्तदर्द्धं वैश्यस्तदर्द्धं शूद्रस्तदर्द्धमिति नियमाभावात् तस्माद् ब्राह्मण्ये कर्म्मापि न हेतुः ॥८॥ किन्तु करतलामलकमिव पश्यन् यः परोक्षेण कृतार्थस्तथा कामरागद्वेषरहितः शमदमादिसन्तोषः मानमात्सर्य्य तृष्णा संमोहादि दुष्टार्थनिवृत्तः स एव ब्राह्मण उच्यते। उक्तञ्च।

जन्मना जायते शूद्रः संस्कारात् द्विज उच्यते।
वेदाभ्यासाद्भवेद्विप्रो ब्रह्म जानाति ब्राह्मणः॥

अत एव ब्रह्मविदेव ब्राह्मणो नान्य इति।

कर्म्मयोगी च विद्वान् स अन्तरालं सुरालयं।
सत्यं वैकुण्ठकैलासक्षीराब्धिं भैरवं तथा॥
विश्वरूपञ्च चैतन्यमेतन्मायास्वरूपकं।
मयापरं भवेद् ब्रह्म तत्परं ब्रह्म केवलं॥
योगी देहाभिमान्येव भोगी कर्म्मणि तत्परः।
ज्ञानी मुक्ताभिमान्येव तत्त्वज्ञे नाभिमानिता॥
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किं।
आत्मना पूरितं सर्व्वं महाकल्पांबुना यथा॥

सावयव-वस्तुज्ञानं मोक्ष इति केचित्। निरवयवगुणातीत-वस्तु-ज्ञानं मोक्ष इति केचित्। साकारास्य विनाशोऽस्ति निराकारस्यशून्यता उभयपक्षविहीनवस्तुज्ञानं मोक्ष इति केचित्। ऐकदेशिकसिद्धान्त-कथितभक्तिविधानं मोक्ष इति केचित्। व्यापकसकलागम-शास्त्रार्थनिर्द्दिष्टाचरणं मोक्ष इति केचित्। मनोवाञ्छाविकल्प विच्छेदलक्षणो मोक्ष इति केचित्। मनःपवनध्येयध्यानधारणा

करणं मोक्ष इति केचित्। इच्छाद्वेषोभयज्ञानाभावो मोक्ष इति केचित्। महावाक्यविचारणं मोक्षइति केचित्। मद्यमांसास्वादन सुरतक्रीड़ा विलासविम्रमानन्दमयो मोक्ष इति केचित्। अस्ति नास्तीत्युभयज्ञानविच्छेदो मोक्ष इति केचित्। सोऽहं भावसमरसत्वं मोक्ष इति केचित्। स्वात्मानन्दबोधमयो मोक्ष इति केचित्। जटास्थापन भस्मोद्धूलनाङ्गीकारादेव मोक्ष इति केचित्। नाना तीर्थयात्रा जप हवन दानव्रतैरेव मोक्ष इति केचित्। स्थावर जङ्गमजात्यहिंसा केशोत्पाठनादेव मोक्ष इति केचित्। एतेषां सङ्कल्प विकल्पानुसारे दर्शनभेदाः सन्ति बहवः। तन्न भवति सर्व्वेषां मोक्षपदमिति। किन्तु यो महावाक्यविवरणेनोक्तः समष्टि व्यष्टि रूपीऽयं प्रपञ्चः तन्नश्वंशलं वाच्यं परित्यज्य शुद्धलक्ष्यत्वमङ्गीकृत्य यत् जीवपरमेश्वरयोरैक्यं स एव मोक्षः। स कथं यथा महाकाशे घटमठोपाधिर्विद्यते तस्य प्रध्वंसो महाकाशे सिद्धः। तथा जीव परमेश्वरयोरैक्यं स एव मोक्षः सिद्धः।

वेदान्ता बहुतर्ककर्कशमतिग्रस्ताः परा मायया
भाट्टाः (१) कर्म्मकलाकुला हतधियो द्वैते परा वञ्चिताः।
शैवाः पाशुपता महाव्रतधराः कालामुखा जङ्गमाः
गाणेशाः सकलेष्टदङ्गणपतिं ध्यायन्ति चित्ते ऽनिशं ॥ १ ॥

( शनकः)

---

## ON TRANSLATION.

☞ As given by Mr. Seshagiri Sastri M. A. Professor of Sanskrit literature Presidency College, Madras.

Q. Translate into Sanskrit.

Do not these passages and such passages as these indicate that women were honoured in ancient India more perhaps than among any other nation in the

---

(१) भाट्टाः मीमांसका।

face of the globe ? Considered as the intellectual companions of their husbands, as their firends and affectionate helpers in the Joureny of life, as the partners of their religious duties and the source of their domestic bliss, Hindu wiver were honored and respected in ancient times. It was not often that they attained the abstruse learning of a Maitriyi and Gargi ; but nevertheless they were well informed in general matters and well trained in theis old domestic duties. Free from all undue restraint on their movements and actions, women moved freely in the society in which they lived, frequented public testivities and sights, performed religious sacrifices, visited friends and received visits.—

Dut's Ancient India.

A. कदाचिद्भूमिरुपरिवर्त्तमानेषु सर्व्वेषु जनेषु यथा पूजितास्ततोप्यधिकतरङ्गनाः प्राचीनभारतवर्षे पूजिताः इत्येतान्येतादृशिवचनानि च न दर्शयन्ति किम्। पतीनां विद्वन्मित्तत्वेन जीवयात्रायां स्निग्धत्वेन प्रीतिसहायत्वेन च, धर्म्मकार्य्येषु सहायत्वेन च गृहगृहस्थानन्दस्य मूलत्वेन च भारतवर्षीयभार्य्याः प्राचीनेषु कालेष्वर्हणां प्रापुः। मैत्रेयीगार्गीसदृशीनां स्त्रीणां रहस्यं ज्ञानं ता लेभिरे इति यत्नैव तन्मुहुरभूत्। तथापि साधारणविषयेषु विश्रुताः स्वगृहकृत्येषु सुशिक्षिता अभवत्। स्वीयेषु प्रयत्नेषु कार्य्येषु च सर्व्वविधायुक्तनिर्बन्धरहिताः स्वीयसम्बन्धेषु स्वातन्त्र्येणाचरन्। सार्वलौकिकोत्सवानपश्यन्। यज्ञादिक्रियामकुर्व्वन्। मित्राण्यपश्यन्। मित्रेभ्योऽपि दर्शनमदुः।

श्रीश्रीदुर्गा शरणम्

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जगन्ति च ।
मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## भाषावतरणिका ।

**किमेभिर्म्मार्त्तण्ड ! प्रखर किरणैर्म्मर्म्मभिदुरैः**
**दिधक्षुः शीतं नः क्षितिमपि च शुष्येरतिरुषा ।**
**न शीतो न ग्रीष्मोऽपि तु तदुभयः प्रातरिव तत्**
**भवेत् सुखं सर्वं किमिह न प्रभो सम्भवपरं ॥**

## उद्भटश्लोकाः ।

या चण्डी मधुकैटभादि दलिनी या माहिषोन्मर्दिनी
या धूम्रेक्षण चण्डमुण्ड मथिनी या रक्तवीजाशिनी ।
शक्तिः शुम्भनिशुम्भ दैत्य दलिनी या सिद्धिलक्ष्मीप्रदा
सा देवी नवकोटी मूर्त्तिसहिता त्वां पातु विश्वेश्वरी ॥२४०॥

निरक्षरान् वीक्ष्य धनादिनाथान् त्यजन्ति विद्यां न कदापि धीराः ।
आवद्धमुक्तां गणिकां विलोक्य कुलाङ्गनाः किं कुलटा भवन्ति ? ॥२४१॥

लज्जा मानसुता द्विजस्य वनिता भिक्षा परा दैन्यजा,
तातैश्वर्य्य विगर्विता वलवती भिक्षा प्रगल्भा भवेत् ।
सा लज्जा निहता तयैव तनयाशोकेन मानो मृतः
साध्वी दैन्यसुता चिरं प्रियसखी नाद्यापि मां मुञ्चति ॥२४२॥

नीचैः सङ्गं सर्वथैव न कुर्य्युः साधवः क्वचित् ।
सा काली दाससङ्गेन ह्रस्वतां ह्रस्वतां गता ॥२४३॥ (*)

---

(*) दास सङ्गेन सेवकवाचक दास शब्देन सङ्गात् काली कालीशब्दः ह्रस्वतां ह्रस्वकारत्वं गता दृश्यतां विलोक्यतां । "कालीचण्डीदासे ह्रस इति सूत्रेण काली शब्दस्य ह्रस्वविधानात् । शब्दशेषमहिमा च काली भगवती । दासश्च सेवक इति लभ्यते । तदपि शब्दस्यरूप बोधने लक्षणां स्वीकृत्योक्तमिति ॥

# ईश्वरस्तोत्रम् ।

यन्नाम कीर्त्ति मुदिता पुलकान्तरङ्गैः
गायन्ति पण्डितजनाः प्रथितां पृथिव्याम् ।
वित्तं न गोपयति यन्तु वनीयकेभ्य
स्तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि ॥

१

शीलेन साधुनिकरो वशतामुपेति
दानेन याचककुलं परिहन्ति याचञाम् ।
यत् संश्रयादपि जड़ाः कविता लभन्ते
तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि ॥

२

सर्व्वेषु भूतनिकरेषु निजात्मभावं
ज्ञानेन कञ्जज इव प्रथितं जगत्याम् ।
चातुर्य्यं कार्य्यरहितं परमार्थ वुद्धिम्
तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि ॥

३

सत्येषु वाक्यनिचयेषु दृढ़व्रतं यं
मर्म्मद्विषन् रिपुकुलच्चयकारिणं यं ।
स्वदेश वासिभिरहो परिगीत गाथम्
तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि ॥

४

यत् संश्रयादतिघृणास्पदनीचवुद्धि
दुष्कर्म्मजालविरतः कुलपांशुलोऽपि ।
तेनैव पौरुषकुलं गदितुं समर्थो
स्तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि ॥

यस्यानुभावममलं परिलोक्य तावत्
निन्दन्ति दुष्टकुलजातविशिष्ट दोषाः ।
पश्यन्ति नैव कुधिया महतां महत्त्वम्
तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि ॥

६

स्वेच्छातनुं नयसि वै वितनोषि कीर्त्तिम्
ब्रह्मांशको ननु विभो वपुषा हि किंते ।
स्तद्वो विघोषयति यं नरमेव नान्य
स्तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि ॥

७

यस्मिन् सुधीर्हि मुकुरे गुणमेव पश्येत्
राकापती सकलमावसति प्रमोदा ।
यश्चात्म बोधन गुणाकर देवनन्दम्
तं श्रीश्वरं मम गुरुं शिरसा नतोऽस्मि

८

श्रीविधुभूषण देव विरचितं ईश्वराष्टकं सम्पूर्णं

---

## महाकालः महाकाली च ।

महाकाली जगद्व्यापिनी न तस्या आवरणादिकं किमपि सम्भवति, सा ब्रह्मरूपिणी न कस्माद्बिभेति, न वा लज्जते, सा निरन्तरं जगत् प्रसूते न तदा परिधानं सम्भवतीति सा काली दिगम्बरी !

काली सजलजलदनीला स्वरोचिषा दशदिशमालोकयति तस्यान्तु कालिकायां रूपेण शिवस्यापि मनोमोहिन्यामतुल सौन्दर्य्यायां विवसनायां मातृबुद्ध्या मनोनिश्चलमविकृतञ्च ध्यायन्तो ये साधका स्तामुपासते, तेषामन्यासु स्त्रीषु अश्रद्धयेव मनो नाग्रे सरिष्यति, क्रमशोऽभ्यासवशान्मनश्चञ्चलीभावमपहाय सुसूक्ष्मेऽपि ध्येये

सुस्थिरत्वं ग्रहिष्यति, तेन च तेषां साधकानामपवर्गमार्गो विमुक्तार्गलः सम्पत्स्यते । अयमेव महोपकारः कालीमुपासीनानामिति ।

## अथ कालिकायाः क्रमस्तोत्रम् ।

ओंनमामि कालिकां देवीं कलिकल्मषनाशिनीं । नमामि शम्भुपत्नीञ्च नमामि भवसुन्दरीं ॥
आद्यादेवीं नमस्कृत्य नमस्त्रैलोक्य मोहिनीं । नमामि सत्यसंकल्पां सर्वपर्वतवासिनीं ॥
पार्वतीञ्च नमस्कृत्य नमो नित्यं नगात्मजे ।

मातस्त्वदीय चरणं शरणं सुराणां ध्यानास्पदैर्दिशति वाञ्छित-वाञ्छनीयं ।
येषां हृदि स्फुरति तच्चरणारविन्दं धन्यास्त एव नियतं सुरलोकपूज्याः ॥
गन्धैः शुभैः कुङ्कुम पङ्कलेपैर्मातस्त्वदीयं चरणं हि भक्ताः ।
स्मरन्ति शन्वन्ति लुठन्ति धीराः तेषां जरा नैव भवेद्भवानि ॥
तवाङ्घ्रि पद्मं शरणं सुराणां परापरा त्वं प्रकृतिः परा हि ।
दिने दिने देवि भवेत् करस्थः किमन्यमुच्चैः कथयन्ति सन्तः ॥
कवीन्द्राणां दर्पं करकमलशोभा परिचितम्
विधुन्वञ्जङ्घाभे सकलगणमेतद्धर्रिस्तुते ।
अतस्त्वत् पादाब्जं जननि सततं चेतसि मम
स्थितं नारीभूतं प्रणिहित पदं शाङ्करमपि ॥
ये ते दरिद्राः सततं हि मात स्त्वदीयपादं मनसा नमन्ति ।
देवा सुराः सिद्धवराश्च सर्वे तव प्रसादात् सततं लुठन्ति ॥

हरिस्त्वत् पादाब्जं निखिलजगतां भूतिरभवत्
शिवो ध्यात्वा ध्यात्वा किमपि परमं तत्परतरं ।
प्रजानां नाथोऽयं तदनु जगतां सृष्टिमकृत
किमन्यन्ते मातस्तव चरण युग्मस्य फलता ॥

इन्द्रः सुराणां शरणं शरण्ये प्रजापतिः काश्यप एव नान्यः ।
गिरां पतिर्विशुभवः परेशि त्वदीय पादाब्जफलं समस्तम् ॥
त्वदीयनाभौ नववल्लभेवानवाङ्कुरैर्लोमवरैः प्रफुल्लम् ।
सदा वरण्ये शरणं विदेहि किम्वापरं चित्तवरैर्विभाव्यं ॥
त्वदीय पादार्च्चित वस्तुसम्भवः सुरासुरैः पुज्यमवाप शम्भुः ।
त्वदीय पदार्च्चन तत्परो हरिः सुदर्शनाधीश्वरतासुपालभेत ॥
धरित्री गन्धरूपेण रसेन च जलं धृतम् । तेजो वह्निस्वरूपेण प्रणवे ब्रह्मरूपधृक् ॥

मुखं चन्द्राकारं त्रिभुवन पदैयामसहितं

विनेत्रं मे मातः परिहरति यः स्यात् स तु पशुः
न सिद्धिस्तस्य स्यात् सुरत सततं विश्वमखिलं
कटाक्षैस्ते मातः सफल पदपद्मं स लभते ॥
क्रतुस्त्वं हविस्त्वं स्वधा त्वं सुरारिः पुरा त्वं परा त्वं सदाशीः पुरारिः ।
हरस्त्वं हरिस्त्वं शिवस्त्वं शिवा त्वं गतिस्त्वं गतिस्त्वं गतिस्त्वं भवानि ॥
न वाहं न वा त्वं न वा वा क्रियाया वरस्त्वं वरुस्त्वं शरण्यां धरायाः ।
नदस्त्वं नदी त्वं गतिस्त्वं निधीनां सुतस्त्वं सुता त्वं पिता त्वं पितॄणां ॥
त्वदीय मुण्डाख्यक चारुमालां विधाय चित्ते भवपङ्कजादयः ।
सुराधिपत्यं लभते मुनीन्द्रः शरण्यमेतत् किमपीह चान्यत् ॥
नरस्य मुण्डञ्च तथाहि खड्गं भुजद्वये ये मनसा जपन्ति ।
सव्येतरे देवि वराभयञ्च भवन्ति ते सिद्धजना मुनीन्द्राः ॥
शिवोपरि त्वां हृदये निधाय जपन्ति दिव्यां हृदये कदाचित् ।
सदा भवेत् काव्यरसस्य वेत्ता अन्ते पदद्वन्दमुपाश्रयेत ॥
दिगम्बरीं त्वां मनसा विचिन्त्य जपेत् पराख्यां जगतां जनीति
जपेत् पराख्यां जगतां मतिश्च किम्वापराख्याशरणं भवामः ॥
शिवाविरावैः परिवेष्टितां त्वां निधाय चित्ते सततं जपन्ति ।
भवेय देवेशि परा परादि निरीशतां देवि परा वदन्ति ॥
त्वदीय शृङ्गारवसं विधाय जपन्ति मन्त्रं यदि वेदमुख्याः ।
भवन्ति ते देवि जनापवादं कविः कवीनामपि चाग्रजन्मा ।
विकीर्णकेशां मनसा निधाय जपन्ति विद्यां चकितः कदाचित् ॥
सुराधिपत्यं लभते नरः स किमस्ति भूयां शृणु कालकालि ॥
त्वदीयबीजत्रय मातरेतज्जपन्ति सिद्धास्तु विमुक्ति हेतोः ॥
सदैव मातस्तव पादपद्मगा भवन्ति सिद्धाश्च दिनत्रयेऽपि ।
त्वदीय कूर्चद्वय जापकत्वात् सुरासुरेभ्योऽपि भवेच्च वर्ण्यः ।
धनित्व पाण्डित्य मिलन्ति सर्वे किं वा परां देवि परापरांख्यं ॥
त्वदीय लज्जाद्वय जापकत्ताद्भवेन्महेशानि चतुर्थ्यसिद्धिः ।
कटाक्षकारुण्य वरप्रसादात्तवाधिपत्यं लभते नरेशः ॥
ततः सनाम्नः शृणु मातरेतत् फलं चतुर्वर्गमदन्ति सन्तः ।
बीजत्रयं वै पुनरप्युपास्य सुराधिपत्यं लभते मुनीन्द्रः ॥
पुनस्तथा कूर्चयुगं जपन्ति नमन्ति सिद्धा नरसिंहरूपाः ।

ततोऽपि लज्जाद्य जापकत्वाद्भवन्ति सिद्धिं मनसी जनास्ते ॥
अन्ते पदं चिप्य विभाविभावसौ स्वम्मन्त्रमुद्धार मिदं वदन्ति ।

चिपश्चारे चक्रे जननि सततं सिद्धिसहिताम्
विचिन्वन् सञ्चिन्वन् परमस्ततरूपं दच्चिणपम्।
सदा कालीं ध्यात्वा विधिविहितपूजा परिकरं
विशेषाख्यानन्ते न खलु भवभङ्गाभय पदः ॥

त्वं श्रीस्त्वमीश्वरी कालि त्वं ह्रीस्त्वञ्च करालिका।
लज्जा लक्ष्मीः शची गौरी नित्या चिन्ता चिति क्रिया ॥
परा आद्या पराख्या च परमा परमा वसुः।
अकुल्या देश्चित्ते प्रचय पदपल्यैः पदयुतैः
सदा जप्त्वा स्तुत्वा जपति हृदि मन्त्रं मनुविदा।
न तेषां संसारे विभव परिभङ्ग प्रमथनम्
चणं चित्तं देवि प्रभवति विदग्धे परिकरं ॥
त्रयस्त्रिंशैः श्लोकैर्यदि जपति मन्त्रं स्तुवति च
नमश्चैतानेतात् परमस्ततकल्पं सुरवरं ।
भवेत् सिद्धिं शुद्धौ जगति शिरसा त्वत्पदयुगम्
प्रणम्य प्राकास्यं वरसुरजनैः पूज्यविततिं ॥

इति विश्वसारतन्त्रे दच्चिणकालिका क्रमस्तोत्रं समाप्तं।

---

## आशा।

सुशक्तिदासीकृत जीविसंघा मोहप्रसूतिः प्रचुरक्रियायाः।
निदानमस्मिन् महिषीव रम्या प्रजामनोराज्यगृहे विभाति (१)
रोगेषु शोकेषु सुखेषु तेषु दुःखेषु भोगेषु विपत्सु नित्यं।
एषैव शक्त्यावृतमानसानां काञ्चित् समुत्पादयतीह शान्तिम् (२)
प्रसादतोऽस्या गुरुपत्रमूल फलाशिनो भूमिमधिष्ठिताः स्युः।
सुस्वादुभोज्याशन पुष्टदेहाः सुखासनस्था धनिनः चणेन (३)
मरिष्यतः श्वस्त्वमरान् करोति वृद्धान् जराज्वालविशीर्णदेहान्।
सहस्र मातङ्गसमान सारान् न किं चणेनैव सुखेन यूनः (४)

आशाप्रसादेन पिबन्ति नित्यं सुताननाम्भोजगतामृतानि (५)
वध्येत निर्मूर्त्तिरसौ न भस्वान् म्रियेत भिद्येत महाविहायः ।
श्रथ्येत रम्याब्धितरङ्गपङ्क्ति राशे ! तवासाध्य मदृष्टमेव (६)
जलोर्म्मि संविम्बित चन्द्रविम्बं नवीन धाराधर दृष्टविद्युत् !
वन्ध्या प्रसूतिः शशकस्य शृङ्गं नार्हन्ति हातुं तव तारहस्तं (७)
आशे ! भवत्या कवलीक्रियन्ते मृदूनि चेतांसि सदाऽस्थिराणि ।
लब्धा कदा शारद पूर्णचन्द्रं जहाति रम्यं ननु सैंहिकेयः (८)
आशे ! पिपासेव सदा पिपासून् फुल्लाम्बुजा सा नलिनीव भृङ्गम् ।
रसालवृक्षं नववल्लरीव चित्तं समाक्रष्टवती नकिं त्वं (९)
रुग्नानरुग्नान् विदधासि सा त्वं दीनान् महाधनवतः क्षणेन ।
दुःखाग्निदग्धान् सुखवारिषिक्तान् रसातलस्थां स्त्रिदिवस्थितां श्च (१०)
अजातमित्रानपि जीविनस्तान् मित्राननाम्भोजनवामृतानि ।
सम्पाययस्येव नवस्वहर्षहिन्दोलितै रश्मिभि रुत्सपूर्णैः (११)
अपत्यहीनाय ददास्यपत्यं अबान्धवे प्रीतिभुतं सुबन्धुम् ।
अशान्तये शान्तिमहो विगाढ़ामशक्तये शक्तिमनन्तशाखाम् (१२)
तव प्रसादात् खलु वामनोऽपि शृङ्गं सुमेरोरपि तुङ्गतुङ्गं ।
समुत्सहेताशु महो सुधांशुं करेण भूमिस्थित एव नो किं ? (१३)
त्वं ग्राहयेः सुन्दरदिव्यकन्यापाणिं नरं श्रीकुलयोरलिङ्गं ।
पदातिकं माहृश मप्यतन्द्रं प्रस्थापयेः पौष्परथेन नाकं (१४)
दृग्वञ्चितांस्त्वं स्वयमीक्षणाभ्यां निजाश्रितान् निन्दित पङ्कजाभ्यां ।
पूर्णं विधुं शारदपौर्णमास्यां प्रीत्या भृशं दर्शयितुं क्षमेथाः (१५)
विवेकबुद्ध्या परिहीयते यः स एव पार्श्वे क्रियते त्वयाशे !
संवर्द्ध्यते नन्द्यत ईक्ष्यतेऽपि संस्थीयते तेन समं सुखेन (१६)
स दुर्लभो यो न तव प्रतापप्रभाविकाशे ननु मुह्यतीव ।
न वा मनोरम्य भुजेन भूयः आश्लिष्यति प्रीतिकरीं सुखं त्वां (१७)
उपोषितानीव सवासनानामपुत्रकानामपि लोचनानि !

विहन्यते वा परिपीड्यते वा विकार्य्यते वा परिगृह्यते वा।
प्रलोभ्यते वा वत ! रज्यते वा कियान् मनो नो सततं भवत्या ? (१८)
प्रतार्य्यते धिक् क्रियतेऽविवेकी विडम्ब्यते वञ्च्यत एव वा कः।
आक्षिप्यते नर्त्त्यते आस्यते वा प्रहार्य्यते वा न कदा भवत्या (१९)
आशे ! त्वदङ्घ्र्यम्बुजरेणुगम्यं सुदुर्लभं चेत्वमिहेति मन्ये।
प्रायेण सर्व्वेषु समाधिपत्यं शिष्टेषु दुष्टेष्वपि वर्त्तते यत् (२०)
त्वया विमुग्धो वधिरः शृणोति नोक्तिं प्रियायाः प्रणयाभिगीतिम्।
मूकोऽपि चाटुप्रियभाषणेन तुष्टिं प्रियां प्रापयतीह नो किं ? (२१)
त्वत्तर्पिता प्रोषितभर्त्तृकापि वसन्तवाचालपिकालिसान्द्रे।
सपुष्प वल्लीपरिवेष्ट्यमाने गृहे न किं भर्त्तृसुखं लभेत (२२)
अजात दारोऽपि तव प्रसादात् प्रियासुखं चुम्बति मानसेन।
प्रेमाभिमानं प्रणयेन वादं करोति रम्यं रमते च तत्र (२३)
हंसोष्णरश्मिप्रचुरेऽपि काले विलासिनस्तानवलीलया त्वं।
वासन्त पूर्णेन्दुमृतांशु शान्तिसुखावलिं प्रापयितुं समर्था (२४)
जाग्रज्जनः सुप्तिसुखान्यभुङ्क्त न किं ? मनोराज्य निवासि देवि।
काम्याश्रमोद्यानगतिं जड़ोऽपि कृपाकणात्ते लभते चिराय (२५)
क्षणप्रभाभा भवती कदाचित् अस्माद्दशानप्युपवेशयेत।
वाल्मीकिपार्श्वेऽप्यति मन्दसावान् गिरेर्विभेदे नयतीन्द्रभावं (२६)
आशे ! त्वमेकैव सहस्रमार्गे प्रावृन्नदीवातितरां प्रयासि।
चलानि चेतांसि समुत्सुकानि विचित्र दृश्यत्वगुणैः करोषि (२७)
प्रायेण चित्तानि सकौतुकानि कर्त्तुं समर्था भवती विचित्रा।
भुजङ्ग रत्नस्य विभामवाप्य गृहाणि नालं निशि भान्ति कानि (२८)
ज्योत्स्नाप्रवाहे विषमान्धकारे दिवा रजन्यां कुतुकेऽसुखेऽपि।
शान्तावशान्ता विव चित्तशक्तेः समा गतिस्ते सुविचित्र शक्तेः (२९)
विशुष्क पत्रेष्विव वारिवेगः खरो नभस्वानिव तूलमत्र।
वलाहकं शारदमूलमद्भिः इतस्ततस्त्वं नयसीह चित्तं (३०)

आशे ! त्वमस्मिन् सुदृढ़ापि वज्रात् दुर्लङ्घनीया वसुधाभृतोऽपि।
स्रोतस्विनीतोऽपि सुवेगयुक्ता मायाविनी कोमलयोषितोऽपि (३१)
संसाररङ्गालय-नर्त्तकी त्वं कार्य्यस्य मूलं जननी प्रवृत्तेः।
अचीरचित्ताब्जनिवासि भृङ्गी कामाभिगीते रनुगा सुवीणा (३२)
संसार रत्नाकर वीचिमाला सृष्टे र्वटस्यामितवल्लरी स्याः।
आशे ! चिरानन्द सरोजचन्द्र-चाञ्चल्य कन्दर्पसखो वसन्तः (३३)
आशे ! सदा मोहमतङ्ग रज्जूः सुचन्द्रिका वा सुखकैरविन्याः।
मोहातिसुप्तस्य विशालशय्या रागव्रतत्याः खलु वारिधारा (३४)
रुग्नस्य पथ्यं सलिलं पिपासोः, महान् वटो भानुकरार्द्दितस्य।
ग्रीष्माभिभूतस्य मृदुर्नभस्वान् भोज्यं बुभुक्षोः, शयनं सुषुप्सोः (३५)
गुणावली-पर्व्वत-तीक्ष्णवज्रं, विवेक पाथोज—हिमः सुतीव्रः।
विपत्तृणोत्पादनवर्द्धने त्वं शरत्, तमःप्रश्रय-कालरात्रिः (३६)
सरः-पयोऽभ्यन्तर वर्त्तमानं सरोज मारादिव तिग्मरश्मिः।
उन्नीय सम्भाषयसि त्व माशे ! त्वदुन्मुखं जीविगणं क्षणेन (३७)
विवेक वैराग्य मनाश्रिताणां संसारिणां जीवनशक्तिभूते !
तवानुकम्पालववञ्चितानामल्पैव संख्या घटते वतेह (३८)
येन त्वं ननु जीयसे सुविषये ! कष्टे ! पिपासे ! वत
नैराश्याय मनः समर्प्य त इह प्रोद्दीपिताभ्यन्तरं।
सोऽयं भाग्यधरो जितत्रिभुवनः सर्व्वत्र तुल्येक्षणः
विश्वप्रेमनिदर्शनः समुदितोऽस्माभिः सदा वन्द्यते (३९)

(नारायणार्पणमस्तु)

श्रीअन्नदाचरण तर्कचूड़ामणिः
नीयाखाली—सोमपाड़ा

# सती छाया।

(पूर्वतोऽनुवृत्ता)

तस्यामेव रात्रौ छायाया धर्ममाता अतुलमाह रे अतुल! अद्यापि ते प्राप्तवयसोऽपि न स्वभावः परिवृत्तः। यथावद्भवतु। नाधिकन्ते वक्तुमुचितं, अतः त्वया नैवात्र स्थातव्यं, श्वः काले कलिकातायां गन्तव्यं, मया निर्द्देशपत्रे तुभ्यं किञ्चिद्धितं देयत्वेन लिखितमासीत्, किन्तु तत्परिवर्त्स्यते, तुभ्यं किञ्चिदपि नो दास्यते। ईदृशादस्नेहादात्मीयात् पर एव साधीयान् मन्यते इति।

रात्रौ तद्गृहवासिनः सर्वएव प्रसुप्ताः। किन्तु निर्द्देशपत्रस्य परिवर्त्तनवार्त्तया अतुलोऽन्तरदह्यत।

रात्रौ गृहस्वामिनी यदा निद्राच्युतिपापशङ्कया तत्रस्था दासीः छायाञ्चाप्रवोध्य वहिरभ्यूत् तदा तस्याः पादशब्द मनुमाय शनैर्मन्दं मन्दं निःशब्दं पश्चादागत्य अतुलः यावद्वृद्धा द्वितीये सोपाने पादमर्पयति तावत् महता वलेन पृष्ठे तामाहन्ति। तेन च सा सशब्दं सचित्कारञ्चाधः पतति। अतुलश्च द्रुतमपसृत्य स्वशय्यायां निद्रामभिनयति।

छायाप्रभृतयस्तु सुप्तोत्थिताः किंकर्त्तव्यविमूढाश्च समागत्य गृहस्वामिनीं मूर्छितां पश्यन्ति। छाया त्वरा स्वयं वृद्धाया मस्तकं क्रोड़मानीय उपविशति, वृद्धायाश्चक्षुषोर्जलानि सेक्तुं तालवृन्तं वेजयितुञ्च समादिशति। भृत्या स्तु चिकित्सक मानेतुं धाविताः।

द्रुतमागत्य च चिकित्सकः महान् शैलेन्द्रः वृद्धाया नाड़ीं परीक्ष्य कथयति मातः छाये! मा रोदीः। अस्ति खलु तव मातुर्जीवन प्रत्याशा किन्तु आघातस्तु सांघातिको जातः प्राचीनायाः। किन्तु मदुपदिष्टं तावत्कार्य्यं विधेहि, तदा सत्वर मेव व्यथा शान्तिमेष्यति। छाया च चिकित्सकादिष्टं सर्वमकरोत्।

मुहूर्त्तं व्यतीत्य च वृद्धा चक्षुरुन्मील्य पश्यति छायां रुदतीं, अस्फुटस्वेन कथयति च मातः! मा रोदीः मम मरणा देवं किं बिभेषि? एवं ब्रुवतीं प्राचीनां चिकित्सकाज्ञया सर्वे भृत्यास्तां विधृत्य गृहं प्रवेश्य शय्यायां शाययन्ति। ततोऽपि मुहूर्त्तादुपरि सुस्थतामासाद्य गृह स्वामिनी शुश्रुषमाणां छायां समानीय वक्षसि गाढ़माश्लिष्यति, मुखं चुम्बति च किञ्चित् स्मित्वा कथयति च वत्से छाये! अधुनैव तव-माता प्रायो ममार, केवलं तवैव यत्नेन प्राणास्तिष्ठन्ति। क्रमशो रात्रिः प्रभाता, दिवसस्यापि यामार्द्धं गतम्। छाया प्रातः कर्त्तव्यं द्रुतं सम्पाद्य पुनरपि गृहस्वामिन्याः समीपे उपविशति। गात्रे हस्तं प्रदाय कथयति च मातः! तव शरीरे ज्वरो जातः, भवती कलिकातां चलतु, तत्र तु महान्तश्चिकित्सका वर्त्तन्ते। अत्रावस्थातुं न मह्यं रोचते मनः।

तदाकर्ण्य वृद्धाया यातनापीड़ित मुखेऽपि हास्यमुदेति कथयति च सा वत्से! कथं मदर्थ मेवं भीतासि? छाया रोरुद्यमाना कथयति मातः! भवती सम्यग् जानाति ममेतिहासं ईश्वरो मैवं कार्षीत् त्वयि परलोकं गतायां पुनरप्यहमनाथा स्याम्, मातः नास्त्यतोऽन्य दवस्थानस्थानं, चिरदुःखिनीय मीदृशमादरं यत्नञ्च पुनः कुतोलपस्यते? त्वामृते न कोऽप्यस्ति जगति मां स्निग्धेन चक्षुषा द्रष्टुम्।

वृद्धा कथयति वत्से! यद्यहं सञ्ज्ञाना म्रिये तदा त्वां न रक्षिष्यामि असुखेन। तदाकर्ण्य छाया कथयति, मातः! नाहं धनरत्नादिकमभिलषामि, किन्तु भवत्या आरोग्यमेव अभिलषामि। ततो वृद्धा कथयति यद्येवत्से निर्वन्धातिशयस्तर्हि आहूयतां प्रधान कर्म्मचारी तदनुज्ञया जया दासो मन्त्रिणमानयति। गृहस्वामिनी कथयति अयि मन्त्रिन्! अहमद्यैव कलिकातां यास्यामि तद्द्रुतमेव संविधानं विधेहि। मया सह यास्यन्ति जया दासी, सती छाया, द्वौ भृत्यौ इति। मन्त्री तदाकर्ण्य सर्वं संविधानं विधाय जिज्ञासति!

मातः! कलिकातायां कुत्र यास्यसि? प्राचीना प्राह आपाततः पितृष्वसृपत्युः मनोमोहनराजस्य गृहं यास्यामि। तस्य तु गृहं श्याम विपण्यां (१)। सर्वे विधृत्य प्राचीनां घोटकशकटे समारोहयन्ति, तस्मिन्नेव शकटे छाया जयादासी च गते। वेगगामिनौ हयौ द्रुतमेव भवानीपुरं अतिक्राम्यतः। यथासमयञ्च श्यामविपण्यां राजवाट्यां शकटमुपतिष्ठते। तदा स्वकीये पित्रालये सती छाया अनभिज्ञाता अतिथिर्जाता इति।

इति षष्ठः परिच्छेदः समाप्तः।

---

## सप्तमः परिच्छेदः।

(अज्ञात स्नेहभक्ती)

महाराजं महात्मानं पश्यन्त्या हृदयेऽतुलं।
बालिकाया बभूवेव संघर्षस्तुमुलस्तनः॥
स्वत एव नतं तस्या मनो भक्तिरसाप्लुतं।
स्नेहश्च तस्य महत स्तस्यामजनि वेगवान्॥
स्वतः शोणितसम्बन्धात्तयोराकर्षणं हृदः।
उभयोर्व्याप्नुती भक्तिः स्नेहश्च हृदयं क्षणात्॥

राजा श्रीमनोमोहनरायः सभामण्डपे उपविशति, द्वारपाल स्तत्र गत्वा विज्ञापयति, महाराज! भवानीपुरात् भवतः कापि सम्पर्किता पीड़िता सती समागता।

राजा तु तां मृताया राज्ञ्याः भ्रातुष्पुत्रीं सातिशयं श्रद्दधाति, श्रुत्वैव तदागमनवार्त्तां द्वारदेशे स्वयमुपतिष्ठते। सर्वे भृत्यास्तां सावधानं विधृत्य शकटादवतार्य्य च अन्तर्वाटीवहिर्वाट्योर्मध्यवर्त्तिनि राजनिर्द्दिष्टे गृहे खट्टिकायां शाययन्ति।

---

श्यामबाजार इति यस्य नाम।

अज्ञातावस्थायामेव भक्त्युद्रेकात् सती छाया राजानं प्रणम्य प्राचीनायाः पार्श्ववर्तिनी भवति। राजा प्राचीनामाभाष्य कथयति अयि कमले! का ते पीड़ा? कमला कथयति पितृष्वसृधव! गत रात्रौ यदाहं वहिरभवं तदा केनापि पृष्ठे वेगेन ताड़ितेव मेने। तेनैव सोपाने आस्फुटिता अमूर्च्छं। ततः छायाया शुश्रुषया जीवितास्मि। अहो आश्चर्य्यं वालिकाया ईदृशीं वुद्धिमत्तां न कदापि ददर्श सा मां शुश्रुषितवती, चिकित्सकमानिनाय। अधुना तु ज्वरिताहं तस्या एवाग्रहेण अत्रोपतिष्ठे।

राजा सस्नेहं छातां पश्यन् कथयति यथास्या आकृतिस्तथा गुणा ज्ञानानि च वर्त्तन्ते। अयि कमले! तव केयं वालिका?। प्राचीना कथयति। अस्या माता स्तन्यपानावस्थाया मेव इमां सर्वाङ्ग सुन्दरीमपाहाय वैराग्यात् सर्वैरविदिता क्वापि गता। को वा स्याः पिता तदपि न कैरपि प्रत्यभिज्ञायते। कन्येयं मातुलालय एवास्थास्यत्। किन्तु जन्मनि दोषमाशङ्क्य न कोऽपि तत्र एनां श्रद्दधति केवलं मातुल एवास्यां प्रीतिं जग्राह। स एव पण्डितेन विद्यामिमां व्यनैषीत्। कश्चिद्धनिकुमार इमां परिणेतुं मतिञ्चकार, किन्तु जनापवादाद्भीतोऽस्या मातुलः अस्या मातामह्यादीनां तिरस्काराच्च गृहादिमां निरवासयत्। शिक्षकश्चास्या मत्परिचितः मत्सन्निधौ इमां रक्षितवान्।

तदाकर्ण्य राजा कथयति अहो धिक् लोकं। यतो निर्दुष्टाया मप्यस्यां दोषमारोपयति। किन्तु इमां पश्यतः स्वत एव हृदयं स्नेहेनाप्लाव्यते। प्राचीना कथयति ममापि तथैव। राजा कथयति तद्यथावद्भवतु। अधुना तव चिकित्सार्थं चिकित्सक मानयामि। कमला कथयति भवते यद्रोचते तत् करोतु। परन्तु प्राचीना पीड़िताहं गङ्गातीरे एव तिष्ठासामि, ततस्तदर्थं भवनमेक मन्वेष्टव्यमिति।

(क्रमशः)

# धर्म्मविवेकः ।

## (देशभेदादौ व्यवस्था) ।

(पूर्वप्रकाशितात्परः)

आगत्य वामापदः व्यत्यस्तपाणिना गुरुं शिवरामं प्रणम्याग्रे स्थितः ।

शिव । वत्स ! वामापद ! इतो निषीद ।

वामा । भगवन् ! यदुक्तं १८१६ शाकाषाढ़मासे धर्म्मव्यवस्थापनविधौ विधिनियमपरिसंख्यादिकं देशकालभेदश्चापेक्ष्यते, तेषां विधिनियमादिकं श्रुतं । वस्तुतोऽपि केवलमवलोकनादेव लिङ्तव्यादीनां न विधेयता निर्णेतुं युज्यते, अहो दुरूहोऽयं धर्मनिर्णयः । अद्य पुनर्देश कालभेदेन धर्मव्यवस्था श्रोष्यते । तत् कृपया कथ्यतां ।

शिवः । श्रूयतामापाततः जनने मरणे चाशौचे देशभेदे व्यवस्था । यथा मनुः कथयति ५ । ८३ ॥

"शुद्ध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुद्ध्यति ॥"

* अङ्गिराः कथयति याज्ञवल्क्यटीकामिताक्षरायां प्रायश्चित्ताध्याये अशौच प्रकरणे २२ श्लोके ।

"सर्वेषामेव वर्णानां सूतके मृतके तथा ।
दशाहाच्छुद्धिरेतेषामिति शातातपोऽब्रवीत् ॥

अत्रानयोर्वचनयोर्द्वैधे देशभेदे व्यवस्था स्वीकर्त्तव्या, प्रायशोऽस्मिन् देशे मनूक्तमेव दशाहादिकं ब्राह्मणादीनामशौचं । ओड्रदेशे (१) तु अङ्गिर उक्तमेवाशौचं । अधुनापि ओड्रदेशीयाः सर्ववर्णा एवाशौचं दशाहं व्यवहरन्ति ।

एवमितरस्मिन्नपि देशे तद्देशवासिनस्तत्तन्मुनिमतमादरन्ति । तथा च तत्रैव पराशरः ।

---

(१) उड़िष्या, उत्कल इति च यस्य प्रसिद्धिः ।

क्षत्रियस्तु दशाहेन स्वकर्म्मनिरतः शुचिः ।
तथैव द्वादशाहेन वैश्यः शुद्धिमवाप्नुयात् ॥

तत्रैव शातातपस्त्वेवमाह—

एकादशाहाद्राजन्यो वैश्यो द्वादशभि स्तथा ।
शूद्रो विंशतिरात्रेण शुध्येत मृतसूतके ॥

तत्रैव वशिष्ठस्त्वेवमवादीत् ।

पञ्चदशरात्रेण राजन्यो विंशतिरात्रेण वैश्य इति ॥

एवमपरस्मिन्नपि धर्मविषये देशभेदे धर्मो ज्ञातव्यः ।

एतत्तु देशभेदे धर्मव्यवस्थापनं मया कथितं त्वया च श्रुतम् । अधुनातु कालभेदे धर्मव्यवस्था श्रूयतां । तथाहि सत्ययुगे विहितस्तु धर्मस्त्रेतायां निषिद्ध स्त्रेताधर्मश्च द्वापरे द्वापरधर्मश्च कलौ न व्यवस्थितः । तथा च पराशरसंहिता । १माध्याये ।

"अन्ये कृतयुगेधर्मा स्त्रेतायां द्वापरे परे । अन्ये कलियुगे नृणां युगरूपानुसारतः ॥२१॥
तपःपरं कृतयुगे त्रेतायां ज्ञानमुच्यते । द्वापरे यज्ञमित्यूचुर्दानमेकं कलौ युगे ॥२२॥
कृते तु मानवो धर्मस्त्रेतायां गौतमः स्मृतः । द्वापरे शङ्खलिखितौ कलौ पाराशरः स्मृतः ॥२३॥
त्यजेद्देशं कृतयुगे त्रेतायां ग्राममुत्सृजेत् । द्वापरे कुलमेकन्तु कर्त्तारञ्च कलौ युगे ॥२४॥
कृते सम्भाषणात् पापं त्रेतायाञ्चैवदर्शनात् । द्वापरे चान्नमादाय कलौ पतति कर्मणा ॥२५॥
कृते तु तत्क्षणाच्छाप स्त्रेतायां दशभिर्दिनैः । द्वापरे मासमात्रेण कलौ संवत्सरेण तु ॥२६॥
अभिगम्य कृतेदानं त्रेतास्वाहूय दीयते । द्वापरे याचमानाय सेवया दीयते कलौ ॥२७॥

एवमपरेऽपि निषिद्धा धर्माः कलौ श्रूयन्तां तथा च ।

बृहन्नारदीयं ।

समुद्रयात्रास्वीकारः कमण्डलुविधारणं द्विजानामसवर्णासु कन्यासूपयमस्तथा ।
देवरेण सुतोत्पत्तिर्मधुपर्के पशोर्वधः मांसादनं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥
दत्तायाश्चैव कन्यायाः पुनर्दानं वरस्य च दीर्घकालं ब्रह्मचर्य्यं नरमेधाश्वमेधकौ ।
महाप्रस्थानगमनं गोमेधश्च तथा मखं इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥

हेमाद्रिपराशरभाष्ययोरादित्यपुराणम् ।

दीर्घकालं ब्रह्मचर्य्यं धारणञ्च कमण्डलोः देवरेण सुतोत्पत्तिर्दत्ताकन्या प्रदीयते ।
कन्यानामसवर्णानां विवाहश्च द्विजातिभिः आततायिद्विजाग्र्याणां धर्म्यं युद्धेन हिंसनम् ॥

वानप्रस्थाश्रमस्यापि प्रवेशो विधिदेशितः वृत्तस्वाध्यायसापेक्षमघसङ्कोचनं तथा।
प्रायश्चित्तविधानञ्च विप्राणां मरणान्तिकं संसर्गदोषः पापेषु मधुपर्के पशोर्वधः॥
दत्तौरसेतरेषान्तु पुत्रत्वेन परिग्रहः शूद्रेषु दासगोपालकुलमित्रार्द्धसीरिणां।
भोज्यान्नता गृहस्थस्य तीर्थसेवातिदूरतः ब्राह्मणादिषु शूद्रस्य पक्वतादिक्रियापि च॥
भृग्वग्निपतनञ्चैव वृद्धादिमरणं तथा।

इत्यादीन्यभिधाय।

एतानि लोकगुप्त्यर्थं कलेरादौ महात्मभिः। निवर्त्तितानि कर्माणि व्यवस्थापूर्वकं बुधैः।
समयश्चापि साधूनां प्रमाणं वेदवद्भवेत्॥ *

समयः संवित् सा च प्रतिज्ञा समयाः शपथाचारकालसिद्धान्तसंविद इत्यमरोक्तेः। संविदागूः प्रतिज्ञानं नियमाश्रवसंश्रवा इति तेनैवोक्तेः।

वत्स! अधुना धर्मे अधिकारिभेदः श्रूयतां। अधिकारिभेदे धर्मव्यवस्था तु भूयसी, विस्तृतिभिया सम्यक् कथयितुं नैव शक्यते अतः संक्षिप्य कथयामि। महापातकविषये मनुस्तावदेतावत् कथयामास।

---

* मरणमुद्दिश्य समुद्रयात्रास्वीकारः। गृहस्थस्य सर्वदा सजलकमण्डलुधारणं। मधुपर्के अतिथिसेवायां पशोः गोः। मांसादनं निषिद्धमांसादनं। (मांसदानमित्यपि पाठः) अतएव व्याकरोति गोमहिषादेरिति। महाप्रस्थानगमनं मरणमुद्दिश्य हिमालयगमनं। आततायीति "अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः। क्षेत्रदारापहारी च षडेते आततायिनः।" अघसंकोचनं अशौचसङ्कोचनं। मरणान्तिकमिति मरणं अन्तिकं निकटवर्त्ति यस्य तत्। दासेति दासो निजभृत्यः। गोपालः स्वकीयानां गवां पालकः। कुलमित्रं पुरुषक्रमेण मित्रं अर्द्धसीरिणः कृषकाः शस्यार्द्धभागं भजन्ते शूद्रेषु मध्ये एतेषामित्यर्थः। पक्वतेति दासादीनां अन्नं भोक्तव्यमिति पूर्ववचनार्थः। ब्राह्मणाद्यन्नस्य शूद्रेण पाकः कर्त्तव्य इति एतद्वचनार्थ इत्यनयोर्भेदः। भृग्वग्नीति "जलप्रवेशो चानन्दं प्रमोदं वह्निसाहसी।" भृगुप्रपाती सौख्यन्तु रणे चैवातिनिर्मलमित्यादिना विहितमरणमित्यर्थः। वृद्धादिमरणमिति अन्ते वार्द्धकासहिष्णुतया मरणमित्यर्थः। तच्च वृद्धत्वं शौचस्मृतेः लुप्तइत्यादिना विहितं। लोकगुप्त्यर्थं लोकरक्षार्थं। ननु एतेषां कर्मणां निषेधको कलौ वेदो नास्ति तत् कथमेतानि कलौ निषिद्धानि तत्राह समयश्चेति।

ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः ।
महान्ति पातकान्याहुः संसर्गश्चापि तैः सह ॥ ११ । ५ ।

एतेन वचनेन वर्णसामान्येष्वेव तत्तन्महापातकत्वेन प्रतीयते। परन्तु वचनान्तरैकवाक्यतया अधिकारिभेदेन च ब्रह्महत्यादिकं महापातकं भवेत्। सुतरां तदा महापातकनिवृत्त्यर्थं प्रायश्चित्तमपि गुरुलघुरूपेण विदध्यात्। तथाहि ज्ञानतो ब्राह्मणवध एव ब्राह्मण क्षत्रिय वैश्य शूद्राणां महापातकं। सुरापाणं ब्राह्मण क्षत्रिय वैश्यानामेव महापातकं न तु शूद्रस्य। शूद्रस्य तु सुरापाणं उपपातकमेव।

तथाच प्रायश्चित्तविवेके च्यवनः।

"ब्रह्महत्या सुरापानं गुरुतल्पगमनं ब्राह्मण सुवर्णहरणं द्विजातीनां महापातकानि। अदण्ड्यदण्डनं ब्रह्महत्या गुरुशय्यारोहणं युधि पलायनं क्षत्रियस्य। मानतुलान्तत्वं वैश्यस्य। मांसविक्रयो [illegible] ब्राह्मणीगमनं कपिलाक्षीरपाणं शूद्रस्य। तत्सम्पर्कात् पञ्चमं महापातकमिति।"

तथाचाधिकारिभेदे प्रायश्चित्ततारतम्यं विष्णुनोक्तं तथा च।

विप्रे तु सकलं देयं पादोनं क्षत्रिये मतम्।
वैश्येऽर्द्धं पादशेषस्तु शूद्रजातिषु शस्यते॥"

महर्षिविश्वामित्रोऽपि तथैवाह तथाच प्रायश्चित्तविवेके गोवधप्रकरणे।

"अब्दांस्तु चतुरः कुर्य्याद्गोवधे बुद्धिपूर्वकं।
अमत्या तु द्वयं कुर्य्यात् तदर्द्धं बालवृद्धयोः॥
स्त्री शूद्रयोरेवमेव वधं चैव न संशयः॥"

अत एव वत्स वामापद ! ब्रूहि केवलं वक्तृतोपयोगीनि मुनिवचनानि सुखस्थानि विधाय कथमिदानीं ते वक्तारः धर्मं व्यवस्थापयन्ति ? अतोऽहमब्रवं "अहो रे गरीयान् कालः समायतः यदश्रुत-

मपि श्रावयति अदृष्टमपि दर्शयतीत्यादि १८१६ शाकाषाढ़मासि इति। विशेषस्तु प्रायश्चित्त विवेकादौ ज्ञातव्यः स्वयमिति ।

---

## ग्रहणम् ।

अनेक एव वितर्कयन्तीदानीं चन्द्रसूर्य्यग्रहणमधिकृत्य । तत्राहमपि शास्त्रयुक्तिदृष्ट्या किञ्चिन्निवेदयामि ग्राहकेभ्यस्तत् सावहितं श्रोतुमर्हन्ति । आपाततः वर्त्तमानमासस्य सप्तदशदिवसे निशीथिन्यां सम्यग्भाविनि चन्द्रग्रहण एव लक्ष्यं निवध्यतां । तस्यां रात्रौ ऐशान्यां स्पर्शः, ग्रहणस्थितिमानन्तु ७दण्डाः । २७पलानि । ३०विपलानि ।

प्रथमन्तावत् निरूपणीयं चन्द्रः कः पदार्थ इति, शास्त्रन्तु भूय उच्चैः प्रतिपादयति चन्द्रो जलमय इति जलविकार इति न तु जलमिति अस्माभिस्तु चन्द्रस्य जलमयत्वेन हिमसङ्घातः करकाजातीय (१) स्कन्ध इति प्रतीयते तथाच वराहसंहिता—

"सलिलमये शशिनि रवेर्दीधितयो मूर्च्छितास्तमो नैशं ।
नैशं तमःचपयन्ति दर्पणोदरवदग्टहोदरधरान्त ॥"

एवं शब्दकल्पद्रुमे विधुशब्दे देवीपुराणम् ।

"पूर्वाह्ने विशते चार्कं मध्याह्ने तु वनस्पतिम् ।
अपराह्ने विशत्यप्सु स्वयोनिवारिसम्भवः ॥"

स्वयोनिवारिसम्भव इत्यनेन स्वोपादानकारणाद्वारिण स्चन्द्रस्य उत्पत्तिः सूच्यते । तथा तत्रैव चन्द्रः अम्बुमय इत्यप्याह ।

पिबन्त्यम्बुमयं देवाः पितरश्च स्वधामृतम् ।
क्षयञ्चविशतञ्चैव क्षयविक्षतयैव च ॥"

एवं हिमसङ्घातपर्य्यायेण जड़शब्देनापि वहुषु स्थानेषु चन्द्रः कथ्यते तत्र शब्दश्लेषमहिम्ना जलमप्युच्यते । तथाच नैषधे ।

---

(१) वरफ् इति यस्य प्रसिद्धः ।

"किमसुभिर्गलितैर्जड़ ! मन्यसे, मयि निमज्जति भीमसुतामनः।
मम पुनःश्रुतिमाह तदर्थिका नलमुखेन्दुपरां विबुधः स्मरः॥" ४।५२।

एतेनान्तरीक्षस्थितं सहस्राष्टयुलतक्षं वहुयोजनायामं हिमसङ्घातमेव चन्द्रमण्डलमिति वयं प्रतीमः। तस्मादविरतं गलतां वारिविन्दूनां समीरणेन विश्लिष्य अणुत्वं प्रापितानामवयवा एव शिशिरा इत्यभिधीयन्ते। तेन हि चन्द्रो हिमकर इति।

जलमयत्वादेव चन्द्रे कलङ्करेखाया भूच्छायात्वं कल्पयन्ति। तथाच रघुवंशे।

"छाया हि भूमेः शशिनो मलत्वे निमज्जतः शुद्धिमतः प्रजाभिः॥"

अपिचोद्भटकाव्यं।

"अङ्कं केऽपि च शङ्किरे जलनिधेः पङ्कं परे मेनिरे,
सारङ्गं कतिचिज्जना जगदिरे भूच्छायमैच्छन् परे।
इन्दौ यद्दलितेन्द्रनीलसकल श्यामं दरीदृश्यते
तन्नूनं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे॥" इति

सूर्य्यस्तु महास्तेजोराशिरिति वहुषु शास्त्रेषु प्रतिपादितं इति न तत्रान्यप्रमाणदर्शणापेक्षा, एवं प्रत्यक्षमेवात्र जागर्त्ति।

एवञ्च तीरस्थ वृक्षस्यच्छाया पुष्करिण्यामिव यदा पृथिव्याश्छाया जलमये चन्द्रे निपतति तदा चन्द्रग्रहणं। यदा तु पृथिवीछायायुक्त-चन्द्रस्यच्छाया सूर्य्ये निपतति तदा सूर्य्यग्रहणं भवति ध्रुवं।

ग्रहणस्य समयस्तु ज्योतिषे। यथा—

भचि पादान्तरे राहोः केतोर्वा संस्थितो रविः। चतुष्पादान्तरे चन्द्र स्तदा संभाव्यते ग्रहः॥
यस्मिन्नृक्षे रविस्तस्माच्चतुर्दशगतः शशी। पूर्णिमाप्रतिपत्सन्धौ राहुणा ग्रस्यते शशी॥
कृष्णपक्षे तृतीयायां मासर्क्षं यदि जायते। ततस्त्रयोदशे सूर्य्यो राहुणा ग्रस्यते रविः॥

अस्यार्थः। राहोः केतोर्वा सम्बन्धिनक्षत्रस्य त्रिपादमध्येऽपि यदि रविः संस्थितः स्यात्। चन्द्रो यदि तस्य चतुष्पादमध्येऽपि स्यात् तदा ग्रहो ग्रहणं सम्भाव्यते। अन्ययोरर्थः सुगमः।

अपि च विष्णुधर्मोत्तरे राहुं प्रति ब्रह्मवाक्यम्। यथा—

"पर्वकाले तु संप्राप्ते चन्द्रार्कौ छादयिष्यसि। भूमिच्छायागतं श्चन्द्रं चन्द्रगोऽर्कं कदाचन॥"

अस्यार्थः—हेराहो! इत्यध्याहार्य्यं। त्वं पर्वकाले पूर्णिमायां अमावस्यायां वा प्राप्ते उपस्थिते चन्द्रार्कौ चन्द्रसूर्य्यौ छादयिष्यसि आच्छादयिष्यसि। तत्र विशेषमाह भूमीति भूमिच्छायागतः पृथिवीप्रतिविम्बरूपः (१) सन् चन्द्रं छादयिष्यसि एवं पृथिवी-छायायुक्तचन्द्र-गतःसन् सूर्य्यं छादयिष्यसि इति।

अत एव मलमासतत्त्वे सूर्य्यग्रहणे चन्द्रग्रहणमवश्यम्भावीत्युक्तं। किन्तु दिवसतया न दृश्यते इति। भास्कराचार्य्योऽपि तदेवाह यथा—

"छादको भास्करस्येन्दुरधस्थो घनवद्भवेत्। भूछायां प्रमुखश्चन्द्रो विशत्यार्थौ भवेदसौ॥"

अस्यार्थः।—प्रथमतश्चन्द्रो भूछायां पृथिवीछायां विशति आश्र-यति। ततस्तु असौ चन्द्रः पृथिवीछायायुक्तः भास्करस्य नीच-स्थश्च सन् घनवत् मेघवत् तस्याच्छादको भवेदिति। वचन मेतद्विष्णु-धर्मोत्तरीयवचनार्थमेव समर्थयति।

अपिच शुद्धिचिन्तामणौ वाचस्पतिमिश्रः मलमासतत्त्वे रघुनन्दश्च ग्रहणं जगच्छायेति नामान्तरमित्यभिधाय गज-च्छायाश्राद्धमपि ऊचतुः। तथाच तत्रैव वृहस्पतिः।

"नित्यनैमित्तिके कुर्य्यात् प्रयतः सन् मलिम्लुचे। तीर्थस्नानं गजच्छायां प्रेतश्राद्धं तथैवच॥"

गजच्छाया तु वराहेणोक्ता यथा—

"सैंहिकेयो यदा भानुं ग्रसते पर्वसन्धिषु। गच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रकल्पयेत्॥"

इमान्तु गजच्छायामधिकृत्य तत्र श्रुतिरपिदर्शिता,

"राहुर्वै हस्ती भूत्वा चन्द्रमसं ग्रसति॥"

श्रुत्या त्वनया ग्रहणं गजच्छायेति प्रत्याय्यते। परन्तु अत्र विषये आशङ्का महती उज्जृम्भते। तथाहि पूर्वं प्रतिपादितं ग्रहणं भूछा-येति, श्रुतिस्तु कथयति ग्रहणं गजच्छायेति।

अत्र समाधानमुच्यते। श्रुतिर्यत् कथयति-राहुर्हस्ती भूत्वा चन्द्र-मसं ग्रसति इति तत्र यथा गौर्वाहिक इत्यत्र गोशब्देन लक्षणया

(१) छायस्यादातपाभावे प्रतिविम्बार्कभार्य्ययोरिति मेदिनी।

गोसदृश उच्यते तथा अत्रापि लक्षणया हस्तिशब्देन हस्तिसदृश उच्यते, तथा चोक्तं प्राचीनैः—

"परार्थे प्रयुज्यमानः शब्दो वतिमन्तरेण वत्यर्थं गमयति इति"

एवञ्चात्रायमर्थो लभ्यते राहुर्हस्ती हस्तिसदृशः। हस्तिसादृश्यन्तु पृथिवीछायारूपत्वात् वर्त्तुलत्वात् कृष्णवर्णत्वात् विशालत्वाच्च उपपन्नं। एवं हि सूर्य्यग्रहण प्रतिपादक कठब्राह्मणीयश्रुतेरप्यर्थोऽनया श्रुत्या निर्विरोधः। यथा समयप्रकाशे कठब्राह्मणं

"हस्ती वै भूत्वा स्वर्भानुरंशुभिरादित्यं तमसा पिदधाति" इतिश्रुतिः।

अस्या अर्थः। स्वर्भानूराहुः हस्ती भूत्वा हस्तिसदृशीभूय तमसा अन्धकारेण पृथिवीछायारूपेण अंशुभिरादित्यं रश्मिविशिष्टं सूर्य्यं पिदधाति आच्छादयति इत्यर्थः।

अत्र तमःशब्दोपादनात् छायया एव ग्रहणं भवतीत्युपपद्यते। अनयोरेव श्रुत्योरर्थानुसारेण पुर्वोक्तविष्णुधर्मोत्तरीयवचनं साधुसङ्गच्छते। अन्यथा श्रुत्यर्थविरोधात् तस्याप्रामाण्यं स्यादिति।

(क्रमशः)

---

## तत्त्वप्रपञ्चः ।

(पूर्वप्रकाशितात् परः)

सत्कार्य्यवादिनां मते कार्य्यस्याव्यक्तावस्थां विना अन्यविधां शक्तिं प्रति प्रमाणं नास्ति। अनयैव शक्त्या वालुकानां तिलानाञ्च प्रभेदो व्यवक्रियते। यत् तिलेषु अव्यक्तावस्थया शक्त्या तैलमस्ति वालुकासु नास्तीति। तथा यदि अव्यक्तावस्थारूपया विविधशक्त्या व्यक्तं जगत् प्रकृतौ नास्थास्यत् तदा विचित्रं जगन्नाजनिष्यत्। अत एव जगत्कारणं प्रकृतिरस्तीति सिद्धं।

बुध्यते तत्। किन्तु कारणशक्तेः कार्य्योत्पत्तिः एवं कार्य्यकारण विभागश्च बुद्धितत्त्वे एव कल्प्यतां तथापि बुद्धितत्त्वादुपरि प्रकृतिर्

स्वीक्रियेत। मैवं वुद्धितत्त्वन्तु अव्यापकं—परिमितं कार्य्यरूपेण न सर्वत्रास्ति। यद्यदव्यापकं तेषां सर्वेषामेव अन्यत् कारणमस्ति यथा परिमितस्य घटस्य कारणं मृत्तिकेति। अतः सर्वकारणं प्रकृतिरस्तीति सिद्धं। प्रकृतेः परं कारणकल्पने प्रमाणाभावात् अनवस्थादोषाच्च।

अपि च। सुखदुःखमोहसमन्विता वुद्ध्यादयः प्रतीयन्ते। यदि वुद्ध्यादीनां कारणं किमपिनास्ति तदा वुद्ध्यादौ सुखदुःख मोहाः कुत आगमिष्यन्ति ? सति च वुद्ध्यादीनां कस्मिंश्चित् कारणे तद्गुणाः कार्ये संक्रमिष्यन्तीति वुधयादयः सुख दुःख मोहात्मका भवितुमर्हन्ति यथा घटमुकुटादयः मृद्हेमगुणका इति एतदेवाह सांख्यकारिका १५।

"भेदानां परिमाणात् समन्वयाच्छक्तितः प्रवृत्तेश्च।
कारणकार्य्य विभागादविभागाद्वैश्व रूप्यस्य॥" इति

सा पुनः पञ्चविधा परिस्फुट शक्ति भेदेन वर्णिता मुनिभिः यथा—

"गणेश जननी दुर्गा राधा लक्ष्मीः सरस्वती।
सावित्री च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता॥"

तस्यावुयत्पत्तिर्यथा।

प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता॥
गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्त्तते श्रुतौ। मध्यमे रजसि कृश्च तिशब्दस्तामसः स्मृतः॥
त्रिगुणात्मस्वरूपा या सर्वशक्ति समन्विता। प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते॥
प्रथमे वर्त्तते प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्त्तिता॥
सा च ब्रह्म स्वरूपा च या या नित्या सनातनी। यथात्मा च यथा शक्तिर्यथाग्नौ दाहिका स्मृता॥
अतएव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते। सर्वं ब्रह्ममयं ब्रह्मन् शश्वत् पश्यति नारद॥
स्वेच्छामयं स्वेच्छया च श्रीकृष्णस्य सिसृक्षया। साविर्वभूव सहसा मूल प्रकृतिरीश्वरी॥
तदाज्ञया पञ्चविधा सृष्टिकर्मणि वेदतः॥

इति प्रकृति खण्डे प्रथमाध्याये, तत्र च गङ्गा तुलसी षष्ठी

काली वसुन्धरा एवं स्वाहा प्रभृतयः सप्ताशीति प्रकृतयो निर्दिष्टा-स्तदध्यायतो ज्ञातव्याः ।

(क्रमशः)

---

## वज्रसूची ।

(पूर्ववर्तीऽनुवृत्ता)

*   *   *   *

शाक्ताः कौल कुलात्मनार्चणरताः कापालिकाः शाम्भवाः ।
एते चैवहि मन्त्रतन्त्रनिरता स्ते तत्त्ववोधोज्झिताः ॥
आचार्य्या वहुदीक्षिताहुतिरता नक्तव्रतास्तापसाः
नानातीर्थ निषेवका जपपरा मौने स्थिता नित्यशः ।
नित्यस्नानशनादिनात्मदमना दत्तावधानाः परे
एते ये खलु दुःखभारनिरता स्ते तत्त्वधीवञ्चिताः ॥
चार्वाकाश्चतुराः स्वतर्क निपुणा देहात्मवादे रताः
सर्वेषां मतिरस्ति दुःसहपरा हैते परा शाक्तिकाः ।
कर्त्तारं प्रभजन्ति याजकरता भूतेषु ये निर्दयाः
ते वामादिककल्पमेव विफलं नैवास्ति मोक्षं परं ॥

अन्यप्रकारमाह इदानीं महावाक्यार्थसुखेन वोधः कथ्यते । यमनियमादि साधन सम्पन्नानामधिकारिणामनुग्रहाय ।

तत्र यमाः । अहिंसा सत्यास्तेय ब्रह्मचर्य्यापरिग्रहाः । एते पञ्च यमाः । शौचसन्तोष स्वाध्यायस्तप ईश्वरप्रणिधाना नियमाः ।

तत्र महावाक्य विवरणं तावत् । तत्पदं त्वम्पदञ्चेति पदद्वय-मस्ति तत्पदस्य त्वं पदस्य च वाच्यार्थः । साधनोपाधिः जगदुत्पत्ति स्थितिलयकारणरूपत्वात् सर्वज्ञः सर्वेश्वरत्वात् सर्वशक्तिमान् सर्व कामदश्चापरोक्षेण सह वर्त्तमानः सत्यं ज्ञानमानन्दमद्वितीयं चैतन्य तत्पदवच्यार्थ इति सर्वज्ञः । सर्वेश्वरत्वात् सर्वशक्तिमान् भवति । सर्वकामदोऽपि न भवति अपरोक्षेण सह वर्त्तमानोऽपि न भवति

किन्तु केवलं स्वात्मज्ञानानन्दाद्वितीयस्वरूपं चैतन्यमिति तत्-पदलक्ष्यार्थः।

अथ त्वं पदस्य वाच्यार्थः। श्रोत्रत्वक्चक्षुर्जिह्वाघ्राण पञ्चबुद्धीन्द्रिय सहितः प्राणापानव्यानोदानसमानादिदशवायुसहितो मनोबुद्ध्य-हंकारचित्तसंज्ञान्तःकरणचतुष्टयसहितः शब्दस्पर्शरूपरसगन्ध वचना दानगमनविसर्गानन्दसङ्कल्पनिश्चयाभिमानानुसन्धानात्मक चतुर्दश विषयसहितः अन्नमय प्राणमय मनोमय विज्ञानमयानन्द-मय पञ्चकोषसहितः। आधिदैविकाधि भौतिकाध्यात्मिक तापत्रय सहितः सत्त्रिगुणः पुत्रवित्तलोकैषणात्रयसहितो भूतादिकालत्रय-सहितोऽशनाया-पिपासा-शोक-मोह-जरा-मरणषडुर्मिसहितो जायते वर्द्धते विपरिणमते अपक्षीयते। विनश्यति इति षड्भाव विकारान्वित इति त्वं पदस्य वाच्यार्थः।

अथास्य लक्ष्यार्थः सर्वप्राणिहृदयस्थितमद्वितीयं चैतन्यं त्वं पदलक्ष्यार्थः। एतत् प्रत्यक् चैतन्यमेव सत्यज्ञानानन्ताद्वितीयं चैतन्यं अतस्तदेवाह सत्यं ज्ञानमनन्तं ब्रह्मेति। पृच्छति सत्यमित्येकं ब्रह्म-ज्ञानमित्येकं अनन्तमित्येकं किमेतावति ब्रह्मणि सत्यमेक-मेवेति स्वप्रकाशः। मद्गुरुराह।--सत्यशब्देन ज्ञानशब्देन ज्ञप्तिस्वरूप-मुच्यते आनन्दशब्देनाखण्डं ब्रह्मशब्देन परिपूर्णं एकमेवाद्वितीयतं ब्रह्मेति। तत्त्वमसि ब्रह्माहमस्मि इति ज्ञात्वा प्रबुद्धः सन् कृतकृत्यो भवेत् ब्रह्मैव सन् ब्रह्माप्येति विमुक्तश्च विमुच्यते इत्यादि श्रुतिभिरेवं निश्चयात् प्रबुद्धः सन् जीवन्मुक्तः प्रारब्धकर्मजनितफलावधि लोकानु-ग्रहं कुर्वन्नेवावतिष्ठते।

ज्ञात्वाप्यसर्पं सर्पोक्तिं यथा कम्पं न मुञ्चति।
विद्वत्सोऽखिलमीहेऽपि मोहकार्य्यं तथात्मवित्॥
निर्मुच्यापि त्वचं सर्पः स्वस्वरूपं न मुञ्चति॥

इति श्रीशङ्कराचार्य्य विरचिता वज्रसूची समाप्ता। (१)

(१) आदर्शदोषादन्यथा भ्रान्तिः सम्भवति। सा च क्षन्तव्या इति।

श्रीश्रीदुर्गा शरणम्

# संस्कृतचन्द्रिका ।

श्रीश्रीगणेशाय नमः ।

शिवादीनपि कर्म्माणि कारयन्ती जनानिव ।

मायावलम्बते सेयमम्बा श्रीशिवसुन्दरी ॥

## मासावतरणिका ।

उर्वी दुर्वाः प्रकुर्वाणाः सर्वपर्वदलोज्ज्वलाः ।

चैत्रे शय्या अवस्थित्यै लोभयेत् कमलालयाम् ॥

## उद्भटश्लोकाः ।

वृ-हं गवाहनं येषां, येषां त्रि-क-च-भूषणं ।

वामाङ्गे पा-ल-सा येषां ते देवाः पान्तु वः सदा ॥२४३॥ *

धूलीधूसरितः पलालशयनात् शूली कदन्नाशनात्

तैलाभावसशात् सदा शिरसि मे केशा जटात्वं गताः ।

एको गौस्तदसौ न लाङ्गलवही भार्य्या गृहे चण्डिका,

युष्मत्तो यदि चार्द्धचन्द्रमलभे प्राप्स्ये पदं शाम्भवं ॥ २४४ ॥ !

याचना का च नाभाति येन केनापि वा कृता ।

पदत्रयकुभिक्षायां प्रभुः खर्वीकृतो यया ॥ २४५ ॥ ?

दुराशा दुर्दशा चैव द्वे भार्य्ये मे पतिव्रते ।

साद्धं दुराशया यामि दुर्दशाग्रे तु गच्छति ॥ २४६ ॥

याः पश्यन्ति प्रियं स्वप्ने धन्यास्ताः सखि योषितः ।

अस्माकन्तु गते नाथे गता निद्रा च वैरिणी ॥ २४७ ॥

श्रीविधुभूषणदेवः । (राँचि)

---

* वृ वृषः, हं हंसः, ग गरुड़ः । त्रि त्रिशूलं, क कमण्डलूः, च चक्रम् । पा पार्वती ल लक्ष्मीः, सा सावित्री । इत्येवं शब्दाद्यक्षरमादायार्थोऽनुसन्धेयः ।

! अर्द्धचन्द्रं अर्द्धरूपकं ॥० अष्टानकं । शब्दश्लेषात् अर्द्धशशाङ्कस्य लभ्यते । ? कुः पृथिवी

# प्रभातवर्णनम् ।

प्रभाचिरात् संभविता समाप्तिः, शुचा हृदीतीव विचिन्तियन्ती ।
उषः प्रकाशप्रतिभामिषेण, विभावरी पाण्डुरतां बभार ॥ १ ॥
मृगाधिपस्यागमनेन सर्वे, यथाल्पसत्त्वा विपिनं त्यजन्ति ।
तथा भयेनेव विभाकरस्य, तारागणा लोपपरा बभूवुः ॥ २ ॥
श्यामां सिषेवे चतुरोऽपि यामान्, यां वीक्ष्य तस्याः पतनं शशाङ्कः ।
मन्ये महाशोकसमाप्लुताङ्गः, स पश्चिमाम्भोधिजले पपात ॥ ३ ॥
अलङ्कृतोऽयं महसोदयाद्रि-सिंहासनस्थो भविता क्षणेन ।
इति प्रभाते विरुतिच्छलेन, द्विजा दिगीशस्य जगुर्यशांसि ॥ ४ ॥
क्व मामनादृत्य निशान्धकारः पलाय्य पापः किल यास्यतीति ।
ज्वलन्निव क्रोधभरेण भानुः, अङ्गाररूपः सहसाऽऽविरासीत् ॥ ५ ॥
दृष्ट्वाऽऽपतन्तं रविबिम्बमाराद्विवस्तमिस्रेण तिरो बभूवे ।
महात्मनां सम्मुखसंस्थितो हि कियत् क्षणं स्थास्यति दुर्विनीतः ॥ ६ ॥
कुशेशयैः स्वच्छजलाशयेषु बभूवुरम्भोजदलैर्गृहेषु ।
वनेषु पुष्पैः सवितुः सपर्य्या तत्पादसंस्पर्शनया कृतासीत् ॥ ७ ॥
प्राप्योदयं पङ्कजकोषलीनं सद्यो मुमोचालिगणं दिनेशः ।
यद्वैभवे सत्यपि दैन्यदग्धान् दुःखार्णवात् के न समुद्धरन्ति ॥ ८ ॥
त्वया समस्तं तिमिरं निरस्तं कृतो महानुग्रह एव देव ।
खगा इदं बोधयितुं रविं नु, तदुन्मुखा नीडगृहेषु तस्थुः ॥ ९ ॥
गावो वनं फुल्ललतां द्विरेफा द्विजाश्च सन्ध्यासमुपासनार्थं ।
कृषीवलाः स्वेष्टकृतिं प्रकर्त्तुं, जग्मुर्दिनेशाय नतिं विधाय ॥ १० ॥

इति तिमिरमुदस्य व्योममार्गेण पश्य-
न्निखिलजनसमूहान् स्वस्ववृत्तौ विलग्नान् ।
मुदित इव विवस्वान् शुक्लवर्णं बिभर्त्ति
तमहमपि च नत्वैतस्य पूर्त्तिं तनोमि ॥ ११ ॥

श्रीमहावीरप्रसाद द्विवेदी (झांसी)

# प्रभुभक्तिः ।

आसीन्महाराष्ट्रजनपदे भुवनप्रथित-पराक्रमः शिवाजीत्याख्यो महीपतिः। ररक्ष यो निजभुजसारधाराधरेण यवनावनीपाल प्रसभानलाकुलं चिरामैकशरणं वैदिकधर्मम्। सन्त्यनेके तस्य निकटे स्वामिशुश्रूषैकनिष्ठाः शिष्टाः मन्त्रिणः सेवकाश्च। तेष्वति विख्यातो विप्रकुलसंभूतो वैरिभीषणधिषणो "वाजीरावाभिधेयः"। अयमेव तस्य महीपतेः "पेशवेति" सचिव पदमलञ्चक्रे।

अथैकदा "चौथसरदेशमुखीति" राजकर-ग्रहणाधिकारानुशासनपत्रं दिल्लीश्वरादासादयितुं शिवाजिना वाजिराव आज्ञप्तः। स च निजविश्वासभाजनं स्वामिसेवापरायणं "भान्वितुशपनामकं" जनार्दनपान्ताख्यं विप्रं (अयमेव ख्यात यशसो नानाफडणीसस्य जनकः) सहचरं गृहीत्वा दिल्लीनगरमगात्। तत्र स्वमतिकौशल्यात् महतायासेनाचिरेणैव साधितमनेन निजेप्सितम्। परमननुकूलतया वाजिरावः दिल्लीश्वरपार्श्ववर्त्ति नृशंसमण्डलस्य हृदयशैल्यमभूत्। यतस्तैरेकीभूय संकेतितं लब्धानुशासनपत्रो वाजीरावो यदा राजमन्दिराद्बहिर्गच्छेत्तदा तं प्रसह्यानुशासनपत्रन्तस्माद्ग्रहीष्याम इति। विदितैतद्वृत्तः स ततश्चिन्तावशोऽभूत्।

महायाससाधितमिदं स्वामिकार्य्यमिदानीं स्खलतीति मनसि निधाय विषीदन् सः जनार्दनपन्तेनाभिहितः स्वामिन्! मा स्वल्पमपि ददात्ववकाशं स्वहृदयाय दुश्चिन्तायाः। अनुशासनपत्रं गृहीत्वा मद्वेशेनैवानिवारितो राजभवनाद्बहिर्गच्छतु भवान्। एवं कृते न कोऽपि भवन्तं प्रत्यभिज्ञास्यन्ति। अहन्तु तावद्भवद्यानमधिरुह्य परिवारेण सहितः सवैभवं सपदि भवन्तमनुयास्यामि। यदि सुरक्षय बलादागमिष्यामि वहिरसङ्कटं तर्हि स्वमीप्सितं भविष्यति। नो चेत् कोऽन्योऽस्ति मे हर्षकरः प्रसङ्गो धर्मरक्षणमात्रैकधियः पालनकर्त्तुः स्वामिनः कार्य्यार्थं मादृशानां किङ्कराणां जीवितव्ययेभ्योऽधिकः।

एवं कृतसङ्केतौ तौ यथोक्तमकुरुतां। जनार्दनपन्त स्तथाविधो राजसदनान्निष्क्रान्तः पथि कृतपूर्वसङ्केतैः खलैः सोऽयं वाजिराव इति धिया धृतशस्त्रैः पुरुषैः सहाक्रम्य बलात् परेतेशभवनातिथिः कृतः। वाजिरावस्त्वक्लेशेन निवारितपरो गृहीतशासनपत्रः स्वस्थान-मगात्। एवं कृतकार्य्योऽपि स स्वामिचरणैकनिष्ठसेवकविनाश क्लेशविदीर्णाशयः शिवाजिराजपादमूलं "सातारपत्तन"मागत्य समर्प्य च नृपेप्रेषितानुशासनपत्रं वृत्तमखिलमनिवेदयत्। स्वसेवक-परिपालनदीक्षितेन राज्ञा शिवाजिनानुकम्पया ततः कथमिव भानु-कुलं भानुरिव लोकवन्दनीयतां नीतमित्यै तिहासिकाः प्रष्टव्या इति।

श्रीबलवन्तकमलाकरः। (उज्जैन)

---

## प्रार्थना।

( भाद्रमासतोऽनुवृत्ता )

हा हतोऽस्मि किमभक्षयं नहि ? प्रीतये करण दुष्टयोषितां।
नो किमिन्द्रियमतोषयं ननु न्यायवर्जितपदार्थराजिभिः ॥२१॥
तुच्छदग्ध जठरस्य हेतवे किन्न पापमहमाश्रये चिरं ?
नो बभूव विषमस्तु कण्टकः कस्य काम्यतमशान्तिवर्त्मनः ॥२२॥
कामये न पितरं न मातरं भ्रातरं न तनयं न योषितं।
बान्धवं न जगदेकतारण ! पाद-पादपतलं तवार्थये ॥ २३ ॥
कामये न विभवं न गौरवं यौवनं न नसुरूप विग्रहं।
मादृशोऽपि पतितस्य पावन ! पाद-पादपतलं तवार्थये ॥ २४ ॥
नो यशांसि, न वयांसि, कामये नो दिवं न पृथिवीं रसातलं।
नो, न विश्वमखिलेश ! केवलं पाद-पादपतलं तवार्थये ॥ २५ ॥
इन्द्रत्वमपि विश्वराजतां माधवत्वमपि नीलकण्ठतां।
कामये न गुरुदेव ! केवलं पाद-पादपतलं तवार्थं ॥ २६ ॥

मण्डलं न भुवनाभिमानतां निर्जराधिपतितां च नार्थये ।
भक्तकल्प-विटपिन् ! जगद्गुरो ! पाद-पादप-तलं तवार्थये ॥ २७ ॥
कामयेऽद्भुतकवित्वमीश ! नो तीक्ष्णबुद्धिमपि कर्मदक्षताम् ।
हे त्रिलोकपरमित्र ! केवलं पाद-पादप-तलं तवार्थये ॥ २८ ॥
रागलोभपरिहिंसनान्यपि पापिनो मम निकृष्टकर्मणः !
क्रोध काम मद मोह मत्सरान् संहराशु भगवन् दयाश्रय ! ॥ २९ ॥
हे पितर्मरणमाशु संहर जन्म चास्य विषमं सुदुःसहं ।
केशव ! श्रमचयञ्च बन्धनं दूर एव नय पापितारण ! ॥ ३० ॥
गाढ़ दर्पमसहं सुखस्पृहां इन्द्रियाधम-कुवृत्ति-संहतीः ।
हे सुरेश ! हर मेऽपवित्रतां वक्रतां कपटताञ्च संहर ॥ ३१ ॥
अन्यदोष वचनं वृथाश्रमः तीव्रदृष्टिरशुभा च वासना ।
नास्तिकत्वमपयातु मे हरे ! द्वेष बुद्धिरपि निन्दिता स्मृतिः ॥ ३२ ॥
देहि बुद्धि मनघां यया भवान् नित्यमेव विषयीकरीष्यति ।
देहि देव ! भवदङ्घ्रि गोचरां केवलां जगदुपास्य ! मे मतिं ॥ ३३ ॥
दीयताममर ! चेतना यया लोकयेयमखिलं स्वदेहवत् ।
ह्रार्य्यतां भवदगोचरा स्मृतिः भूतविघ्नजनिकापि दुर्मतिः ॥ ३४ ॥
देहि दृष्टिमखिलं भवन्मयं काम्यरत्नमपि वृत्तिकामयम् ।
लोकयेयमखिलप्रभो ! यया ; सिञ्च मे मनसि शान्तिजीवनम् ॥३५॥
त्वद्गुणश्रवण पारगां श्रुतिं त्वद्विभुत्यनुभवक्षमं विभो !
देहि चर्म ; रसनां सदा भवन्नामधेयमधुपान कौतुकीं ॥ ३६ ॥
दिव्यगन्ध परिबोधनक्षमं घ्राणमेतदमरेश ! नार्थये ।
नार्थये विषयवासनारतं मानसं जगदघाटवीशिखिन् ! ॥ ३७ ॥
पापराशिमपनीय पापिनो यद्यदत्र शिवदं गुरोर्गुरो !
तत् प्रवेशय मनोगृहे हरे ! त्वत् समीप-पदवीञ्च मां नय ॥ ३८ ॥
मां नयाशु तिमिराद्उज्ज्वलत्प्रभां स्वस्वरूपमसतोऽमृतं परं ।
मृत्युतस्तदवलम्बनां शुभां भक्तिमत्र परमां गतिं नतिं ॥ ३९ ॥

सन्तु मे सरलता शुचिर्नतिर्बुद्धिसंयमसुखं क्षमा धृतिः।
जन्ममृत्यु धनदोषदर्शनं साधुसङ्ग समदर्शिते सदा॥ ४०॥
पादपो जलचरोऽथ वल्लरी वन्यजन्तुरपि वा विहङ्गमः।
संभवामि न च दुःखमत्र मे चेद्गुरो! त्वयि भवेत् सदा मतिः॥४१॥
हे विभो! मरण वासरे यदा वासरेशतनयः समेष्यति।
कामये जनकवत् जगत्पितः! रुग्नदृष्टिविषयस्तदा भवेः॥ ४२॥

जनक! समनुगृह्य प्राणवाते प्रयाते
सकलभुवनवन्धो! शक्ति-हीनेऽन्तकाले।
मयि निजकृपयाशु स्वं शरीरं प्रदर्श्य
भव-भयहर-नाम व्यापकं श्रावयेथाः॥ ४३॥

संसार दावानल गाढ़ दग्ध-मनो न तस्यापि ममाहतस्य।
मतिर्यथा त्वच्चरणारविन्दे चिरं रता स्यात् कुरु तद्दयावन्!॥ ४४॥
योगीश योगेश्वर! योगहेतो! वरेण्य! नारायण! विश्ववीज!
यन्मे भवेत्तद्भवतु स्वकार्य्यात् स्वेच्छामय त्वं! भव पूर्णकामः॥ ४५॥

स्मर हृदय दिनेशं सर्वदं निर्विकल्पं
जगदरितिमिरश्रीभास्करं मुक्तिहेतुं।
भव भवन भयानां नाशकं विश्ववन्धुं
सकृदपि भवलीलाशेषकाले स्वभक्त्या॥ ४६॥
कृष्णं विभुं भुवनजीवनियन्तृदेवं
स्वीयप्रभालवविभूषितसर्वलोकः।
संसारकाननभयं यदि तर्त्तुमिच्छे-
स्तूर्णं तदा स्मर मनः परमेश मुच्चैः॥ ४७॥

(नारायणार्पणमस्तु)

श्रीअन्नदा चरण तर्कचूड़ामणिः
नोयाखाली—सोमपाड़ा

# अवन्तिका पुरी वा उज्जयिनी ।

महाश्मशानरसिकं सोमसूर्याग्निलोचनम् ।
महाकालं महाकालं भजेमहि सदा हृदि ॥

अस्ति सकलजगतीतलवर्त्तिपुरीललना-ललन्तिकायमाना, श्रीमन्महाकालेश्वरैकवसतिः संग्रामसमुपलब्धकीर्त्तिचन्द्रिका सिताय-मानभूमण्डलभटाग्रगण्याराधिता, खरतरखदिराङ्गार-निकरदिन-कर-किरणोत्कर-पयोधर--जलधारा--सिच्यमानप्रतोली-समुपारूढ़-दूर्वाङ्कुराधिष्ठितेन्द्र-गोपव्याजेन लोकानां प्रवालाङ्कुरशङ्कां प्रति-दिनं प्रतिक्षणं वर्षाकाले जनयन्तीव स्थिता, वसन्तऋतौ वनपाल-कोमल-करकिशलय-संवर्द्धित मल्लिकाकुसुम-गुच्छच्छलेन मुक्ताफल-स्तबकान् सर्वेभ्यो मनुजेभ्यो वसन्तमाधवप्रीत्यर्थं समर्पयन्तीव विराजमाना, शिशिरकाले कुन्दलता-प्रसूनकैतवेन सर्वा नगर्यो मत्सम्पत्त्या अधरीकृता इति बीजेन हसन्ती, हेमन्तसमये समस्त-कन्यकानां कात्यायनीपूजार्थमिव पाटलिपुष्पस्तबकं धारयन्ती, आकाशपद्धतिरिव गुरु-बुध-कविभूषिता, नागराजसभेव अनन्त-विषधर संवृता, कैलास सन्नितिरिव विनायकोपेता, शाक्तसरणिरिव पूजितभैरवकदम्बा, शङ्करपरिषदिव नाथकुलसंवेष्टिता, दाशरथि-सेनेव वानरवृन्दसमेता, वैकुण्ठदेहलीव विजयाद्यलंकृता, पितामह तनुरिव संपूर्णरम्यश्रुतिजातभ्राजिता, परमात्मस्थितिरिव निर्गुण-स्वरूपा, शेषमूर्त्तिरिव स्वदेहधृतमाधवविग्रहा, एतादृशावन्तीदेशेषु उज्जयिनीनाम्नी नगरी ।

अत्यन्तमधुरतरमधुसंलुब्धमधुपझङ्कार-मुखरितनागेन्द्रकुल गण्ड-स्थलयुगलस्रवन्मदोदक-सुगन्धमनोहरां काम्बोज-वाह्लीक-वनायु-जादि-तुरङ्गमनिकुरम्बबहुलां कुवेरकोषवसतिमिव मुकुन्दादि-सनाथां, अम्बरसरणिमिवाजाधिष्ठितां त्रिभुवनललामसुन्दरीं श्रीमतीमुज्जयिनीं कदाचिदालोक्य स्वात्मनि तत्सम्बन्धाभाव-

माकलय्य महाभिमाना वारानसी गङ्गातीरे शूलिशूलाग्रमवलम्ब्य स्वकीय पञ्चप्राणान् त्यक्तुमिव अद्यापि सन्तिष्ठते।

एतादृश्यामुज्जयिन्यां भगवान् वासुदेवोऽप्यत्रैवागत्य साङ्गानां सरहस्यानां सकलानां वेदानां पठनञ्चक्रे, पुत्रलक्षणगुरुदक्षिणां च स्वगुरुपत्न्यै अदात्।

तस्मिन्नेवकाले विन्दानुविन्दनामानौ महारणसंसक्तचेतसौ महाभारतप्रसिद्धयशसौ भूपौ राज्यमचीकरतां।

तदनु बहुकालेन दुष्टमेदिनीपति-तीव्रकर-सन्तप्ता भूः प्रारब्धवशात् प्रद्योतनामकं नृपवरमाशिश्राय। तस्य राज्ञः स्वलोचनयुगलविनिर्जितनीलेन्दीवरदला वासवदत्ता कुमारी आसीत्। तस्या वासवदत्ताया रूपातिशयसमाकृष्टहृदयो वत्सराजोऽभूत्। हैमन्तालविपिनं प्रद्योतप्रजापालस्यात्रैव शुशुभे। यस्य प्रद्योतभूपस्य नलगिरिनामकं गजेन्द्रं दृष्ट्वा स्वाराजं स्वात्मानं रक्षितुमिव शरणमैरावतो गतः। स तत्रैव मनुष्यलोचनविषयं सन्तिष्ठतेऽद्यापि नूनम्। तदनु महानक्रसंग्रस्ता नागेन्द्रवधूरिव पुनरपि दुर्नयनृपतिचक्रकरे दूयते स्म।

तदनु इयमुज्जयिनी अदृष्टवशात् चन्द्रगुप्तस्य हस्तपल्लवच्छायामाश्रित्य चाणक्यमुखकमलविनिर्गत शास्त्रमाकन्दमकरन्दधारां पायं पायं मधुमत्तवाराङ्गनेव निर्भरानन्दसन्दोलितमस्तका सुखमयीं निद्रां लभतेस्म।

पुनश्च कालवशात् शनैश्चरमहादशासङ्कलिता नरसंहतिरिव महापापिभिर्मनुष्याधमैः संवेष्टिता महादुःखपरम्परया घोरारण्यस्थितदमयन्तीव क्लेशोदर्कदिनगणान् भूरत्यवाहयत्।

ततश्च प्रचण्डमार्त्तण्ड-किरणसमुदाय-संप्लुष्टा किश्वभरेव वर्षाकालसन्निभं भर्तृहरिनामकं पार्थिवं प्रपेदे। तदानीमियमुज्जयिनी जनकसभेव नानाविद्यापारं गतैः पण्डितचूड़ामणिभिर्वीरयशैः

काश्वरवृन्दैरत्यन्तसङ्कुचितभूप्रदेशा भार्गवादिनक्षत्रसङ्कुला द्यौरिवाशोभत खलु ।

तस्मिन्नेव समये सहस्राक्षपाणिपल्लव-वज्रकठिनं पातञ्जलमहाभाष्यं अत्यल्पतरमतीन् भाविमनुष्यवर्गान् समालोच्य तदनुजिघृक्षया करुणासमुद्रलहरीपंक्तितरङ्गितमना: पञ्चविंशतिसहस्राधिक-लक्ष-संख्यक-कारिका-कल्पलतिकाङ्कुरान् स्वमानसभूमिसमधिरूढ़ान् स्वकीय-नवनवोन्मेषशालिधीसलिलेन सिच्यमानान् प्रचुरगुणपुष्पितान् बुधवर्यो भर्तृहरि: संवर्द्धयामास ।

भर्तृहरिकृतग्रन्थमवलम्ब्य कैयटभट्टादयो महाभाष्यव्याख्यां विरचयामासु: । इयं सर्वाख्यायिका वैयाकरणानां पाठालयेषु सुप्रसिद्धतमा: खलु । सर्वभूवलयपण्डितमहेन्द्रेण भर्तृहरिणा राज्ञा बहवो ग्रन्था अत्युत्तमा: सन्निबद्धा: । स एव पूर्वोपार्जितपुण्यपुञ्ज-परिपाकात् भगवच्छुकारहस्यनाथवरप्रसादातिशयात् तृणवन्नश्वर चक्रवर्त्तित्वं विहाय श्रीमद्भगवच्छङ्कराद्यप्रभृतियोगिवरसेवित-योगपथं परया भक्त्या निषेवे । तेन जीवन्मुक्तकलेवर: संबभूव । अपार परितापकारिघोरसंसारातपान्धीभूतनयनानामशेषजनानां लोचनेषु मोक्षस्वरूपाञ्जनशलावर्त्तिकां प्रदापयितुमिव भगवता श्रीमहाकालेन स्वराजधान्यामुज्जयिन्यामाकल्पं स्थीयते नूनमितिमन्ये ।

ततश्च तत् सहोदर: कनीयान् समस्तावनीतलनिवासिसामन्त चक्रवाल-मस्तकस्थित-मुकुटमाणिक्य-मरीचिचयरञ्जित-चरणजलज-युगलो बाणभट्ट-भवभूति-कालिदास वराहमिहिर प्रभृति बुधवरेन्द्रैर्वेष्टितो विक्रमादित्यो भूपवरश्चकासे (*) स च विद्यामुक्तानां समुद्र:,

---

* "ब्राह्मण्यामभव वराहमिहिरो ज्योतिर्विदामग्रणी:
राजा भर्तृहरिश्च विक्रमनृप: क्षत्रात्मजायामभूत् ।
वैश्यायां हरिचन्द्र वैद्यतिलको जातश्च शङ्कु: कृती
शूद्रायाममर: षडेव शबरस्वामिद्विजस्यात्मजा: ॥"
श्लोकोऽयमतिप्राचीन इति सम्पादका: ।

प्रतापराशेर्निधानं, शौर्यभास्करस्योदयाचलः, कमलायाः क्रीड़ा-मन्दिरं, महाकविकृतरमणीयकविता-कन्दलीजालुलुपल्लिखानं, महा-सरस्वत्याः स्वकन्यायाः बालकेलिविनोदार्थमिव भगवता पितामहेन कौतुकातिशयात् मुखारविन्दसदनं विनिर्मितं इति लोकैर्वारं वारं वितर्कितः सम्राड् बभूव ।

स च विक्रमादित्यः जीमूतवाहन इव प्रजारक्षणार्थं स्वशरीरकृन्तन-मपि कृत्वा वेतालसन्तोषमकरोत्। यद्भयेन मदोन्मत्तः कलिकुञ्जरः धर्मरूपाङ्कुशेन व्रणीकृतगण्डस्थलयुगलः सन् विन्ध्याचलस्य क्वचन कोणे स्वदेहं मशकीकृत्य निभृतं निलीनः किल। यस्य संसदि शकु-न्तलादिदृश्यकाव्यानि, मिताक्षरा-प्रभृतिधर्मशास्त्रनिबन्धा, वराह-संहितामुखज्योतिषग्रन्थाः, पण्डितैर्निर्मिताः। स्वयमपि विक्रमादित्य बुधमहेन्द्रेण महानिबन्धा रचिताः। यत्प्रमाणमद्यापि सूरयः स्वकीय ग्रन्थेषूल्लिखन्ति।

श्रीविक्रमादित्यतुल्यो भूपालो नो जातो नास्ति न च भविष्य-तीतिसन्धे। अत्र संमतिर्मिताक्षराकारैरपि लिखिता। यथा—

"नासीदस्ति भविष्यति क्षितितले कल्याणकल्पं पुरं
नो दृष्टः श्रुत एव वा क्षितिपतिः श्रीविक्रमार्कोपमः।
विज्ञानेश्वरपण्डितो न भजते किञ्चान्यदन्योपमं
शाकल्पं स्थिरमस्तु कल्पलतिकाकल्पं तदेतत्त्रयम्॥"

तस्मिन् विक्रमादित्यसम्राजि कैलासलोकमाभासयति सति वराकीयमुज्जयिनी दिनकरनिशाकररहितां सन्ध्यामधारयन्नूनम्।

भगवान् द्युमणिरपि श्रीविक्रमादित्यचक्रवर्तिवियोगपरितापेन स्वान्तःकरणे परमाधिसन्तप्तः सन् स्वगोत्राशौचनिवृत्त्यर्थं पश्चिम-समुद्रे ससूतसाश्वरथेन साकं नूनं ममज्ज।

न केवलं तस्मिन्दिने, तत्प्रभृति यदा यदा त्विषाम्पतिरुज्जयिनी विलोकनसमकाल-स्मृत-श्रीविक्रमादित्य-दान-युद्ध-दयारूपवीर-रस-

दाक्षिण्यादि गुणगणसमाकृष्ट हृदयो भवति, तदा तदा महावीरपुरुष वियोग-घोरतम-प्रज्वलद्वह्निज्वालावाताकुलः सन् तच्छमयितुमिव प्रतिसन्ध्यं वारुणसमुद्रजले मज्जनं करोति नूनमद्यापीति मन्ये। तथैव सन्ध्यापि समुद्रोदके सखिरः स्नानं सेवमाना सकलपक्षिकुल कोलाहलमिषेणैव तारस्वररोदनं कुर्वती महावीरपुरुषपुङ्गव वियोगसन्तापेनाताम्रमुखी विचेयतारका सती श्रीविक्रमादित्य-भूपवर्यमणिं मार्गयितुमिव द्वीपाद्द्वीपमद्यापि परिभ्रमतीति मन्ये।

तद्वन्निशा नायिकापि स्वशरीरवर्त्ति-लावण्यपुञ्ज-विनिर्जित-मदन-सौन्दर्यगर्व-श्रीविक्रमगुणान् स्मारं स्मारं दिवा सकलजनानां पुरतः स्वकीयमुखचन्द्रं विधवेवाप्रकाशयन्ती कृष्णमुखी अमावस्यया सख्या साकं संमिलिता कलियुगे तत्सदृशं कुत्रापि नाथमपश्यन्ती प्रति-नगरं प्रतिद्वीपं प्रतिवनं प्रतिमासे संपूर्णस्थावर-जङ्गमाग्रतो दुःखपरम्परा द्योतयन्ती अर्यमादि पितृगृहमद्यापि भजत्येव न्यून-मितिमन्ये। तदुत्तरं द्वादशस्थानस्थित-नीचराहुदशासंवेष्टिता कुलवधूरिवात्यन्तं क्लिश्यमाना दिवसवृन्दानतिवायहति स्म।

तत उत्तरं मृगया-परवधू-मधुपानसमासक्तचित्त नृपति समवाया उज्जयिन्यामभूवन्।

ततश्च सूरिकुलतिलकायमानः पण्डितगणकुञ्जरः दानैकहस्त-कमलः "मुञ्जो" नाम नृपतिरेतामुज्जयिनीं मण्डयती स्म। धनि-कादयः पण्डितेन्द्रा यस्य सभासद आसन्। स मुञ्जमेदिनोपालो जीर्णोद्धारकरणे सातिशयपुण्यमित्याकलय्येव कलिकलुषमति-क्षिति-पति-संहतिविनष्टीकृतान् शास्त्रप्रबन्धान् विपश्चिद्द्वारा विरचया-मास। तदुक्तं दशरूपके स्वयमेव धनञ्जयेन।—

"विष्णोः सुतेनापि धनञ्जयेन विद्वन्मनोरागनिबन्धहेतुः।
आविष्कृतं मुञ्जमहीशगोष्ठी वैदग्ध्यभाजा दशरूपमेतत्॥"

परमधार्मिके सकल-प्राणिकल्याणकारके पण्डितेन्द्रवरे मुञ्जविश्व-म्भरापतौ यशोमात्रैकशरीरशेषे सति स्वपितृव्योत्तरं धीमदन्वय-तिलकायमानः श्रीभोजः प्रशशास भुवं। श्रीभोजदेवे महीमलङ्कुर्वति सति नीलेन्दीवरवृन्दमिव द्विजसन्ततिं पद्मा स्वयं न जहौ। वीर-लक्ष्मीरपि महार्घेयनवपद्मपरम्परासङ्खिकाधरिताखिलभूमण्डल-शूरचक्रवालं न तत्याज। तत्काले इयमुज्जयिनी मैथिलीपति-संसदिव भरत-शत्रुघ्न संवलिता लक्ष्मणोपेता च, द्वारकेव सांबादि-सेविता, मथुरेव गोविन्दाधिष्ठिता, काञ्चीपुरीव पुराणपुरुषरंञ्जा-जिता, मायापुरीव भूतेशगणविराजिता, काशीपुरीव वक्रतुण्डादि निवहमण्डिता चकासे। भोजेनापि सरस्वतीकण्ठाभरणादयो बहवो महानिबन्धा निबद्धाः। ते निबन्धास्तु सच्छास्त्रपरिपक्वकुशाग्र-धियामपि चंक्रमणं कारयन्ति। किमुसामान्यविद्याभ्यसनिनां, साहित्यशास्त्र पण्डितम्मन्या इतरशास्त्रवेत्तारः शतसहस्रायुत लक्ष-कोटि परार्द्धसंख्यकश्लोकतर्णक प्रसविनं श्रीभोजकृतं धेनुवन्धं रहसि गुरुमुखादवगम्य किञ्चित् सभासु सामान्यजनसमक्षमस्मत्कृता इमे श्लोका इत्याद्यपि वदन्ति पण्डितम्मन्याः। अतएव भट्ट बिल्ह-णेन विक्रमाङ्क चरितमहाकाव्ये प्रोक्तम्।

"साहित्य पाथोनिधिमन्थनोत्थं कर्णामृतं रक्षत हे कवीन्द्राः।
यत्तस्य दैत्या इव लुण्ठनाय काव्यार्थचौराः प्रगुणीभवन्ति॥"

इत्यलं मान्यानां पूज्याचरणे कटाक्षनिक्षेपेण।

अस्तु प्रकृत मनुसरामः। तस्मिन्नपि भोजसूर्य्ये कविकुल कमल-दल-विकासकारिणि विस्तिर्णमेदिनी-वलयपरिभ्रमणजन्य-परि-श्रमात्यन्त-श्रान्तेन्द्रियगणे स्वदेहवर्त्तिग्लानिं निराकर्त्तुमिव वारुणीं सेवमाने सति इय मुज्जयिनी बहुकालमताम्यत।

चुक्रोश च संमीलितभृङ्गझङ्कारतारस्वरकपटेन दीर्घं। तद्विरावमुप-श्रुत्य स्वमखीदुःखवेदनया समागतानां शुकी-सारिका-मयूरीप्रभृतीनां

सायं महता कोलाहलेन मुखरितदिङ्मुखा वृक्षाग्रफलपतननाद-व्याजेन उरस्ताड़नं कुर्वतीव वायुसञ्चलितशुष्कदलस्वनदम्भात् स्वपाणिस्थित कङ्कननिवहान् त्रुट्यन्तीव सायंकालसमुपजात तमःस्तोमव्याजेन स्वकण्ठस्थित कृष्णवर्णमणिपुञ्जान् धरणितले प्रक्षिपन्तीव "हा कवितैकबन्धो ! हा गुणिप्रियेति" मुहुर्मुहुरटन्ती क्वापि तत्समाननायमपश्यन्ती च मदिराघूर्णितवारवधूरिव विह्वला सती कालं निनाय ।

तत उत्तरं "त्रैलोक्यमल्लदेव" उज्जयिन्या विरहज्वरं तारायाः सुग्रीव इव महता प्रयत्नेन दूरीचकार ।

तत्पश्चात् सोमवत्सो देव उज्जयिनीसिंहासनमलञ्चक्रे । तदुत्तरं शूरतरजनसम्भावित-कीर्त्तिर्द्वितीयो विक्रमादित्यः स्वसम्पद्विलासेन "कल्याणपुरे" वसन् इमामुज्जयिनीमभूषयत् । तत्प्रभृति सप्तमपुरुषपर्य्यन्तं तत्कुलगृहल्यागमियं वशीकरणप्रयोगेण स्वायत्तीकृता कान्तेव नाकरोत् । *

इत उत्तरं परजीवमांसलोलुपैः जपासुमनिभवक्त्रैर्विड़ालतुल्यनयनैराप्रपदं कर्कशदीर्घकेशजालसङ्कुचितकायैः पदे पदे महाश्मशानशङ्कां जनयद्भिर्द्विजयूथसारणैकचित्तैर्दुःशासनवत् हठात् परकान्तामन्यश्रियश्चापहरद्भिर्हारयद्भिश्च द्विजानपि म्लेच्छीकुर्वद्भिः मन्दिरेषु शिवविष्ण्वादिमूर्त्तीः स्फोटयद्भिः प्रतिरथ्यं जीवास्थीनि रजताद्रीनिव स्थापयद्भिः प्रतिमार्गं चैत्यवृन्दानि रचयद्भिः धर्मसेतून् त्रोटयद्भिः सर्वकालं दशदिशः प्रज्वालयद्भिर्यवनैरियमुज्जयिनी मदोन्मत्तनागेन्द्रकरधृत कमलिनीव कथमपि केवलं स्वपञ्च प्राणन् आयुष्यमर्यादया चर्ममात्रगतैकजीविता भेकभार्य्येव दधार ।

बहुतिथे काले गते सति इयमुज्जयिनी जयसिंहनृपतिरत्नं संप्र-

---

* कल्याणपुरसाहचर्य्यात् विक्रमादित्येतिनामसारूप्याच्च मिताक्षराकारविज्ञानेश्वरकृतेन 'नासीदस्ति भविष्यती"ति श्लोकेनैतदेव प्रतीयते मिताक्षराकारेण द्वितीयस्यैव विक्रमादित्यस्य प्रशस्तिः सूचितेति सम्पादकः ।

पेदे । तस्मिन् राजनि सति विकासता यथा नक्षत्रेषु तथैव द्विजमुखेषु भूतिधारणं यथा वैश्येषु तथा ब्राह्मणेषु । तारापथदर्शनं यथा जैनगणेषु तथा गणकेष्विति चित्रम् तस्य जयसिंहस्य वाजपेयप्रभृतिमखपरंपरासमुद्गतात्यन्तपुण्यकारकधूमस्तोम: अस्या उज्जयिन्या: कर्णपूरायमाना बभूव । तेन जयसिंहभूपेन ससागरा सद्वीपा सपर्वता कनकमयी मेदिनी श्रीमहाकालप्रीत्यर्थं कुटुम्बिने श्रुतिजातार्थवेत्रे श्रोत्रियप्रवरतमाय ब्राह्मणाय दत्ता । किमु वाच्या तस्य भूपालस्य दानशूरता ! कलौ साक्षात् कर्णेन सूर्यपुत्रेणेव पुन: अवतारो धृतो मन्ये नूनमिति ! परन्तु जन्ममध्ये लोकोत्तरं यत् पूर्वस्मिन् काले न जातं नास्ते न भविष्यति तत् कृतं जयसिंहमेदिनीपतिना चक्रवर्त्तिने भूपतये पेशवे इत्युपनामकाय अश्वमेधमखे इमामेवोज्जयिनीं सदक्षिणां शिप्रानदीतीरे पिशाचमोचनतीर्थे ददातिस्म समग्रदेवद्विजसमक्षं । (?) इमा: सर्वा आख्यायिका धर्मशास्त्रमहानिबन्धे श्रूयन्ते —तत्प्रभृति पेशव इत्युपनामक-मेदिनीपतिना शिन्दे इत्युपनामक-स्वकीयमान्यपुरुषकरसरसीरुहं प्रति समर्पिता (?) तेन पुरुषेण स्वविश्वासपात्रेण रामचन्द्र इत्यन्वर्थनामकेन सौगतमतप्रदूषितधर्मस्थापनार्थमवतीर्णेन कुमारिलभट्टेनेव श्रीमतश्चराचरगुरो: परमपुरुषस्य पुराणस्य चिन्मयस्य भगवतो महाकालस्य प्रासादो निरमायि । मध्याह्नसमये यत्प्रासादप्रोन्नतशिखराग्रमवलोक्य स्वरथ निवातशङ्कयेव दक्षिणायानोत्तरायणकैतवेन निर्गच्छति प्रतिसंवत्सरं गत्यन्तराभावात् यदा विषुवद्वृत्तं भास्कर: स्पृशति तदा तन्मन्दिरशिलान्तरङ्गनजनितपातकक्षालनार्थमिव बहुकालं स्वकीयकोमलकरकमलैर्भगवतो महाकालस्य लिङ्गशरीरं स्पृष्ट्वा क्षमापनामेव कर्त्तुं यतते नूनमद्यापि । (?) †

(क्रमश:)

श्रीकाशीनाथशास्त्रिसाहित्याचार्य्य:

संस्कृत प्रोफेसर माधवकालेज उज्जैन ।

† संदिग्धस्यास्य प्रबन्धस्य क्वापि आदर्शलिपिदोषात् क्वापि भ्रमदुष्टतया वा असंलग्न भाति ।

# ग्रहणम् ।

(पूर्वतोऽनुवृत्त')

यस्तु राहुः सिंहिकायां कश्यपमुनेः पुत्रः (१) मलयपर्वतजातः, जात्या शूद्रः कृष्णाङ्गः कृष्णवस्त्रः सिंहवाहनः चतुर्भु जः खड्ग शूल चर्मधारी सूर्यास्य इति ग्रहयागतत्त्वे लिखितं, स एव राहुः छाया धिष्ठातृदेवः। अत एव तमोऽधिष्ठातृदेवत्वात् राहुरपि तमः कथ्यते अमरसिंहेन मेदिनीकरेण च। तथाच—

'तमस्तु राहुः स्वर्भानुः सैंहिकेयो विधुन्तुदः" इत्यमरः।

"तमो ध्वान्ते गुणे शोके क्लीवं वा ना विधुन्तुदे" इति मेदिनी।

एते हि सूर्य्यादिग्रहाः अश्विन्यादिनक्षत्राणि, अग्निजलपर्वता दयश्च ये प्रत्यक्षतो दृश्यन्ते ते द्विरूपाः स्थावरजङ्गमात्मकाः (२) तेषा-मधिष्ठातृदेवा अपि सूर्य्यादिनाम्ना अभिधीयन्ते। तथाहि योऽयं सूर्य्यः वर्त्तुलाकारः प्रतिदिन मुदितोऽस्माभिर्दृश्यते तन्मण्डलाधिष्ठातृ-देवोऽपि हस्तपादादिविशिष्टः नाम्ना सूर्य्यः कथ्यते। यथास्य ध्यानं

"रक्ताम्बुजासनमशेषगुणैकसिन्धुं भानुं समस्त जगतामधिपं भजामि।
पद्मद्वयाभयवरं दधतं कराब्जै र्माणिक्यमौलिमरुणाङ्गरुचिं त्रिनेत्रं॥"

तथा जलमय्या गङ्गाया अधिष्ठात्री देव्यपि मकरवाहिनी चतु-र्भुजा गङ्गा वर्त्तते। तथा दाहात्मकाग्नेरप्यधिष्ठातृदेवः पिङ्गभ्रू-

---

(१) "कश्यपस्य गृहिणी तु सिंहिका राहुवास्तुतनयावजीजनत्।
पूर्वजो हरिनिकृत्तकन्धरो दैवतैरवरजो निपातितः॥" इति वास्तुयागतत्त्वम्।

(२) नद्यश्च पर्वताःसर्वे द्विरूपाश्च स्वभावतः। तोयं नदीनां रूपन्तु शरीरमपरन्तथा॥
स्थावरं पर्वतानान्तु रूपं कायस्तथापरः। शुक्तीनामथकम्बूनां तथैवान्तर्गता तनूः॥
वहिरस्थिस्वरूपन्तु सर्वदैव प्रवर्त्तते। एवञ्जलं स्थावरञ्च नदीपर्वतयोस्तथा॥
अन्तर्वसति कायस्तु सततं नोपपद्यते। आप्याय्यते स्थावरेण शरीरं पर्वतस्य तु॥
तथा नदीनां कायस्तु तोयेनाप्याय्यतेसदा। नदीनां कामरूपित्वं पर्वतानान्तथैवच॥
जगत्स्थित्यै: पुरा विष्णुः कल्पयामास यत्नतः। तोयहानौ नदीदुःखं जायते सततन्द्विजाः
विशीर्णे स्थावरे दुःखं जायते गिरिकायगं॥" इति कालिकापुराणे २२ शोऽध्यायः॥

श्मश्रुकेशः पीनाङ्गजठरः अरुणवर्णः छागवाहनः अग्निर्वर्त्तते । तथा पर्वतस्यापि प्रस्तरादिमयहिमालयस्याधिष्ठातृदेवः कश्चिद्धस्तपदादि-विशिष्टः मेनकापत्नीकः उमाकन्यकोऽस्ति तथा अन्येषामपि जलपर्वतादीनामधिष्ठातारो देवा ज्ञातव्याः ।

एवं सति पृथिवीछायारूपतमःपातात् सूर्य्यचन्द्रयोर्ग्रहणे छाया-रूपतमसोऽधिष्ठातृदेवेन राहुणैव तौ ग्रस्येते इति साधु सङ्गच्छते ।

यत्तु तन्त्रशास्त्रे कथितमस्ति शिवो यदा शक्तेर्दक्षनेत्रं चुम्बति तदा सूर्य्यग्रहणं यदा तु वामनेत्रं चुम्बति तदा चन्द्रग्रहणं, भवतीति । (१) तत्तु मूर्त्तिमत्याः पार्वत्या नयनचुम्बनात् सर्वदा भ्रमणशीलस्य नभोविहारिणः सूर्य्यस्य चन्द्रस्य च ग्रहणं नैव युक्तिसहं भवेत् इत्यत-एव तत्त्वैवमनुमीयते ।—

शक्तिर्नाम ऐश्वरिकी शक्तिः प्रकृतिः सांख्यमतसिद्धजगदुपादान-भूता स्वभावरूपा च । लोकानामालोकसम्पादकत्वात् चन्द्रसूर्य्याग्नि-रूपं प्रकृतेर्नयनत्रयं । तत्र च आलोकप्रदाने अतिशयदक्षत्वात् सूर्य्यो दक्षिणनेत्रं सूर्य्यालोकेन जलमयस्य चन्द्रस्य (२) तस्मादल्पा-

(१) मातृकाभेदतन्त्रे षष्ठपटले ।—"चण्डिकोवाच"—

राहुश्चाण्डाल विख्यातः सर्वत्र परमेश्वर । पुण्यः कालः कथन्देव तस्य स्पर्शे दिवाकरे ॥
निशाकरे तथा नाथ चेति मे संशयो हृदि । कथयस्व परानन्द पश्चादन्यं प्रकाशय ॥

श्रीशङ्कर उवाच ।

शृणु सर्वाङ्गसुभगे ग्रहणञ्चोत्तमोत्तमम् । ग्रहणं त्रिविधं देवि चन्द्रसूर्य्याग्नि संयुतम् ॥
शक्तेर्ललाटनेत्रे च वह्निस्तिष्ठति सर्वदा । वामनेत्रे तथा चन्द्रो दक्षे सूर्य्यः प्रतिष्ठितः ॥
शम्भुनाथेन देवेशि रमणं क्रियते यदा । तदैव ग्रहणं देवि शक्तियुक्तः सदाशिवः ॥
वामनेत्रे चुम्बिते च शशाङ्कग्रहणं तदा । दक्षनेत्रे चुम्बिते च भास्करग्रहणं भवेत् ॥
ललाटे चुम्बिते चाग्निग्रहणं परमेश्वरि । शिववीर्य्यं यतो वह्निरतोऽङ्गश्च सुरेश्वरि ॥
राहुः शिवः समाख्यात स्तुधाशक्तिरीरिता ॥

(२) "सलिलमये शशिनि रवेर्दीधितयो मूर्च्छिताः ।
नैशं तमः क्षपयन्ति दर्पणोदरवद्गृहोदरध्वान्तं ॥" इति वराहसंहिता ॥

लोकत्वात् चन्द्रो वामनेत्रं अग्निस्तु ऊर्द्धशिखत्वादूर्द्धनेत्रमिति रूपकितं। एवं शिवस्तु अष्टमूर्त्तिकः (१) तासामष्टानां मूर्त्तीनां मध्ये क्षितिरपि शिवस्यैका मूर्त्तिः, ततश्च क्षितिरूपेण शिवेन शक्तेः प्रकृतेर्नेत्रे सूर्य्ये चन्द्रे च चुम्बिते छायया पिहिते ग्रहणं भवतीति। छाया तु अन्धकारः अत एव तमो राहुरुच्यत इति सर्वमवदातं। किन्तु इंरेजमते क्षितिरेको ग्रहः अस्माकं मते तु क्षितिछाया ग्रहः, स एव, राहुः कथ्यते एतावान् भेद इति।

---

# वैदिकाख्यायिका।

( माघमासतोऽनुवृत्ता )

( प्रवाहणः कथयति हे गोतम ! प्रथमतश्चतुर्थप्रश्नस्योत्तरं तावन्निशामय, यस्मात् चतुर्थप्रश्नोत्तरसापेक्षाणीतरप्रश्नोत्तराणीति )

हे गोतम ! असौ द्यौर्लोक एवाग्निरूपः। अस्य द्युलोकाग्नेरादित्य एव प्रज्वलनकाष्ठं। आदित्येन हि सम्यग् दीप्यते द्युलोकः। तस्य सहस्ररश्मय एव धूमः।—कथमिति चेत् ज्वलनकाष्ठात् सूर्य्यरूपात् तस्य निर्गमात्। आदित्याद्धि रश्मयो निर्गच्छन्ति समिधश्च धूम इति लोकप्रसिद्धम्। दिवा तस्यार्चिः।—कथमिति प्रकाशसादृश्यादिति। दिशोऽङ्गाराः, कथमिति दिगन्ते तस्योपशमसादृश्यादिति। विदिशो विस्फुलिङ्गाः—कथमिति विस्फुलिङ्गवत्तिर्य्यक्विक्षेपसादृश्यादिति। तस्मिन्नीदृग्गुणविशिष्टे द्युलोकाग्नौ इन्द्रादयो देवाः श्रद्धामयीः आपः आहुतिद्रव्यरूपत्वेन जुह्वति। तस्या

---

(१) सर्वाय क्षितिमूर्त्तये नमः भवाय जलमूर्त्तये नमः इत्यादि मूर्त्तयोऽष्टौ शिवस्यैताः पूर्वादिक्रमयोगतः इत्यन्तं भविष्यपुराणम्।

आहुतेः सकासात् पितॄणां ब्राह्मणानाञ्च राजा सोमः सम्भवति ॥९॥

ताः सूक्ष्मा आपः आहुतिकार्य्यभूता अग्निहोत्रसमवायिन्यः कर्तृसहिताः श्रद्धाशब्दवाच्याः सोमलोके यष्टुः शरीरारम्भाय द्युलोकं प्रविशन्त्यो हूयन्ते इति कथ्यन्ते (१) ता यष्टृशरीरापः द्युलोकं प्रविश्य सोममण्डले तस्य कर्तुः शरीरमारभन्ते। तदेतत् कथ्यते देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवतीति। "यत्-संख्यकायामाहुतौ हुतायामापः यदा पुरुषाकाररूपेण परिणता इत्यादीति" प्रश्नस्येदमेवोत्तरं "असौ द्यौर्लोक एवाग्निरिति।

तस्मात् कर्मसमवायिन्य आपः कर्तुः शरीरारम्भिकाः श्रद्धाशब्द-वाच्या इति निश्चीयते। शरीरे जलीयभागाधिक्यात् पुरुषवाच इति व्यपदेशः नतु क्षित्यादिभूतानि निषिध्यन्ते। कर्मजन्यन्तु शरीरं। कर्म चाप्समवायि ततश्चापां प्राधान्यं शरीरकर्तृत्वे (२) इति।

---

९। असौ वै लोकोऽग्निर्गौतम तस्यादित्य एव समित्, रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा सम्भवति ॥ ९ ॥

(१) तथाच ब्रह्मसूत्रम्। तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्यां। ३।१।१ तत्र शाङ्करभाष्यं।—तथाहि प्रश्नः "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति निरूपणञ्च प्रतिवचनं।—द्युपर्य्यन्यपृथिवीपुरुषयोषित्सु पञ्चसु अग्निषु श्रद्धा-सोम वृष्टान्न रेतो रूपाः पञ्चाहुतीर्दर्शयित्वा इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति ( छान्दो ५।९।१। ) तस्मादद्भिः परिवेष्टितो जीवः रंहति व्रजतीति"।

(२) तथाच ब्रह्मसूत्रं "त्र्यात्मकत्वात्तु भूयस्त्वात् ॥" ३।१।२। अत्र शाङ्करभाष्यम्।—त्र्यात्मकश्च देहः त्रयाणामपि तेजोऽबन्नानां तस्मिन् कार्य्योपलब्धेः। पुनश्च त्र्यात्मकः त्रिधातु-कत्वात् वातपित्तश्लेष्मात्मकत्वात्। न भूतान्तराणि प्रत्याख्याय केवलाभिरद्भिरारब्धुं शक्यते। तस्माद्भूयस्त्वापेक्षोऽयमापः पुरुषवचन इति प्रश्नप्रतिवचनयोरप्शब्दो न केवलत्वा-पेक्षः। सर्वदेहेषु रसलोहितादिद्रवभूयस्त्वं दृश्यते।" "दृश्यते च शुक्रशोणितलक्षणेऽपि देहवीजे द्रवबाहुल्यं। कर्म च निमित्तकारणं देहान्तरारम्भे कर्माणि चाग्निहोत्रादीनि सोमाज्यपयःप्रभृतिद्रवद्रव्यव्यपाश्रयाणि कर्मसमवायिन्यश्चापः श्रद्धाशब्दोदिताः। सह कर्मभिर्द्युलोकाख्येऽग्नौ हूयन्त इति वक्ष्यति। तस्मादपां बाहुल्यप्रसिद्धिः। बाहुल्याच्चाप्-शब्देन सर्वेषामेव देहवीजानां भूतसूक्ष्माणामुपादानमिति ॥

हे गोतम ! द्वितीयाहुत्याधारः श्रूयतां—वृष्ट्युपकरणाभिमानी देवः पर्जन्य एवाग्निः, अस्याग्नेः संवत्सर एव इन्धनं कथमिति —संवत्सरेण हि स्वकीयैर्द्वादशावयवैः षड्भिरृतुभिः परावर्त्तमानैः पर्जन्योऽग्निर्दीप्यते इति। तस्याग्नेर्मेघा एव धूमः, कथमिति—धूम-प्रभवत्वाद्धूमवदुपलक्ष्यमाणत्वाद्वा इति। तस्य विद्युदर्चिः, कथमिति प्रकाशसादृश्यादिति। पर्जन्याग्नेरशनिरङ्गाराः।—कथमिति उप-शान्तकाठिन्य सादृश्यादिति। मेघशब्दा विस्फुलिङ्गाः, ।—कथमिति विक्षेपानेकत्वसादृश्यादिति। एतस्मिन् पर्जन्याग्नौ देवाः होतारः पितृब्राह्मणराजं सोमं जुह्वति। द्युलोकाग्नौ श्रद्धायामाहुतायां सोमो जायते, सोमाहुते वृष्टिः सम्भवति॥ १०॥

हे गोतम! तृतीयाहुत्याधारः श्रूयताम्। प्राणिवर्गोपभोगा श्रयोऽयं लोक एवाग्निः। तस्याग्नेः पृथिवी समित् —कथमिति पृथिव्या हि अयं लोकः अनेकप्राण्युपभोगसम्पन्नया सम्यगिध्यते। पृथिवीरूपाग्नेरयं लौकिकोऽग्निरेव धूमः —कथमिति पृथिव्याश्रय सादृश्यात् पृथिव्युत्थानसादृश्याच्च। पार्थिवं हि दारुद्रव्यादिकमाश्रित्य अग्निरुत्तिष्ठति यथा समिधाश्रयेण धूम इति। तस्याग्नेरात्रिरर्चिः— कथमिति पृथिवीरूपसमित् सम्बन्धप्रभवसादृश्यादिति। यथा अग्नेः समित्सम्बन्धेनार्चिः सम्भवति। तथा पृथिवीसमित्सम्बन्धेन रात्रिः सम्भवति। पृथिव्याः सूर्याभिमुखिनश्छायामिव शार्वरं तम आचक्षते *। चन्द्रमा अङ्गाराः, ।—कथमिति। रात्रिप्रभवत्वसाम्यात् अर्चिषो ह्यङ्गाराः प्रभवन्ति, तथा रात्रौ चन्द्र इति वा सादृश्यात्।

---

१०। पर्जन्यो वा अग्निर्गौतम तस्य संवत्सर एव समिदभ्राणि धूमो विद्युदर्चि रश-निरङ्गारा ह्रादनयो विस्फुलिङ्गा स्तस्मिन्नेतस्मिन्नग्नौ देवा सोमं राजानं जुह्वति तस्या आहुत्यै वृष्टिः सम्भवति॥ १०॥

*। उद्धृत्य पृथिवीच्छायां निर्मितं मण्डलाकृति।
स्वर्भानी स्तु बृहत्स्थानं तृतीयं यत्तमोमयं॥ इति आनन्दगिरिधृत स्मृतिः

नक्षत्राणि विस्फुलिङ्गाः, ।--कथमिति विस्फुलिङ्गवद्विक्षेपसादृश्यात्। तस्मिन्नीदृशेऽस्मिन् लोकाग्नौ देवा वृष्टिं जुह्वति। तस्या आहुताया वृष्टेरन्नं सम्भवति इति ॥ ११ ॥

हे गोतम चतुर्थाहुत्याधारः श्रूयतां।—हस्तपदोपस्थादिविशिष्टः पुरुष एवाग्निः अस्याग्नेर्मुखमेव विवृतं ज्वलनकाष्ठं, —कथमिति यथा समिद्भिरग्निर्दीप्यते तथा विवृतेन मुखेन वचनस्वाध्यायादौ पुरुषो दीप्यते इति। तस्य पुरुषाग्नेः प्राणा धूमः, ।---कथमिति मुखतः प्राणादिवायोरुत्थानसादृश्यादिति। तस्य वाक् एवार्चिः, कथमिति अर्चिर्यथा आलोकदानेन घटपटादिकं व्यञ्जयति, तथा शब्दोऽपि स्वशक्यार्थं प्रकाशयति इति व्यञ्जकत्वसादृश्यादिति। चक्षुरङ्गाराः,।—कथमिति प्रकाशाश्रयसादृश्यादिति। श्रोत्रं विस्फुलिङ्गाः।--कथमिति चेत् विक्षेपसादृश्यादिति। तस्मिन्नेतस्मिन् पुरुषरूपाग्नौ हस्ताद्यधिष्ठातार इन्द्रादयो देवा अन्नं जुह्वति तस्या आहुते रेत उत्पद्यते इति ॥ १२ ॥

हे गोतम! पञ्चमाहुत्याधारः श्रूयतां। योषिदेवाग्निः, तस्याग्नेरुपस्थ एव समित्,लोमानि धूमः, योनिरर्चिः, यदन्तः करोति तेऽङ्गाराः, अभिनन्दा विस्फुलिङ्गाः। तस्मिन्नेतस्मिन् योषिद्रूपेऽग्नौ देवा रेतो जुह्वति। तस्या आहुतेः पुरुषः सम्भवति। एवं क्रमेण द्युपर्जन्यैतल्लोक पुरुषयोषि दग्निषु सम्यगाहुताः श्रद्धा-सोम-वृष्ट्य-न्नरेतोरूपेण स्थूलतारतम्यं लभमानाः श्रद्धाशब्दवाच्या आपः पुरुष वाच्यत्वं लभन्ते। यश्चतुर्थः प्रश्नः कृतः "यत्संख्यकायामाहुतौ हुतायामापः यदा पुरुषरूपेण परिणता भूत्वा सम्यगुत्थिताः सन्तः-

---

११। अयं वै लोकोऽग्निर्गौतम तस्य पृथिव्येव समिदग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नं संभवति ॥११॥

१२। पुरुषो वा अग्निर्गौतम। तस्य व्यात्तमेव समित् प्राणो धूमो वागर्चिश्चक्षुरङ्गारा श्रोत्रं विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः सम्भवति ॥१२॥

वदन्ति इति त्वं वेत्थ" स एवेदानीं निर्णीत: "पञ्चम्यामाहुतौ हुतायां योषाग्नौ रेतो भूता आप: पुरुष वाचो भवन्तीति" स पुरुष: एवं क्रमेण जात: सन् जीवति। कियन्तं कालं जीवतीति चेत् — अस्मिन् वर्त्तमाने शरीरे स्थितिनिमित्तं कर्म यावद्विद्यते तावत्, यदा तु तत् कर्म क्षीयते तदा म्रियते इति ॥ १३ ॥

हे गोतम! मृते तु तस्मिन् पुरुषे लौकिकाग्नये चरमाहुतित्वेन तं जुह्वति ऋत्विज:। तस्याहुतिभूतस्य प्रसिद्धो लौकिकोऽग्निरेव होमाधिकरणं न तु द्युप्रभृतिवत् परिकल्पितोऽग्नि:। प्रसिद्धमिन्धनमेवेन्धनं। प्रसिद्ध धूम एव धूम:। प्रसिद्धार्चिरेवार्चि:। प्रसिद्धाङ्गारा एवाङ्गारा:। प्रसिद्धस्फुलिङ्गा एव स्फुलिङ्गा:। नत्विमे सर्वे कल्पिता:। तस्या आहुते: पुरुषो भास्वरवर्णोऽतिशयदीप्तिमान् भवति, कथमिति यथाविधि गर्भाधानाद्यन्त्येष्टिकर्मभि: संस्कृतत्वादिति ॥१४॥

हे गोतम! श्रुतश्चतुर्थप्रश्नसिद्धान्त:। अधुना तन्मूलक-प्रथम प्रश्नोत्तरमाकर्णयतां। ये गृहस्था अग्नि-समिद्धूमार्चिरङ्गार-विस्फुलिङ्ग-श्रद्धादिविशिष्टान् निर्दिष्टान् पञ्चाग्नीन् विदु: अर्थात् ये गृहस्था पूर्वोक्तप्रकारेणाग्निजोऽहमग्न्यपत्यमित्येवं क्रमेण अग्नितो जातत्वादग्निरूपोऽहमित्येवं ज्ञानिनो भवन्ति ते। एवं ये च अपरे परिव्राजका: श्रद्धासम्पन्ना: सन्त: हिरण्यगर्भाख्यं ब्रह्मोपासते ते च सर्व एव अर्चि: अभिसंभवन्ति। अर्थात् अर्चिरभिमानिनीं उत्तरमार्गलक्षणां अभि संभवन्ति (१)—पिण्डपातात् परं ते प्रथमत:

---

१३। योषा वा अग्निर्गौतम! तस्या उपस्थ एव समित् र्लोमानि धूमो योनिरर्चिर्यदन्त: करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुष: सम्भवति स जीवति यावज्जीवत्यथ यदा म्रियते ॥ १३ ॥

१४। अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित् समित्, धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवा: पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्ण: सम्भवति ॥ १४ ॥

(१) अर्चिरिति नाग्निज्वालामात्रं किन्तु तदभिमानिदेवतैवोपचारात्। एवमहरादि शब्दा अपि तत्तदभिमानिदेवता परा एव। आयुष: क्षयेहि मरणं नह्येवं विदा अहरेवमर्त्तव्यं इत्यहर्मरणकालो नियन्तुं शक्यते। न च रात्रौ प्रेता: सन्तोऽह: प्रतीक्षन्ते"। इति शङ्करभाष्यं ६।२।१५।

अर्चिरादिमार्गाधिष्ठातृदेवस्थानं यान्ति, सा देवता तान् अहरभिमानिदेवतां प्रापयति। सा च देवता शुक्लपक्षाधिष्ठातृ देवतां तान् प्रापयति। सा च देवता षड़्मासोत्तरायणाधिष्ठातृ देवतां प्रापयति। सा चोत्तरायणाभिमानिनी देवता देवलोकाभिमानिनीं देवतां प्रापयति। सा च देवता आदित्याभिमानिदेवतां तान् प्रापयति! आदित्याभिमानिनी देवता च विद्युदभिमानिनीं देवतामुपस्थापयति। ततो विद्युद्देवतां प्राप्तास्तु तान् ब्रह्मलोकवासी कश्चन पुरुषः समागत्य ब्रह्मलोकं प्रापयति। ते च ब्रह्मलोकगताः पुरुषाः तत्र श्रेष्ठतमाः सन्तः अनेकान् ब्रह्मकल्पान् वसन्ति। ब्रह्मलोकगतानां तेषां न पुनरावृत्तिरस्मिन् संसार इति॥ १५॥

अथ ये पुनरग्निहोत्रादिना यज्ञेन, अर्थिभ्यो धनत्यागेन कृच्छ्रचान्द्रयणादिना तपसा च लोकान् जयन्ति ते धूमाभिमानि देवतां प्रथमतो यान्ति। सा च धूमाभिमानिदेवता तान् रात्र्यभिमानि देवतां प्रापयति। रात्र्यभिमानिदेवता च कृष्णपक्षाभिमानिदेवतां तान् प्रापयति। सा च कृष्णपक्षाभिमानिदेवता दक्षिणायणाभिमानिदेवतां प्रापयति। सा च मासाभिमानिदेवतां तान् प्रापयति मासाभिमानिदेवता च पितृलोकाभिमानिदेवतां पितृलोकाभिमानिदेवता च चन्द्रलोकं प्रापयति। ते च चन्द्रं प्राप्य देवानामुपभोगवस्तूनि भवन्ति। यथा यज्ञे ऋत्विजः सोमं राजानं आलोड्यालोड्य चमसस्थं पानेनापक्षयञ्च कृत्वा पुनः पुनर्भक्षयन्ति, तथा देवा अपि चन्द्रलोके लब्धशरीरान् कर्मिणो भृत्यानिव स्वामिनस्तानुपभुञ्जते। तेषां कर्मिणां यदा सोमलोकप्रापकं तद्यज्ञदानादिलक्षणं कर्म परिक्षीयते, तदा अनेनैव प्रसिद्धेनाकाशेन सहापृथक्भाव-

१५। ते य एवमेतद्विदुर्येचामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद यान् षन्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः॥ १५॥

मापन्ना स्तिष्ठन्ति।—अर्थात् याः पूर्वोक्ता द्युलोकाग्नौ हुताः श्रद्धा शब्दवाच्या आपः सोमाकारेण परिणताः सोमलोके देवानामुपभोगाय जलमयशरीरमारभन्ते ताः श्रद्धाशब्दवाच्या आपः कर्मक्षयात् आतपसम्पर्कात् हिमसङ्घात इव प्रविलीय सूक्ष्मा आकाशभूताः सन्ति। तस्मादाकाशाद्वायुमभिगम्य वायुना परितः प्रचरन्ति। वायोश्च वृष्टिं प्रतिपद्यन्ते। एतदेव पूर्वमुक्तं पर्य्यन्याग्नौ सोमं राजानं जुह्वति। ततो वृष्टिभूता इमां तदुक्तं पुरस्तात् "अस्मिल्लोकरूपेऽग्नौ वृष्टिं जुह्वति तस्या आहुत्या अन्नं सम्भवति" पुनः पुरुषाग्नौ जुह्वति। ततश्च योषागर्भतो जायन्ते। जाताश्च लोकान् प्रति समुत्थिताः पुनरग्निहोत्रादि कर्मानुतिष्ठन्ति। ततश्चिताग्नौ धूमादिना पुनः पुनः सोमलोकं पुनः पुनरिमं लोकं यान्त्यायान्ति च ते एवं कर्मिणो घटीयन्त्रवत् चक्रीभूताः वंभ्रम्यन्ते इति ये तु अर्चिर्यानं धूमयानञ्च पन्थानावेतौ न जानन्ति अर्थात् उत्तरमार्गसाधनं पञ्चाग्निज्ञानं ब्रह्मज्ञानं वा दक्षिणमार्गसाधनमग्निहोत्रादि कर्म वा नानुतिष्ठन्ति ते कीटा वा पतङ्गा वा मशकदंशकादयो वा भवन्ति। अहह एवं ह्ययं संसारगतिः कष्टा अस्यां प्रवर्त्तमानस्य पुनरुद्धारो दुर्लभः। तस्मात् सर्वान्तःकरणेन यथाशक्ति दक्षिणोत्तरमार्गप्राप्तिसाधनं शास्त्रीयं ज्ञानं कर्म वा सम्यगनुष्ठेयमिति ॥ १६ ॥

हे गौतम! सर्व एव प्रश्ना निर्णीताः।—"असौ वै लोक" इत्यारभ्य पुरुषः सम्भवतीति चतुर्थः प्रश्नो "यतिथ्यामाहुत्यामित्यादि प्राथम्येन।

---

१६। अथ ये यज्ञेन दानेन तपसा लोकाञ्जयन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते। ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्त्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकं ॥ १६ ॥

इति बृहदारण्यकोपनिषदि षष्ठाध्यायस्य द्वितीयं ब्राह्मणं ॥

पञ्चमस्तु प्रश्नः द्वितीयेन देवयानस्य वा पथः प्रतिपदं पितृयानस्य वेति दक्षिणोत्तरपथप्राप्ति हेतुकथनेन समानः। पुनरावृत्तिश्च द्वितीय प्रश्नः आकाशवाय्वादिक्रमेणेमं लोकं प्रतिपदयन्ते। ज्वरादिरोगेण म्रियमाणैरपि बहुभिर्येन प्रकारेण असौ लोको न परिपूर्यते ज्ञान कर्मादयभावात् कीटपतङ्गादिजन्मलाभादनेकेषामिति तृतीय प्रश्नोत्तरं इति॥ एतदेवोपजीव्य याज्ञवल्क्य आह।—यथा

पितृयानोऽजवीथ्याश्च यदगस्त्यस्य चान्तरम्।
तेनाग्निहोत्रिणो यान्ति स्वर्गकामा दिवं प्रति॥ १८४॥
ये च दानपराः सम्यगष्टाभिश्च गुणैर्युताः।
तेऽपि तेनैव मार्गेण सत्यव्रतपरायणाः॥ १८५॥
तत्राष्टाशीतिसाहस्रा मुनयो गृहमेधिनः।
पुनरावर्त्तिनो बीजभूता धर्मप्रवर्त्तकाः॥ १८६॥
सप्तर्षिनागवीथ्यन्तर्देवलोकं समाश्रिताः।
तावन्त एव मुनयः सर्वारम्भविवर्जिताः॥ १८७॥
तपसा ब्रह्मचर्येण संगत्यागेन मेधया।
तत्र गत्वावतिष्ठन्ते यावदाहूतसंप्लवम्॥ १८८॥
यतो वेदाः पुराणानि विद्योपनिषदस्तथा।
श्लोकाः सूत्राणि भाष्याणि यच्च किञ्चन वाङ्मयम्॥ १८९॥
वेदानुवचनं यज्ञो ब्रह्मचर्यं तपो दमः।
श्रद्धोपवासः स्वातन्त्र्यमात्मनो ज्ञानहेतवः॥ १९०॥
स ह्याश्रमैर्विजिज्ञास्यः समस्तैरेवमेव तु।
द्रष्टव्यस्त्वथ मन्तव्यः श्रोतव्यश्च द्विजातिभिः॥ १९१॥
ये यानमेवं विन्दन्ति ये चारण्यकमाश्रिताः।
उपासते द्विजाः सत्यं श्रद्धया परया युताः॥ १९२॥
क्रमात्ते संभवन्त्यर्चिरहः शुक्लं तथोत्तरम्।
अयनं देवलोकं च सवितारं सवैद्युतम्॥ १९३॥
ततस्तान्पुरुषोऽभ्येत्य मानसो ब्रह्मलौकिकान्।
करोति पुनरावृत्तिस्तेषामिह न विद्यते॥ १९४॥
यज्ञेन तपसा दानैर्ये हि स्वर्गजितो नराः।
धूमं निशां कृष्णपक्षं दक्षिणायनमेव च॥ १९५॥
पितृलोकं चन्द्रमसं वायुं वृष्टिं जलं महीम्।
क्रमात्ते संभवन्तीह पुनरेव व्रजन्ति च॥ १९६॥
एतद्यो न विजानाति मार्गद्वितयमात्मवान्।
दन्दशूकः पतङ्गो वा भवेत् कीटोऽथवा कृमिः॥ १९७॥

इति याज्ञवल्क्य संहितायां प्रायश्चित्ताध्याये यति धर्म प्रकरणे।

समाप्ता वैदिकाख्यायिका।

# KARAMATI BAI.

## ON THE MINERVA STAGE.

There is a sphere of realities open to the gaze of every man,—there is a wider circle lying beyond, which only the eye of genius can explore and which ends in that great sea of the unknowable. Every poetester—every clap-trap dramatist can picture and represent what is contained in the first, whereas to give us a glimpse of the second, wrapped to most eyes in the cimmerian darkness, is reserved only for the gifted few. To represent superficially love, marriage, death, sorrow, misery, happiness, the maniac laughter, the maudlin tears, the wickedness of the villain, and the triumph of the virtuous as we find them occurring in our every day experience, is no great matter, but, to unravel the tangled skien of the psychical workings in the heart, to trace the gradual development of such a heart and make people understand it by representation on the stage, are, what I beleive, lie beyond the abilities of most men. Among the specially gifted few is certainly our great dramatist Babu Girish chandra Ghose.

The vague hankerings of the heart—the cravings

for we know not what, are very ably illustrated in the character of Karamati and, I believe as brilliantly represented by the lady who acted the part. The shadowy indefinite dream-like memory of a glorious past, shines through the horizontal misty air of mundane oblivion shorn of its beams—but, as time passes, the sun shines stronger—the mists are scattered and there reigns the day that lasts till eternity.

"Trailing clouds of glory do we come
From God who is our home."

Ode to Immortality.

No wonder that Karamati should remember that she came from a place more beautiful than this, where the sun shone brighter, the moon looked sweeter, the birds sang pleasanter—that was her home, and she longed to go back to the place and live there eternally with One whose vision are "The sun, the moon, the stars, the seas, the hills, the plains." The vague craving strengthened day by day till it was swollen into a torrent, which carried every thing before it,—the bonds of time-hallowed custom love, duty and all; she forgot her parents' care—her husband's love—she forgot the world and its appurtenances and rushed on to merge herself in the Infinity, which ultimately she did, when her soul was purged of the last vestige of Desire and Egoism.

The promptings of her soul led her on, she heard the arial music in the atmosphere for there was a music in her soul. Souls let loose from the trammels of the world, can hear the music of the spheres.

"Such harmony is in immortal soul
But whilst this muddy vesture of decay
Doth grossly close it in, we cannot hear it."

Merchant of Venice.

It is my belief, that the whole play is an allegorical representation of the struggle between that "in-born impulse deep and strong to high aloft to struggle still towards heaven" and the obstacles that lie in the way—There is ( आगमवागीश )—learned scepticism, to preach "no heaven no God." There should be worldly wisdom ( ढुकरो ) to dissuade it from its aim, something to lay a stumbling block in its path which, however are overcome in the end—it is the same old story so ably told in Longfellow's Excelsior. If it be an allegory, the allegorical personages are living beings and not shadowy personifications of abstract qualities—The hero of the play Aloka ( आलोक ) is a young man rich in world's goods, handsome, wealthy but blaise in dissipation yet, had he kept himself untainted by blacker vices and more serious crimes He comes to the place where his father-in-law was, and forms the romantic resolution of seducing his

own wife. He disguised himself as a servant and paid a visit to his father-in-law's, where he met his wife for the first time since his marriage. The wicked thoughts burned up to ashes as he looked upon that heavenly beauty ; the halo of purity that surrounded it, made him ashamed of his own life. He loved her and wanted to be worthy of her ; coercion was far from his thoughts ; he could have compelled her obedience as her husband, but he wanted to be loved for himself. Days passed by and he loved on though in vain, (Karamati had no heart to bestow on the people who loved her,) till it was impossible for him to retrace his steps. Now came **आगमवागीश** to play the part of Iachimo and Iago—the flowers served as the bracelet of Imogen, and the scarf of Desdemona—With despair and with wine **आलोक** was nearly mad and scenes of strong passions that follow, are painted with a masterly hand. The misery purged the dross from his heart and he learnt to be disinterested. He now no longer followed Karamati but wanted to find out what she wanted—to give up the dearest object of his heart to another, and it is then that we are to be brought near the throne of God. We have been taught this lesson by Girish Babu in a previous play **विल्वमङ्गल** to which I belive Karamati bai bears a close resemblance, but of that afterwards—**आलोक**

reached at last the stage of "enlightenment"—the निष्काम state—which गीता regards the highest condition of bliss.

विहाय कामान् यः सर्वान् पुमांश्चरति निस्पृहः ।
निर्म्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥

His cravings are at rest. "Karamati is beautiful the world is beautiful. But what is that to you or me?" The author has respresented आलोक's love after that of Petrarch; it is but a step removed from the love of the deity to which it is sure to merge in the end. Love is essence of religion. How can we love the deity if we have not learnt to love our fellow men? surely "Love is heaven and heaven is love" and it is better to have loved and lost than never to have loved at all. आगमवागीश is the spirit of scepticism. He has read much as his name implies,—waded deep through the Shastras, but his *unbelief* has marred the benifit he might, otherwise have derived. He believes not in virtue but his confidence receives a shock, when he finds that आलोक could forgive even him—he has read only in the shastras of men, who can forgive heart-struck injuries but he disbelieved their existence as he did other things and he was happy in his disbelief. But now comes a living proof and his doubts are shattered; the light of the sun dawns upon him, he repents, and is saved.

टुकरो—"a piece of the world" a man in whose heart the good jostled the bad. He is in wicked hands and is wicked ; but he mends as soon as he comes in contact with higher and better natures—he represents the ordinary run of men of our world.

अम्बिका—the poet's aim in creating this character is perhaps, to show that a woman is certainly an angel when let alone, but let her just make a false step and she would sell her soul to Satan more readily than a man ; "Depraved women are worse than Depraved men".

What strikes one at once in reading Karamati bai is its close resemblance to विल्वमङ्गल, आलोक is विल्वमङ्गल in a slightly different dress. Karamati is the "mad girl" ; टुकरो "the beggar" ; आगमवागीश the avatar of sadhaka ; अम्बिका of शाक्त and the train of the thought is nearly the same in both places, only the method for the same end ( सिद्धि ) being different ; it may be called a 'Sequel' to विल्वमङ्गल ।

We can scarcely conclude without noticing the grand stage paraphernalia got up to aid the performance. All the actors and actresses acquitted themselves brilliantly, the songs were sweet and many, but what impressed me most, was the representation of आलोक ।

—00—